




# नित्याचारप्रदीपः



श्रीमन्नीलाद्रिपतये जगन्नाथाय नमः। श्रीशिवाय नमः।

शाखाभिः सकलाभिरुन्नतमहिमा नीलाद्रिमूलस्थितिः
पीनस्कन्धधृतप्रसूनविभवः स्वानन्दकन्दोदयः।
यः शोणाधरपल्लवोऽथ विबुधैः सेव्यः श्रिया शोभितो
भक्तेभ्यो वितरन् फलं विजयते कोऽप्येष कल्पद्रुमः॥ १॥

एकचूतविपिनस्य नायकं दर्शनचर्यितपुष्पसायकम्।
पुत्रभावगतसिद्धिनायकं[1] संश्रयेऽभिमतसिद्धिदायकम्॥ २॥

रूपं दधत्यतिमनोहरनारसिंहं
दैतेयदारणपरं पुरुषे पुराणे।
श्रेयः समादिशतु सागरसम्भवायाः
सानन्दसस्मित[2]ससम्भ्रमदृङ्‌निपातः॥ ३॥

कालिन्दीपुलिने कदम्बसुतरोर्मूले मनोजाशुग-
ज्वालाभिः कवलीकृतोऽपि कथमप्याधाय धीरं मनः।
स्वैरं वेणुमुदीरयन्नथ दृशा साकूतमालोकयन्
गोपस्त्रीपरिवेष्टितो दिशतु नः श्रेयः श्रियो नायकः॥ ४॥

---

(१) A. °दायकं। (२) B. विस्मित°।

१

अमत्सरः सत्समयप्रणेता
कौत्सस्य वंशो वसुधावतंसः।
प्रासादमीमांसकयज्ञयूपै-
र्येनोत्कलो भूषित एष देशः॥ ५॥

प्रासादे स्वकृते हरिं[1] परिचरन्नासीदमुष्मिन् कुले
मीमांसार्णवकर्णधारतरुणो मृत्युञ्जयः पण्डितः।
विद्याभिः सकलाभिरुज्ज्वलमतिर्यः शुद्धिमुक्तावली-
ग्रन्थेनाखिलमेव पूतमकरोत् स्वीयं कुलश्चिन्यया॥ ६॥

अमुष्य पुत्रः[2] किल गोपिनाथ-
मिश्रो गुणैर्यस्य वशे वसन्तौ।
जलेशनारायणनामयोगात्
पुत्रौ तु मित्रावरुणावुपेतौ॥ ७॥

अष्टाब्दे सुकविर्गते च नवमे तर्काब्धिपारङ्गमो
मीमांसाद्वयसत्प्रपञ्चरचनासम्पूर्त्तिकृद् द्वादशे।
[3]यन्त्रैरल्पदिनैर्विजित्य विदिशो यः षोड़शे वत्सरे
योगाभ्यासरतः पुराणपुरुषं नारायणः प्राविशत्॥ ८॥

सिद्धेश्वरीदत्तवरा स्वतन्त्रा
षड्दर्शनी यस्य कुले चचासीत्।
कापोवनेऽहीनमखे[4]ऽग्निचेता
जलेश्वरः कृष्णपरायणोऽभूत्॥ ८॥

(१) C. हरं।
(२) A. °नप्रा°।
(३) C. जस्रै°।
(४) A. B. मखाग्नि°।

नरसिंहधनञ्जयाभिधावथ[1] गङ्गाधरतोऽन्वखण्डलः ।
तनयाः किल वाजपेयिनोऽस्य च मृत्युञ्जयपञ्चमास्त्विमे ॥१०॥

अद्वैतागमसुत्कलेऽवतरयन् संक्षेपशारीरकैं
कृत्वा वार्त्तिकमध्वरेषु निरतः पक्षमासदीक्षाव्रती ।
मीमांसा यत एव हृदिममगत् काश्यां नृसिंहः सुर-
स्रोतस्त्वलुदकैकजीवनविधिर्योगेन सिद्धिं गतः ॥ ११ ॥

देवानन्दः सुतोऽस्याजनि कृतचयनो यज्ञविद्याधुरीणो
वेदाभ्यासप्रयासी परिषदि विजये यः कृतः पण्डितेशः ।
नानादेशादुपेताः सुनिपुणमतयः सहस्रो यस्य शिष्या
मीमांसातर्कविद्याश्रुतिशिखरमतं प्रौढमध्यापयन्ति ॥१२॥

अनुजोऽस्य च पौण्डरीकयज्वा[2]
बलभद्रो विदितः श्रुतौ नयेन ।
सदृशः श्रुतिमौलिभट्टतन्त्रे
किमु संवत्सरदीक्षया क्रतौ च ॥ १३ ॥

अपरेऽपि नृसिंहसूनव इह चत्वार उदारचेतसः ।
स्वकुलोचितविद्ययोर्जिताः सततं कृष्णकथापरायणाः ॥ १४ ॥

आनन्दपुत्रा वसुतेजसोऽष्टौ वसूत्तमाः किं वसुधामुपेताः ।
यदीयशिष्यादनवाप्तविद्या ये केऽपि तल्लक्षणमज्ञतैव ॥ १५ ॥

[3]सर्व्वे च पुत्रा विगतारिमित्रास्ते वाजपेयादिमखैः पवित्राः ।
काले यथावद्-विहिताग्निहोत्रा महद्भिराशासितसच्चरित्राः ॥१६॥

---

(१) C. ०धनञ्जयौ बुधावथ० ।  (२) C. ०याजी ।
(३) C. सर्व्वेऽपि ० ।

ते वामदेवाभिधवर्द्धमानौ
समाधवौ तौ भुवनेशवीरौ।
धराधरस्यानु गदाधराह्वौ[1]
रविश्च तेषामिह चाष्टमोऽभूत्॥ १७॥
धराधराख्याप्रथितस्य जैमिनि-
र्जगन्निवासैकजुषो दशात्मजाः।
गरिष्ठविघ्नेश्वरनामसंहृतौ
वरिष्ठ एव व्यजनिष्ट पूर्व्वजः॥ १८॥
मुरारि-पीताम्बर-वासुदेव-
नारायण-श्रीपति-केशवाख्याः।
चक्रेश्वर-श्रीजयदेव-कृष्णाः
स्वाचारविद्यास्तनया नवान्ये॥ १९॥
[2]मुरारिपूजार्जितविद्ययोर्जितो
मुरारिरासीत् श्रुतिमौलिपारगः।
निरन्तरं श्रीनरसिंहसेवया
नृसिंहनामाजनि तस्य चात्मजः॥ २०॥
श्रीमद्विघ्नेश्वरगुरोः प्राप्तविद्येन तेन च।
नित्याचारप्रदीपोऽयं नृसिंहेन प्रणीयते॥ २१॥

तत्र निमित्तोद्देशेन विहितं कर्म्म नैमित्तिकम्। तन्मध्ये [3]नियतनैमित्तिकं यत् तन्नित्यमुच्यते। तत्र यावज्जीवमग्निहोत्रं

---

(१) A. गदाधराख्यौ०। (२) C मुरारि०।
(३) C. निश्चितनिमित्तकं०।

जुहुयात्। अहरहः सन्ध्यामुपासीत। अहरहर्जुहुयादाकाष्ठात्। अहरहर्भूतेभ्यो बलिं हरेत्। इत्यादि नित्यम्। नियतनिमित्तत्वात्। यत्त्वनियतनिमित्तकं तत् गृहदाहे क्षामवत्या यजेत। रविसंक्रमणे स्नायात्। चन्द्रसूर्य्यग्रहे स्नायात्। इत्यादि। तदनियतनिमित्तत्वान्नैमित्तिकमात्रम्। तत्र यावज्जीवमग्निहोत्रं जुहुयादित्यादौ धातुसम्बन्धाधिकारविहितत्मूलस्तुत्या धात्वर्थयोर्जीवनहोमयोः सम्बन्धः प्रतीयते। सच नाङ्गाङ्गिभावो जीवनस्य कर्त्तृत्वनिर्व्वाहकत्वस्य लोकसिद्धत्वात्। न च [1]जीवनलक्षितकालस्याङ्गत्वं लक्षणादोषात्। न च जीवनस्य होमोऽङ्गवैयर्थ्यात्। परिशेषान्निमित्तनैमित्तिकभावः सम्बन्धः। गृहदाहादेश्च क्वचित् सप्तमीश्रुत्या [2]नित्यनैमित्तकत्वप्रतीतिः। क्वचित् यत्शब्दोपबन्धनादनुवादबुद्धौ परिशेषादेव निमित्तताप्रतीतिः। निमित्तस्य चैतद्रूपं यत् तस्मिन् सति नैमित्तिकमवश्यं कर्त्तव्यम्। नचैवंरूपत्वे मानाभावो वेदव्याख्यातृसम्प्रदायस्यैव मानत्वात्। यच्चावश्यं कर्त्तव्यं तत्र नानियतकामनाया विषयं स्वर्गादि फलं भवितुमर्हति विरक्तस्य स्वर्गमनिच्छो र्जीवने गृहदाहे वा निमित्ते सति होम क्षामवत्योरकरणे निमित्तश्रुतिबाधात्। न च सरक्तविषयेयं श्रुतिर्न चैकं प्रतिशिष्यत इति न्यायात्। विश्वजिदादौ निमित्तश्रुत्यभावेन लाघवेन भावरूपस्वर्गफलकल्पनात्। तेन सर्व्वेषां सर्व्वदापेक्षित उपात्तदुरितक्षय एव फलम्। यत्तु वैश्वानरं

(१) C. जीवनस्य होमाङ्गलक्षितस्य कालस्याङ्गत्वं।

(२) C. निमित्तत्वप्रतीतिः।

द्वादशकपालं निर्वपेत् पुत्रे जाते यस्मिन् जाते एतामिष्टिं निर्वपति पुत्र एव स तेजस्वीत्यादिफलमार्थवादिकं । तत्रार्थवादप्रामाण्यादेव फलान्तरमिति नैमित्तिकत्वेऽपि नोपात्तदुरितक्षयफलं । नैमित्तिकस्य च होमस्येतिकर्त्तव्यताकाङ्क्षायां प्रकरणादग्निहोत्रेतिकर्त्तव्यता क्षामवत्यादिष्वतिदेशादैष्टिकी विध्यन्तः । तत्र निमित्तश्रुत्या अवश्यकर्त्तव्यत्वेन ज्ञातायां भावनायामङ्गानि सम्बध्यमानानि न सर्व्वाणि सम्बन्धयोग्यानि । न हि गृहदाहे जाते तत्काले सर्व्वाङ्गसम्पत्तिः सर्व्वस्य । वाक्यान्तरोक्तसायंप्रातःकालावच्छिन्ने वा निमित्ते जीवने सर्व्वाङ्गसम्पत्तिः सर्व्वस्य । तेन यथाशक्तिकृताङ्गसहितानीति सम्बन्धः । न च यथाङ्ग-विनियोग-मधिकार-कल्पनात् सर्व्वाङ्ग-विनियोगानन्तरं सर्व्वाङ्गसम्बन्धस्यैवाधिकार इति । यथान्धपङ्ग्वादिव्यतिरिक्तानामधिकारः । एवं गृहदाह-सायं-जीवनादि-निमित्ते काले यस्य सर्व्वाङ्गसम्पत्तिस्तस्यैवाधिकार इति किं न स्यादिति वाच्यम् । स्यादेवं यद्यङ्गविनियोगानन्तरमवश्यकर्त्तव्यतान्वयः स्यात् । समानवाक्यश्रुतेन निमित्तेन प्रथमं भावनाया अन्वये वाक्यान्तरश्रुतानामङ्गानां पश्चादेवान्वयात् । तेनावश्यकर्त्तव्यतान्वितायां भावनायामङ्गानि सम्बध्यमानानि यथाशक्तिकृतान्येव सम्बध्यन्ते । किञ्च यदि निमित्ते सति किञ्चिदङ्गहानौ नैमित्तिकं न कर्त्तव्यं कोऽर्थोऽवश्यं कर्त्तव्यमिति । अकरणव्यावृत्तिर्हि अवश्यशब्दार्थः । न च निष्फलं कर्त्तव्यं भवति । तेनावश्य[1]शब्दार्थमहिम्ना

(१) C. कर्त्तव्यार्थमहिम्ना ।

प्रकरणव्यावृत्तिः। कर्त्तव्यताप्रतीत्या च फलवत्त्वं निमित्तश्रुतेरेव गम्यते इत्याशङ्काऽऽङ्क्षहीनेऽपि फलम्। [1]अतएवाकरणव्यावृत्तिरकरणे भयात् भयञ्चानिष्टज्ञानादित्यकरणादनिष्टरूप[2]दुरितापूर्व्वद्वारकनरकादिकल्पनमपि निमित्तश्रुतिमूलकमेव। तथाच स्मरन्ति,—

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

इति। नचैतद्वाक्यप्रामाण्यादेव नित्याकरणे प्रत्यवाय इति वाच्यम्। काम्यस्यापि विहितत्वेन काम्याकरणेऽपि प्रत्यवायापत्तेः। न च दुरितानुत्पाद एव नित्यकर्म्मणां फलं स्यादिति वाच्यम्। अनादित्वेन कारणानपेक्षत्वात्। उत्पादनात्मिकायां भावनायामुत्पाद्यस्यैवान्वयात्। तस्मादुपात्तदुरितक्षय एव कर्म्मानुरूपेण नित्यनैमित्तिककर्म्मणां फलम्। यत्तु भविष्यपुराणे,—

फलं विनाप्यनुष्ठानं नित्यानामीष्यते स्फुटम्।
काम्यानां स्वफलार्थन्तु दोषघातार्थमेव च ॥
नैमित्तिकानां करणे त्रिविधं कर्म्मणां फलम्।
क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्यते।
नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम् ॥

---

(१) C. अतयाकरण०।

(२) A. B. दुरितद्वारकं नरकादि०।

फलं विना स्वर्गादिकाम्यफलं विना। दोषघातार्थं विद्यमानादियज्ञानां यथापापक्षयार्थम्। नैमित्तिकानामित्यत्र नैमित्तिकपदं निमित्तविहितत्व[१]साम्यान्नित्यनैमित्तिकोभयपरम्। अयं केचिदुपात्तस्येति सिद्धान्तः। अन्यत् पक्षविकल्पमात्रम्। अनुषङ्गफलं आयुरादिवक्ष्यमाणफलं तेन भविष्यपुराणस्वरसादप्युपात्तदुरितक्षय एव फलम्। [२]तच्च यथाशक्तिश्रुताङ्गसहितानाम्। नचैवमाधानमध्ययनं विना। शूद्रस्यापि नित्याग्निहोत्राधिकारः स्यात्। आहवनीयकर्म्मध्यानयोरप्यङ्गत्वेन तत्त्यागेनाङ्गान्तरसहितानां फलजनकत्वादिति वाच्यम्। नैमित्तिकविधिना हि यः कुर्य्यादित्युच्यते तत्र यथाशक्तीतिसम्बन्धः। न चाग्निविद्ययोर्नित्यप्रयोगविधिनानुष्ठानमुच्यते किन्त्वाधानाध्ययनविधिसिद्धयोरनेन स्वीकरणम्। गृहदाहे साङ्गां क्षामवतीं कुर्य्याद् यथाशक्तीत्युक्तेऽग्निविद्ययोः कर्त्तव्यत्वाप्रतीतेरेव न यथाशक्त्या सम्बन्धः। एवं शौचयज्ञोपवीतशिखादेरपि विध्यन्तरसिद्धत्वात् तत्रापि न यथाशक्त्युपबन्धः। एवं देशकालयोरपि स्वतःसिद्धयोरेवाङ्गत्वेन स्वीकारेण कर्त्तव्यत्वमिति। तत्रापि न यथाशक्तीति सम्बध्यते। ब्राह्मणोऽग्नीनादधीतेत्यादौ जातेरनुपादेयत्वात् तत्रापि न यथाशक्तीति। विस्मृतमपि चाङ्गस्मरणाशक्तेरेव विस्मृतमिति तत्त्यागेऽपि भवत्येव फलम्। कदाचित् कस्यचिदंशस्य हानिरित्यत्रा-

(१) C. विहितत्वे।

(२) A. C. अत्र च यथाशक्तिश्रुताङ्गसहितानाम्।

नुगमकमशक्याङ्गत्वमिति न शक्याङ्गहानौ फलम्। प्रधानस्य तु श्रूयमाणत्वात् तत्रावश्यकर्त्तव्यत्वं प्रतीयत इति प्रधानैकदेशाकरणे न फलम्। अतएव सर्व्वाङ्गत्यागेन प्रधानमात्रानुष्ठाने श्रुतप्रधानाकरणस्यैव दुरितहेतुत्वात् दुरितानुत्पत्तिः। नतु पापक्षयरूपं फलम्। साक्षादेव फलोत्पत्तेः। यत्तु गौतमस्मरणमशक्तौ मनसाप्येनमाचारमनुपालयेदिति नानेन प्रधानानुष्ठानाभावे फलं प्रत्यवायानुत्पादो वा कथ्यते। किन्तु प्रधानाङ्गेषु च सर्व्वथा सामर्थ्याभावे मनसा तत्कर्म्मचिन्तनं तत्प्रत्याम्नायत्वेन विधीयते। पशुसोमाभावे वैश्वानरीवत्। तेन सर्व्वथा सामर्थ्याभावदशायां कर्म्मानुसन्धानस्यानुकल्परूपत्वमुच्यते। सामर्थ्ये सति तु

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मते विद्यते फलम्॥

इति न्यायेन न फलं न वा प्रत्यवायपरिहारः। तत् सिद्धं नियतनिमित्तानि कर्म्माणि सन्ध्यावन्दनाग्निहोत्रादीनि नित्यानि। नैमित्तिकेष्वशक्तिक्षताङ्गत्यागेऽप्यधिकारः। प्रधानमात्रकरणेऽपि प्रत्यवायानुत्पत्तिः। काम्ये तु सर्व्वाङ्गसम्पत्तावधिकारः। प्रारब्धे काम्येऽङ्गहानौ यस्तप उपेत्य न यथार्थं तपस्यति असमाप्तौ वा विरमेत तत्राग्नेयो विधिश्चान्द्रायणं वेति। श्रुतिश्च यो यक्ष्य इत्युक्ता न यजते तत्र त्रैधातवी प्रायश्चित्तिरिति। प्रायश्चित्तविधिकल्पितप्रारब्धमवश्यं समापयेदिति विधौ भाव्यापेक्षायां तत्फलकामनासत्त्वे तदेव कल्प्यते। तदभावे दुरितक्षय इति षष्ठतन्त्ररत्ने निर्णीतमङ्गहानात्तु फलं न्यूनम्। तद् यथा पुत्त्रकामस्य मनो-

रिष्टौ होतुरपचारादिलानामकन्या जज्ञ इति पुराणेषु लिङ्गदर्शनम्। अन्यथा विगुणकाम्यस्य निष्फलत्वे तत्र भिन्ने जुहोति स्कन्ने जुहोति यदुक्तो यज्ञ आर्त्तिमियाद् गार्हपत्यं चरेद् भूः स्वाहेति जुहुयादित्यङ्गविधिवैयर्थ्यं स्यात्। एवं कालस्यानुपादेयत्वेनान्याङ्गवैलक्षण्येऽपि काले प्रारब्धस्य दैवात् कालातिक्रमेऽकालेऽपि समापनम्। तच्च फलजनकम्।[१] अन्यथा सान्तपनीयातूत्कर्षेदग्निहोत्रं षोड़शीचोक्थ्यसंयोगादित्यादौ विहितकालातिक्रमे क्रमविचारो व्यर्थः स्यात्। नहि निष्फलस्य क्रमोऽङ्गम्। एवं मुख्यकाले करणाशक्तौ गौणकालेऽपि कर्त्तव्यत्वम्।[२] यदाह मण्डनः,—

मुख्यकाले यदावश्यं कर्म्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्येतादृशो मतः॥

गौणकालस्तु क्वचिद् वाचनिकः। यथा स्मार्त्तहोमे आसायमाहुतेः प्रातराहुतिर्नात्येति। क्वचिन्न्यायमूलः। सायमाहुत्यां हुतायां चेद्दुर्व्वलः स्यात् तदेव प्रातर्होम इत्यादौ।[३] अतएव योगियाज्ञवल्क्यः,—

---

(१) A C. जननम्।

(२) E. Adds here. यथाह हडमनुः, मुख्यः कालोऽनुकल्पश्च सर्व्वेष्वपि कर्म्मसु। अन्यथा अपराह्णविहितकर्म्मणः श्राद्धस्य रात्रौ प्रसङ्गाभावात् रात्रौ श्राद्धं न कुर्व्वीत इति निषेधो व्यर्थः। तेन दैवादपराह्णे श्राद्धाकरणे गौणकालत्वेन रात्रौ प्रसङ्गे निषेधसाफल्यम्।

(३) E. Adds here. यदाङ्गवीर्थिकाः स्मिथेषु, सजातीयकर्म्मान्तरकालप्राप्तिपर्य्यन्तपूर्व्वकर्म्मणो गौणकालः। तस्मिन् हि प्राप्ते पूर्व्वकर्म्मणोऽतिपातबुद्धिर्भवति।

अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः[1] ॥

स्कान्दे,—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

तथा ग्रन्थान्तरे,—

यत्र मन्त्रभ्रंशो यज्ञभ्रंशो वा तत्र पुरुषं चिन्तयन् तत्सूक्तं जपेदिति प्रायश्चित्तं विदधाति। मुख्यकालगौणकालयोरकरणमेव दुरितहेतुरिति द्वयोरतिक्रमे। एतेषामाचाराणामेकैकापचारेण गायत्र्यष्टसहस्रजपेन पूतो भवति। वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति वा सामान्येन प्रायश्चित्तम्। विशेषेण तु तत्र तत्र वक्ष्यते।

यत्तु बौधायनः,—

प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत्।
त्रेताग्निहोत्रमन्त्रांस्तु द्रव्याभावे यथा जपेत् ॥

इति। तत्रात्यन्ताशक्तस्य महापदि मन्त्रजपमात्रेणाग्निहोत्रलोपप्रत्यवायपरिहार इत्याशयः।

---

मङ्गलमित्याह गौणेष्वेतेषु कालेषु कर्म्म चोदितमाचरेत् प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् प्रायश्चित्तमकृत्वा वा कर्म्म चोदितमाचरेत् नित्येष्टिमग्निहोत्रं वा भारद्वाजीयभाष्यतः।

(१) B स्मृतिः।

विष्णुपुराणे,—

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः[1] ॥

यच्च मनुः,—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥

तथा सर्व्वस्नातकधर्म्मानभिधायाह मनुः,—

अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित् ।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥

इत्यादिकं सन्ध्यावन्दनादेः संयोगपृथक्त्वेन फलान्तरम् । यत्तु गौतमः—

वर्णाश्रमाः स्वधर्म्मनिष्ठाः प्रत्येककर्म्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतिवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते[2] विष्वञ्चो विपरीतानि विनश्यन्ति। मेधो वीर्य्यम्। विष्वञ्चो यथेष्टचेष्टाः। विनश्यन्ति पापफलमनुभवन्ति। अत्र तच्छेषेणेति तस्यैव नित्याचारकर्म्मणः शेषेणेति भर्त्तृयज्ञः। तेन दुरितक्षयादिफलान्तरं जन्मान्तरे विशिष्टजन्मलाभ इति तस्य मतम्। भट्टाचार्य्यास्तु प्रथमपादे तस्मादन्येन कर्म्मणेति। गौतमीये तु तच्छेषं[3] स्तस्माच्च तदपेक्षयेत्याहुः। तेन नित्यकर्म्मणा पापक्षये

(१) B. कारणम् । E. F. नान्यत् सन्तोषकारणम् ।
(२) A. B. प्रतिप्रपद्यन्ते ।
(३) A. C. D. तस्माच्चित्ताद्यपेक्षयेत्याहुः ।

प्रतिबन्धविगमात् कर्म्मान्तरेण विशिष्टजातिलाभ इत्याशयः। एतेन ततः परिवृत्तौ कर्म्मफलशेषेण जातिं रूपं बलं मेधां प्रज्ञां प्रतिपद्यन्त इत्यापस्तम्बीयं व्याख्यानम्। अत्र च नित्यकर्म्मणां नानाफलसम्बन्धेऽपि योगसिद्धाधिकरणन्यायेन एकस्मिन् प्रयोगे एकमेव फलम्।

यत्तु,—

काम्ये कृते नित्यमनुष्ठितं स्यात्।

इति नित्यकाम्याग्निहोत्रयोः सकृदनुष्ठानम्। तत्रायं न्यायः। काम्याग्निहोत्रे 'स्वर्गफलार्थमनुष्ठिते तत्कालेऽग्निहोत्राकरणा-भावादकरणनिमित्तदुरितानुत्पत्त्या' 'नित्यसिद्धिर्न तु पापक्षयरूपं नित्यफलम्।

स्वकाले यदकुर्व्वंस्तु करोत्यन्यदचेतनः।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते॥

इत्यस्मिन्नपि पक्षे काम्याग्निहोत्रकालेऽन्यकरणाभावादेव न दुरितोत्पत्तिः।

भगवद्गीतायाम्,—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

---

(१) D. स्वफलार्थमनुष्ठिते भवति। तत्काले०

(२) D. दुरितानुभवा०

(३) C. नित्यं सिद्धम्।

तथा,—

यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।

तथा,—

सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मद्‌व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥

तेन सर्व्वाण्येव कर्म्माणि भगवति श्रीकृष्णे समर्पितानि भगवद्‌भक्तिरूपत्वेन पापक्षयप्रकर्षं कुर्व्वन्ति। अत्र स्वाध्यायोऽध्येतव्य इति स्वाध्यायस्याध्ययनसंस्कार्य्यत्वावगमात् संस्कारस्य च फलाभावे वैयर्थ्यात् भक्षणयुक्तफलं चमसे यागसम्बन्धद्वारा फलसम्बन्धवत् अधीतस्य स्वाध्यायस्य फलापेक्षायां यत् शक्यते तत्कुर्य्यादिति न्यायेन फलकल्पनादशायामक्षरावाप्तेरानर्थ्येऽपि विनाप्यक्षरग्रहणं शिक्षादिना कर्म्मज्ञानेनानुष्ठानेन फलसिद्धेर्व्यभिचारेण फलसाधनत्वेनाज्ञानात् स्वतयापुरुषार्थत्वादप्यक्षरावाप्तिर्नाध्ययनफलम्। न च तव्यप्रत्ययस्य कर्म्मणि विधानात् प्राप्यकर्म्मणि प्राप्ति शाब्दत्वेनाक्षरावाप्तिः फलं स्यादिति वाच्यम्। शाब्दत्वेऽप्यपुरुषार्थसाधनत्वेनाफलत्वात्। यथा व्रीहीन् वहन्तीत्यत्र श्रुतानामपि व्रीहीणां वैतुष्यस्य वा न फलत्वं किन्त्वपूर्व्वसाधनरूपस्येति तज्जन्यवाक्यार्थीभूतकर्म्मज्ञानस्य तु लिङ्गेन ज्ञात्वा कर्म्माणि कुर्व्वीतेति स्मृत्या यद् विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति श्रुत्या च क्रतुफलं प्रति पारम्पर्य्येण साधनत्व-प्रतीत्या-ऽक्षरा-वाप्ति-द्वाराध्ययन-जन्यत्वाच्च फलत्वं कल्पते। यस्य तु भागस्यार्थज्ञानं नानुष्ठानोपयोगि

न वा ब्रह्मभागजन्यब्रह्मज्ञानवत् स्वतः पुरुषार्थं तदंशेऽध्ययनस्याक्षरावाप्तिद्वारा ब्रह्मयज्ञपारायणाद्युपयोगिसंस्कारपाटवरूपाक्षरधारणमेव फलम्। अध्ययनेन यत् शक्यते तत्कुर्य्यादित्येवमेकरूपेण ज्ञानधारणयोः फलत्वम्। तथाच सति ब्राह्मणादीनां त्रयाणामुपनयनश्रुतेः कांस्यभोजिन्यायेनाध्ययनस्यापि ब्राह्मणादित्रयगामित्वम्। एवञ्च विधिसिद्धज्ञानं वर्णत्रयं लब्ध्वा कृतार्थाः कर्म्मविधयो न शूद्रस्य प्रकारान्तरेण कर्म्मज्ञानमाक्षिप्याधिकारमापादयन्ति तेनार्थात् शूद्राद्यधिकारनिवृत्तिरध्ययनविधिफलं पर्य्यवस्यति। येषान्त्वक्षरग्रहणमेवाध्ययनफलं तेषामक्षरग्रहणे स्वाध्यायनियमेऽपि कर्म्मज्ञानेऽध्ययननियमाभावेन शूद्राधिकारप्रसङ्गो दुर्वारः। अग्न्यभावे-ऽध्यनग्निसाध्यवैदिक-कर्म्मस्वधिकारापत्तेः। रथकारस्योत्तरक्रत्वधिकारापत्तेश्चेति। एवञ्च स्वाध्यायपदस्य स्वशाखापरत्वात् स्वशाखाविहितं यत्कर्म्म वेदादेव ज्ञात्वानुष्ठेयम्। इतरत्तु परिगणितधर्म्मशास्त्रेभ्यो गुरुशिक्षया।

वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्।

इति याज्ञवल्क्यवचनात्। मानवे च,—

विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः।

इत्यादित्यवचनम्। योगियाज्ञवल्क्यः,—

वेदांश्चैव सवेदान्तान् वेदाङ्गानि तथा स्मृतीः।

अधीयाद् ब्राह्मणः पूर्व्वं शक्तितोऽन्यानि वा पठेत्॥

आत्मज्ञाननिमित्तानि सिद्धान्तानि च चिन्तयेत्।

तथा,—

अनन्तञ्चाप्रमेयञ्च वेदशास्त्रं सनातनम्।

अध्येतव्यं प्रयत्नेन चतुर्वर्गफलप्रदम्॥

बृहस्पतिः,—

वेदमध्यापयेद् यत्नात् शास्त्रं मन्वादिकं तथा।

वशिष्ठः,—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।

एवञ्च वेदवेदाङ्गपुराणेतिहासपञ्चरात्रादिसिद्धान्तधर्म्मशास्त्रेभ्यो-ऽधीतेभ्यो ज्ञात्वा धर्म्मोऽनुष्ठेयः। भट्टाचार्य्याः,—

तस्माद् यान्येव शास्त्राणि वेदमुद्रानतिक्रमात्।

अवस्थितानि तैरेव ज्ञातो धर्म्मः फलप्रदः॥

वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता।

नित्यानामभिधेयानां मन्वन्तरयुगादिषु॥

तेषां विपरिवर्त्तेषु कुर्व्वतां धर्म्मसंहिताः।

वचनानि प्रमाणानि नान्येषामिति निश्चयः॥

ते च परिगणिताः। यदुक्तं जैमिनिना न शास्त्रपरिमाणत्वा-दिति। परिगणनञ्च यथा मनुः,—

वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥

अखिलः साङ्गः। स्मृतिर्मन्वादिः। शीलं स्मृतिश्रुति-[1]

---

(१) B स्मृति०।

प्रत्यक्षदृष्टनिषेधपरिपालनं[1] स्वभावकृतम्। यत्तु भारते अद्रोहः सर्व्वभूतानामित्यादि शीललक्षणमुक्तम्। यच्च हारीतेन ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यमित्याद्युक्तं शीलत्वेन। तत्र ब्रह्मण्यताऽब्रह्मण्यता-व्यावृत्तिरित्येवं निषेधपरिपालनपरमेव। उपलक्षणञ्चैतत्। निषेधव्यावृत्तिमात्रं शीलमित्येव तत्त्वम्। अतएव याज्ञवल्क्येन सम्यक् सङ्कल्पजः काम इति शीलस्वरूपमुक्तम्। सङ्कल्पो निवृत्ति-सङ्कल्पः। तज्जन्यः कामो निवृत्तीच्छा। आचारः श्रुतिस्मृति-प्रत्यक्षदृष्टव्यतिरिक्तधर्म्मानुष्ठानं आत्मतुष्टेधर्म्मसन्देहे निर्णायक-त्वम्। भट्टाचार्य्यैस्तु शिष्टात्मतुष्टिविषयत्वेन पूर्व्वमसदेव धर्म्मत्व-मुत्पद्यते नकुलदन्तस्पृष्टौषधिवत् [इत्युक्तम्।[2]] एतच्च प्रत्यक्षश्रुति-स्मृत्यविरोधिविषये। याज्ञवल्क्यः—

पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्द्दश॥

विष्णुपुराणे,—

आयुर्वेदो धनुर्वेदो गान्धर्व्वो दण्डनीतयः।

इत्यधिकम्। पुराणान्यष्टादश। विष्णुपुराणे,—

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा।
तथान्यं नारदीयञ्च मार्कण्डेयञ्च सप्तमम्॥

---

(१) A. B. C. D. ० प्रत्यक्षदृष्टनिषेधव्यतिरिक्तनिषेधपरिपालनं ०।
(२) [ ] C. omits the portion bracketed.

आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम्।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम्॥
वाराहं द्वादशञ्चैव स्कान्दञ्चैव त्रयोदशम्।
चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं स्मृतम्॥
मात्स्यञ्च गारुड़ञ्चैव ब्रह्माण्डञ्च ततः परम्।

मात्स्ये,—

पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम्।
तदष्टादशसाहस्रं नारसिंहमिहोच्यते॥

प्रसिद्धनारसिंहस्याष्टादशसाहस्रसंख्या यद्यपि नोपलभ्यते किञ्चित्कालक्रमाल्लुप्तमिति प्रतिभाति। तथा,—

नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते।
नन्दीपुराणं तल्लोके नन्दाख्यमिति चोच्यते॥

तच्च स्कान्देकदेशः।

यत्र शाम्बं पुरस्कृत्य भविष्येऽपि कथानकम्।
प्रोच्यते तत्पुनर्लोके शाम्बमेव मुनिव्रतैः॥
एवमादित्यसंज्ञा च तत्रैव परिपाठ्यते।
अष्टादशेभ्यस्तु पृथक् पुराणं यत्तु दृश्यते।
विजानीध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम्॥

विनिर्गतं समुद्भूतम्। यथा कालिकापुराणादीनीति[1] लक्ष्मीधरः। एवञ्च सति भगवत्या इदं भागवतमिति कालिकापुराणं भागवतपदेनोक्तमिति ये वदन्ति ते निरस्ताः। यदि परं प्रसिद्ध-

(१) B. पुराणादीति।

भिन्नं पुराणान्तरं भागवतं शङ्केरन। यच्च वायुपुराणदेवीपुराणादि तदप्येतेष्वन्तर्गतम्। भविष्योत्तरं भविष्यपुराणस्यैकदेशः[1]। कूर्म्म-पुराणे उपपुराणान्यष्टादशोक्तानि।

अन्यान्युपपुराणानि मुनिभिः कथितानि वै।
अष्टादशपुराणानि श्रुत्वा संक्षेपतो द्विज[2]॥

इत्युक्ता गणितं सनत्कुमारीयं नारसिंहं [3]नन्दीपुराणं शिव-धर्म्माख्यं दुर्व्वासःपुराणं नारदीयं कापिलं वामनं औशनसं ब्रह्माण्डं वारुणं कालिका माहेश्वरं शाम्बं[4] सौरं पराशरोक्तं मारीचं भार्गवाख्यम्[5]। ब्रह्मपुराणञ्च कल्पतरौ यद्वाक्यान्याहृतानि तदतिरिक्तब्रह्मपुराणं पुरुषोत्तममाहात्म्योपबृंहितं हेमाद्र्यादिनिबन्ध-परिगृहीतं शिष्टपरिग्रहादेव प्रमाणं तदप्युपपुराणान्तर्गतमेव। न्यायपदं न्यायवैशेषिकपरम्। मीमांसा कर्म्मब्रह्मविषया। धर्म्म-शास्त्राणि च याज्ञवल्क्यः,—

वक्तारो धर्म्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः।
वशिष्ठदक्षसम्वर्त्तशातातपपराशराः॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती।
गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं तथा॥

---

(१) B. पुराणैकदेशः।
(२) B. द्विजाः।
(३) A. C. read पाद्मं नारदीयपुराणं in the place of नन्दीपुराणम्।
(४) A. C कौर्म्मं।
(५) A. C. भार्गवाह्वयं।

[1]शङ्खलिखितस्मृतौ प्रचेता गणितः । यमस्मृतौ[2] देवलसुमन्तु-जैमिनि-जमदग्नि-प्रजापति-विश्वामित्र-पैठीनसि-पितामह बौधायन-छागलेय-जावाल-च्यवन-मरीचि-कश्यप-नारद-दक्षाः । एते षट्‌त्रिंशत् । भविष्यपुराणे,—

मन्वादिस्मृतयो यास्तु षट्‌त्रिंशत् परिकीर्त्तिताः ।

इत्यभिधानात् । योगियाज्ञवल्क्य-वृद्धमनु-वृद्धशातातप-प्रभृतीनि तैरेव कृतानि । एतद्व्यतिरिक्ता या स्मृतय उपलभ्यन्ते शिष्टपरिगृहीताः[3] शुनःशेफशुनःपुच्छकार्ष्णाजिनि—व्याघ्रकण्ठ—जतुकर्ण-लौगाक्षि-व्याघ्रपाद-गर्ग—[4]गार्ग्य-नाड़ीजङ्घपुलस्त्य-पुलह-भृगु-गौतम-शौनक-यज्ञपार्श्व-वैजवाप-शाट्यायन-भौमश्लोक—[5]भस्मक्रतु-ऋष्यशृङ्ग-गोभिलाश्वलायन-प्रणीतास्तासामपि तथा स्मृत्यन्तरेषु चेत्यनेन भविष्यपुराण एव परिगणनम् । योगियाज्ञवल्क्यः,—

साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् ॥
साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।

---

(१) A. C. शङ्खलिखितौ प्रचेता॰ ।
(२) A. C. Add here नारदः ।
(३) B. शिष्टस्वहीताः ।
(४) A. C. पार्श्वं ।
(५) A. C. भौमक्रतु॰ ।

ओंकाराधिकारे तत्रैव,—

पञ्चरात्रे स्थितो ह्येष भगवद्वाचकः स्मृतः।

देवीपुराणे च,—

पञ्चरात्रार्थकुशलो मातृचक्रविशारदः।

स भवेत् साधकश्रेष्ठः

इत्युक्तम्। यच्च भट्टाचार्य्यैः साङ्ख्ययोगपञ्चरात्रशाक्यनिर्ग्रन्थेत्याद्युदाहृत्याप्रमाणमध्ये गणितम्। वेदविरोधोपक्रमाद् वेद[1]विरुद्धवामाचारादिपरपञ्चरात्रपरमेव। साङ्ख्ययोगस्य तु वैधहिंसानिषेधप्रतिपादनांशेन वेदविरोधादेव तदंशेऽप्रामाण्यपरम्। अतएव स्मृतिप्रामाण्यप्रसङ्गे एतेन सामुद्रिकवास्तुविद्यादि-व्याख्यातमिति वास्तुविद्यारूपघटनाङ्गमप्रामाण्यं भट्टाचार्य्यैरेव कथितम्। नह्येतन्मत्स्यपुराणविषयम्[2]। पुराणप्रामाण्येन साधितत्वात्। यच्च कल्पतरौ पाञ्चरात्रिकपूजाघटनादिकं न लिखितं तत्प्रस्थानान्तरत्वेन। कथमन्यथा

मुक्त्वा तु मम शास्त्राणि शास्त्रमन्यत् प्रभाषते।

तथा—

मम शास्त्रं वहिष्कृत्य अस्माकं यः प्रपद्यते।

इति वराहपुराणीयं भागवतापराधे मम शास्त्रं मदुक्तं पञ्चरात्रमिति कल्पतरावेव व्याख्यातम्। तेन हयशीर्षमयसङ्ग-

(१) A. C. निरुद्ध॰।

(२) B. पुराणादिविषयम्।

ह्रादिघटनाशास्त्राणि प्रपञ्चसारसारदादिमन्त्रागमाश्च पञ्चरात्रत्वेन महाजनपरिगृहीताः सर्व्वदेशीयाविगीताचारविषयाः प्रमाणमेव। भविष्यपुराणे,—

अष्टादश पुराणानि रामस्य चरितं तथा।
विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत॥
कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम्।
सौराश्च धर्म्मा राजेन्द्र मानवोक्ता महीपते॥

तत्र विष्णुधर्म्मोत्तरं विष्णुधर्म्मस्य भेद इति न पृथक् निर्द्दिष्टम्। विष्णुधर्म्मोत्तरे,—

एते ये वैष्णवा धर्म्मा दालभ्येन प्रकीर्त्तिताः।
उत्तरं कथितं तुभ्यं मयैतत् परिपृच्छते॥

विष्णुरहस्यशिवरहस्यादिकं गृह्यसूत्राणि पञ्चरात्राणि च। भविष्यपुराणे तथा स्मृत्यन्तरेषु चेत्यनेनैवोपात्तानि। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषञ्चेत्यङ्गानि। कल्पपदं कल्पसूत्रोभयपरं माणकादिकं कल्पः कात्यायनलाट्यायनादिकं सूत्रम्। यच्चात्र स्मृतिरत्र श्लोक इति प्रामाणिकानां लिखनं तदपि प्रमाणं श्लोकाः सूत्राणीति काण्वपाठात्। महाभाष्ये च भ्राजा नाम श्लोका इति प्रमाणमुपन्यस्य किन्तु खलु भोः श्लोका अपि प्रमाणमिति पृष्ट्वा महाजनपरिग्रहात् प्रामाण्यं प्रतिपादितम्। यत्तु षट्त्रिंशन्मतादि तत् कैश्चिदेव परिग्रहाद् विगानाच्चाप्रमाणमिति लक्ष्मीधरः। विज्ञानेश्वरादियोगीश्वरलिखनात्तु तद्वाक्यान्यप्याद्रियन्ते। तत्रास्मदादिप्रवृत्तावात्मतुष्टिरेव प्रमाणम्।

[ याज्ञवल्क्यः[1] ]

चत्वारो वेदधर्म्मज्ञाः पर्षत् त्रैविद्यमेव वा ।

सा ब्रूते यं स धर्म्मः स्यादेको वाध्यात्मवित्तमः ॥

तैनैतैर्ज्ञात्वा धर्म्मोऽनुष्ठेयः । यत्तु स्मृतिवाक्यसदृशवाक्यान्तरं पुरुषकृतं स्मृतिवाक्यालोचनात् पूर्व्वं न प्रमाणं ततः परं तदेव । तदुक्तं भट्टाचार्य्यैः,—

प्रतिकञ्चुकरूपेण पूर्व्वशास्त्रार्थगोचरम् ।

यदन्यत् क्रियते तस्य धर्म्मं प्रत्यप्रमाणता ॥

इति । एवञ्च स्मार्त्तेष्वपि कर्म्मसूपनयनानन्तरमेवाधिकारः । याज्ञवल्क्यः,—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम् ।

वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥

इत्युपनयनानन्तर्य्यं शौचाचारान् दर्शयति । षष्ठे जैमिनिः,— अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन् । स्मृतीनां वेदतुल्यत्वात् । उपायेन उपनयनादूर्द्ध्वं स्मार्त्तधर्म्माः प्रवर्त्तेरन्नित्यर्थः । दक्षः अनुपनीतमधिकृत्य

भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते ।

तस्मिन् काले न दोषोऽस्ति स यावन्नोपनीयते ॥

उपनीतस्य दोषोऽस्ति क्रियमाणैर्विगर्हितैः ।

अनुपनीताधिकारे मनुः,—

नाभिव्याहारयेद् ब्रह्म स्वधा निनयनादृते ।

---

(१) B. omits the portion bracketed.

गौतमः,—प्रागुपनयनात् कामचारवादभक्ष्यः। अहुतादः ब्रह्मचारी। नास्याचमनकल्पो विद्यते। अन्यत्रापमार्जनप्रधावनप्रोक्षणेभ्यः। न तदुपस्पर्शनादशौचम्। नत्वेवैनमग्निहवनवलिहरणयोर्नियुञ्ज्यात्। अहुतादः। न हुतशेषभोजननियमः। ब्रह्मचारी मैथुनं वर्जयेत्। मूत्रपुरीषे न दिङ्नियमाद्यपेक्षा आचमनधर्म्मकं करोति। अपमार्जनमुच्छिष्टानाम्। सोदकेन पाणिना प्रधावनं क्षालनं मूत्रपुरीषयोः। अशुचिस्पृष्टस्योदकेनाभ्युक्षणम्। एवं कृतेऽस्य स्पर्शनेनाशौचम्।

ब्राह्मे,—

मातापित्रोरथोच्छिष्टं बालो भुञ्जन् न दूष्यति।

वृद्धशातातपः,—

प्राक् चूड़ाकरणाद् बालः प्रागन्नप्राशनाच्छिशुः।
कुमारः स तु विज्ञेयो यावन्मौञ्जीनिबन्धनम्।
शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम्।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः॥

गौतमः,—मद्यं नित्यं ब्राह्मणो वर्जयेदित्यर्थो जातिपुरस्कारप्रवृत्तत्वादनुपनीतस्यापि निषेधः। इदमुपलक्षणं यान्यत्र पतनीयानि तानि वर्जयेत् स्मृत्यन्तरे प्रायश्चित्तदर्शनात्। वस्तुतो द्विजमधिकृत्य ये निषेधास्तेषूपनयनादूर्द्धमधिकारः। जातिमात्रपुरस्कारेण ये प्रतिषेधास्तेषूपनयनात् पूर्व्वमपि। भक्ष्याभक्ष्यादिषु वचनात् पर्य्युदासाज्जातिपुरस्कारप्रवृत्तिनिषेधा अपि न प्रवर्त्तन्ते। स्त्रीशूद्रयोर्विवाहादूर्द्धं स्मार्त्तविधिनिषेधाः। तत्पूर्व्व-

मनुपनीतधर्म्मा इति। विष्णुस्मरणतन्नामकीर्त्तनादिधर्म्मस्य तु तत्तत्पुराणेभ्यः सर्व्वेषामधिकारः। किं बहुना

नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः।

इति वचनादशौचमध्येऽपि।

---

## अथ परिभाषा।

स्मृतिः—

सर्व्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभम्।

नारायणं नमस्कृत्य सर्व्वकर्म्माणि कारयेत्॥

तथा—

अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा।

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरे शुचिः॥

छन्दोगपरिशिष्टे कात्यायनः,—

यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न चोच्यते[1]।

दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः॥

यत्र दिङ्नियमो नास्ति जपहोमादिकर्म्मसु।

तिस्रस्तत्र दिशः प्रोक्ता[2] ऐन्द्री सौम्यापराजिताः॥

सौम्या उत्तरा। अपराजिता ऐशानी। यथा—

आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।

तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता॥

---

(१) D. ० तूच्यते। (२) B. प्राप्ता ०।

तथा,—

मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि।
मानकृद् यजमानः स्यादिति शास्त्रविनिश्चयः[१]॥

यजुर्विधाने,—

अनादेशे तु संख्याया अयुतं परिकीर्त्तितम्।

शिष्टाः पठन्ति,—

अनिर्द्दिष्टे शतं प्रोक्तं सहस्रमपि वा पुनः।

एषां शक्त्यपेक्षयानुष्ठानम्।

संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु।
नारायणामिदं प्रोक्तं मानं पुरस्क्रियां विना॥

तापनीयश्रुतौ,—यः प्रणवमधीते स सर्व्वमधीते। अत्र सर्व्वमन्त्रजपं प्रत्याख्यातत्वेन प्रणवजपो विधीयत इति शङ्कराचार्य्यव्याख्यानम्। ओंकार इत्यनुवृत्तौ आपस्तम्बः,—यज्ञेषु चैतदादयः प्रणवाः[२]। प्रणवै[३]त्याद्यनुशावचनानि च।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥
त्रिमात्रस्तु प्रयोक्तव्यः कर्म्मारम्भेषु सर्व्वशः।
तिस्रः सार्द्धास्तु कर्त्तव्या मात्रा तत्त्वार्थचिन्तकैः[४]॥
देवताध्यानकाले तु प्लुतं कुर्य्यान्न संशयः।

---

(१) A. B. शास्त्राद् विनिश्चयः।
(२) E. F. प्रणवाः।
(३) E. F. प्रणवेत्या०।
(४) C. D. ० चिन्तनैः।

लोके भूतिकर्म्मसु चैतदादीन्येव वाक्यानि स्युः। यथा पुण्याहं स्वस्ति ऋद्धिमिति। भूतिकर्म्मसु पाणिग्रहणादिषु श्रींकारादीनि स्वस्त्यादिवचनानि भवेयुः। यमः,—

पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते।
एतदेव निरोङ्कारं कुर्य्यात् क्षत्रियवैश्ययोः॥
[1]सम्पूज्य गन्धमाल्याद्यै र्ब्राह्मणान् स्वस्ति वाचयेत्।
धर्म्मे च कर्म्मणि माङ्गल्ये सङ्ग्रामाद्भुतदर्शने॥

ब्रह्माण्डे,—

आदावन्ते पञ्चभिर्विप्रवर्य्यैः
पुण्याहञ्च स्वस्ति ऋद्धिञ्च वाच्यम्।
दद्यात्तेभ्यो दक्षिणां जातरूपं
वासो धान्यं भोजयेद् ब्राह्मणांश्च॥

वशिष्ठः,—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते॥

स्नानं प्रातः स्नानं तदभावे स्नानान्तरम्।

वायुपुराणे,—

क्रियां यः [2]कुरुते मोहादनाचम्यैव[3] नास्तिकः।
[4]भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः॥

---

(१) A. C. संपूज्य०। (३) A. C. ०चम्येह०।
(२) A. C. क्रियते०। (४) A. C. भवन्ति तु तथा तस्य०।

वशिष्ठः,—

जपहोमोपवासेषु धौतवस्त्रधरो भवेत् ।
अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

विष्णुपुराणे,—

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजो वाचनिके जपे ॥

शातातपः,—

सव्यादंशात्परिभ्रष्टं कटिदेशे धृताम्बरम् ।
एकवस्त्रन्तु तं विद्याद् दैवे पित्र्ये च वर्जयेत् ॥

योगियाज्ञवल्क्यः,—

परिधानाद् बहिःकच्छा निबद्धा ह्यासुरी भवेत् ।
धर्म्म्ये कर्म्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

व्यासः,—

आर्द्रवासास्तु यः कुर्य्याज्जपहोमप्रतिग्रहम् ।
सर्व्वं तद् राक्षसं विद्याद् बहिर्जानु च यत् कृतम् ॥

बौधायनः,—

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वथो हविः ॥

अत्रार्द्रवस्त्रनिषेधः स्थलकर्म्ममात्रविषयः । तथा वशिष्ठः,—

जले च शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्व्वं निष्फलं भवेत् ॥

जपादिपदं वैदिककर्म्ममात्रोपलक्षणम्। काषायवस्त्रपदं कौपीनाद्युपलक्षणम्। तथा च स्मृत्यन्तरे,—

नग्नः काषायवासाः स्यान्नग्नः कौपीनवानपि।
नग्नो मलिनवासाः स्यान्नग्नश्चार्द्रपटस्तथा॥
नग्नो द्विगुणवासाः स्यान्नग्नः स्यूतपटस्तथा।
अकच्छोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत्॥

वर्ज्यः कर्म्माधिकारे। मनुबौधायनपैठीनसयः,—

अग्न्यागारे गवां गोष्ठे ब्राह्मणानाञ्च सन्निधौ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्।

आपस्तम्बः,—

देवागारे तथा श्राद्धे गवां गोष्ठे तथाध्वरे।
सन्ध्ययोरुभयोः साधुसङ्गमे गुरुसन्निधौ॥
अग्न्यागारे विवाहेषु स्वाध्याये भोजने तथा।
उद्धरेद्दक्षिणं पाणिं ब्राह्मणानाञ्च सन्निधौ॥

सव्येऽंशे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद् बहिः कुर्य्यादित्यर्थः। एवञ्च द्वितीयाश्रुत्या वस्त्राद् बहिः करणं दक्षिणपाणिसंस्कारः[१] स कर्म्मसौकर्य्यार्थः[२]। न च निष्फलस्य संस्कारविधिरर्थात् कर्म्माङ्गदक्षिणपाणिसंस्कार इति कल्पनादग्रायां देवागारादिपदोपस्थाप्यदेवार्च्चनादिकर्म्मसम्बन्धित्वलाभात्। एतद्वाक्योपात्तव्यतिरिक्तकर्म्मसु नायं नियमः। तथा शीतत्राणार्थं वस्त्रान्तरादप्युद्धरणमविशेषात्। नह्येतद्वस्त्रसंस्कारो वस्त्रस्या-

---

(१) B. वस्त्रसंस्कार॰ (२) B. D. स च सौकर्य्यार्थः।

श्रुतत्वाद् येन फललाभाय कर्म्माङ्गमुत्तरीयमेव गच्छेत्। 'वस्त्र-संस्कारस्तु लौकिकेनाप्यविशेषात्। अतएवाचमने कण्ठप्रावरण-²निषेधार्त्तिवारणार्थं शीतवस्त्रस्यापि दक्षिणांशाद् बहिःकरणम्। भोजनेऽपि प्राणाहुत्यङ्गमेव संस्कारः।

महाभारते,—

अन्यदेव भवेद् वस्त्रं शयनीये सदैवहि।
अन्यद् रथ्यासु देवानामर्चायामन्यदेवहि॥

अत्र शयनकालीनरथ्यापदोक्तयथेष्टलौकिकाचारकालीनवस्त्रयोरन्यत्वविधौ फलकल्पनाप्रसङ्गात् तदनुवादार्थं देवार्चनोपलक्षितवैदिककर्म्मकाले ताभ्यामन्यद् वस्त्रं विधीयते। तेन शयनकालीनवस्त्रं यथेष्टाचारकालीनवस्त्रं कर्म्मकाले त्यक्त्वा वस्त्रान्तरं धार्य्यम्। तथा,—

स्वयं धौतेन कर्त्तव्याः क्रियाः सर्व्वा विपश्चिता।
न निर्णेजकधौतेन नाहतेन कदाचन॥

अत्र स्वयं धौतस्य कर्म्माङ्गत्वेन विधौ निर्णेजकधौतस्य प्रसङ्गाभावात् तन्निषेधो नित्यानुवादस्तुत्यर्थः। न च प्रतिनिधित्वेन प्राप्तस्य निषेधार्थो वाक्यभेदापत्तेः। नापि पुरुषार्थवस्त्रधारणे निषेधो वाक्यभेदादेव। कारुहस्तः सदा शुचिरिति दोषाभावाच्च। केवलं रजकधौतपरिधाने कर्म्मवैगुण्यं पुत्रादिधौत इव स्वयं धौतत्वाभावान्नाधर्म्मः। यत्तु भट्टाचार्य्यैः,—रजकधौतगर्दभारूढ़-वस्त्रपरिधानं दुराचारमध्ये गणितं तद्गर्दभस्पर्शदोषमभिप्रेत्य।

(१) B. D. हस्तसंस्कार०। (२) E. F. निषेधात्तवार०।

गर्द्दभस्यास्पृश्यत्वात्। नचास्पृश्यस्पर्शने पुरुषस्यैव दोष न वस्त्रस्येति वाच्यं 'चण्डालादिस्पृष्टवस्त्रस्य पुरुषवदेव दुष्टत्वोक्तेः। तदुक्तं भट्टैः,—

पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते।

तस्मात्पुरुषवद् वस्त्रं न गवाश्वादिवन्मतम्॥

केवलं मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान् रेतसो लेपान् प्रक्षाल्याचम्य प्रयतो भवतीत्यापस्तम्बवचनादन्नपदस्य मूत्रपुरीषादि-साहचर्य्येणाभोज्यान्नपरत्वाद् रजकान्नलिप्तस्याधौतं न ग्राह्यम्।

कात्यायनः,—

सदोपवीतिना भाव्यं सदावद्धशिखेन तु।

विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्॥

श्रुतिः,—यज्ञोपवीत्येवाधीयीताध्यापयेद्वा जपेद् यजेच्च।

मनुः—

कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्।

त्रिवृता ग्रन्थिनैकेन तस्यैको ग्रन्थिरिष्यते॥

छन्दोगपरिशिष्टे,—

ऊर्द्ध्वं तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्।

त्रिवृतञ्चोपवीतं स्यात् त्रिवृता ग्रन्थिना युतम्॥

पृष्ठवंशे च नाभ्याञ्च धृतं यद् विन्दते कटिम्।

यज्ञोपवीतं तज्ज्ञेयं नातिलम्बं न चोच्छ्रितम्॥

---

(१) D. चण्डालादिस्पृष्टस्य वस्त्रस्य०।

वामावर्त्तं त्रिगुणं कृत्वा दक्षिणावर्त्तं नवगुणं कुर्य्यात् । तदेव च त्रिसरं कार्य्यम् । वामस्कन्धे धृतं नाभिपृष्ठवंशयोर्धृतं यथा कटि-पर्य्यन्तं प्राप्नोति तावत्परिमाणं कर्त्तव्यमित्यर्थः । आपस्तम्ब,— उपासने गुरूणां वृद्धानामतिथीनां होमे जपकर्म्मणि भोजने च आचमने च स्वाध्याये च यज्ञोपवीती स्यात् । निगमपरिशिष्टे,— वामस्कन्धे यज्ञोपवीतं दैवे । प्राचीनावीतमितरथा पितृपक्षे । नाभ्यादिकण्ठावसक्तमभिचारे निवीतम् । आपृष्ठदेशावलम्बं ग्राम्यधर्म्मेषु । कण्ठपदेन लक्षणया स्कन्ध उक्तः । द्विस्कन्धावसक्त-मित्यर्थः । ग्राम्यधर्म्मो मैथुनम् । गोभिलः,—दक्षिणं बाहुमुद्धृत्य सव्येऽंशे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बं भवति एवं यज्ञोपवीती भवति । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंशे प्रतिष्ठापयति सव्यं कक्षमवलम्बं भवति एवं प्राचीनावीती भवति । मनुः,—निवीती कण्ठमज्जने । शिष्टाः पठन्ति,—

यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च[1] कर्म्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥

लघुहारीतः,—

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः ॥

सुवर्णरजतबहुत्वमवयवापेक्षम् । कुशे तु बहुत्वं वाक्यान्तर-पर्य्यालोचनया हस्तद्वयाभिप्रायम् । अत्र न सुवर्णमनग्रं धारये-दिति पर्य्युदासादग्रं शुद्धमेव सुवर्णं कर्म्माङ्गम् ।

(1) B. D. स्मार्त्ते तु ।

कालिकापुराणे,—

कायस्थेन तु हेम्ना च कर्म्म यत्कुरुते नरः।
आचरेत् तस्य तत्पापं वज्रलेपं भविष्यति॥
अनामिकायां तद्धार्य्यं दक्षिणस्य करस्य तु।

तेनानामिकाव्यतिरिक्तस्थाने स्वर्णधारणे दैवात् पापकरणे तस्य गौरवम्। बहुप्रायश्चित्तापनोद्यं भवति। शुभे रौक्मे च कुण्डले इति मनूक्तकुण्डलद्वयधारणम्। न बहिर्माल्यं धारये-दन्यत्र रुक्ममय्या इति वशिष्ठोक्तस्नातकधर्म्मरुक्ममालाधारणम्। गुरुणानुज्ञातोऽलङ्करणादीनि गृह्णीयात् यथार्थं चैतानि बिभृया-दिति हारीतोक्तेः पापाचरणकाले परिहार्य्यम्।

अनामिकायाः प्रथमं पर्व्व स्वर्णेन पूरयेत्।

इति वाक्यदर्शनात् प्रथमपर्व्वस्थाने सुवर्णं धार्य्यम्। तथा,—

तर्जनी रूप्यसंयुक्ता हेमयुक्तात्वनामिका।

इति वाक्यात् समाचाराच्च तर्जन्यां रजतधारणम्।

अथ कुशाः। छन्दोगपरिशिष्टे,—

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः॥
छिन्नाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः।
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मसु॥

यज्ञिया दर्शादियज्ञार्थाः। बर्हिषि वेद्यास्तरणादिकुशे दीर्घत्वविधिस्तदन्यत्र प्रचरणेऽनुष्ठाने छिन्नाः। यतः कर्म्मविशेषे

दर्भविशेषा हरितादयो विहिता अतः सन्ध्यादिकर्म्मसु दर्भमात्रं पवित्रञ्च यथोक्तलक्षणं सन्ध्याप्रकरणे उक्तम्। तत्र,—

सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः।

इत्यभिधानात् तथाविधकुशमात्रं ग्राह्यमित्यर्थः। आदिपदेन यज्ञपाकयज्ञपितृव्यतिरिक्तानि कर्म्माणि। ह्रस्वत्वन्तु सन्ध्यादावपि। बहिःकार्य्यव्यतिरिक्तानुष्ठानरूपत्वात्[1]। ह्रस्वत्वमरत्निन्यूनत्वम्। दीर्घत्वं तदधिकत्वम्।

गोकर्णदीर्घहरिताः श्राद्धे साग्राः समूलकाः।

इति वायुपुराणात् श्राद्धे गोकर्णमात्रत्वह्रस्वत्वम्[2]। अत्र पर्व्व प्रतिलुनातीति श्रुतिः पित्र्यव्यतिरिक्ते सनाभिदलग्रहणम्। पित्र्येऽप्युपमूले छेदितं भवतीति पिण्डपितृयज्ञे महापितृयज्ञे च श्रुतेर्वाजसनेयिनां मूलसमीपे छिन्नस्य ग्रहणम्। यत् समूलं तत् पितृणामिति तैत्तिरीयश्रुतिमूलं छन्दोगपरिशिष्टीयं शाखान्तरविषयम्। गृह्यपरिशिष्टम्[3],—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥
ये तु पिण्डास्तृता दर्भा यैः कृतं पितृतर्पणम्।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते॥

लघुहारीतः,—

(१) B. ० स्वरूपत्वात्। (३) B. D. गृह्यपरिशिष्टीयम्।
(२) D. E. F. गोकर्णमात्रत्वं ह्रस्वत्वम्।

चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत्॥
मूत्रोच्छिष्टौ[1] हता ये च तेषां त्यागो विधीयते।

शिष्टाः पठन्ति,—

वल्मीकोदकच्छायासु भूमिदग्धाश्च ये कुशाः।
शूद्रोत्पाटितगोभुक्ता आप्लुता च्छेदिता[2] नखैः॥
ब्रह्मयज्ञे च ये दर्भाः ये दर्भाः पितृकर्म्मणि।

ते त्याज्या इत्यर्थः। दर्भमात्रस्यायातयामत्वोक्तौ तत्राय-मपवादः।

लघुहारीतः,—

नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये स्थिताः।
पवित्रांस्तान् विजानीयाद् यथा कायस्तथा कुशाः॥
[3]अनन्तशयनादूर्द्धं न पठेत् सप्तमं क्रतुम्।
छेदनं वर्हिरिध्मानां नारोहेच्चर्म्मपादुके॥

नकारः काकाक्षिन्यायेन उभयत्रान्वेति। अयं च निषेधः कर्म्मसम्बन्धप्रमाणाभावात् पुरुषार्थः। तेन पुरुषदोषमतिलङ्घ्य छेदने कर्म्मविनियोगे न वैगुण्यम्। मरीचिः,—

माघे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥

---

(१) A. C. D. मूत्रोच्छिष्टैः हता ये च ०।

(२) A. C. आप्लुताच्छेदिता ०।

(३) E. F. Add here शिष्टाः पठन्ति,—

नभस्यमावास्या कृष्णादिमासाभिप्रायेणैव। तस्यैव मुख्यत्वात्। तेनानन्तशयनमध्ये तस्याममावास्यायां छेदने न पुरुषदोषः। अत्र छेदिता दर्भा अयातयामा इत्युक्ते अनन्तशयनमध्ये अन्यतिथौ छेदिता यातयामा इत्युक्तं भवति। अन्यथा दर्भमात्रस्यायातयामत्वान्नभस्यामावास्याच्छिन्नेषु अयातयामत्वोक्तिर्व्यर्था स्यात्। न च सामान्यस्य विशेषेणोपसंहारः। लक्षणादोषस्यागतौ स्वीकारात्। तद् यथा दीक्षितः क्रीतराजको[१] भोज्यान्न इत्युक्तम्। पुनश्चाग्निषोमीये संस्थिते यजमानस्य गृहे भोक्तव्यमित्युक्तम्। नानयोरुपसंहारः। किन्तु मध्ये निषेधान्तरकल्पनया व्यवस्थापदस्थापद् विषयत्वेन। तदुक्तं भट्टैः,—

द्वितीयात्राशनानुज्ञादर्शनादनुमीयते।
भोजनस्य विधिमूल[२]मस्त्वन्योऽप्यान्तरालिकः॥

अथवानन्तशयनमध्ये छेदननिषेधस्यातिक्रमेऽनिष्टफलकल्पनादशायां तत्र छेदितानां यातयामत्वं दोषः कल्प्यते। नभस्यामावास्याच्छिन्नानामयातयामत्वविधानसामर्थ्यात्। अतएवास्मद्देशे चातुर्मास्यच्छिन्नकुशैः सद्य एव कर्म्म कुर्व्वन्ति न दिनान्तरे। तेन [३]सामर्थ्यादिष्टतस्य पवित्रोपग्रहादे र्होमादौ विनियोगेन निरिष्टिकविनियोग इति सिद्धम्। शिष्टाः,—

संग्रहाद् वत्सरं यावच्छुद्धिः स्यादिध्मवर्हिषाम्।
अतःपरं न गृह्णीयाद् यज्ञादौ जपकर्म्मणि॥

---

(१) C. क्रीतराजन्यो ०।
(२) E F. विधिमन्यन ०।
(३) B. सन्ध्यादिष्टतस्य ०।

छन्दोगपरिशिष्टे—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥

एतदेव च पिञ्जल्या लक्षणं समुदाहृतम्।

यत्तु,—

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्।

इति तच्छन्दोगपरिशिष्टविरोधात् प्रामाण्यसन्देहाच्च नादेयम्।

एवम्,—

पत्रत्रयेण वा कार्य्यमेकपत्रेण[1] कर्हिचित्।

इति क्वचिल्लिखितमनादेयम्। पराशरः,—

स्नाने दाने जपे होमे दैवे पित्रेऽ च कर्म्मणि।

सव्यापसव्यौ कर्त्तव्यौ सपवित्रकरौ[2] द्विजैः॥

शिष्टाः,—

सन्त्यज्य वैष्टरं मार्गं ब्रह्ममार्गविनिर्गतम्।

सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते॥

दक्षावर्त्तो भवेद्ब्रह्मा वामावर्त्तस्तु विष्टरः।

इति ग्रन्थिमार्गद्वयम्। तत्र सकृदिति वचनाद्ब्रह्मग्रन्थिरूपता नास्ति। द्विवेष्टने हि ब्रह्मग्रन्थिप्रसिद्धिः। तेन ब्रह्मग्रन्थि-व्यतिरिक्तग्रन्थियुक्तपवित्रद्वयं सर्व्वकर्म्माङ्गं कुशवटुरूपम्। यत्तु,—

उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रकौ।

धारणीयौ प्रयत्नेन ब्रह्मग्रन्थिसमन्वितौ॥

---

(१) D. E. F. कार्य्यं नैकपत्रेण ०। (२) D. सपवित्रौ करौ ०।

इति। तत्

ब्रह्मयज्ञे जपे होमे ब्रह्मग्रन्थिर्विधीयते।

इति विधौ कुत्र ब्रह्मग्रन्थिरित्यपेक्षायाम्। हस्तद्वयपवित्रयो-र्ब्रह्मग्रन्थिविधिपरमिति न कुशवटुरूपे सर्व्वकर्म्माङ्गपवित्रे ब्रह्म-ग्रन्थिप्रसङ्गः। एवम्

भोजने वर्त्तुलं प्रोक्तमेवमाचमने स्मृतम्।

इति वटुपरमेव।

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत्।

इति निषेधो ब्रह्मग्रन्थिविषयः।

न भुञ्जीयान्नचाचामेत् ब्रह्मग्रन्थौ करे स्थिते।

इति वचनात् ब्रह्मयज्ञजपाङ्गाचमने ब्रह्मग्रन्थेः प्रधानानु-ज्ञानादनुज्ञा। शिष्टाः,—

अनामिकायाः प्रथमं पर्व्व स्वर्णेन पूरयेत्।

द्वितीयं दर्भसंयुक्तं कार्य्यं विप्रेण नित्यशः॥

इति मध्यपर्व्वणि कुशधारणं पुरुषार्थं कर्म्माङ्गत्वाविशेषात्। कामनाभेदे तु,—

अग्रपर्व्वस्थिते दर्भे तपःसिद्धिः सदैव हि।

मध्ये चैव प्रजाकामो मूले सर्व्वार्थसाधनम्॥

छन्दोगपरिशिष्टे,—

सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम्।

सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः॥

इदञ्च सन्ध्योपक्रमेऽभिधानात् सन्ध्याङ्गमेव। तत्रायमर्थः।

अन्यत्र [1]'सव्यपाणावपि पवित्रकम्। इह तु सन्ध्याकर्म्मणि सव्य-पाणौ बहवः कुशाः करणीयाः। आचमनक्रियामिति सन्ध्योप-क्रमाचमनानुवादादाचमनादिकां सन्ध्याक्रियामित्यर्थः। तेन दक्षिणकरे कुशनिवृत्तिः। तस्यैव विवरणं सव्यः सोपग्रह इति। उप समीपे गृह्यन्ते मार्जनाद्युपयोगिनः कुशा इत्युपग्रहः। तेन बहुकुशधारणं दृष्टार्थमित्युक्तम्। दक्षिणः सपवित्रक इति तु ग्रन्थियुक्तपवित्रनिवृत्त्यर्थं पुनर्वचनम्। अत्र यद्यपि ब्रह्मयज्ञजप-होमेषु ब्रह्मग्रन्थियुक्तपवित्रस्य विशेषविधिस्तथापि

दर्भः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि।

इत्यत्रादिशब्दोपादानादादिशब्दस्य च प्रकारान्तरेण बुद्धिस्थ-वाचकत्वाद् बुद्धिस्थस्य च सर्व्वनामवद्विशेषात्मनोपस्थितेः वाम-हस्तबहुदर्भाः दक्षिणहस्तपवित्रत्वादिशब्दोक्तेषु जपहोमस्वाध्याया-दिषु विहितमिति ब्रह्मग्रन्थियुक्तपवित्रद्वयं पवित्रोपग्रहरूपस्य तुल्यबलत्वाद् वैकल्पिकमेव। तेन ब्रह्मग्रन्थिं विनापि पवित्रोप-ग्रहाभ्यां ब्रह्मयज्ञाद्यवैगुण्यम्। केवलं ब्रह्मयज्ञजपहोमव्यतिरिक्तेन ब्रह्मग्रन्थिप्रसङ्गः।

अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः।

इति वचनात् करद्वयकुशधारणस्य कर्म्माङ्गत्वम्। आचमनेऽपि

वामहस्तस्थिते दर्भे दक्षिणेनोदकं पिबेत्।

रक्तपानसमं ज्ञेयं प्रायश्चित्तीयते द्विजः॥

इति व्यासवाक्यं केवलवामहस्तगतकुशनिषेधकम्।

---

(१) D. सव्ये पाणावपि०।

उभयत्र स्थिते दर्भे समाचामति यो द्विजः ।
सोमपानसमं ज्ञेयं भुंक्ते यज्ञफलं तथा ॥

इति तस्यैव वचनात् । समाचाराच्च ग्रन्थिरहितकुशधारणं मध्यमानामिकयोः । यत्तु कात्यायनः,—साङ्गे हस्तैकसाध्ये कर्म्मणि वेदोपग्रहः । अन्यत्र सोपग्रहः । कुशैरसत्सु । इति असत्सु वेदस्थेषु[1] कुशोपग्रहविधिः । स श्रौताग्निहोत्रादिस्मार्त्त-स्थालीपाकादिविषयः । इदं पुरुषार्थमपि कुशधारणम् ।

कुशहस्तः सदा तिष्ठेद् ब्राह्मणो दम्भवर्जितः ।

इति वचनात् । तथा मनुः धारयेदित्यनुवृत्तौ,—

यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले ।

अत्र वेदः कुशमुष्टिः । अत्र ब्रह्मयज्ञादाविन्द्रियोपस्पर्शनं दर्भैरित्याद्युपयोगार्थम् । तेन वामहस्ते कुशमुष्टिः पुरुषार्थधारणे ।

---

## तिलकधारणम् ।

स्नातश्च वर्णकं हृद्यं नित्यं कुर्य्याद् विशांपते ।
प्रियङ्गुचन्दनाभ्यां वा विल्वेन तगरेण वा ॥

तथा—

अशुचिर्वाप्यनाचारः पापं वा यदि चिन्तयेत् ।
शुचिरेव भवेन्नित्यमूर्द्ध्वपुण्ड्राङ्कितो नरः ॥

---

(१) E. F. वेदस्थेषु ।

तथाच शौचसम्पादकत्वेन सर्व्वकर्म्माङ्गत्वम्। फलवत्त्वात् पुरुषार्थत्वञ्च।

यच्छरीरं मनुष्याणामूर्द्ध्वपुण्ड्रविवर्जितम्।
द्रष्टव्यं नैव यत्[1] किञ्चित् श्मशानसदृशं हि तत्॥
ऊर्द्ध्वपुण्ड्राङ्कितो नित्यं ब्रह्मलोके महीयते।

आपस्तम्बः,—द्वादशाङ्गुलदीर्घं दशाङ्गुलदीर्घं वा षड़ङ्गुल-विस्तृतं[2] मत्स्याकृति कूर्म्माकृति वा। एतच्च फलातिशयार्थम्। सामान्यतस्तु

उत्तमो मध्यमो हीनश्चतुस्त्रिद्व्यङ्गुलैः क्रमात्।
वर्त्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा॥
पद्मस्य मुकुलाकारं कुमुदस्योत्पलस्य च।

अथवा—

ललाटे दण्डवत् कुर्य्यात् हृदये कमलाकृतिम्।
वेणुपत्राकृतिं बाह्वोः कुर्य्यादन्यत्र दीपवत्॥

इत्याकाराणि।

ललाटे केशवं विद्यान्नारायणमथोदरे।
माधवं हृदये चैव गोविन्दं कण्ठकूपके॥
[3]हृदये दक्षिणे पार्श्वे विष्णवे नम उच्यते।
[4]तद्‌वत्पार्श्वे बाहुमूले स्मरेद्‌ वै मधुसूदनम्॥

---

(१) A. C. तत् ०।
(२) A. C. विस्तरम्।
(३) D. उदरे दक्षिणे ०।
(४) B. D. तत्पार्श्वे बाहुमूले तु स्मरेद्‌ ०।

त्रिविक्रमं कण्ठपार्श्वे वामे कुक्षौ च[1] वामनम्।
श्रीधरं बाहुके वामे हृषीकेशन्तु कण्ठके॥
पृष्ठतः पद्मनाभं तु दामोदरं ककुद्यपि।
लक्ष्मीं वक्षस्थले देवीं वासुदेवञ्च मूर्द्धनि॥
नामानि द्वादशैतानि नमस्कारयुतानि च।
प्रयुञ्जीत हरिं ध्यात्वा वासुदेवेति मूर्द्धनि॥

इत्येवं विहितस्थानमन्त्राणि। अत्र गङ्गामृत्तिकाद्येव तिलकद्रव्यम्। महाभारते,—

जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्नि विभर्त्ति यः।
विभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्॥

विष्णुधर्म्मे,—

तुलसीकाष्ठसम्भूतचन्दनेन विलेपनम्।

तथा—

चन्दनं धूपशेषञ्च सर्व्वपापापहारकः[2]।

इति। एतदपि तिलकरूपत्वेऽप्यविरोधात् तिलकार्थे ग्राह्यम्। स्मृत्यन्तरे,—

चन्दनेन मृदा वापि कुर्य्यात् पञ्च ललामकम्।
ललाटकण्ठहृद्बाह्वोः सर्व्वकल्मषनाशनम्॥
ललाटे वासुदेवाख्यं कण्ठे विष्णुमथाव्ययम्।
प्रद्युम्नञ्चानिरुद्धञ्च बाह्वो र्हृदि तथाच्युतम्॥

---

(१) B. ॰ कुक्षौ तु ॰।
(२) A. C. D. ॰ हारकम्। E. F. सर्व्वरोगापहारकः।

तथा,—

गङ्गातीरमृदा चैव स्नात्वा कुर्य्याल्ललामकम्।
ललाटे वासुदेवाख्यं कण्ठे श्रीपुरुषोत्तमम्॥
नाभौ नारायणं स्मृत्वा सर्व्वपापैः प्रमुच्यते।

तत्र तिलकद्रव्ये द्वारवतीमृत्तिकारूपे फलविशेषः। कर्म्मणि फलातिशयश्च[1]। तथाच स्कान्दपुराणे,—

यो धारयेद् द्वारवतीसमुद्भवां
सदा पवित्रां कलिकल्मषापहाम्।
नित्यं ललाटे हरिमन्त्रसंयुतां
यमं न पश्येद् यदि पापसंवृतः॥
ग्रहा न हिंसन्ति न रक्षसां गणाः
यक्षाः पिशाचोरगभूतदानवाः।
यस्यान्तकाले खग गोपिचन्दनं
बाह्वो ललाटे हृदि मस्तके च॥
प्रयाति लोकं कमलालयाप्रभोः
स बालघाती यदि ब्रह्महा नरः।
यो मृत्तिकां द्वारवतीसमुद्भवां
करे समादाय ललाटपट्टके।
करोति नित्यं तनुशुद्धिहेतोः
क्रियाफलं कोटिगुणं लभेत सः॥

---

(१) D. कर्म्मफलातिशयश्च।

क्रियाविहीनं यदि मन्त्रवर्जितं
श्रद्धाविहीनं यदि भक्तिवर्जितम्।
कृत्वा ललाटे यदि गोपिचन्दनं
करोति तत्कर्म्म सदाचयं बुधाः॥

तुलसीप्रक्रमे,[१]—

तन्मृदा रचितं पुण्ड्रं ललाटे सर्व्वसिद्धिदम्।
मुमुक्षुस्तु सदा कुर्य्यात् प्रदेशिन्या यथाक्रमम्॥

इति वचनात्

सर्व्वान् कामानभिलषन् सदानामिकया बुधः।

इति वाक्यदर्शनात् प्रदेशिन्यानामिकया वा ग्रहणम्।

[२]नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे।
कुरुते पुण्यकर्म्माणि मेरुतुल्यानि तानि तु॥
चक्राङ्कितततनुर्भूत्वा यः श्राद्धं कुरुते नरः।
तत्सर्व्वं प्रतिगृह्णाति गयायान्तु गदाधरः॥

इति वचनात् सर्व्वकर्म्मानुष्ठाने फलातिशयार्थं शङ्खचक्रादि-धारणमङ्गभूतम्। वचनान्तरात् पुरुषार्थञ्च। तथाच स्मरन्ति,—

नारायणायुधैर्नित्यं भूषितो यस्य विग्रहः।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः॥

यत्तु निषेधवचनं पठन्ति,—

एकजातिरयं धर्म्मो न द्विजातिः कथञ्चन।

---

(१) D. Adds here. स्कन्दपुराणे,—
(२) D. Adds here. एवम्,—And E. F. पद्मपुराणे.—

इति।

उपवीतादिवद्धार्य्याः शङ्खचक्रादयः सदा।
ब्राह्मणस्य विशेषेण वैष्णवस्य च तद्भवेत्॥
चक्राङ्कितततनुर्विप्रो भुंक्ते यस्य च वेश्मनि।
तदन्नं स्वयमश्नाति पितृभिः सह केशवः॥

इति वचनाद् ब्राह्मणव्यतिरिक्तद्विजातेः क्षत्रियवैश्ययोर्निषेधः। तेनैकजातिः शूद्रस्य ब्राह्मणस्य च चक्रादिधारणं विहितं न क्षत्रियवैश्ययोः। तयोरपि विहितप्रतिषेधाद् विकल्पः।

एतैर्भागवतैश्चिह्नैः कलिकाले द्विजातयः।

इति लिखनात्[1]। तल्लिखनञ्च[2]।

विलिखेद् देवचिह्नानि तुलसीगोपिकामृदा।

इति वचनात् तुलसीमृदा गोपीचन्दनेन वा। यच्च,—

[3][ शङ्खं चक्रञ्च यः कुर्य्यान्मृदा कार्ष्णायसेन च।
स शूद्रवद् वहिष्कार्य्यः सर्व्वस्माद् द्विजकर्म्मणः॥

तत्रापि कार्ष्णायससाहचर्य्यान्मृत्पदमपि विम्बपरम्। तेन ज्ञात्वा काष्ठमयं विम्बमिति विहितकाष्ठमयविम्बाभावे प्रतिनिधित्वेन प्राप्तयोर्मृन्मयलोहविम्बयोर्निषेधः। तेन ताम्रादिना प्रतिनिधित्वेन करणे न दोषः। तेन,—

दक्षिणे तु करे विप्रो विभृयाद् वै सुदर्शनम्।
सव्ये शङ्खञ्च विभृयादेवं ब्रह्मविदो विदुः॥

(१) A. C. D. इति चिह्नात्। (३) D. Omits the portion bracketed.
(२) A. तच्चिह्नञ्च।

शङ्खोपरि कृते पद्मे प्रत्यहं दक्षिणे करे।
वामे गदाधरश्चक्रे वासुदेवः स्वयं भवेत्॥

इति वचनादुभयत्रोभयं धार्य्यं न च विकल्पः। [1]ऐकार्थ्या-भावात्। तथा,—

सर्व्वाङ्गं चिह्नितं यस्य नारायणकरायुधैः।
वैष्णवत्वं कृतं तस्य पापं न प्रविशेद् हृदि॥

इति वचनात् सर्व्वाङ्गे ग्राह्यम्।

अत्र मन्त्रः।

पाञ्चजन्य निजध्यानध्वस्तपातकसञ्चय।
त्राहि मां पापिनं घोरं संसारार्णवपातिनम्॥
सुदर्शन निज[2]ज्योतिर्ध्वस्तपातकसञ्चय।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय॥
संसारभयभीतानां योगिनामभयङ्करः।
पद्महस्तेन यो देवो योगेशस्तं नमाम्यहम्॥

पद्ममन्त्रः।

ब्रह्माण्डभुवनारम्भमूलस्तम्भगदाधर[3]।
कौमोदकी करे यस्य तं नमामि गदाधरम्॥

गदामन्त्रः।[4]

(१) B. एकार्थां०।
(२) A. B. C. द्योतध्वस्त०।
(३) B. C. गदाधरः।
(४) A. C. गदाधरमन्त्रः।

[1]कृष्णमुद्राधारणम्।

कृष्णनामाङ्किता मुद्रा अष्टाक्षरसमन्विता।
शङ्खाद्यैरायुधैर्युक्ता स्वर्णरौप्यमयी तथा॥
यस्य पुंसः करे नित्यं तत्समो नास्ति वैष्णवः।
कृष्णमुद्राप्रयुक्तश्च करोति पितृदैवतम्।
[2]नित्यं नैमित्तिकं काम्यं सर्व्वं भवति चाक्षयम्॥

[इति वचनात् पुरुषार्थं कर्म्माङ्गञ्च।][3]

---

## अथ रुद्राक्षधारणम्।

रुद्राक्षं धारयेन्नित्यं सन्ध्यादिषु च कर्म्मसु।
अरुद्राक्षधरो भूत्वा यद् यत् कर्म्म च वैदिकम्॥
करोति जपहोमादि तत् सर्व्वं निष्फलं भवेत्।

इति वचनात् सर्व्ववैदिककर्म्माङ्गं रुद्राक्षधारणम्। पुरुषार्थञ्च संयोगपृथक्त्वात्। तथाच शिष्टाः,—

पुण्यानां परमं पुण्यं पवित्रं पापनाशनम्।
रुद्राक्षधारणं श्रेष्ठमिहलोके परत्र च॥
मूर्खो वाप्यन्त्यजातो वा युक्तो वा सर्व्वपातकैः।
रुद्राक्षं धारयेद् यस्तु स रुद्रो नात्र संशयः॥

---

(१) A. B. C. कृष्णमुद्रा।

(२) A. C. नित्यं नैमित्ति काम्यं यत् सर्व्वं०।

(३) A. B. C. Omit the portion bracketed.

धारणस्थानञ्च ।

हस्ते बाहौ तथा कण्ठे मूर्द्ध्नि रुद्राक्षधारणात् ।
अवध्यः सर्व्वभूतानां रुद्रवद् विचरेद् भुवि ॥
सर्व्वपापविनिर्मुक्तः [१]स याति परमां गतिम् ।
यज्ञोपवीतस्थाने च विप्राणां धारणं हितम् ।
दशकोटिगुणं पुण्यं धारणाल्लभते जपे ॥

तत्र विप्राणां यज्ञोपवीतस्थाने धारणं जपाश्रयम् । [तच्च][२] दशकोटिगुणफलरूपकाम्यफलार्थम् । तेन पुरुषार्थधारणे कर्म्मान्तराङ्गधारणे जपेऽप्युक्तकामनां विना धारणे न यज्ञोपवीतस्थाननियमः । तत्र विशेषः,—

यावत् षोड़शवक्त्रान्तमेकवक्त्रादितः स्थिताः ।
दुर्लभस्त्वेकवक्त्रस्तु तथैकादश षोड़श ॥
त्रिचतुःपञ्च[३]मुखाः सुलभाः शेषाश्च मध्यमाः ।
एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति ।
भक्तरन्धनकाले तु स्थाल्यूर्द्ध्वे स्थाप्यते यदि ।
अग्निस्तम्भस्तदा नूनमेकवक्त्रस्य लक्षणम् ॥
स्रोतसि प्रतिस्रोतश्च स च याति मुहुर्मुहुः ।
स च यावच्छरीरस्थस्तावन्मृत्युर्न बाधते ॥
द्विवक्त्रो गोवधं हन्यात् त्रिवक्त्रः स्त्रीवधं तथा ।
चतुर्वक्त्रो नरवधं मोचयेन्नात्र संशयः ॥

---

(१) B. D. स गच्छति परां गतिम् । (३) B. ० वक्त्राः । C. मुख्याः ।
(२) A. C. Omit the portion bracketed.

अगम्यागमनञ्चैव अभक्ष्यस्य च भक्षणम् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य धारणात् ॥
[1]षड्वक्त्रं कार्त्तिके यस्तु धारयेद् दक्षिणे करे ।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥
सप्तवक्त्रमैश्वर्य्यदं महापातकनाशनम् ।
जीवेद् वर्षशतं साष्टमष्टवक्त्रस्य धारणात् ॥
नश्यन्ति सर्व्वपापानि न विघ्नः कुत्रचिद् भवेत् ।
नववक्त्रं वामबाहौ धारणान्मुक्तिदं मतम् ॥
लक्षकोटिसहस्रस्य ब्रह्महत्यां करोति यः ।
तत्सर्व्वं दहते शीघ्रं दशवक्त्रस्य धारणात् ॥
तथैकादशवक्त्रस्य शिखायामेव धारणात् ।
सर्व्वे दुष्टाश्च नश्यन्ति वाजिमेधसहस्रजम्[2] ॥
तथा द्वादशवक्त्रस्य कण्ठदेशे च धारणात् ।
नचैवाग्निभयं तस्य न च व्याधिः प्रवर्त्तते ॥
गोमेधफलसौभाग्ये[3] हिंसापापक्षयस्तथा ।
तत्त्रयोदशवक्त्रस्य कण्ठदेशे च धारणात् ॥
सर्व्वकामफलावाप्तिः सर्व्वपापक्षयस्तथा ।
वक्त्रं चतुर्द्दशं यस्य पुण्येन प्राप्यते यदि ॥

(१) A. B. C. षड्वक्त्रः कार्त्तिके यस्तु धारयाद् ० ।
(२) B. D. सहस्रकम् ।
(३) B. ० सौभाग्यं ।

धारयेत् सततं मूर्द्ध्नि सर्व्वपापप्रणाशनम्।
अमन्त्रधारणादीयां गुणा एते प्रकीर्त्तिताः॥
समन्त्रं धारयेद् यस्तु फलं वक्तुं न शक्यते।

एवञ्चामन्त्रधारणेऽप्युक्तफलसिद्धिः। फलवाक्ये [ सर्व्वकामदश्च ][1] मन्त्रसम्बन्धाश्रवणेनामन्त्रधारणफलवाक्यस्य स्तुतित्वायोगात्।

यत्तु,—

विना मन्त्रेण यो धत्ते स याति नरकं ध्रुवम्।

इति तत्समन्त्रकविधिप्ररोचनार्थममन्त्रकनिन्दारूपमेव। उदितहोमप्रशंसार्थमनुदितनिन्दा यथा।

प्रातः प्रातरनृतं ते वदन्ति
पुरोदयाज्जुह्वति येऽग्निहोत्रम्।

इति। तदुक्तं नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते[2] अपि तर्हि स्तुत्यं स्तोतुम्।

अमन्त्रधारणेऽपि प्रतिष्ठा कार्य्या। साचैवम्,—

पञ्चामृतं पञ्चगव्यमघोरश्च तथा मनुः।
एतैः प्रतिष्ठा रुद्राक्षे धारयेत्तु जपेच्च तान्[3]॥

अघोरमन्त्रेण पञ्चामृतपञ्चगव्याभ्यां स्नापन[4]पूर्व्वकं धारयेत्। जपेऽक्षमालां वा कुर्य्यादित्यर्थः।

---

(१) B. D. Omit the portion bracketed.
(२) C. प्रवर्त्तते •।
(३) C. जपे च तान्।
(४) A. B. C. D. स्नान •।

समन्त्रधारणे उक्तप्रतिष्ठानन्तरं मन्त्रेण धारणम्। मन्त्रः,—
ॐ ह्रं क्रीं। ह्रः ह्रं लं गं माक्रा यो ल मां च मां ई ॐ
क्रीं। श्रीं वीं श्रीं ह्रं श्रीं क्रीं। श्रीं ह्रां ह्रं क्रीं। खं खं। श्रीं
ह्रं श्रीं श्रीं। श्रीं ह्रं श्रीं च्रीं श्रीं क्रीं। वा हुं सं नमः। श्रीं ऐं
श्रीं श्रीं श्रीं क्रीं श्रीं ह्रं श्रीं खं। ॐ वं श्रीं ह्रं श्रीं स्वः। श्रीं चीं।
श्रीं श्रीं श्रीं चं। इति मन्त्रान् प्रत्येकमष्टोत्तरशतं तदर्द्धं वा जप्त्वा
धारयेत्। तथा,—

रुद्राक्षान् कण्ठदेशे दशनपरिमितान् मस्तके विंशती द्वे
षट् षट् कर्णोपकण्ठे करयुगलगतान् द्वादशद्वादशैव।
बाह्वोरिन्दोः कलाभिः पृथगभिगदिता ह्येकमेकं शिखायां
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः॥

---

## पद्माक्षधारणम्।

तदपि कर्म्माङ्गं पुरुषार्थञ्च। तथाच शिष्टाः,—

पद्माक्षं धारयेद् यस्तु[1] विशेषेण जपादिषु।
अश्वमेधफलं प्राप्य विष्णुलोके महीयते॥

ये शङ्खचक्रपरिचिह्नितबाहुमूलाः
कण्ठावलम्बिसरसीरुहबीजमालाः।
ये वा ललाटफलको[2]ल्लसदूर्द्ध्वपुण्ड्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥

---

(१) D. नित्यं०। (२) A. C. ० पटको ०।

इति वचनात्कण्ठे धारणं कर्म्माङ्गं फलार्थञ्च ।

## अथ धात्रीफलधारणम् ।

धात्रीफलकृतां मालां कण्ठे वहति मानवः ।
सोऽश्वमेधायुतं पुण्यं यामि यामि लभेन्नरः ॥

इति वचनात् फलार्थमेव ।

## अथ तुलसीकाष्ठधारणम्[1] ।

तत्र शिष्टाः,—

तुलसीकाष्ठमालया भूषितः पुण्यमाचरन् ।
पितॄणां देवतानाञ्च कृतं कोटिगुणं भवेत् ॥

इति वचनाद् यत्र क्वापि धारणं कर्म्माङ्गम् । शिरसि बाह्वौ च धारणं फलार्थम् ।

तुलसीकाष्ठसम्भूतं शीर्षे बाह्वौ च भूषणम् ।
वहते यस्तु वै मर्त्त्यो देहे तस्य सदा हरिः ॥

इति वचनात् । [2]तच्च विष्णवे समर्प्य धार्य्यम् ।

निवेद्य केशवे मालां तुलसीकाष्ठसम्भवाम् ।
वहते यो नरो नित्यं तस्य वै नास्ति पातकम् ॥

तथा—

(१) B. D. ग्रहणम् ।
(२) B. ततः ।

तुलसीकाष्ठमालान्तु कण्ठे लग्नां वहेत्तु यः।
अशुचिर्वाप्यनाचारो[1] मामेवैति न संशयः॥

स्कन्दपुराणे,—

तुलसीकाष्ठसम्भूता माला धार्य्या सदा मया[2]।

इति चन्द्रशर्म्मणा प्रतिज्ञानाद् वैष्णवेनावश्यं धार्य्या। अधारणे च दोषः,—

धारयन्ति न ये मालां तुलसीकाष्ठसम्भवाम्।
नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः॥

---

## अथ विष्णुनिर्म्माल्यधारणम्।

तदपि धर्म्माचरणे फलातिशयार्थम्। [ स्कान्दे,—][3]

यः कृत्वा तुलसीपत्रं शिरसा विष्णुतत्परः।
करोति धर्म्मकर्म्माणि[4] फलमाप्नोति चाक्षयम्॥

इति वचनात्। पुरुषार्थञ्च फलश्रवणात्।

विष्णुमूर्द्ध्नि स्थितं पुष्पं शिरसा यो वहेन्नरः।
अपर्य्युषितपापः स्याद् यावद् युगचतुष्टयम्॥
विष्णोरङ्गात् परिभ्रष्टं मालतीकुसुमं[5] खग।
यो धारयति शिरसा सर्व्वधर्म्मफलं लभेत्॥

---

(१) C. ॰ मनाचारो ॰।
(२) A. B. D. मया सदा।
(३) A. C. Omit the portion bracketed.
(४) A. B. D. ॰ कार्य्याणि ॰।
(५) D. तुलसीकुसुमं ॰।

यस्य नाभिस्थितं पत्रं मुखे शिरसि कर्णयोः।
तुलसीसम्भवं नित्यं तीर्थैस्तस्य मखैश्च किम्॥
तुलसीदलमालान्तु कण्ठोत्तीर्णां वहेत्तु यः।
पदे पदेऽश्वमेधानां दशानां लभते फलम्॥
अहोरात्रस्थितं यस्य पत्रं तुलसीसम्भवम्।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

इति वचनादहोरात्रधारणे मूत्रपुरीषादिकालेऽपि धार्य्यम्।

द्रोणाब्जपत्रयोर्बृत्तपत्रं मूर्द्ध्नि न धारयेत्।
न च जिघ्रेन्नचाक्रामेत् तद्बीजं न च भक्षयेत्॥

स्कान्दे,—

निर्म्माल्यं शिरसा धार्य्यं त्वदीयं सादरं मया।

इति वैष्णवप्रतिज्ञालिखनात् तेनावश्यं धार्य्यम्।

---

## शिखाबन्धनम्।

विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्।

इति कात्यायनवचनात् शिखाबन्धनं कर्म्माङ्गम्। अतएव कात्यायनः स्नाने बद्धशिखीत्यनुवादः। एवञ्च सति

गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि।
मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः॥

इति यन्मुण्डनविधानं तत्रापि शिखावर्जनमेव मुण्डनम्।

अतएव कात्यायनः केशश्मश्रू वपते वाशिखमिति शिखां वर्जयित्वा केशश्मश्रुवपनस्य दर्शाङ्गत्वमाह। सर्व्वदेशेष्वित्थमेव समाचारः।

यत्र तु यतेर्ब्रह्मचारिणो मुण्डनं शिखा वेति विकल्पश्रवणं तत्र पक्षे तदभावात् कर्म्मसु तदीयेषु वद्धशिखत्वं पक्षे नाङ्गम्।

एवं नीचकेशनखश्मश्रुः तथा कृप्तकेशनखश्मश्रुरिति मनु-याज्ञवल्क्योक्तेः अनूढ़श्मश्रुर्नाकस्मादिति च स्मृतेः स्नातकधर्म्मत्वेन केशनीचत्वार्थं वपने कर्त्तव्ये शिखावर्जितमेव[1] कर्त्तव्यम्।

ननु संवत्सरं ब्रह्मचर्य्यमवपनञ्च केशान्त इति पारस्करेण याव-ज्जीवमवपनमुक्तं केशान्तादूर्द्ध्वं कथमन्तरा चौरम्। मैवम्। संवत्सरपदस्य ब्रह्मचर्य्यवदवपनेऽपि सम्बन्धात्। अतएव द्वादश-रात्रं षड्रात्रं त्रिरात्रमन्तत इत्यादावपि ब्रह्मचर्य्यावपनयोरपि[2] सम्बन्धः। तेनावपने यावज्जीवपदाध्याहारे मानाभावः। आप-स्तम्बः[3]—न समावृत्तो वापयेदन्यत्र विहाराद् वापयेदित्येक इति विकल्पमाह। कृप्तकेशनखश्मश्रुरित्यत्र मेधातिथिना कल्पनं छेदनमिति व्याख्याय तच्च न नियमतः किन्तु स्नानादिसौकर्य्यार्थं-मतएव शुचिरित्युक्तम्। एवञ्च दीर्घकेशत्वेऽपि स्नानसहिष्णोर्न वपननियम इति व्याख्यातम्। दानधर्म्मे,—

केशश्मश्रू धारयतामग्रा भवति सन्ततिः।

इत्यभिधानादवपनं काम्यम्। अतएव ज्योतिःशास्त्रे नित्य-

(१) B. ॰ वर्ज्जनमेव ॰।
(२) D. ॰ वपनयोर्हयोः।
(३) B. D. आपस्तम्बस्तु।

चौरेऽनुकूलविधानम् । धर्म्मशास्त्रे च तिथिविशेषे चौरनिषेधः । कर्म्माङ्गेष्वप्यसम्भवात् पुरुषार्थप्राप्तचौरविषयः । पैठीनसिः,—न पर्व्वसु तैलं चौरं मैथुनं मांसमित्युपेयात् । हृद्धशातातपः,—

षष्ठ्यष्टमी ह्यमावास्या उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे चुरे भगे ॥

वामनपुराणे,—चौरं रिक्तासु वर्जयेत्[1] । तथा [ चौरं शुक्रे वर्ज्यमित्यर्थः । तथा,—][2]

चौरं विशाखास्वभिजित्सु वर्ज्यम् ।
देवकार्य्ये पितृश्राद्धे रवेरंशपरिच्युये ।
चुरकर्म्म न कुर्व्वीत जन्ममासे च जन्मभे ॥

न चैवमादिषु विशेषनिषेधो दोषातिशयार्थः । दोषातिशयकल्पनाया अदृष्टकल्पनात्वेन तदपेक्षया पारस्करवाक्ये वपनविधौ संवत्सरपदसम्बन्धकल्पनाया एव लघुत्वात् । तद् यथा नामार्थाख्यातार्थयोः फलपदान्वयविचारे नामार्थस्य फलान्वये धात्वर्थस्य नामार्थं प्रति दृष्टोपकाराभावेनादृष्टद्वारा तदुपकारकत्वप्रसङ्ग इत्यदृष्टान्तरकल्पनाभिया धात्वर्थस्य फलान्वयो नामार्थस्तु धात्वर्थं निवर्त्तयन् तदुपकारक इति कल्प्यते । तदुक्तम्,—

बह्वदृष्टप्रसङ्गाद्धि धर्म्मो नेष्टः पदे पदे ।
नाम्नः फलेन सम्बन्धे परिहारो न तस्य च ॥

---

(१) A. C. चौरन्तु रिक्तासु परिवर्जयेत् ।

(२) B. D. Omit the portion bracketed.

इति। एवमिह। बौधायनः,—कर्म्मयुक्तो नाभेरधः स्पर्शनं वर्जयेत्। करेणेत्यर्थः। योगियाज्ञवल्क्यः—

रौद्रपैत्रासुरान् मन्त्रान् तथा चैवाभिचारिकान्।
व्याहृत्यालभ्य चात्मानमपः स्पृष्टान्यदाचरेत्॥

छन्दोगपरिशिष्टे,—

पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे॥
मार्ज्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे।
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत्॥

पित्र्यमन्त्रानुद्रवणे पित्र्यमन्त्रोच्चारणे। आत्मालम्भः आत्माधिष्ठानहृदयालम्भो यज्ञादौ। अवेक्षणं हृदयस्यैव। आक्रुष्टे परुषभाषणे। योगियाज्ञवल्क्यः,—

यदि वाग्यमलोपः स्याद् व्रतादिषु कथञ्चन।
व्याहरेद् वैष्णवं मन्त्रं स्मरेद् वा विष्णुमव्ययम्॥

तथा,—

न कुर्य्यात् कस्यचित् पीड़ां कर्म्मणा मनसा गिरा।
आचरन्नभिषेकन्तु कर्म्माण्यन्यान्ययाचरन्॥

वायुपुराणे,—

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्॥

साङ्गुष्ठेन अङ्गुलिसहिताङ्गुष्ठेन।

एतान्येव च कार्य्याणि दानादीनि विशेषतः।
अन्तर्जानु विशेषेण तद्वदाचमनं नृप॥

अन्तर्जानु जानुनोर्मध्ये यथा बाहू भवतः। बौधायनः,—

भोजनं हवनं दानमुपहारः प्रतिग्रहः।
वहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्॥

शाट्यायनः,—

दानमाचमनं होमं भोजनं देवतार्चनम्।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायपितृकर्म्मणी[1]॥
आसनारूढ़पादस्तु जान्वोर्वा जङ्घयोस्तथा।
कृतावसक्थिको यस्तु प्रौढ़पादः स उच्यते॥

मार्कण्डेयपुराणे,—

सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः।
अग्नेर्विहरणञ्चैव कृत्स्नभावस्य लक्ष्यते॥

अत्र सूर्य्योदयपदेन उषःकालो लक्ष्यते। तं विना रात्रौ स्नानदानादिकं न कार्य्यमिति लक्ष्मीधरः। वस्तुतः सूर्य्योदयप्राक्कालीनप्रभातकृत्ये विशेषविहितेतरकर्म्मसु[2]

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।

---

(१) B. ॰ पितृतर्पणे।

(२) B. विशेषविहितप्रभातकृत्येतरकर्म्मसु ॰। D. ॰ सूर्य्योदयप्राक्कालीनविशेषविहितप्रभातकृत्येतरकर्म्मसु।

इति नाधिकार इति सूर्य्योदयपदेनोषःकाललक्षणाबीजं प्रयोजनं च न दृश्यते[1]। अङ्गिराः,—

सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने।
पितृकार्य्ये च दैवे च तथा मूत्रपुरीषयोः॥
गुरूणां सन्निधौ दाने योगे चैव विशेषतः।
एषु मौनं समातिष्ठन् स्वर्गमाप्नोति मानवः॥

भविष्यपुराणे,—

सम्यक्संसाधनं कर्म्म कर्त्तव्यमधिकारिणा।
निष्कामेन सदा पार्थ काम्यं कामान्वितेन तु॥
आचारयुक्तः श्रद्धावान् देशिकोऽध्यात्मवित्तमः।
कर्म्मणां फलमाप्नोति न्यायार्जितधनश्च यः॥

सम्यक्संसाधनं यथाविहितसाधनम्। अधिकारिणा प्रत्यवायपरिहारार्थिना। निष्कामेन स्वर्गपश्वादिकाम्यानभिलाषुकेण। अध्यात्मवित्तमः परलोकफलभागिन्यात्मनि दृढ़प्रत्ययवान्। योगियाज्ञवल्क्यः,—

ॐकारो व्याहृतयो गायत्री सशिरास्तथा।
वैदिकञ्च तथा ब्रह्म अब्लिङ्गान्यघमर्षणम्॥
प्राणायामस्तथा सन्ध्या मार्जनान्तर्जलं जपः।
सर्व्वमेवहि कर्त्तव्यं ब्राह्मणे र्ब्रह्मचिन्तकैः॥

वैदिकञ्च तथा ब्रह्मेत्यन्यदपि यद् ब्रह्मप्रतिपादकं मन्त्र-

(१) B. D. प्रयोजनं च दृश्यते।

वाक्यम्। अतोङ्कारादिपदेन तत्साध्यं कर्म्म लक्ष्यते। तेन सर्व्वकर्म्मणां ब्रह्मचिन्ताङ्गत्वेन विधानं सायुज्यफलाय।

विधिहीनन्तु यत्कर्म्म करोत्यविधिना तु यः।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत्॥

छन्दोगानुक्रमस्थाम,—छन्दोदैवतमार्षञ्च विज्ञाय यत्किञ्चिज्जपहोमादिकं करोति तस्य फलमश्नुते। तथा कर्म्मारम्भे मन्त्राणां देवता वेदितव्या। योगियाज्ञवल्क्यः,—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥
अविदित्वा तु यः कुर्य्याद् याजनाध्यापनं जपम्।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत्॥
आपद्यते स्थाणुगतिं स्वयञ्चापि प्रमीयते।
यातयामानि छन्दांसि भवन्त्यल्पफलानि च॥

तेन छन्दोदैवतार्षविनियोगसाकल्यज्ञाने सम्पूर्णं फलं तदज्ञानेऽल्पफलं नतु फलानुत्पत्तिः। स्थाणुगतेरापत्तिः प्रमीतत्वञ्चार्थवादमात्रकम्। यत्तु ऋष्यादिस्मरणकाले शिरसि मुखे हृदये च हस्तन्यासं कुर्व्वन्ति तत्समाचारमूलकम्।

ऋषि र्गुरुत्वात् शिरसैव धार्य्य-
श्छन्दोऽक्षरत्वाद् रसनागतं स्यात्।
धियावगन्तव्यतया सदैव
हृदि प्रदिष्टा मनुदेवता तु॥

इति प्रपञ्चसारवाक्यं प्रस्थानान्तरत्वेऽपि समाचारादेवाद्रियत इत्याहुः। यत्तु तत्रैव

यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्।
विनियोगं ब्राह्मणञ्च मन्त्रार्थज्ञानमेव च॥

इति ब्राह्मणमन्त्रार्थज्ञानयोरपि ज्ञानमुपयोगित्वेनोक्तं तत्

श्रियञ्च लभते सोऽत्र धर्म्ममायुश्च विन्दति।
दिव्यं वर्षसहस्रन्तु स्वस्थाने ऋषिभिः सह॥
सन्तिष्ठते तु तैः सार्द्धं तत्तुल्यश्चैव जायते।

इति फलविशेषार्थमेव यद्यपि ऋष्यादिज्ञानं 'क्रियारूपफलसाधनाय नाश्रयमपेक्षते। तदुक्तं

आत्मनो ह्यक्रियारूपैर्गुणैराश्रियते क्रिया।

इति। तथापि

एवं पञ्चविधं योगं जप्यकाले ह्यनुस्मरेत्।
होमे चान्तर्जले योगी स्वाध्याये याजने व्रते[2]॥

इति फलार्थस्यापि ऋष्यादिपञ्चयोगज्ञानस्य जप्यादिकाल एव कालः। तद् यथा यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेति क्रियारूपस्यापि सौभरस्य फलसाधनायाश्रयानपेक्षणेऽपि वाक्योपात्तसोमाङ्गस्तुतिकालीनस्य फलसाधनत्वम्। तत्र

येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै।
मन्त्रेण तस्य तत् प्रोक्तमृषेर्भावस्तदार्षकम्॥

---

(१) B. D. क्रियाफलसाधनाश्रयमेवापेक्षते। (२) B. D. ० तथा।

छन्दोगायत्र्यादिरक्षरन्यासः[1]। यं मन्त्रः प्रधानेन वदति सा देवता। विनियोगस्तु,—

पुराकल्पे समुत्पन्ना मन्त्राः कर्म्मार्थं एव च।
अनेनेदन्तु कर्त्तव्यं विनियोगः स उच्यते[2] ॥

इति वचनात् प्रस्तुते श्रौते स्मार्त्ते वा कर्म्मणि विनियोगः। न च पुराकल्प इति वचनात् श्रौतविनियोगस्यैव स्मार्त्तेऽपि स्मरणं स्मार्त्तविनियोगस्यापि पुराकल्पे समुत्पन्नत्वादनादित्वाविशेषात्। यत्तु तत्रैव वचनम्,—

अश्वमेधावभृथे विनियोगोऽस्य कथ्यते।

इति तदुदाहरणमात्रप्रदर्शनपरम्। न हि दृष्टे सत्यदृष्टकल्पना। अन्ये तु,—सन्ध्योपक्रमे तैत्तिरीयश्रुतिगतगायत्र्यर्थादिकथने उपनयने [3]विनियोगकथनात् श्रौतविनियोग एव विनियोग इत्याहुः।

निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिप्रयोजनम्।
अधिष्ठानं स्तुतिश्चैव ब्राह्मणश्चाभिधीयते ॥

निरुक्तं निर्वचनम्। अधिष्ठानं आश्रयः। एतत् प्रत्येकयुक्तं वाक्यं ब्राह्मणम्। एतज्ज्ञानमदृष्टार्थद्वारा मन्त्रार्थज्ञानलिङ्गादेव कर्म्माङ्गम्। योगियाज्ञवल्क्यवचनस्यान्यपरत्वेऽपि

अविदित्वा तु मन्त्रार्थं यत् किञ्चित् कर्म्म नाचरेत्।

---

(१) A. विन्यासः।

(२) A. C. ० विनियोगस्तु उच्यते।

(३) B. D. विनियोग इति वचनात् श्रौतविनियोगपदेन उच्यते इत्याहुः।

इति स्मृत्यन्तरात्।

न च श्रौतकर्म्मस्वेव मन्त्राधिकरणोक्तनीत्यामन्त्रार्थज्ञानोपयोगो न स्मार्त्तकर्म्मस्विति वाच्यम्। तल्लिङ्गैरर्च्चयेन्मन्त्रैरित्यादौ तल्लिङ्गपदादिवैयर्थ्यापत्तेः। यथाकथञ्चित् दृष्टसम्भवेऽदृष्टकल्पनानुपपत्तेः। विनियोगबलेनाव्यक्तलिङ्गानामिषेत्वेत्यादिना छिनद्मीत्यादिपदाध्याहारकल्पनेन दृष्टार्थत्ववत्। ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गौण्यावृत्त्यार्थपरत्ववच्च। स्मार्त्तकर्म्मस्वपि यथाकथञ्चित् कर्म्मस्मारकत्वं सर्व्वतः कल्पनीयम्। शन्नोदेवीरित्यस्य शनिपूजायां विनियोगे शनेरस्मारकत्वेऽपि पूजाफलशान्तिप्रकाशकत्वेन कर्म्मस्मारकत्वसम्भवात्। तेन मन्त्रार्थज्ञाने वैगुण्यं स्यादेव। यच्च याज्ञिकाः पठन्ति,—

खाते लूने तथा च्छिन्ने साधाय्ये मार्त्तिके तथा।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥

इति। नैतावता मन्त्राणामदृष्टार्थता किन्तु दृष्टार्थानां क्रियाणां खननादीनां कार्य्यस्य पूर्व्वनिर्वृत्तत्वेऽपि[1] कियदप्यंशमसिद्धं कर्त्तुमिदानीं क्रिया। तत्र मन्त्रस्य दृष्टार्थतैव। क्रियायाश्च सिद्धेऽपि कार्य्ये नियमादृष्टसिद्ध्यर्थं पुनरनुष्ठानमिति।

हारीतः,—आचमनहोमतर्पणानि प्राजापत्येन कुर्य्यात्। मार्ज्जनार्च्चनबलिकर्म्मभोजनानि दैवेन। पित्र्यञ्च पित्रेण। प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात्।

---

(१) D. पूर्व्वंहृत्तत्वेऽपि ०।

कमण्डलूपस्पर्शनं दधिप्राशनमेव वा।
सोमतीर्थेन राजेन्द्र सदा कुर्य्याद् विचक्षणः॥

मार्कण्डेयपुराणे,—

नान्दीमुखानां कुर्व्वीत प्राज्ञः पिण्डोदकक्रियाम्।
प्राजापत्येन तीर्थेन यच्च किञ्चित् प्रजापतेः॥

मनुः,—

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥

ब्राह्मे,—लाजादिहवनं सोमतीर्थेन विहितम्। बीजवपनं चयनादौ च। याज्ञवल्क्यः,—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य यत्।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥

हारीतः,—अङ्गुष्ठस्योत्तरे रेखा ब्राह्मं तीर्थम्। कनिष्ठिकायाः पश्चात् प्राजापत्यम्। अग्रेऽङ्गुलीनां दैवम्। अङ्गुष्ठप्रदेशिन्यो-ऽन्तरा पित्र्यम्[1]। मध्ये आग्नेयम्। [मध्ये पाणिमध्ये।][2] अङ्गुल्यग्रेषु मानुषम्।

अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्त्तितम्।

योगियाज्ञवल्क्यः,—मध्ये सौम्यं प्रतिष्ठितम्। बौधायनः,—अङ्गुलीमूलं दैवमङ्गुल्यग्रमार्षम्। एवं कनिष्ठिकामूलस्य प्राजापत्यकायदैवसंज्ञा। हस्तमध्यस्याग्नेयसौम्यब्रह्मतीर्थसंज्ञा। अङ्गु-

(१) A. C. ऽन्तरा ०।
(२) B. Omits the portion bracketed.

ध्ययस्य दैवमानुषार्षसंज्ञा। तर्जन्यङ्गुष्ठमध्यस्य पितृतीर्थसंज्ञे-त्युक्तम्। छन्दोगपरिशिष्टे,—

प्रक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्म्मकारिणाम्।
प्रक्रिया च परोक्ता च तृतीया चान्यथाक्रिया॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु[1] यः।
कर्त्तुमिच्छति दुर्म्मेधा मोघं [2]तस्य तु चेष्टितम्॥
यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मसु॥

परोक्ता परशाखोक्ता। अन्यथाक्रिया विहितेतरप्रकारेणा-नुष्ठानम्। परशाखोक्ताकरणे शाखान्तराधिकरणविरोधमाशङ्क्योक्तं स्वशाखाश्रयमुत्सृज्येति। तेन स्वशाखोक्तसम्भवे तद्विरोधि परशाखोक्तं न ग्राह्यम्। तस्यैव व्याख्या यन्नाम्नातमित्यादिना। यद्यपि शाखान्तराधिकरणे स्वशाखाविहितमङ्गं परशाखाविहितञ्च तुल्यबलमेवोक्तम्। तथाच उदितहोमे प्रायश्चित्तविधाने विरोध-माशङ्क्य प्रायश्चित्तं विधानेन[3] प्रक्रमाङ्गाद् विनियोगेन इति सूत्राभ्यां येनानुदिते होष्यामीति [4]प्रक्रान्तं तेनोदये सति प्रायश्चित्तं कर्त्तव्यम्। न त्वनुदितहोमिनामुदयकालो नाङ्गमित्युक्तम्। तथा न चैकं प्रतिशिष्यत इत्यत्र न च यत् काठके अग्निहोत्राङ्गं तत् काठकीयमग्निहोत्रे प्रतिशिष्यते किन्तु तैत्तिरीयस्यापीत्युक्तम्।

(१) D. ॰यन्तु॰।
(२) D. तत् तस्य चेष्टितम्।
(३) A. B. निमित्तेन।
(४) B. प्रकारान्तरेणोदये सति॰।

तथापि न्यायतस्तावदेवमेव। केवलं परशाखागतकर्म्मनिषेधवचनस्य निरवकाशत्वात्। [1]स्वशाखानुष्ठानसम्भवे [ [2]परशाखाश्रितं नानुष्ठेयम्। अनुदितहोमानुष्ठानसम्भवे ] उदितहोमो नानुष्ठेयः। तदसम्भवमालोच्योदिते होष्यामीति प्रक्रम्योदितहोमेऽपि वाजसनेयिनां न च कर्म्मवैगुण्यम्। अतएव बलाबलाधिकरणे स्वशाखाश्रयेण परशाखाश्रयं बाध्यत इति यदुक्तं तदपि मुख्यानुकल्पपरमेव। स्वशाखाश्रयसम्भवे परशाखाश्रयं न कर्त्तव्यमित्यर्थः। यथाग्निषोमीयस्य पशोरतिदेशेनान्वाहार्य्यदक्षिणा यद्यप्यङ्गं तथापि [3]सोमदक्षिणया प्रसङ्गसिद्धेरननुष्ठानमेव। परशाखाश्रितस्याङ्गत्वेऽपि स्वशाखाश्रितसम्भवे नानुष्ठानम्। यद्यप्येकशतमध्वर्य्युशाखानां सहस्रं सामशाखानामिति तावतां ज्ञानाभावे कथं कर्म्मानुष्ठानमिति भाति तथापि कल्पाध्ययनस्यापि विहितत्वात् तस्य दृष्टद्वारकत्वने परशाखागताङ्गोपसंहारस्वशाखागतसन्देहनिवृत्तिपरत्वात्। कल्पसूत्रेषु यावदङ्गमुपनिबद्धं तावतापि कर्म्मसादृगुण्यम्। तथा वाजसनेयिपञ्चदशशाखोपसंहारेण कात्यायनसूत्रं [4]तदुक्ताङ्गानुष्ठानेन काण्वमाध्यन्दिनादिवाजसनेयिनां कर्म्मसादृगुण्यम्। यजुःशाखान्तरे तैत्तिरीयादौ श्रुतमप्यङ्गं त्याज्यम्। शाखान्तरन्यायः पञ्चदशशाखाविषयः। यदा तैत्तिरीयागतमप्यङ्गं सति सम्भवे क्रियमाणं फलातिशयार्थं

(१) B. स्वशाखाश्रयानुष्ठान ०।

(२) B. D. Omit the portion bracketed.

(३) B. सोमदक्षिणायां प्रसङ्गासिद्धेरनुष्ठानमेव ०:

(४) D. तदुक्तानुष्ठानेन ०।

शाखान्तरन्यायप्रयोजनम्। अतएव कात्यायनेन भक्षेहिमेवेति वा यथालिङ्गमिति तैत्तिरीयभक्षमन्त्रो वैकल्पिकत्वेन [1]सोम-भक्षणे दर्शितः। यत्तु काण्वश्रुतौ वैकङ्कतीस्त्रुवाः कथिताः कात्यायनेन शाखान्तरानुसाराद् वारुणादद्धोमसंयुक्तानीति वारुणी कथिता। तथा दीक्षायामदीक्षिष्टाऽयं ब्राह्मण इति काण्वश्रुतौ कात्यायनेन दीक्षितोऽयं ब्राह्मण इत्युच्चैस्त्रिर्जपेदिति मन्त्रान्तरमुक्तम्। तथाविधेषु मुख्यत्वात् स्वशाखाश्रयं कर्त्तुमुचितं कल्पसूत्रस्य वाजसनेयिशाखान्तरे सावकाशत्वादिति प्रतिभाति। तदुत्सृज्य सूत्रोक्तकरणे च शाखान्तरीयस्यानुकल्परूपत्वान्मुख्या-सम्भवे चानुकल्पस्यापि कार्य्यत्वात् स्यादेव फलम्। कथं मुख्या-सम्भवे इति चेत्—इत्थम्,—किं स्वशाखागतत्वात् कल्पोक्तत्यागेन श्रुत्युक्तं कार्य्यं किं वा

वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम्॥

इत्यादिव्यासवचनरीत्या स्वशाखागतस्य कल्पानुपसंहृतत्वेन निर्विचिकित्स्यमज्ञानान्न कार्य्यं वेति सन्देहेन स्वशाखोक्ते मुख्ये करणासामर्थ्यमस्त्वेवेति स्यादेव फलम्। यस्य तु निर्विचिकित्सः [2]श्रुत्युक्तेन कर्त्तव्यतानिश्चयो व्यासवचनस्य [3]स्मृतिप्रशंसार्थवचनत्वात् न च परम्परानुष्ठानाभिज्ञयाज्ञिकनिवारणप्रतिबन्धोऽस्ति स

(१) B. सोम०।
(२) D. श्रुत्युक्ते।
(३) D. स्मृतिप्रशंसार्थत्वात्।

कुर्य्यादेव वैकङ्कतीं स्रुवां दीक्षायां [ चादीक्षिष्टायं ] ब्राह्मण इति मन्त्रजपम्। मुख्यानुष्ठानाच्च प्राप्नुयादेव फलम्। यत्तु

येनास्य पितरो याता येन याताः पितामहाः।
तेन गच्छेत् सतां मार्गं तेन गच्छन् तरिष्यति॥

इति मनुवचनं तद् वैकल्पिकेषु समेषु पूर्व्वपरिगृहीतग्रहणविषयं नतु मुख्यानुकल्पविषयम्। श्रुत्यर्थव्याख्यासन्देहेऽन्यतरपक्षपरिग्रहविषयं चेति मेधातिथिना व्याख्यातम्। एवञ्च सति बहुवेदगतन्यायविवेकज्ञो यदब्रवीत्

कात्यायनो न तद् वाच्यमन्याय्यमिति माहग्रैः।
वेदाहृतेऽपि कुर्व्वन्ति कल्पैः कर्म्माणि याज्ञिकाः॥

इत्यादिवार्त्तिकमप्यनुकल्पाभिप्रायं व्याख्येयम्। स्मृतीनां तु सर्व्वासां सर्व्वं प्रति प्रामाण्यं होलाकाधिकरणे प्रतिपादितम्। तत्र सर्व्वशाखास्वेकाग्निहोत्रवत् किं सर्व्वस्मृतिष्वेकमेव सन्ध्याकर्म्म किं वा भिन्नमिति सन्देहे सर्व्वस्मृतीनां तुल्याध्येतृकत्वेन क्वचित् सन्ध्याकर्म्मोत्पत्तिविधौ स्मृत्यन्तरे तद् विधिवैयर्थ्यान्न च शाखान्तरन्यायः तुल्याध्येतृकतावशात्।

सर्व्वशाखाविधित्वं हि स्थितमध्येतृभेदतः।

इत्युक्तदिशा प्रतिस्मृतिभिन्नमेव कर्म्मेति प्राप्ते अभेदहेतोः प्रत्यभिज्ञानस्य सत्वेन क्वचित् कर्म्मानुवादेन गुणविधिरिति। यथा त्रिष्वपि वेदेषु तुल्याध्येतृकेष्वेकमेव ज्योतिष्टोमकर्म्मभूय-

---

(१) B. Omits the portion bracketed.

स्वेनोभयश्रुतीति न्यायात् तथा सर्व्वस्मृतिष्वेकमेव [1]सन्ध्याकर्म्म। तदङ्गानि सर्व्वेभ्यो ज्ञात्वा कार्य्याणि। न चैवं सति सर्व्वस्मृत्यनुसरणं विना सन्ध्याकर्म्माद्यकरणप्रसङ्गः। श्रुत्यर्थोपसंहारे कल्पसूत्रवत् स्मृत्यर्थस्याप्यनुष्ठानाय पूर्व्वपूर्व्वशिष्टनिबन्धानामेवोपसंहारफलानामादरणीयत्वात्। तथाच मनुः,—

दशावरा वा परिषद् यं धर्म्मं परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्थास्तं धर्म्मं न विचालयेत्॥

[2][ परिकल्पयेदिति। ] अनुष्ठानक्रमनिर्णयविषयं कुर्य्यात्। पर्षल्लक्षणं तत्रैव,—

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्व्वे पर्षदेषा दशावरा॥

त्रयश्चाश्रमिणः पूर्व्वे हित्वा ब्रह्मचारिणं विना। ब्रह्मचर्य्याश्रमादूर्द्ध्वमित्यङ्गिरोवचनात्। धर्म्मपाठकः

अनेन धर्म्मशास्त्रज्ञः प्रोच्यते धर्म्मपाठकः।

इत्यङ्गिराः। एवं सति पूर्व्वपूर्व्वधर्म्मशास्त्रनिपुणमहानुभावपर्षद्भिर्यावदङ्गोपेतं नानास्मृतिपर्य्यालोचनया निर्णीतं तदधिकमङ्गञ्चेत् प्रामाणिके स्मृत्यन्तरे संप्रति दृश्यते तदकरणेऽपि न वैगुण्यम्। शाखान्तरन्यायाङ्गत्वादङ्गाधिक्यात् करणे फलातिशयः। एतदेवाभिप्रेत्य भविष्यपुराणे स्मर्य्यते

अदृष्टार्थविकल्पस्तु व्यवस्थासम्भवेऽसति।
स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति॥

(१) B. D. सन्ध्यादिकर्म्म। (२) B. Omits the portion bracketed.

व्यवस्थायाः सम्भवः सम्भावना तस्यामसत्यामदृष्टार्थस्य स्मृत्यर्थस्य विकल्पः। तद्यथा

कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापि वा।

इति सूर्य्योपस्थाने विकल्पश्रुतावपि सायंप्रातःप्राञ्जलिर्मध्याह्ने ऊर्द्ध्वबाहुरिति वाक्यान्तराद् व्यवस्था। यत्र तु न व्यवस्थासम्भवः अघमर्षणसूक्तं त्रिः सकृद् वा जपेदित्यादौ तत्र यथेच्छविकल्पः। तथा स्मृतिशास्त्रस्याधिकबोधकस्य विकल्पः स्यात् पूर्व्वस्मृत्या क्रियमाणस्य कर्म्मण आकाङ्क्षापूरणे सति। यथा योगियाज्ञवल्क्यस्यानुसारेण सन्ध्याकर्म्मणि क्रियमाणे शङ्खस्मृतेर्मार्जनानन्तरं

व्याहृतीः कीर्त्तयेदेवं तथैवाक्षरमव्ययम्।

इति व्याहृतित्रयप्रणवजपविधानम्। न हि प्रणवव्याहृतिजपं प्रत्याकाङ्क्षास्ति मानाभावात्। आकाङ्क्षायान्त्वपूर्णायां स्मृत्यन्तरोक्तं नित्यवदनुष्ठेयम्। तद् यथा योगियाज्ञवल्क्यीये

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्।

इति याज्ञवल्क्येन सन्ध्याप्राणायामानन्तरमाचमनमात्रमुक्तं न तत्र मन्त्रः। अस्ति चाचमनस्य जलसाध्यस्य स्मारकमन्त्राकाङ्क्षा तेन शङ्खस्मृतौ

उपस्पृशेत् ततः पश्चान्मन्त्रेणानेन मन्त्रवित्।

इति अन्तश्चरसीत्यादि मन्त्रविधानं साकाङ्क्षत्वान्नित्यवदेव ग्राह्यम्। एवमन्यत्र कल्पनीयम्।

उपनयनादिगृह्योक्तकर्म्मविषये तु गृह्यपरिशिष्टम्,—

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत्॥

गृह्योक्तानामपि स्थालीपाकादीनां शाखान्तरन्यायेन सर्व्वोपसंहारः। कपालं भगालमिति ब्रूयादित्यादिस्नातकव्रतानां होलाकाधिकरणन्यायेन सर्व्वसाधारणत्वान्नैतद्वाक्यविषयत्वं परिशेषात्।

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्।
तच्छाखाध्ययनं कुर्य्यात्

इति स्मृतेः संस्काराणां स्वशाखाध्ययनाङ्गत्वादितरशाखासंस्कारं परिगृह्यान्तरगताङ्गस्यानङ्गत्वादेव नापेक्षा। तेन न्यायमूलमेवेदं वचनं [1][ विकल्पं वेत्युपनयनादिकर्म्मविषयम्। ] छन्दोगपरिशिष्टे,—

प्रवृत्तमन्यथा कुर्य्याद् यदि [2]मोहात् कथञ्चन।
यत्रैतदन्यथा जातं तदारभ्य समापयेत्[3]॥
समाप्ते यदि जानीयान्मयैतदन्यथाकृतम्।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्व्वकर्म्मणः॥
प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।
तदङ्गस्याक्रियायान्तु नावृत्ति र्न च तत्क्रिया॥

---

(१) B. D. Omit the portion bracketed.

(२) A. C. होमादि किञ्चन।

(३) C. समाचरेत्।

अन्यथा [1]मन्त्रक्रमाद्यन्यत्वम् । क्रियायाः करणे सत्येव । प्रधानस्याक्रिया अकरणम् । अत्रापि समाप्त इति सम्बन्धः । कर्म्ममध्ये प्रधानाकरणे तावन्मात्रं कृत्वा तदुदीच्यङ्गप्रभृतिकरणं न पूर्व्वाङ्गावृत्तिः । तदपि क्रमान्यत्वादन्यथाकरणरूपमेव । समाप्तौ तु प्रधानाकरणज्ञाने साङ्गप्रधानस्य पुनः करणमित्यर्थः । अङ्गाकरणं समाप्तौ ज्ञातं चेन्नावृत्ति र्न च तत्क्रिया किन्तु प्रायश्चित्तमित्यर्थः । मध्येत्वङ्गाकरणज्ञानमन्यथाकरणमेव । यत्तु शतपथश्रुतौ स यदि मन्येत न्यूनं मे [2]यज्ञमभूदिति प्रजननं म एतत् प्रजनिष्य इत्येव [3]तदुपासीत । अथ यदि मन्येतातिरिक्तं मे यज्ञेऽभूदिति[4] श्रियै म एतदामात्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृतो गमिष्यामीत्येव तदुपासीतेति चोक्तान्ते सर्वोऽह्येवमेतां यज्ञस्य समृद्धिं वेद सर्व्वसमृद्धेनैवास्य यज्ञेनेष्टं भवति । तेन एतादृशोपासनाविशेषादेव न्यूनादिसमाधानमुपासनाङ्गाश्रयणात् तदुक्तमिति न्यायाद् यावज्जीवम् । भास्कराचार्य्यमतेन संवत्सरं वा । जैमिनिः, उदगयनपूर्व्वपक्षाहःपूर्व्वाह्णेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् । अत्रोपनयनादीन्युदाहरणमिति शवरस्वामी । अत्र दक्षिणायनकृष्णपक्षादिषु विशेषविहितकर्म्मव्यतिरेकेणाविशेषविहितानीति

(१) A. मन्त्रजपाद्यन्यत्वम् ।

(२) A. B. D. यज्ञेऽभूदिति ० ।

(३) A. तन्मुपासीत C. तच्चुपासीत ।

(४) D. Reads here—पशव्यं म एतत् पशुमान् भविष्यामीत्येव तदुपासीताथ यदि मन्येत संकसुकं मे यज्ञेऽभूदिति ० ।

सम्बध्यते। वस्तुतो यान्येवोदगयनादिषु विहितानि स्मृत्यन्तरेषु तद्विषयमेवेदम्। तथा इतरेषु तु पित्र्याणि। दक्षिणायनकृष्णपक्षापराह्णेषु काम्यानि पित्र्याणीत्यर्थः। ज्योतिःशास्त्रे,—

तिथिनैकेन दिवसश्चान्द्रमानेन कीर्त्तितः।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः॥
रविराश्यंशभोगेन सौरो दिवस उच्यते।
चन्द्रनक्षत्रयोगेन नाक्षत्रो दिवसः स्मृतः॥
चतुर्विधैश्च दिवसैर्मासोऽपि स्याच्चतुर्विधः।
सौरः संक्रान्त्यवच्छिन्नः सावनस्त्रिंशता दिनैः॥
चान्द्रो राकान्तदर्शान्तौ नाक्षत्रो भान्त उच्यते।
रवेर्द्वादशराशीनां भोगः सौराब्द उच्यते॥
शतानि त्रीणि षष्ठ्यन्तदिवसानां तु सावनः।
त्रिंशत्तिथ्यात्मकैश्चान्द्रो मासैर्द्वादशभिर्भवेत्॥
सप्तविंशतिभैर्भाब्दो मासैर्द्वादशभिर्भवेत्।
बृहस्पतेरेकराशिभोगोऽब्दश्च बृहस्पतेः॥

तथा,—

वेदव्रतव्रतोत्सर्गमेखलोद्वाहमङ्गलम्।
सौरमानेन कर्त्तव्यमभिषेकं नवान्दिकम्॥

अब्दायनन्तु ग्रहचारकर्म्म सौरेण। सत्राणि तु सावनेन। सत्रशब्दोऽत्राहःसंख्यावच्छिन्नयज्ञपरः। अह्नो मुहूर्त्ता यामाः प्रायश्चित्तोपवासाश्च आयुर्दायश्च नृणां गमनागमने च सावनाम्नानात्।

शतानन्दः,—

[1][चूड़ार्वाक् मङ्गलं कर्म्म मलमासेऽपि कारयेत्। ]

तेषां सावनमानेन ऋषिभिः परिकीर्त्तितम्॥

जाते मृतौ चाशौचस्य दिनमात्रं[2] च सावनम्।

नक्षत्रव्रतकल्पेषु नाक्षत्रं मानमिष्यते॥

षष्टाब्दादिविधानञ्च [3]बार्हस्पत्याद्द इष्यते।

पितामहः,—

आब्दिके पितृकार्य्ये च मासश्चान्द्रमसः स्मृतः।

तेन सौरसावनविहितं यत् कर्म्म तद्व्यतिरिक्तं यदाब्दिकं वर्षविहितं व्रतपूजादिकं पितृकार्य्यञ्च श्राद्धादिकं चान्द्रमासे कर्त्तव्यमित्यर्थः। तथा यत्तावत्तिथिविशेषविहितमुपजीव्य विहितं यच्चैत्रादिमासपुरस्कारेण विहितं तत्रावश्यं चान्द्रमासादरः। तिथेश्चान्द्रत्वात्। चैत्रादिपदञ्च चान्द्र एव मुख्यम्। लोकप्रसिद्धेः व्याकरणस्मृतेश्च। नक्षत्रेण युक्तः काल इति विहिताणप्रत्ययेन मघायुक्तां माघीं व्युत्पाद्य साऽस्मिन् पौर्णमासीति विहिताण-प्रत्ययान्तरेण माघो मास इति व्युत्पत्तेः

पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा।

नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे॥

इति कोषाच्च। यद्यपि कदाचिन्माघपौर्णमास्यां न मघा-

(१) D. Omits the portion bracketed.

(२) D. दिनमासञ्च ०।

(३) D. बार्हस्पत्याद्द उच्यते।

योगः कदाचिच्च फल्गुन्यामपि मघायोग इति व्यभिचारस्तथापि मघायोगयोग्यतैव निमित्तम्। योग्यता यद्यप्यन्यत्र तथापीह तावदस्ति। यथोद्भिदादिपदस्य योगरूढ़त्वम्। तदुक्तमर्थापत्ति-वशेन एतद्गतमेवोद्भेदनं निमित्तम्। चान्द्रस्य दर्शान्तत्वेऽपि दर्शान्तचान्द्रो न मघादिशब्दवाच्यः। माघी पौर्णमासी यत्र स माघ इति [1]यो नाम तस्य दर्शान्ते बाधात्। सौरस्य तु [2]माघादि-शब्दवाच्यत्वसमर्थनसाहसं लोकवेदाधिकरणविरोधमपश्यतामतीव भ्रान्तिविजृम्भितम्। यत्तु,—गमेर्डो गच्छतीति गौरितिवत् साधुत्वार्थमनुशासनमिति तदपि मन्दम्।

यत्रार्थस्य विसंवादः प्रत्यक्षेण प्रतीयते।

स्वरसंस्कारमात्रार्थात् तत्र व्याकरणस्मृतिः॥

इति भट्टाः। न चात्रार्थविसंवादः श्रौणादिकेषु हि यथा-कथञ्चिद्व्युत्पादनं स्वरसंस्कारार्थं [3]नार्थपरत्वनियमस्तद्भिन्नेषु [4]सर्व्वे-त्रार्थपरत्वमाश्रितमिति स्वमनीषामात्रेण निराकरणमशक्यमेव। प्रसिद्धयौगिकाहीनप्रोक्षणीशब्दादिष्वपि व्यभिचारस्य दर्शयितुं शक्यत्वेनायौगिकत्वेऽहीनो वा प्रकरणाद् गौणः। प्रोक्षणीष्वर्थ-संयोगादित्यधिकरणविरोधः स्यात्। एवञ्च सति श्रुतिस्मृतिषु दर्शान्तचान्द्रे माघादिशब्दप्रयोगो गौण एव यथा क्रते शब्दार्थे लोकादवगते व्यक्तौ प्रयोगो वेदेऽपि लाक्षणिकः। यासौ वैशाखस्य सामावास्या रोहिण्या सम्पद्यत इति श्रुतौ दर्शान्त-

(१) D. योगस्य दर्शान्ते०। (३) B. नान्यपरत्व०।

(२) D. माघादित्वसमर्थन०। (४) B. सर्व्वत्रान्यपरत्व०।

वैशाख एव रोहिण्यमावास्यायोगाद् वैशाखशब्दो गौणः। एषा वै संवत्सरस्य प्रथमा रात्रिर्या फाल्गुनी पौर्णमासी योत्तरा एषोत्तमा या पूर्व्वेति पूर्व्वायां पौर्णमास्यां मुख्य एव फाल्गुनीशब्दः। ब्रह्मपुराणे कार्त्तिकपौर्णमासीपर्य्यन्तकृत्यमभिधाय

मार्गशीर्षस्य मासस्य प्रारम्भे प्रतिपद्यपि।
नववर्षसमारम्भो देवैः कृतयुगे कृतः॥

इति पौर्णमास एव मुख्यः कथितः। श्रुतिश्च,—चतुर्षु चतुर्षु मासेषु 'चातुर्मास्य या इति पौर्णमासान्तमासमभिप्रेत्य। एवं "तपस्यन्ति द्विजोऽध्वरे"रिति मानवे। ऋत्वन्ते चातुर्मास्य विधानं पौर्णमासान्त एव पौर्णमासान्ते मधुश्च माधवश्च वासन्तिकौ ऋतुरिति श्रुते ऋतुशब्दः।

दयार्थं सर्व्वभूतानां वर्षास्वेकत्र संवसेत्

इति मनुना यतिधर्म्मे वर्षाशब्दोऽपि पौर्णम्यन्ते प्रयुक्तो लक्ष्यते। अश्वमेधप्रकरणे च वसन्त एवाभ्यारभेतेत्युपक्रम्य सा या फाल्गुनी पौर्णमासी भवति तस्यै पुरस्तात् षड़हे वा सप्ताहे वर्त्विजः उपसमापयन्तीति पौर्णमास्यन्ते वसन्तशब्दः प्रयुक्तः। तेन मेषगरविसंक्रान्तिर्मासि यत्र तच्चैत्रम्। एवं वैशाखाद्या वृषादिसंक्रान्तियोगिनेति ब्रह्मगुप्तवचनम्। चैत्रादिपदस्य रूढ़िशक्तिप्रदर्शनपरं न योगनिषेधपरं योगरूढ़ित्वद्योतनाय। सौरपरत्वे संक्रान्तिपदवैयर्थ्यम्। मेषगरवित्वेन सौरत्वात्।

---

(‡) D. चातुर्म्मास्ययाजीति पौर्णमासान्तमभिप्रेत्य।

किञ्च

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित्।

आषाढस्तु द्विभो मासः।

द्विराषाढः सविज्ञेय इत्यादिनिर्देशाः सौरे न घटन्ते। नहि सौरे मासवृद्धिरस्ति। एवञ्च तपश्च तपसश्च शैशिरावृतू। मधुश्च माधवश्च वासन्तिकावृतू। शुक्रश्च शुचिश्च ग्रैष्मावृतू। अथैतदुदगयनं देवानां दिनमिति श्रुतिनिर्देशे सौरे तपस्तपस्यादि-पदं गौणपरमेव। लोकवेदाधिकरणानुरोधादित्यवधेयम्। यद्वा चान्द्रमासे होता षड् ऋतून् कल्पयतीति श्रुतिः ऋतौर्विस्तरेण चैतद् वर्षप्रदीपे प्रपञ्चितमस्माभिः। एवञ्च सति

माघकार्त्तिकयोश्चैव चान्द्रमासौ विधीयते।

इति वचने मुख्यत्वात् पौर्णमास्यन्तमासग्रहणम्। माघ-स्नानादिकं[1] कृष्णादिमासे कार्य्यम्। यत्तु पारस्करः,—

अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु।

संक्रान्तिपौर्णमासाभ्यां तथा क्षत्रियवैश्ययोः॥

इति तत्कर्म्मविशेषमासव्यवस्थावचनविरोधादत्र[2] कर्म्मणि दर्शान्तमासविधिः। यथा—

माघासिते पञ्चदशी कदाचि-

दुपैति योगं यदि वारुणेन[3]।

---

(१) A. C. माघस्नानम्। (३) A. B. दारुणेन।

(२) A. B. D. ॰ इ यत्र ॰।

इति। शतभिषायुक्तमावदर्शे श्राद्धविधानं तद् ब्राह्मणस्याधिकारार्थक[1]मित्यर्थः। एवं सौरे यद् विशेषविहितं चत्रियस्य प्रशस्तम्। पौर्णमास्यन्तमासकर्त्तव्यं वैश्यस्याधिकफलद-मित्यर्थः। हारीतः,[2]

मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत्।
तत्रोत्तरोत्तमा ग्राह्या पूर्व्वात् तस्मान्मलिम्लुचः॥

मासादितिथि वर्षादितिथिच द्वैधे यत्कर्मारब्धव्यं तत्कर्मसंयुक्तकालस्य दिनद्वये सम्भव इत्यर्थः। वृद्धयाज्ञवल्क्यः,—

कर्म्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्॥

तथाच लक्ष्मीधरः,—देवपितृकार्य्ययोः पूर्व्वाह्णापराह्णयोर्विहितत्वात् तत्काले विहिततिथ्यादरः। यत्तु वराहपुराणे,—

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः।
वर्द्धमानस्य पक्षस्य ह्रासे त्वस्तमुपस्थिते॥

इति वर्द्धमानस्य पक्षस्येति तिथिवृद्धावित्यर्थः। तेनोदयकालीना तिथिरहोरात्रकार्य्यक्षमेत्यर्थः। एवं यास्तमने तिथिः सा तिथिक्षयेऽहोरात्रकार्य्यक्षमेत्यर्थः। [3]इदञ्चोपवासाद्यहोरात्रसाध्यकर्म्मविषयम्। यत्र तु[4]

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु॥

---

(१) B. D. अधिकफलदमित्यर्थः।
(२) B. D. स्मृति।
(३) B. D. एवञ्चो०।
(४) A. C. तत्र तु।

दिनद्वये कर्म्मकालाभावे बोद्धव्यम्। द्वैधन्तु तिथेर्न यथाकथ-
ञ्चित् किन्तु त्रिमुहूर्त्तादिरूपत्वेन। पैठीनसिः,—

पक्षद्वयेऽपि तिथय स्तिथिं पूर्व्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तै र्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥

स्कान्दे,—

नागो द्वादशनाड़ीभिर्दिक् पञ्चदशभि स्तथा।
भूताष्टादशनाड़ीभि र्दूषयत्युत्तरां तिथिम्॥
चतुर्द्दशी पञ्चदशी दशमी च तथा तिथिः।
पूर्व्वां तिथिं दूषयति त्रिभिरेव मुहूर्त्तकैः॥

एकादशीविषये तु निगमे,—

सर्व्वप्रकारवेधोऽयमुपवासस्य दूषकः।
सार्द्धसप्तमुहूर्त्तैस्तु वेधोऽन्यत्र व्रतान्तरे॥

शिवरात्रिजन्माष्टमीविषये वेधो वक्ष्यते।

श्रावण्यां पौर्णमास्यां[1] वा प्रतिपत् षण्मुहूर्त्तकैः।
विद्धा स्याच्छन्दसां तत्रोपाकर्म्मोत्सर्जनं भवेत्॥

एवं द्वैधे निर्णयः। निगमः,—

युग्माग्नियुगभूतेषु षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशीयुक्ता चतुर्द्दश्या च पूर्णिमा॥
प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद् व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम्॥

---

(१) D. ० प्रौष्ठपद्यां ०।

युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । एषु सप्तयुग्मेषु पूर्व्वतिथिरुत्तरविद्धा ग्राह्या । उत्तर-तिथिश्च पूर्व्वविद्धा ग्राह्या । वृहस्पतिः,—

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी ।
अमावास्या द्वितीया च ता उपोष्याः परान्विताः ॥

गार्ग्यः,—

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कुत्रचित् ॥

पैठीनसिः,—

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ॥

सम्मुखी सायाह्नव्यापिनी । कौर्म्मे,—

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद् विष्णु र्न ग्राह्यास्ते तु वासराः ॥

कामस्त्रयोदशी । विष्णुर्द्वादशी । एतानि चोपवासविषयाणि । पूर्व्वविद्धायाम्—

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु ॥

इति देवलवचनात् प्रातःकाले तिथ्यभावेऽप्यारम्भः । अत्र माधवाचार्य्यसंग्रहश्लोकाः,—

सोदयत्रिमुहूर्त्तायां कुर्य्याद् दानं व्रतानि च।
उभयत्र तथात्वे तु[1] पूर्व्वेद्युस्तदनुष्ठितम्[2] ॥
परत्रैव तथात्वं चेत् पूर्व्वा ग्राह्या तिथिक्षये।
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ॥
पूर्व्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा।
सा द्वितीया परोपाष्या पूर्व्वविद्धा ततोऽपरा[3] ॥
रम्भातृतीया पूर्व्वा स्यादुत्तरा स्याद् व्रतान्तरे।
परेऽह्नि नास्ति चेत् पूर्व्वविद्धाप्यस्तु व्रतान्तरे ॥
मुहूर्त्तमात्रसत्वेऽपि दिने गौरीव्रतं परे।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ॥
चतुर्थी तु परोपाष्या गणनाथव्रते पुनः।
मध्याह्नव्यापिनी पूज्या तद्वन्नागचतुर्थ्यपि ॥
परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा।
अन्यथा पूर्व्वविद्धैव [4]मातृयोगप्रशस्तितः ॥
पूर्व्वेद्युरेव तद्व्याप्तौ पूर्व्वा सर्पप्रिया तिथिः।
नोचेत् सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥
सर्व्वत्र पञ्चमी पूर्व्वा ग्राह्या स्कन्दव्रते परा।
नागविद्धा स्कन्दषष्ठी सा निषिद्धा व्रतान्तरे ॥

---

(१) B. तिथित्वेन ०।

(२) A. C. ० दनुष्ठितः।

(३) B. पूर्व्वविद्धां ततोऽपराः।

(४) A. मातृयोग ०।

उत्तरस्या अलाभे तु नागविद्धापि गृह्यते ।
सप्तमी पूर्व्वविद्धैव व्रतेषु निखिलेष्वपि ॥
अलाभे पूर्व्वविद्धायाः परविद्धापि गृह्यताम् ।
व्रतमात्रेऽष्टमी कृष्णा पूर्व्वा शुक्लाष्टमी परा ॥
दूर्व्वाष्टमी तु शुक्लापि पूर्व्वविद्धा विधीयते ।
पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे ॥
नवमी पूर्व्वविद्धैव पक्षयोरुभयोरपि ।
कृष्णा पूर्व्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ॥
कलाकाष्ठादि[1]वेधोऽपि ग्राह्य एकादशीव्रते ।
अरुणोदयवेधोऽपि[2] वर्ज्यो वैष्णवदीक्षितैः ॥
सार्द्धसप्तमुहूर्त्तैस्तु वेधोऽन्यत्र व्रतान्तरे ।
द्वादशी पूर्व्वविद्धैव व्रतेषु निखिलेष्वपि ॥
शुक्ला त्रयोदशी पूर्व्वा परा कृष्णत्रयोदशी ।
अलाभे सापि पूर्व्वैव परानङ्गत्रयोदशी ॥
या शुक्ला गृह्यते पूर्व्वा गृह्यतां सा पराह्निकी ।
चतुर्द्दश्युत्तरा शुक्ला पूर्व्वा कृष्णचतुर्द्दशी ॥
[3][उदये द्विमुहूर्त्तापि ग्राह्या नक्तव्रते तिथिः ।]
शुक्लापि रात्रियुक्ता स्याच्चैत्र्याश्रावणमासयोः ॥

(१) D. भेदोऽपि ० ।
(२) D. ० भेदोऽत्र ० ।
(३) D. Omits the portion bracketed.

शुक्ला सदापि पूर्व्वैव यदि स्यादापराह्णिकी।
पर्व्वप्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा॥
अन्वाधानं पूर्व्वदिने यागः सन्धिदिने भवेत्।
ऊर्द्ध्वं मध्याह्नतः सन्धावन्वाधानं च तद्दिने॥
इष्टिं परदिने कुर्य्यादन्यो वाजसनेयिनः।
यस्तु वाजसनेयी स्यात् तस्य सन्धिदिनात् पुरा॥
न क्वाप्यन्वाहितिः किन्तु सदा सन्धिदिने हि सा।
सन्धिश्चेत् सङ्गवादूर्द्ध्वमर्वागावर्त्तनाद् रवेः॥
सा पौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः।
वृद्धिः प्रतिपदो यास्ति तदर्द्धं पर्व्वणि क्षिपेत्॥
क्षयस्यार्द्धं तथा छित्वा सन्धिर्निर्णीयतां[1] सदा।
[2]इष्ट्यादि विकृतिः सर्व्वा पर्व्ववच्चेति निश्चयः॥
यस्मिन्नस्तमियाद् भानुस्तन्नक्षत्रमुपोषणम्।
मुख्यं [3]तस्यासम्भवेन ग्रहीतव्यं निशीथयुक्॥
उपवासे यदृक्षं स्यात् तद्धि नक्तैकभक्तयोः।
उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः॥
दिनद्वये तथात्वे तु पूर्व्वं स्याद् बलवत्तरम्।
श्रवणन्तूत्तरं ग्राह्यमुपाकरणकर्म्मणि॥

---

(१) B. D. निश्चीयतां।

(२) B. इत्यादि विकृतिः ०।

(३) A. तस्याभवेत् तत्र यह्नी ० C. तस्याभवेत् तस्य यह्नी ०। D. तस्या-सम्भवे तु ०।

[1]पित्र्येऽपि तिथिवत् सर्व्वो नक्षत्रस्य विनिर्णयः ।
पूर्व्वं स्यादुपवासादावुत्तरो व्रतदानयोः॥
करणं यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ।
दिनद्वयैकभक्ताभ्यामुपवासः प्रसिध्यति ॥
वारेषु संशयाभावात् ग्रहीतव्यं यथास्थितम् ।

स्कन्दपुराणे,—

तिथीनामिव सर्व्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्य्यात् विना शिवचतुर्द्दशीम् ॥

[ पूर्व्वविद्धायान्तु[2] ]

तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते ।
यामत्रयोर्द्ध्ववर्त्तिन्यां प्रातरेवहि पारणम् ॥

देवलः,—

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥

ब्राह्मे,—

मध्याह्नव्यापिनी ग्राह्या एवभक्तव्रते तिथिः ।

भविष्यपुराणे,—

मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥

---

(१) B. पित्र्यन्तु ०। D. पित्र्ये तु ०।
(२) B. Omits the portion bracketed.

स्मृत्यन्तरे,—

नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः।
यतिश्च विधवा चैव कुर्य्यात् तत्सदिवाकरम्॥

वत्सः,—

प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।

स्कान्दे,—

प्रदोषव्यापिनी ग्राह्या दिवा नक्तं विधीयते।
आत्मनो द्विगुणां छायामतिक्रामति भास्करे॥

सूर्य्यव्रते विशेषः कौर्म्मे,—

नरस्य द्विगुणां छायामतिक्रामेद् यदा रविः।
तदा सौरं चरेन्नक्तं न सक्तन्निशि भोजनम्॥
उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद् रविः।
युज्यते यत्र निशि वा शशिना सहितं यदा॥

स्कान्दे,—

तदेवोपवसेदृक्षं यन्निशीथादधो भवेत्।
उपवासे यथैव स्यात् तथा नक्तैकभक्तयोः॥

पद्मपुराणे,[1]—

दिवारात्रिव्रतं यत् स्यादेकस्यामेव चेत् तिथौ।
तस्यामुभययोगिन्यामाचरेच्च व्रतं व्रती॥

---

(१) A. C. पुराणे।

व्यासः,—

एकोद्दिष्टादिवृद्ध्यादौ वृद्धिह्रासादिचोदना।

द्वितीयादिकयुग्मानां पूज्यता नियमादिषु॥

['पित्र्ये क्षयवृद्धिप्राधान्येन निर्णयः। दैवे युग्माग्नीत्यादिशास्त्रनिर्णयः। गोभिलः,—

खर्व्वो दर्पो तथा हिंसा त्रिविधं तिथिलक्षणम्।

खर्व्वदर्पे परे श्राद्धे हिंसा स्यात् पूर्व्वकालिकी॥

मात्स्ये,—

देवकार्य्याणि पूर्व्वाह्णे मनुष्याणान्तु मध्यमे।

पितॄणामपराह्णे तु कार्य्याण्येतानि यत्नतः॥

त्रेधा विभागो नायं पक्षः।] पञ्चधाविभागं व्यास आह,—

मुहूर्त्तास्तु त्रयः प्रातस्तावानेव तु सङ्गवः।

मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः॥

सायाह्नस्त्रिमुहूर्त्तः स्यात् सर्व्वकर्म्मबहिष्कृतः।

त्रिधाविभागोऽमावास्याश्राद्धादौ। प्रत्याब्दिके पञ्चधाविभागः।

हारितः,—

आमश्राद्धन्तु पूर्व्वाह्णे एकोद्दिष्टन्तु मध्यमे।

पार्व्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥

मात्स्ये,—

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा।

तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः॥

(१) B. Omits the portion bracketed.

ऊर्द्ध्वं मुहूर्त्तात् कुतपाद् यन्मुहूर्त्तचतुष्टयम्।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते॥

प्रत्याब्दिकपार्व्वणविषयमिदम्। माधवाचार्य्यव्यवस्था

एकोद्दिष्टे तु मध्याह्ने युक्ता स्यादेकभुक्तिवत्[1]।
एकदेशे समाव्याप्तौ चये पूर्व्वान्यथोत्तरा॥
कुतपाद्यपराह्णान्तव्याप्तिरब्दिक उत्तमा।
तदभावेऽपराह्णस्य व्यापिका ग्राह्यतां तिथिः॥
चये पूर्व्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः।
नैं ग्राह्यौ तिथिगौ वृद्धिच्चयादूर्द्ध्वं तिथेस्तु तौ॥
साम्ये तूर्द्ध्वं तिथिर्ग्राह्या परविद्धा च वृद्धिमत्।
न स्पृशत्यपराह्णौ चेत् पूर्व्वा स्यात् कुतपा द्वया॥
वैषम्येणैकदेशस्य प्राप्तौ ग्राह्या महत्त्वतः।
साम्येन चेत् चये पूर्व्वा परा स्याद् वृद्धिसाम्ययोः॥
[2]वृद्धिसाम्यच्चमा ग्राह्या स्तोयँगा नोर्द्ध्वगा इह।

दर्शश्राद्धे छन्दोगपरिशिष्टे,—

पिण्डान्वाहार्य्यकं श्राद्धं चीणे राजनि शस्यते।
वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः॥

चतुर्द्दश्यष्टमांशे चयः। अमावास्याष्टमांशे वृद्धारम्भः।

---

(१) B. देकभक्तवत्।

(२) A. वृद्धिसाम्यच्चया ग्राह्यतिथिनाशोर्द्ध्वगा इह। C. वृद्धिसाम्यच्चया ग्राह्यतिथिना चोर्द्ध्वगा इह। D. वृद्धिसाम्यच्चया ग्राह्यास्तिथिगानोर्द्ध्वगा इह।

चतुर्द्दश्यष्टमांश[1]मारभ्याष्टमांशात् पूर्व्वं श्राद्धकालः। मार्गशीर्षामावास्यायां [2][ज्येष्ठामावास्यायां] चतुर्द्दश्यष्टमांशेन चयः। किन्त्वमावास्यायामेव। अधिकमाससंवत्सरे तु तयोरप्यमावास्ययोश्चतुर्द्दश्यष्टमांशे चयारम्भः। एवञ्च सति चन्द्रक्षययुक्तापराह्णे श्राद्धम्।

तदुक्तम्,—

अमावास्यां प्रतीक्षेत तदन्ते वापि निर्व्वपेत्।

तदन्ते चतुर्द्दश्यन्ते। तथा—

वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि।

यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्॥

चन्द्रक्षयाभावेऽप्युत्तरदिने विहितवचनात्।

---

## अथ कर्म्मानर्हकालाः।

ब्रह्मसिद्धान्ते,—

चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्त्तितः।

ज्योतिःसिद्धान्ते,—

असंक्रान्तमासोऽधिमासः स्फुटः स्यात्

द्विसंक्रान्तमासः क्षयाख्यः कदापि।

---

(१) D. ० मारभ्यामावास्याष्टमांशात् ०।

(२) D. Omits the portion bracketed.

चयः कार्त्तिकादित्रये नान्यदा स्यात्

तदा वर्षमध्येऽधिमासद्वयं स्यात् ॥

अधिमासद्वयं—असंक्रान्तमासद्वयम् ।

अत्र माधवीये,—

अधिमासो द्विसंक्रान्तः सोऽन्तर्भवति चोत्तरे ।

असंक्रान्तावेकवर्षे द्वौ चेत् संसर्प आदिमः ॥

चयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः ।

चयस्थाज्या विवाहादौ संसर्पांहस्पती उभौ ॥

इद्धौ श्रौते तथा स्मार्त्ते मलमासो विविच्यते ।

काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत् ॥

आरब्धं मलमासात् प्राक् कृच्छ्रं सत्रादिकञ्च यत् ।

तत् समाप्यं सावनस्य मानस्यात्र लङ्घनात् ॥

आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः ।

प्रवृत्तमखिलं काम्यं तदानुष्ठेयमेव तु ॥

कारीर्य्यादि तु यत् काम्यं तस्यारम्भसमापने ।

कार्य्ये कालविलम्बस्य प्रतीक्षाया असम्भवात् ॥

अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत् ।

गत्यन्तरयुतं नित्यं सोमयागादि वर्ज्जयेत् ॥

अगति ग्रहणस्नानं जातेष्टिर्मृतसूतकम्[1] ।

इयं [त्रयं] नैमित्तिकं तस्य व्यवस्था नित्यवन्मता ॥

---

(१) A. B. C. D. ० स्नातिस्तिका ।

शुद्धमासस्तानां स्यान्मलिने प्रथमाब्दिकम् ॥

मलमासस्तानान्तु मले स्यादाब्दिकान्तरम्।

बृहस्पतिः,—

बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।

मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥

अत्र मलमास इवैतानि वर्ज्जयेदितिदृष्टान्तोपादानात् मलमासे यावन्निषिद्धं तत्सर्व्वमिह निषिध्यते। सकलकाम्यवर्जनादिकमपि। [ तथा ][1]

अपूर्व्वदेवतां दृष्ट्वा शुचः सुनष्टभार्गवे।

मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

शौनकः,—

स्नानं तीर्थगतं व्रतचुरमहादानप्रतिष्ठादिकं

सिंहस्थे विबुधार्चिते न शुभदं कर्त्तुस्तथा सूर्य्यगे।

विबुधार्चिते वृहस्पतौ। सूर्य्यगे गुर्व्वादित्ये। शातातपः,—

माघ एव यदा माघी सिंहे चैव यदा गुरुः।

व्रतं चौरं तथोद्वाहं गृहकर्म्म च वर्जयेत् ॥

शतानन्दस्तु,—

माघे च माघी यदि पौर्णमासी

तस्यां तिथौ[2] सिंहगते च जीवे।

(१) A. C. Omit the portion bracketed.

(२) A. B. C. तिथौ

नोद्वाहकर्म्मात्र च कामरूपे
समाचरेद् याम्यदिशि प्रशस्तम् ॥
महामाघीं विनैवाह माण्डव्यः सिंहगे गुरौ ।
विवाहवर्जं कर्म्माणि कुर्य्यादिति वचः शृणु ॥
श्रुतिविधव्रतचूड़ानवगृहयज्ञप्रतिष्ठाद्याः[1] ।
रविभवनस्थे जीवे कार्य्या वर्ज्यो विवाहस्तु ॥

कल्पतरौ तु,—[2]

सिंहसंस्थं गुरुं शक्र सर्व्वारम्भेषु वर्जयेत् ।
प्रारब्धञ्च न सिध्येत महाभयकरं भवेत् ॥
पुत्रभ्रातृकलत्राणि हन्यात् शीघ्रं न संशयः ।
कारको व्रजते नाशं सन्तानः चीयते चिरात् ॥
देवारामतड़ागेषु प्रपोद्यानगृहेषु च ।
सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् ॥

इति प्रतिष्ठादौ मकरस्थवृहस्पतिरपि वर्जनीय उक्तः ।

पुनः शतानन्दः,—

गुरुभार्गवयोरेको यदि स्यादुदितो युवा ।
विवाहवर्ज्यमन्यानि कुर्य्यादित्याह चाङ्गिराः ॥
एतदुक्तं भवेद् यत्र बाले वृद्धेऽस्तगे भृगौ ।
अग्न्याधेयादिकं सर्व्वं वर्जयेन्मलमासवत् ॥

---

(१) B. ० प्रतिष्ठार्थाः । (२) E. F. Add here. देवीपुराणे,—

गुरावस्तं गते वर्ज्याः प्रतिष्ठोद्वाहमेखलाः।
गृहारम्भप्रवेशौ च चूडेत्येवं षडेव तु॥
अन्न्याधेयादिकं सर्व्वं गुरावस्तं गतेऽपि च।
कुर्व्वीत तन्निषेधोक्तेरभावादिति निश्चितम्॥
रविस्थराशिं सन्त्यज्य[1] उदितः स्याद् युवा[2] गुरुः।
रविराशिसमेतोऽपि कदाचिदुदितो युवा॥

'गुर्व्वादित्येऽपि गुरूदये कार्य्यं गृहादीति गम्यते। उत्तर-सौरे,—

गुरोर्मध्यमसंक्रान्तिहीनचान्द्रोऽधिवत्सरः।
वर्ज्यानि तत्र यज्ञार्थ[3]-प्रतिष्ठादीनि नाकिनाम्॥
स्फुटसंक्रान्तिहीनवेत्येऽप्याहुरधिमासवत्॥

चान्द्रसंवत्सरमध्ये मध्यगणनया स्फुटगणनया गुरुसञ्चाराभावे इदं बोध्यम्। ज्योतिःशास्त्रे,—

कृत्वातिचारं यदि पूर्व्वराशिं
नायाति मन्त्री विबुधाधिपस्य[4]।
दानं विवाहं,व्रतबन्धगेहं
सर्व्वं तदा हन्ति मतं मुनीनाम्॥

शतानन्दः,—जीवस्य पूर्व्वराशिफलप्रदत्वेन कर्म्मानर्हत्वं तत्तु लुप्तसंवत्सरत्वं च नास्तीत्याह,—

(१) B. सन्त्यज्ञं।
(२) B. हिवा ०।
(३) B. ० यज्ञार्थ ०।
(४) B. D. वसुधाधिपस्य।

सत्यं विवाहयज्ञादिविषयं वचनं च तत्[१]।
[२]किन्तु नष्टहृतावाप्तौ मनोरथवचः शृणु॥
यथाचारगताः सर्व्वे ग्रहाः स्युः स्वफलप्रदाः।
नष्टप्राप्तौ तु फलदः पूर्व्वराशिगतो गुरुः॥

लुप्तसंवत्सराधिकसंवत्सरमकरवृहस्पतिषु कर्म्मकरणसमाचाराः शिष्टाचारमूलत्वादाद्रियन्ते।

---

## सर्व्वकर्म्माङ्गत्वेन द्रव्यशुद्धिरभिधीयते।

द्रव्यशुद्धिश्च कर्म्माङ्गद्रव्यसंस्कारः प्रक्षालनादिक्रियाजन्योऽदृष्टरूपोऽतिशयः। क्षालनादिक्रिया विधेया। शोधनक्रिया च न कर्म्माङ्गं प्रकरणाद्यभावात्। नचैवमाधानवत्। स्वकृतशोधनजन्याया एव शुद्धेः कर्म्माङ्गत्वप्रसङ्गः। स्वादधीतेत्यात्मनेपदवदिह नियामकाभावात्। न च शास्त्रफलं प्रयोक्तरीतिनीत्या विधेय स्वगामिफलत्वावगमात् परकृतशुद्धेर्न कर्म्माङ्गत्वम्। विधिवशाद्धि कर्त्तुः स्वकीयं फलम्। तच्चेहापि। परद्रव्यशोधनकर्त्तुर्दासस्य द्रव्यशुद्धिरूपं फलं स्वस्य[३] वेतनलाभोपयोगित्वात् स्वकीयमेव। मेधातिथिस्तु नात्र शोधनक्रियाविधिर्विध्यश्रवणात् किन्तु [४]सव्यापसव्यविभागवत् सरस्वतीविनशनप्लक्षप्रस्रवणादिदेश[५]विभागकथन-

---

(१) E. F. ॰ यत्।
(२) A. B. C. किञ्चित् ॰।
(३) B. D. तस्य ॰।
(४) A. B. C. शब्दापशब्दविभाग ॰।
(५) B. वेग ॰।

वत् कर्म्मापेक्षितत्वात् सिद्धार्थकथनमप्येतत् प्रमाणम्। शुद्धेः कर्म्म कुर्य्यादित्युक्ते न ज्ञायते के शुद्धा इति तत्रैवमुपतिष्ठते भस्मनाद्भिर्मृदा चैव शुद्धिरित्यादि।

---

## भूशुद्धिः।

देवलः,—

यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा।
चाण्डालाध्युषितं यच्च यत्र विष्ठादिसङ्गतिः॥
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता।
श्वशूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत्॥
अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत्।

एवं शोध्या भूमिस्त्रिधा। तत्र शुद्धिमाह। यत्र मनुष्या दह्यन्ते यत्र चाण्डालैरध्युषितं तयोर्दहनकालक्षेपगोक्रमणसेकोल्लेखैः शुद्धिः। यत्र मनुष्या जायन्ते वा म्रियन्ते यत्रात्यन्तविष्ठादिसङ्गतिः तासां दाहवर्जितैस्तैरेव शुद्धिः। श्वशूकरखरैश्चिरमध्युषिताया गोक्रमणसेकोल्लेखैस्त्रिभिः। उष्ट्रग्रामकुक्कुटादिभिश्चिरमध्युषितायाः सेकोल्लेखाभ्यां शुद्धिः। सेकश्चोदकेन गोमूत्रेण वेति मेधातिथिः। अङ्गारतुषादिभिश्चिरमध्युषिताया उल्लेखनेन। मार्जनानुलेपने सर्व्वत्र समुच्चीयेते। याज्ञवल्क्यः,—गृहं मार्जनलेपनात्। पृथगुपादानात् प्रत्यहं तयोः क्रियेति विज्ञानेश्वरः। स्मृत्यन्तरे,—अतिशयोपघाते तक्षणं सूर्य्यरश्म्यनुप्रवेशोऽग्निज्वाला-

दर्शनमिति मेधातिथिः। बौधायनः,—अनेकोद्धार्य्ये दारुशैले भूमिसमे इष्टकाश्च सङ्कीर्णिकताः। अनेकैरेव पुरुषैरुत्तोलयितुं यद्-दारुणि वा शिलायां शक्तिरित्यर्थः। मनुः,—

ग्रामाद् दण्डशतं त्यक्का नगराच्च चतुर्गुणम्।
भूमिः सर्व्वत्र शुद्धा स्याद् यत्र लेपो न दृश्यते॥

शिष्टाः,—

ब्राह्मणावसथे भूमिर्गवां गोष्ठे च या भवेत्।
मेध्या वै सर्व्वदा भूमिर्देवागारे तथैव च॥

अत्र देवागारशुद्धत्वोक्त्या सुधालिप्तस्यापि शुद्धत्वमुक्तं गोमयलिप्त इव सुधालिप्तेऽपि भूशुद्धत्वानपायात्। अतएव मार्जनोपार्जनैर्वेश्मेति मानवीये। उपार्जनं सुधागोमयादिभिरुपलेपनमिति मेधातिथिः। चूर्णस्यास्थिमयत्वात् पञ्चनखव्यतिरिक्तास्थ्नां चालनादेव शुद्धिः कर्म्मार्हत्वम्।

याज्ञवल्क्यः,—

रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यजवायसैः।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च॥

धवलगृहादीनि। नात्र प्रोक्षणं तृणादिगृहे प्रोक्षणम्।

'सौवर्णराजताब्जानामूर्द्धपात्रग्रहाश्मनाम्।
शाकरज्जुमूलफलवासोविदलचर्म्मणाम्॥
पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते।

(१) B. D. सुवर्णराजता०।

अब्जं मुक्ताफलशङ्खशुक्त्यादि । वैदलं वैणवसूर्पादि ।

चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ।
स्फ्यसूर्पाजिनधान्यानां मुषलोदूखलानसाम् ॥

मनुः—

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति ।
अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम् ॥

अत्यन्तानुपहतम् ।

प्रोक्षणं संहतानाञ्च बहूनां धान्यवाससाम् ।

संहतानां कठिनानाम् । अथवा [1]सजातीयद्रव्यसमुदाय रूपाणाम् । वासोग्रहणं शाकचर्म्मादेरप्युपलक्षणम् । स्मृतिः,—

वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥

अल्पानान्तु चालनमेव । अनेकपुरुषवाह्यानां धान्यराशिवस्त्रगृहप्रभृतीनां प्रोक्षणमेवेति प्राञ्चः । सलेपानां शुद्धिमाह मनुः,—

तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

तथा,—

ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥

---

(१) A. C. सजातीयसमुदायद्रव्यरूपाणाम् ।

त्पुरङ्गम्। कृष्णशकुनिमुखावमृष्टं निर्लिखेत्[1] पात्रम्।

श्वापदमुखावमृष्टं न प्रयुञ्जीत पात्रम्। मार्जारमुखावमृष्टे

मार्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः।

इति वचनान्न दोषः। मनुः,—

गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च।

[शुद्ध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च[2]॥]

अङ्गिराः,—गण्डूषपादशौचयोः कांस्यपात्रे करणे षण्मासं यावद् भूमौ निक्षिप्य पुनरग्नौ करणम्। शूद्रभोजने कांस्यस्य चतुर्भिर्मार्जनैः[3]। अग्नौ च निक्षेपात्। अप्रक्षालितहस्तेन ग्रहणे गोशृङ्गेण स्पर्शनाच्छुद्धिः। बौधायनः,—मूत्रपुरीषरेतःप्रभृत्युपहतानां पुनः पाको गोमूत्रेण वा सप्तरात्रं वासो मही मयानाम्।[4] हारीतः,—श्वचाण्डालोदक्यादिस्पर्शे निर्लेपयोरपि त्रिः सप्तकृत्वः परिमार्जनम्। शङ्खः,—तैजसानां कुणपरेतोमूत्रपुरीषोपहतानामावर्त्तनमुल्लिखनमथवा त्रिः सप्तकृत्वः परिमार्जनम्। आवर्त्तनं चिरकालं मूत्रादिसंसर्गे। [आकारनाशः सद्यः[5]।] अत्राम्लादीनां न नियमो यस्य येनोपहन्यत इति शास्त्रान्तरात्। [विष्णुः,— शारीरैर्मलैर्मद्यैः सुराभिर्वा यदुपहतं तदत्यन्तोपहतम्। सर्व्व-

(१) A. C. निर्लिंपेत् ०। E. F. न प्रयुञ्जीत ०।

(२) B. Omits the portion bracketed.

(३) C. चतुर्मार्जनैः।

(४) A. C. Add here. महामहानद्यां वा।

(५) A. Omits the portion bracketed.

लोहमयभाण्डमग्नौ प्रतप्तं शुध्येत्। अश्ममयमब्जमयं मणिमयञ्च सप्तरात्रं महीनिखननेन। दन्तशृङ्गास्थिमयं तक्षणेन। दारवं मृन्मयं च जह्यात्।

[1]अत्यन्तोपहतस्यैव वस्त्रं चालितं यत्र वर्ज्यते तच्छिन्द्यात्। लोहभाण्डं यन्त्राष्टधातुमयम्।][2] याज्ञवल्क्यः,—

तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम्।

अस्थिपदं दन्तस्याप्युपलक्षणम्। [3]सूक्ष्माणां शृङ्गास्थिदन्तानां हस्तिमहिषादिसम्बन्धिनाम्। तथा,—

उषरोदकगोमूत्रैः शुध्यत्याविककौशिकम्।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा॥

उषरमृत्तिकासहितेन उदकेन गोमूत्रेण वा आविकमूर्णाभवं कम्बलादि कौशिकं कृमिकोशोत्थं पट्टादि। अंशुपट्टं वल्कलतन्तुजातम्। कुतपः पर्व्वतीयच्छागरोमनिर्म्मितः कम्बलः। तथा सगौरसर्षपैः क्षौमम्। अल्पोपघाते तु देवलः

ऊर्णकौशेयकुतपपट्टक्षौमदुकूलजाः।
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः॥

क्षौमवदेव शाणस्य समानयोनित्वात्। हारीतः,—आदित्येनोर्णामयानाम्। [ यमः,—

(१) A. C. अत्यन्तोपहतस्य वस्त्रं चालितं यत्र वर्द्धते तद्धि न्यायात्। लोह०।
(२) B. Omit the portion bracketed,
(३) A. B. C. सूक्ष्माणां०।

कृष्णाजिनादीनां वालैर्वालानामङ्गुराम्भसा।

वालानां चामरादीनाम्[1]।] मनुः,—

चौमवत् शङ्खशृङ्गाणामस्थिदन्तमयस्य च।

शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा॥

देवलः—

तूलिकामुपधानञ्च पुष्परक्ताम्बरं तथा।

शोषयित्वातपे किञ्चित् करैः सम्मार्जयेन्मुहुः[2]॥

पश्चाच्च वारिणा प्रोक्ष्य नियुञ्जीत स्वकर्म्मणि।

तान्यप्यतिमलिष्ठानि यथावत् परिशोधयेत्॥

पुष्परक्तानीति हरिद्रारक्तस्याप्युपलक्षणम्। शङ्खः,—रागद्रव्याणि शुचीनि प्रोक्षितानि। एतच्च रागलोपभयान्माञ्जिष्ठादौ तु क्षालनमेव। मनुः,—पुनः पाकान्महीमयम्।

शङ्खः,—

मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः।

संसृष्टं नैव शुद्ध्येत[3] पुनः पाकान्महीमयम्॥

तत्र परित्याग इत्यर्थः। तथा,—

द्रवाणाञ्चैव सर्व्वेषां शुद्धिरुत्पवनं स्मृतम्।

कीटाद्युपघाते च वस्त्रेणाच्छाद्य गालनम्। अशुद्धान्तरे शुद्धिः प्लावो द्रवस्य क्षिति जले भाण्डस्यैव मज्जनम्। भाण्डदोषे

(१) B. D. Omit the portion bracketed.

(२) B. D. सम्मार्जयन्॰।

(३) B. शुद्ध्यन्ति॰।

वौधायनः,—मधूदकपयस्तद्विकाराः पात्रात् पात्रान्तरनयने शुद्धाः। मनुः,—

प्रोक्षणात् तृणकाष्ठञ्च पलालञ्चैव शुध्यति।

[ देवलः,—

सर्व्वद्रवाणां[1] पक्वानां लवणस्य गुड़स्य च।

नान्यत् प्रोक्तं परित्यागादशुद्धानामिति स्थितिः॥

तदत्यन्तोपघाते। वृद्धशातातपः,—

तापनं घृततैलानां प्लावनं गोरसस्य च।

तन्मात्रमुद्धृतं शुद्धेत् कठिनञ्च पयो दधि॥

अविलीनं तथा सर्पिर्विलीनं श्रपणेन च।

ब्राह्मे,—

द्रवद्रव्याणि भूरीणि परिप्लाव्यानि चाम्भसा।

शस्यानि व्रीहयश्चैव शाकमूलफलानि च॥

त्यक्त्वा तु दूषितं भागं परिप्लाव्य जलेन तु।

विष्णुः,—प्रोक्षणेनैव पुस्तकम्।[2] ] याज्ञवल्क्यः—

रश्मिरग्नीरजश्छाया गौरश्वो वसुधानिलः।

विप्रुषो मक्षिका स्पर्शे वत्सः प्रस्रवणे शुचिः॥

रजः श्वादिव्यतिरिक्तस्य।

---

(१) A. सर्वद्रव्याणां •।

(२) B. D. Omit the portion bracketed.

श्वकाकोष्ट्रखरोलूकशूकरग्राम्यपक्षिणाम्।
अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते॥

सम्मार्जनीरजोपादरजश्चैवम्। अश्वग्रहणं हस्तिनोऽश्वतरस्याप्युपलक्षणम्। विप्रुषः क्षीरादिविन्दवः। एते स्पर्शे शुद्धाः।

अजाश्वं मुखतो मेध्यं न गौ र्न नरजा मलाः।
पन्थानश्च विशुद्धान्ति सोमसूर्य्यांशुमारुतैः॥
मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः।
श्मश्रु चास्यगतं दन्तलग्नं त्यक्त्वा ततः शुचिः॥

[ तथा,—

कारुहस्तः शुचिः पण्यं भैक्ष्यं योषिन्मुखं तथा।

मनुः,—शकुनिः फलपातने श्वा मृगग्रहणे शुचिः।[1] ]
शकुनिरमेध्यभुग्व्यतिरिक्तः। श्वपदं व्याघ्रादेरुपलक्षणम्।

तथा,—

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति॥

एतदन्नविषयम्। अवधूतं मुखश्वासहतम्। अवक्षुतं क्षुतसन्निहितम्।[2] सजलं भस्म मृद्वापि प्रक्षेप्तव्यमिति याज्ञवल्क्यः।

मनुः,—

---

(१) B. Omits the portion bracketed.

(२) A, C. संविहितम्।

यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः।
तावन्मृद्वार्य्युपादेयं सर्व्वासु द्रव्यशुद्धिषु॥

लेपस्तत्कृत इति वचनात् कुङ्कुमादिगन्धलेपस्य पूर्व्वस्थस्य सत्वेऽपि नाशौचम्।

तथा,—

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥

यददृष्टत्वेनादृष्टमज्ञातम्। केनापि प्रमाणेन यत्र दोषो न ज्ञात इत्यर्थः। दोषशङ्कायां निर्णिक्तं चालितम्। शुद्धौ कृतायामपि शङ्कायां वाचा प्रशंसायां शुद्धिरित्यर्थः।

याज्ञवल्क्यः,—

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्।

प्रकृतिस्थं रूपरसान्तरमनापन्नम्। महीगतं नाशुद्धभूमिगतम्। आकाशस्थमपि शुद्धमेव। इदं गोतृप्तिचमं चेत् शुचि।

आचमनार्हं देवलः,—

उद्धृता अपि शुद्ध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम्॥

[ तथा,—

कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत्।

कश्मलशब्दादियुक्तं यत्र तत्र तीर्थान्तराज्जलं ग्राह्यम्।[1] ]

---

(१) B. D. Omits the portion bracketed.

शातातपः,—

अन्त्यैरपि कृते कूपे तड़ागेषु सरःसु च।
एषु स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते॥

[1]स्मृत्यन्तरे,—

वापीकूपतड़ागेषु दूषितेषु सरःसु च।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुद्ध्यति॥
मृतपञ्चनखात् कूपादत्यन्तोपहतात् तथा।
अपः समुद्धरेत् सर्व्वाः शेषं वस्त्रेण शोधयेत्॥
[ वह्निप्रज्वालनं कृत्वा कूपे पक्केष्टकाचिते।
पञ्चगव्यं न्यसेत् पश्चान्नवतोयं समुद्धरेत्[2]॥ ]
जलाशयेषु चान्येषु स्थावरेषु चरेषु च।
कूपवत् कथिता शुद्धि र्म्महत्सु च न दूषणम्॥

[दशरात्रेण शुद्ध्यतीत्यधिकृत्य यमः,—भूमिष्ठञ्च नवोदकम्। ब्राह्मे,—नवखातजलं दशरात्रेण शुद्ध्यति[3]। ]

तथा,—

आसनं शयनं यानं जायापत्यं कमण्डलुः।
शुचीन्यात्मन एतानि परेषामशुचीनि तु॥

गोतमः,

---

(१) E. F. Here add :—

रुधिरश्लेष्मविण्मूत्रक्षीरलोमद्यमेव च।
एभिस्तु दूषिते कूपे कुम्भानां षष्टिमुद्धरेत्॥

(२,३) B. D. Omit the portions bracketed.

आसनं शयनं यानमन्तर्धाय समाचरेत्।

परकीयमित्यर्थः। वस्त्रे निर्णिज्याश्नन्निति परकीयस्य निर्णेजने नाधिकारः। तथा पादौ शुचिर्ब्राह्मणानाम्। एतच्च[१] पदा स्पृष्ट्वा कामत इति यदशुद्धत्वं तस्यापवादः। इति द्रव्य-शुद्धिः।

---

## अथ कर्तृशुद्धिः।

देवलः,—

जनने मरणे नित्यमशौचमनुधावति।
सपिण्डान् पितृबन्धूंश्च यत्र क्वचन तिष्ठतः॥
अशौचं द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।

तत्राभ्यन्तरमुपलक्षणम्। बाह्यशरीरस्य कर्मानर्हत्वम्।[२]तदीयस्वत्वाश्रयद्रव्याशुद्धिश्चेति द्विविधा। सपिण्डाश्च मात्स्ये,—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

मनुः,—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावश्च जन्मनाम्नोरवेदने॥

---

(१) B. D. एतत् ०।
(२) E. F. तदीयस्वत्वाश्रयद्रव्याशुद्ध्यशुद्धिश्चेति द्विधा।

स्वप्रपितामहस्य यः प्रपितामहस्तदन्वये यावन्तः सप्तमास्ते स्वस्य सपिण्डा इति मेधातिथिः। बृहस्पतिः,—

समानोदकभावश्च निवर्त्तेताचतुर्दशात्।

एतत्

मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते।

इति बृहस्पतिवचनादनादेयम्। चतुर्दशपुरुषादूर्द्ध्वं जन्मनामज्ञानेऽपि न समानोदकभाव इति विकल्प इत्येके। इदञ्च जननं मरणञ्च ज्ञातमेवाशौचनिमित्तम्। आदित्यपुराणे,—

अपि दातृग्रहीत्रोश्च सूतके मृतकेऽपि वा।

अविज्ञाते न दोषः स्यात् श्राद्धादिषु कथञ्चन॥

न चैवं विदेशमरणे ज्ञानावधिदशरात्रप्रसङ्गः।

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च।

अनिर्गते दशाहे तु शेषाहोभिर्विशुद्ध्यति॥

इति बृहस्पतिवचनात्। एवञ्च सति—

एकेनापि परिज्ञाते[1] भोक्तुर्दोषमुपावहेत्।

इति दातुरज्ञानेऽस्यादुष्टत्वेऽपि वचनाद्दोषः। एवम्,—

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।

शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथातिथि॥

इत्यङ्गिरःस्मरणादग्निमतो दाहात् पूर्व्वमशौचाभावः।

---

(१) D. ० प्रतिज्ञाते ०।

जातुकर्ण्यः,—

एकाग्नेर्मरणादूर्द्धमशौचं श्राद्धमेव च।
यस्य तु त्रयमग्नीनां तस्योर्द्धं दाहकर्म्मणः॥
ऊर्द्धं त्रिपक्षाद् यत् श्राद्धं मृताहन्येव तद् भवेत्॥
[1]अधस्तु कारयेद् दाहादाहिताग्नेर्द्विजन्मनः॥

एवञ्च पुत्रस्य दाहादूर्द्धमशौचं ज्ञातीनाञ्च मरणादूर्द्धमिति व्यवस्थापकोऽपि शङ्खलिखितो नादेयः। एवमाहिताग्नेर्दैवाल्लौकिकाग्निना दाहेऽपि पश्चात् श्रौताग्निना यदास्थिदाहस्ततः प्रभृत्येवाशौचम्। तत्पूर्व्वमशौचं नास्ति। एवञ्च दम्पत्योः पूर्व्वमृतस्य वैतानेन दाहेऽपि [2]पश्चान्मृतस्येति वचनान्तरेणारणिजन्यलौकिकाग्निना दाहेऽपि मरणदिनावध्येवाशौचम्। अशौचे च कर्म्मणां न निषेधो येन विहितप्रतिषेधे विकल्पः स्यात् किन्तु पर्य्युदासः। तदयमर्थः। यस्सन्ध्यामुपासीत तदन्यत्राशौचदिनेभ्यः। कर्म्मविधीनां शेषः। [3][ जावालः,— ]

सन्ध्यां पञ्चमहायज्ञं नैत्यिकं स्मृतिकर्म्म च।
तन्मध्ये हापयेत् तेषां दशाहान्ते पुनः क्रिया॥

नैत्यिकं स्मृतिकर्म्मेत्यनेन नैमित्तिकमप्युपलक्ष्यते। तथाच कालिदासचयनिनः स्मार्त्तञ्च कर्म्म त्रिधा त्याज्यमिति। त्रिधा नित्यं नैमित्तिकं काम्यञ्च। एवञ्च सति

न च नैमित्तिकोच्छेदः कर्त्तव्योहि कथञ्चन।

---

(१) D. अधस्तात् कार ०।
(२) D पश्चान्मृतवचनान्तरेणा ०।
(३) D. Omits the portion bracketed.

इति वाक्यस्य प्रामाण्येऽपि सूतकादिमध्यपतितजातकर्म्मादि-सञ्चयनादिश्राद्धपरमेव। यमशङ्खौ,—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्जमशौचे विनिवर्त्तते॥

तेनाष्टकामावास्यादिश्राद्धं पितृकर्म्मत्वान्निवर्त्तते। [1]मासिक-वार्षिकश्राद्धयोर्वचनान्तरादशौचानन्तरं क्रिया। ऋष्यशृङ्गः,—

[2]शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कार्य्या वै नत्वन्या तु कदाचन॥

इति। तथा,—

मासिकार्थे तु संप्राप्ते कदाचिन्मृतसूतके।
वदन्ति शुद्धौ तत्कार्य्यं दर्शे वापि[3] मनीषिणः॥

विपत्त्याद्युपलक्षणञ्चैतत्। ग्रहणे स्नानं दानं वचनान्तरादशौचेऽपि स्यादिति वक्ष्यते। संक्रान्तिस्नानदानादिकं वर्ज्यम्। यत्तु,—

अस्नाताशी मलं भुंक्ते अजपी पूयशोणितम्।

इति वाक्याद् भोजननिमित्तयोर्जपस्नानयोरशौचेऽपि कार्य्यत्वमिति तन्न नैमित्तिकानामपि निषिद्धत्वात्।

सूतके मन्त्रवत्कर्म्म स्मार्त्तं नैव समाचरेत्।
आपोशानद्वयं मुक्त्वा तथा प्राणाहुतीरपि॥

---

(१) B. D. मासिकवार्षिकयोः श्राद्धयो ०।
(२) B. D. शुद्धभूतेन ०।
(३) A. C. ० दर्शेनापि ०।

इति सर्व्वत्यागस्मरणाच्च विण्मूत्रोत्सर्गनिमित्तशौचचण्डालादिस्पर्शननिमित्तस्य च स्नानस्यासन्नकत्वाच्च प्रतिप्रसवः। किञ्च शक्तविषये न मुहूर्त्तमप्यप्रयतः स्यादित्यापस्तम्बस्मृतेः निषेधपरिपालनरूपेण शौचस्य कर्त्तव्यत्वम्। [नतु नैमित्तिकत्वात्।][1] एतेन कृत्वा वा ब्रह्महा शुचिरित्यादौ महापापप्रायश्चित्ते[2] शौचपदप्रयोगाच्च मुहूर्त्तमप्यप्रयतः स्यादिति निषेधपरिपालनरूपेणाशौचेऽपि प्रायश्चित्तमिति निरस्तम्।

शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः।

इत्यादिना शौचस्य मलक्षालनाचमनरूपत्वेन पापप्रायश्चित्ते शौचत्वाभावात्। नहि कर्म्माहंतापादकमात्रं शौचं[3] सपिण्डीकरणे शौचपदाप्रयोगादशौचनिरासप्रतीक्षणाच्च।

पितरौ प्रमितौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं स्याद् यावत् पूर्णो न वत्सरः॥

इति कर्म्मानर्हतावचनात्।

सपिण्डीकरणादूर्द्धं प्रेतः पार्व्वणभाग् यतः।
वृद्धिपूर्त्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत्॥

इति सपिण्डीकरणस्य कर्म्माहतापादकत्वात्[4]। शौचरूपत्वे चास्याशुचित्वविलम्बनिषेधभयेन सूतकेऽपि कार्य्यतापत्तिः।

(१) D. Omits the portion bracketed.

(२) B. D. प्रायश्चित्तेः।

(३) B. A. C. ० मात्मशौचम् ०।

(४) B. D. ० सम्पादकत्वात्।

जातेष्ट्याशौचापगमप्रतीक्षाविचारश्चतुर्थाध्याये विरुद्धः[1] स्यात्। नैमित्तिकस्य वसन्ते वसन्ते ज्योतिषा यजेतेत्यस्याशौचे कर्त्तव्यत्वं स्यादिति। छन्दोगपरिशिष्टे,—

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनाथवा फलैः॥
अकृतं हावयेत् स्मार्त्ते तदभावे कृताकृतम्।
कृतमोदनशक्त्वादि तण्डुलादि कृताकृतम्॥
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः।
सूतके च प्रवासे च त्वशक्तौ श्राद्धभोजने॥
एवमादिनिमित्तेषु हावयेदिति योजयेत्[2]।

सन्ध्यानिषेधे पैठीनसिः,—सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं नमस्कुर्य्यात्। एतावत् कार्य्यम्। देवलः,—

जन्महानौ वितानस्य कर्म्मत्यागो न विद्यते।
शालाग्नौ केवलो[3] होमः कार्य्य एवान्यगोत्रजैः॥

केवलशब्दाद्[4]यज्ञादिपिण्डपितृयज्ञयोर्निषेधः।

पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्।

इति जातूकर्ण्यवचनात् चरुपिण्डयज्ञयोर्विकल्पः। पौर्ण-मासे चरौ कृते त्वमावास्यायामशौचपाते त्वारब्धत्वात् समा-

(१) B. विशुद्धः ०।
(२) B. ० हावयेद् विनियोजयेत्।
(३) B. ० केवले ०।
(४) D. ० यज्ञादिपिण्डयज्ञयोर्निषेधः।

पनमेव। पारस्करः,—नित्यानि निवर्त्तेरन् वैतानवर्जम्। वैतानिकानि नित्यानि दर्शपौर्णमासाग्रयणाग्निहोत्रचातुर्म्मास्यादीनि। निरूढ़पशुबन्धहोमयोः पर्व्वान्तरसावकाशत्वान्नाशौचे ऽनुष्ठानम्[1]। आग्रयणमप्यन्तिमपर्व्वपर्य्यन्ते गतमनन्यगतिकत्वादन्ते कार्य्यम्। व्याघ्रपादः,—

श्रौते कर्म्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्।

अशौचमध्ये ऋत्विक् यजमानश्चेत्यर्थः। मनुः,—

न च तत्कर्म्म कुर्व्वाणः सनाभ्योऽप्यशुचिर्भवेत्।

सनाभ्यः सपिण्डः। तत्कर्म्म श्रौतेष्वार्त्विज्यम्। प्रवासश्चाशौचे निषिद्ध एव। आत्ययिककार्य्ये च शुद्धिविधानादेव विपत्तौ प्रवासे कार्य्येऽन्युपस्थानं कार्य्यम्। प्रवेशोपस्थानञ्च पर्व्वादिसन्निधावावश्यकत्वात् कार्य्यमेव। स्कान्दे चन्द्रशर्म्मणो वैष्णवार्चाप्रतिज्ञायाम्,—

मया भक्त्या प्रकर्त्तव्यं प्रत्यहं पूजनं तव।

इति यावज्जीवसङ्कल्पनात् विष्णुपूजाऽशौचेऽपि कार्य्या।

असपिण्डस्तेहे नीत्वा पूजनीयः सदाशिवः।

इति प्रामाणिकलिखनात् [2]देवतान्तरपूजान्येन कारयितव्या। यद्यपि हयशीर्षे,—

प्रतिष्ठितार्चा न त्याज्या यावज्जीवं तदर्चनम्।

---

(१) A. C. ॰ स्तुष्ठानम्।

(२) A. C. देवान्तर ॰।

इत्यविशेषेणोक्तं तथापि देवतान्तरपूजनं ब्राह्मणान्तरद्वारैव।[1] छन्दोगपरिशिष्टे,—

न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित्।
न दीक्षणात् परं यज्ञे न कृच्छ्रादितपश्चरन्॥

आदिपदं प्रारब्धकर्म्मोपलक्षणम्। विष्णुः,—न देवप्रतिष्ठा-विवाहयोः पूर्व्वसंवृतयोः। याज्ञवल्क्यः,—

ऋत्विजां दीक्षितानाञ्च यज्ञे कर्म्माणि कुर्व्वताम्।
[2]यतिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे।
आपद्यपि तु कष्टायां सद्यः शौचं विधीयते॥

ब्राह्मे,—

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्॥

इदञ्च सहस्रनामादिजपकर्म्मणि वरणस्याप्युपलक्षणम्। तत्रापि वृतस्य नाशौचम्। स्मृतिः,—

प्रारब्धो वरणं यागे[3] सङ्कल्पो व्रतजापयोः।
नान्दीमुखं विवाहादौ श्राद्धे तु स्यात् पचिक्रिया[4]॥

---

(१) D. ब्राह्मणान्तरद्वारेणैव।
(२) B. C. D. व्रती०।
(३) B. यज्ञे०।
(४) A. प्रतिक्रिया। B. श्राद्धे पाकपरिष्क्रिया।

ब्राह्मे,—

अकालमृत्योः शान्त्यर्थं महादाने च रोगिणाम्।

महादानपदं शान्तिमात्रोपलक्षणम्।

दुर्भिक्षे प्राणरक्षार्थं कृतयत्नस्य देहिनः।
राष्ट्रभङ्गे स्थितस्याथ पुत्रदारांश्च रक्षतः॥
ग्रहोपतापशान्त्यर्थं क्रियमाणे च कर्म्मणि।
तथोपसर्गात् सन्देहं रक्षमाणस्य नो भवेत्॥
नित्यं व्रतपरस्यापि कृच्छ्रचान्द्रायणादिषु।
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने॥

सततं कृच्छ्राद्याचरणशीलस्य कृच्छ्रारम्भेऽप्यशौचं नास्ति। कृच्छ्रहोमादिसमाप्तौ ब्राह्मणभोजनकर्म्मणि दातुर्भोक्तुश्च नाशौचम्।

पैठीनसिः,—

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्म्मणि।
न तत्र सूतकं तद्वत्कर्म्म यज्ञादि कारयेत्॥

अनापद्यपि। प्रजापतिः,—

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचं न बाधकम्॥
एवं प्रेतक्रिया या तु पूर्व्वाशौचं न बाधकम्।

हारीतः,—प्राङ्नाड़ीच्छेदनात् संस्कारपुण्यार्थान् कुर्व्वन्ति। संस्कारं जातकर्म्म। पुण्यार्थाः दानादयः। शङ्खलिखितौ,—कुमार-

प्रसवे नाद्यामच्छिन्नायां गुड़तिलहिरण्यवस्त्रप्रावरणगोधान्यप्रतिग्रहेष्वदोषः। मनुः,—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
यदन्नमत्ति तेषान्तु दशाहेन विशुद्ध्यति॥

यमः,—

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्।

स्वकुलस्य स्वयं भोज्यमित्यर्थः। षट्‌त्रिंशन्मते,—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।
परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः॥
भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके।
अन्यगेहोदकाचान्ताः सर्व्वे ते शुचयः स्मृताः॥

अङ्गिराः,—

अशौचं यस्य संसर्गाज्जायते गृहमेधिनः।
क्रियास्तत्र न लुप्यन्ते गृह्याणां न च तद् भवेत्॥

[1]अन्यगोत्रमातुलादिनिमित्ताशौचं परकीयशवस्पर्शादिनिमित्ताशौचं यस्य तत् तस्य स्वस्यैव न तु तद्‌गृहस्थपुत्रादीनाम्। वैश्वदेवक्रिया च न लुप्यते पुत्रादिनैव कार्य्या सर्व्वार्थत्वादित्यर्थः। एवम्,—

पितरौ प्रमितौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं स्याद् यावत् पूर्णो[2] न वत्सरः॥

---

(१) B. D. असगोत्र०।

(२) C. पूर्व्वो०।

पितुरब्दमशौचं स्यात् षण्मासान् मातुरेव च।
मासत्रयन्तु भार्य्यायास्तदर्द्धं भ्रातृपुत्रयोः॥

इति सामान्यतोऽशौचस्मरणेऽपि

तथैव काम्यं यत्कर्म्म वत्सरात् प्रथमादृते।

इति स्मृतेः काम्येष्वनधिकारो न नित्यनैमित्तिके। सपिण्डीकरणादूर्द्धं काम्येऽधिकारः संवत्सरमध्येऽपि।

सपिण्डीकरणादूर्द्धं प्रेतः पार्व्वणभाग् यतः।
वृद्धिपूर्त्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत्॥

इति वचनात्। केवलम्

दीपदानं गयाश्राद्धं [1]पिण्डञ्चापरपाक्षिकम्।
प्रथमेऽब्दे न कुर्व्वीत योजनेऽपि कृते सति॥

---

## अङ्गाशौचम्।

सम्वर्त्तः,—

ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते।

ततः पूर्व्वमङ्गाशौचमुक्तम्। अङ्गिराः,—

चतुर्थेऽहनि कर्त्तव्यः संस्पर्शो ब्राह्मणस्य तु।
क्षत्रस्य पञ्चमे ज्ञेयः सप्तमे च तथा विशः॥
शूद्रस्य दशमेऽप्येवं खण्डाशौचे विभागतः।

---

(१) D. ० श्राद्धञ्चा ०।

देवलः,—

अशौचकालाद् विज्ञेयं स्पर्शनन्तु त्रिभागतः ।

अशौचयोः सन्निपातेऽप्यङ्गाशौचम् । ब्राह्मे,—

सर्व्वमङ्गमसंस्पृश्यं तत्र स्यात् सूतके सति ।

सूतकमध्ये सूतके नितरां मृतकमध्ये मृतौ । अङ्गिराः,—

सूतके सूतकीवर्ज्जं संस्पर्शो नैव दूष्यति ।

शङ्खलिखितौ,—स्नानोपस्पर्शनादेव पिता शुचिः ।

---

## अथ शुद्धिः ।

मनुः,—

शुद्धेद् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥

ब्राह्मे,—

शौचाशौचं प्रकुर्व्वीरन् शूद्रवद् वर्णसङ्कराः ।

सङ्करा अनुलोमजाः । प्रतिलोमजास्तु विध्यनधिकारिणः ।
मूत्रपुरीषोत्सर्गवत् मलापकर्षं कुर्य्युरित्याहुः । अङ्गिराः,—

सर्व्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत् ॥

पराशरः,—

एकाहाच्छुद्ध्यति विप्रो योऽग्निवेदसमन्वितः ।

त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः ।
तथा सम्पर्कहत्तानां न प्रेतं नैव सूतकम् ॥

मनुः,—

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव वा ॥

एते च कुसूल-कुम्भी-धान्यक-वैराह्निकाश्वस्तनिकवृत्तिमत्-क्रमेणाशौचकालाः ।[1] ब्राह्मे,—

षण्मासाभ्यन्तरं यावद् गर्भस्रावो भवेद् यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्द्धं स्वजात्युक्तमशौचं तासु विद्यते ।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ॥

तासामिति बहुवचनात् स्वजात्युक्तमितिलिङ्गात् सर्व्ववर्ण-साधारणमिदम् । तेन पञ्चमषष्ठयोर्गर्भपाते कुलस्य सद्यः शुद्धिः । हारीतः,—जातमृते मृतजाते वा कुलस्य त्रिरात्रम् । इदं सप्तमाष्टममासविषयं जातशब्दात् । स्मृतिः—

आचतुर्थाद् भवेद् स्रावः पातः पञ्चमषष्ठयोः ।
अपप्रसवसंज्ञा तु सप्तमाष्टममासयोः ॥

---

(१) D. Here adds—

एतत् सर्व्वं युगान्तरविषयम् । हारीतः,—

दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्व्वाणः कलौ स्यान्मोहकिल्बिषी ॥

तेन गुणतारतम्यादिनाशौचसङ्कोचो न कलौ । अत्र मरणपदग्रहणं जन्मनो-ऽप्युपलक्षणं विप्रपदग्रहणं क्षत्रादेरपि ।

तेन जातशब्दलिङ्गात् सपिण्डानां त्रिरात्राशौचं सप्तमाष्टम-मासविषयमेव। त्र्यहवचनान्मातुः [षष्ठादूर्द्ध][१] दशरात्रं सर्वत्र। सप्तमाष्टमयोरपि बालजीवने सर्व्वेषां दशरात्रम्। पुनर्हारीतः,—जातमृते मृतजाते वा सपिण्डानां दशाहम्। इदं [२]नवम-दशममासविषयम्। सप्तमाष्टममासयोस्त्र्यहाशौचविषयत्वात्। [३]नवमादिमासविषयमृतजाते पारस्करः,—

गर्भे यदि विपत्तिः स्याद् दशाहं सूतकं भवेत्।

नवमादिमासजातमृते कौर्म्मे,—

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः।
मातुश्च सूतकं तस्मात् पिता त्वस्पृश्य एव च॥
सद्यःशौचं सपिण्डानां कर्त्तव्यं सोदरस्य च।

अत्र पित्रोर्दशरात्रं सपिण्डानां सद्यः। वचनात् पितुरप्यङ्गा-शौचं दशाहान्तम्। कात्यायनः,—

अनिर्वृत्ते दशाहे तु पञ्चत्वं यदि गच्छति।
सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम्॥

प्रचेताः,—

मुहूर्त्तं जीवितो बालो यदि पञ्चत्वमृच्छति।
मातुः शुद्धिर्दशाहेन सद्यःशौचास्तु गोत्रिणः॥

---

(१) D. Omits the portion bracketed.

(२) E. F. नवमदशमादिमास ०।

(३) E. F. नवमादिविषममासमृतजाते ०।

मुहूर्त्तपदं नाड़ीच्छेदोपलक्षणम्। नाड़ीच्छेदनात् पूर्व्वन्तु बालमरणे जातमृते मृतजाते वा सपिण्डानां दशाहमिति हारीतोक्तेः।

दशाहाभ्यन्तरे बाले प्रमिते[१] तस्य बान्धवैः।
शावाशौचं न कर्त्तव्यं सूत्यशौचं विधीयते॥

इति वृहस्पतिवचनाच्च सपिण्डानां दशरात्रमेव। जातमात्र-स्थेति कौर्म्मवचनात् नाड़ीच्छेदनात् पूर्व्वमपि सद्यःशौचमिति विकल्पो देशकुलाचारव्यवस्थितः। विज्ञानेश्वरेण तु पञ्चमषष्ठयो-र्गर्भपाते कुलस्य त्रिरात्रं [२]सप्तमाष्टमादिषु जातमृते मृतजाते वा विशेषाद् दशरात्रम्। दशरात्रिर्बालमरणेऽपि कुलस्य सूतका-शौचमिति स्मृत्यन्तरसंवादेन व्यवस्थापितम्। यमजजननेऽप्येकस्य जीवनेऽन्यस्य मृतौ समानो न्यायः। एकस्य मृतजननेऽन्यस्य जातमृतौ पित्रोर्दशाहं सपिण्डानां सद्यः श्रुतिर्मृते बलीयस्त्वात्। गर्भस्रावे तु पितुः स्नानमात्रम्। पैठीनसिः,—सूतिकां पुत्रवतीं विंशतिरात्रेण कर्म्म कारयेत् मासेन स्त्रीजननीम्।

---

## बालाद्यशौचम्।

कौर्म्मे,—

अजातदन्तमरणे पित्रोरेकाहमिष्यते।
जातदन्ते त्रिरात्रं स्यादिति शास्त्रविनिश्चयः॥

---

(१) C. प्रस्थिते ०। (२) B. D. सप्तमादिषु ०।

सपिण्डानान्तु शङ्खः,—प्राङ्नामकरणात् सद्यःशौचम्।
याज्ञवल्क्यः,—

आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता।
त्रिरात्रमाव्रतादेशाद् दशरात्रमतःपरम्॥

अत्र दन्तजन्मादयः कालोपलक्षका इति लक्ष्मीधरः। षण्मासो दन्तजन्मकालः। तत्र दन्तानुत्पत्तावपि बालमरणेऽहरशौचम्। एवं तृतीयोऽब्दश्चूड़ाकालः। तत्र चूड़ाया अकरणेऽपि त्रिरात्रम्। प्रथमवर्षस्य चूड़ाकालत्वेऽपि दन्तजन्मानन्तरं [ तत्र ][1] चूड़ाकरणाभावेन त्रिरात्रम्। दन्तजाते त्वकृतचूड़ेऽहोरात्रमिति विष्णुस्मृतेः।
अतएव—

यद्यप्यकृतचूड़ोऽपि जातदन्तश्च संस्थितः।
दाहयित्वा तथाप्येनमशौचं त्र्यहमाचरेत्॥

इत्यङ्गिरःस्मरणं त्रिवर्षचूड़ाकरणाभावे बोध्यम्। एवं द्विमासाधिकषड्वर्षादूर्द्ध्वमुपनयनकालः। तत्रोपनयनाभावेऽपि सम्पूर्णाशौचम्। तथा च ब्राह्मे,—

अनुपनीतो विप्रस्तु राजा चैवाधनुर्ग्रहः।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रधृक्।
म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव तु॥
द्विजन्मनामयं कालस्त्रयाणान्तु षडाब्दिकः।
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतःपरम्॥

(१) B. D. Omit the portion bracketed.

अत्र हि गर्भाष्टमवर्षे ब्राह्मणादित्रयाणामुपनयनधनुर्ग्रहण-प्रतोदग्रहणकालः। [शूद्रस्य षष्ठे वस्त्रग्रहणकालः।][1] ततः पूर्व्वं बालमृतौ त्रिरात्रम्। तदूर्द्ध्वं बालमरणे सम्पूर्णाशौच-मित्युक्तम्। एवञ्चोपनयनस्य कालोपलक्षकत्वमुक्तं भवति। एवं दन्तजन्मादिषु बोध्यम्। यदि तु,—चतुर्थपञ्चममासे दन्तजन्म संहृयते चूड़ोपनयनयोरपि निमित्तान्तरेण स्वकालात् पूर्व्वं करणं यथा ब्रह्मवर्च्चसकामस्य पञ्चमे। तत्र जावालः,—

व्रतचूड़ादिकानान्तु प्रतीतिषु यथाक्रमम्।
दशाहत्र्यहएकाहैः शुद्धन्त्यपि हि निर्गुणाः॥

अकालेऽपि तत्प्रतीतौ यथोक्ताशौचम्। अद्विवर्षस्य दाहः पाक्षिकः। दाहपक्षे उदकदानमपि। द्विवर्षादूर्द्ध्वं दाहनियमः।

---

## कन्याशौचम्।

कौर्म्मे,—

अजातदन्तमरणे पित्रोरेकाहमुच्यते।

यत्तु याज्ञवल्कीयं अहस्त्वदत्तकन्यास्विति तदपरिनीतकन्या-मृतौ सपिण्डाशौचपरमिति। शुद्धिचन्द्रिकाकारस्याजातदन्त-कन्यापरत्वव्याख्या किंमूलेति न विद्मः। दन्तजन्मोर्द्ध्वं स्मृत्य-न्तरे,—

---

(१) B. Omits the portion bracketed.

अप्रत्तासु च प्रत्तासु संस्कृतासंस्कृतासु च।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि॥

कन्यामरणाधिकारे कौर्म्मे,—

आदन्तात् सोदरे सद्य आचूड़ादेकरात्रकम्।
आप्रदानात् त्रिरात्रं स्यादिति शास्त्रविनिश्चयः॥

सपिण्डानान्तु ब्राह्मे,—

आजन्मनस्तु चूड़ान्तं सद्यःशौचं विधीयते।
ततो वाग्दानपर्य्यन्तं भवेदेकाहमेव च।
अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः॥

वाग्दानोत्कर्षे वाग्दानात् पूर्व्वं तत्कालेऽपि त्रिरात्रमित्यर्थः।

वाग्दाने तु कृते तत्र ज्ञेयं चोभयतः समम्।

उभयतः पितृकुले भर्त्तृकुले च। बृहस्पतिः,—

पाणिग्रहणिका मन्त्रा भर्त्तृगोत्रापहारकाः।
भर्त्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः॥

एवं सप्तपदीकरणानन्तरम्। तत्पूर्व्वं त्रिरात्रमुभयतः।

यद्यप्यादिपुराणे,—

सापिण्ड्यं स्यात्तु कन्यानामदत्तानां त्रिपूरुषम्।

इत्युक्तं तथापि मन्वर्थविरोधादनादरसमाचारः। ब्राह्मे,—

पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता।

यं यं श्रितवती भूयस्तस्याशौचं भवेत् त्र्यहम्।
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः॥
पदे च सप्तमे [1]काचिद् बलाद् यदि हृता भवेत्।
स्वामिगोत्रं भवेत् तस्यास्तच्च भूयो विशिष्यते।
पैतृकत्वं प्रसूतायां ततः पौर्व्विकभर्त्तृकम्।

तथा,—

आदावन्यस्य दत्तायां क्वचित्[2] पुत्रयोर्द्वयोः।
पितुस्तत्र त्रिरात्रं स्यादेकरात्रं सपिण्डिनाम्॥

पुत्रयोरिति [3]वचनादुभयजनितपुत्रायाः पुत्रमरणे प्रसवे द्वितीयपितुस्त्रिरात्रम्। मरीचिः,—

मात्रैकया द्विपितृकौ भ्रातरावन्यगामिनौ।
एकाहः सूतके प्रोक्तं त्रिरात्रं मृतके तयोः॥

पित्रा सह तिष्ठतोः पैतृकम्। मात्रा सह मातृकम्। [4][ अविभक्तयोरपि मातृकम्। ] ब्राह्मे,—अपरिणीता या रजस्वला तन्मृतौ पितुर्दशरात्रम्। [ विष्णुः,—पत्नीनां दासीनां दासानामानुलोम्येन स्वामितुल्यमशौचम्। ][5] स्मृतिः,—

---

(१) D. ॰ काचि बाला यदि ॰।
(२) B. D. कदाचित् ॰।
(३) A. B. C. वचनादुभयत्र जनित ॰।
(४) A. B. C. Omit the portion bracketed.
(५) B. D. Omit the portion bracketed.

मृते सूते च दासीनां दासानाञ्चैव कामतः।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि तत्[1] स्वकम्॥

ब्राह्मे शङ्खः—

अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च।
परपूर्व्वासु च स्त्रीषु त्रिरात्रात् शुद्धिरिष्यते॥

क्वचिच्च—

पुत्रिकायास्तु दत्तायाः प्रसवे मरणे तथा।
पित्रोश्च दशरात्रं स्यादेकाहश्च सपिण्डिनाम्॥

व्याघ्रपादः,—

तुल्यं वयसि सर्व्वेषामतिक्रान्ते तथैव च।
उपनीते तु विषमं तस्मिन्नेवातिकालजम्॥

वयोनिमित्ताशौचाल्पत्वम्। दशाहातिक्रमे त्रिरात्राद्यशौचम्। अतिकालजं पुरुषपरम्परातिक्रमजं समानोदकाशौचम्। तथातिकालजं अन्तरा जन्ममरणाशौचं प्रोषितशेषकालाशौचञ्चोपनीतविषयेऽपि। सर्व्वमेतत् सर्व्ववर्णसाधारणम्। उपनीताशौचमेव वर्णक्रमेण विषममित्यर्थः। समानजातीयाशौचसन्निपाते विष्णुः,—जननाशौचमध्ये यद्यपरं जननं स्यात् पूर्व्वाशौचव्यपगमे शुद्धिः। रात्रिशेषे द्वाभ्यां प्रभाते दिनत्रयेण। अशौचमध्ये ज्ञातिमरणेऽप्येवम्। ज्ञातिमरणमध्ये मृतकान्त-

(१) C. तु०।

रेऽपि पूर्व्वशेषेण शुद्धिः। रात्रिशेषे द्वाभ्यां प्रभाते दिनत्रयेण। रात्रिशेषो दशमाहः। प्रभातपदेन तदहः कल्यम्। एवं दशमेऽहनि तदुषसि सजातीयनिमित्त'ग्रहणे द्वित्रिदिनवृद्ध्या शुद्धिर्यंद्यपि स्मृतिषु विहिता तथापि न वर्द्धयेदघाहानीति मनुना निषिद्धा। तथाच विहितप्रतिषेधाद्विकल्पः। तदुक्तं भट्टैः,—

अथवान्तर्यदाशौचनिमित्तं किञ्चिदापतेत्।
तत्र शेषेण या शुद्धिस्तच्छेषोऽयं भविष्यति॥
न वर्द्धयेद् दशाहानि निमित्तादागतान्यपि।

विकल्पे च सति यथादेशाचारं व्यवस्थेति। अस्मद्देशे दशमाहस्तत्प्रभातश्रवणे द्वित्रिदिनवृद्धिर्नाद्रियते। देवलः,—

परतः परतः शुद्धिरघवृद्धौ विधीयते।
स्याच्चेत् तत्पञ्चमादह्नः पूर्व्वेणाप्यनुशिष्यते॥

सपिण्डाशौचमेव द्विविधं भवति। किञ्चिदघवृद्धिरहितं किञ्चिदघवृद्धिमत्। सपिण्डमध्येऽपि सहोदरभ्रातृपितृव्यतत्पुत्रसूतकमन्तरङ्गम्। तथा भार्य्यायाः पत्युः। पत्युश्च भार्य्यायाः। तथा सपिण्डत्वाविशेषेऽपि विद्यायज्ञसदाचारवयोवृद्धत्वादिगुणवतः जननमरणे गुरुतरमशौचम्। एवमन्तरङ्गत्वकृतं गुणवत्त्वकृतञ्चाशौचस्य गुरुत्वम्। एवञ्च सति पूर्व्वस्याघवृद्धिरहितस्याशौचस्योत्पन्नस्य पूर्व्वभागे कथितद्विधाघवृद्धिमदशौचान्तरपाते पूर्व्वेण शुद्धिः। द्वितीयभागे तादृशाघवृद्धिमदशौचपाते द्वितीयेन शुद्धिः। तदुत्तरभागपतितमप्यशौचं

(१) D. ॰ निमित्तश्रवणे ॰।

द्विधाकृत्वा तद्भागद्वये तदपेक्षयाधिकाघवृद्धिमदशौचपाते पूर्व्वं चेत् पूर्व्वेण परतः परेणेत्येवं शुद्धिः। एवं ततः परमपि विचार्य्यमिति परतः परत इति वीप्सया दर्शितम्।

तथा च ब्राह्मे,—

'आद्यं भागद्वयं यावन्मृतकस्य तु सूतके।
द्वितीये पतिते चाद्यान्मृतकात् शुद्धिरिष्यते॥
अत ऊर्द्धं द्वितीयात्तु सूतकात्तु शुचिः स्मृतः।
एवमेव विचार्य्यं स्यान्मृतके सूतकान्तरे॥

एतदपि न वर्द्धयेदघाहानीत्यनेन निषिद्धत्वाद् वैकल्पिकं यथाचारं देशेषु व्यवस्थितमिति नास्मद्देशे विचार्य्यते। अन्तरङ्गगुणभावेन' शुद्धिविचारः कलौ नास्तीत्यप्याहुः। अङ्गिराः,—

अनिर्दशाहे जनने पश्चात् स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्त्तव्यं तत्राशौचं स्वबन्धुभिः॥

देवलः,—

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्।

ब्राह्मे,—

शवेन शुद्ध्यते सूति र्न सूतिः शवशोधिका।

तदेतत् सर्व्वमालोच्योक्तम्,—

दीर्घाल्पापि पुरा परापि सततं सूतेर्मृतिः शोधिका।

---

(१) E. F. आद्यं भागद्वयं यावत् सूतकस्य तु सूतके।
द्वितीये पतिते चाद्यात् सूतकात् शुद्धिरिष्यते॥

(२) B. D. गुणवद् भावेन ०।

[ इति। ][1]

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद् यदि।
न च पूर्व्वेण शुद्धिः स्यात् स्वकालेनैव शुद्ध्यति॥

इत्युशनसोक्तं सजातीयविषयम्। स्वल्पकालीनमरणाशौचस्य दीर्घकालसूतकं बाधकमिति हारलताकारव्यवस्था नादेया। वृहन्मनुः,—

गुरुणा लघु शुद्ध्येत लघुना नैव तद्गुरुः।

सजातीयदीर्घाल्पकालीनशौचविषयमिदमपि। वृद्धात्रिः,—

सूतकाद् द्विगुणं शावं शावाद् द्विगुणमार्त्तवम्।
आर्त्तवाद् द्विगुणा सूति स्ततोऽधि[2] शवदाहकः॥

दाहकः दाहादिप्रेतकर्म्मकर्त्ता। स्मृत्यन्तरे,—

शेषाहोभिर्विशुद्ध्येत उदक्यां सूतिकां विना।

सर्व्वत्र पूर्व्वाशौचेन शुद्धौ सूतिकां रजस्वलां क्रियाकर्त्तारं त्यक्त्वान्येषां शुद्धिरित्यर्थः। विगतन्तु विदेशस्थं कौर्म्मे,—

देशान्तरगतं श्रुत्वा सूतकं शावमेव च।
तावदप्रयतो मर्त्यो यावत् शेषं समाप्यते॥

शेषं अशौचदिनशेषम्। यत्तु स्मृत्यन्तरे गिरिनदीव्यवहित-षष्टियोजनाद्यात्मकदेशान्तरमरणे सद्यःशौचविधानं तदत्र समाचाराबाद्रियते। मनुः,—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।

(१) A. C. Omit the portion bracketed.

(२) B. सताधि०।

वृद्धवशिष्ठः,—

मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा।

अहस्तु नवमादर्वागूर्द्ध्वं स्नानेन शुद्ध्यति॥

इति। एतच्चातिक्रान्ताशौचं सूतके न मृतके। अस्मद्देशे समाचाराभावान्न व्यवस्थाप्यते। अतएव विज्ञानेश्वरो नानादिवस-शोधकवाक्यान्युदाहृत्य समाचाराभावादेतानि न व्यवस्थाप्यन्त इत्युक्तम्।

---

## पित्राद्यशौचे विशेषः।

पैठीनसिः,—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।

श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्॥

आग्नेये,—

[1]पितृमातृप्रपाते तु आर्द्रवासा ह्युपोषितः।

अतीतेऽब्देऽपि कुर्व्वीत प्रेतकार्य्यं यथाविधि॥

स्मृत्यन्तरे,—

मातर्य्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।

पितुः शेषेण शुद्धिः स्यान्मातुः कुर्य्यात्तु पक्षिणीम्॥

मातरि मृतायां पश्चात् पितृमरणे उत्तरभाविनापि पितृ-मरणेनैव शुद्धिः। द्वयोरेकादशाहकृत्यं पितुरेकादशाहे कार्य्यं-

---

(१) D. पितृमातुप्रपाते तु०।

[ मिति विज्ञानेश्वरः । ][1] पितृमरणाशौचमध्ये पश्चान्मातृमरणेऽपि[2] पितुरशौचं समाप्य पश्चात् पक्षिणीं प्रक्षिप्य शुद्धिः । न पूर्व्वशेषमात्रेण दशाहानन्तरम् ।[3] स्मृतिः,—

पितृपत्नग्रामतीतायां मातृवर्जं द्विजोत्तम ।
संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥

संवत्सरात् पूर्व्वं दशरात्रमित्यर्थः । अङ्गिरा यमश्च,—

द्विसन्ध्यं सद्य इत्याहु स्त्रिसन्ध्यमहरुच्यते ।
एकरात्रिर्दिने द्वे च पक्षिणीत्यभिधीयते ॥

---

## त्रिरात्राशौचम् ।

हारीतः,—एकाहमसपिण्डतः । अनुपनीतपरम् । जावालः,—समानोदकानां त्र्यहम् । कौर्म्मं,—मातामहश्वश्रुश्वशुरमरणे त्रिरात्रम् । प्रचेताः,—मातृष्वसृमातुलयो ऋत्विजि त्रिरात्रम् । गौतमः,—[4]आचार्य्यपूर्व्वस्त्रीयाज्यशिष्येषु चैवम् । अङ्गिराः,—दौहित्रे भगिनीपुत्रे त्रिरात्रम् । एतेषां मातामहादिभगिनी-

---

(१) A. C. D. Omit the portion bracketed.

(२) D. ० मरणे तु ० ।

(३) B. D. Add here पक्षिणीं समाप्य द्वयोरेकादशाहकृत्यं कार्य्यमिति विज्ञानेश्वरः ।

(४) B. D. आचार्य्यतत्पूर्व्व ० ।

मृतान्तानां स्वगृहे स्थितानां मरणे त्रिरात्रम्। [1]स्वगृहे तु त्रिरात्रं स्यादित्यङ्गिरोवचनात्। एतेषामेव स्वगृहादन्यत्र मृतानां संस्कृते पक्षिणी रात्रिरिति [2]तद्वचनबलादेव पक्षिणी। मनुः,—

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्।

अश्रोत्रियेऽत्वहः कृत्स्नं

उपसम्पन्ने स्वगृहस्थे। वशिष्ठः,—प्रत्तानां स्त्रीणां त्रिरात्रमशौचम्। पित्रोरित्यर्थः। बृहस्पतिः,—पित्रोर्मरणे विन्नानां [3]स्त्रीणां त्रिरात्रम्। कश्यपः,—अनशनजलाग्न्यादिप्रमादहतानां त्रिरात्राशुद्धिमाह। तथा [4]रणे पराङ्मुखहते लोष्टलगुडादिडिम्बाहवहते तु त्र्यहम्। सम्मुखहतस्यापि कालान्तरमृतौ त्र्यहम्। शुनःपुच्छः,—

अग्न्यादिना विपन्नस्य चातुर्वर्ण्यस्य रोगिणः।

सपिण्डास्तस्य शुद्धन्ति त्रिरात्रेण न संशयः॥

गौतमः,—प्राणान्तिकप्रायश्चित्ते त्र्यहम्। [5]प्रमादादग्न्यादिना मरणे सम्पूर्णाशौचं[6]मङ्गिरसोक्तं सगुणमृतविषयम्।

---

(१) D. स्वगृहेषु त्रिरात्रं ०।

(२) D. ० तद्वचनादेव ०।

(३) D. दुहितॄणां।

(४) D. मरणे ०।

(५) D. प्रमादादग्न्यादिमरणे ०।

(६) D. ० मङ्गिरःप्रोक्तं ०।

## पक्षिणी ।

मनुः,—

श्वश्रुरयोर्भगिन्याञ्च मातुलान्याञ्च मातुले ।
पित्रोः स्वसरि च प्रेते पक्षिणीं क्षपयेन्निशाम् ॥

मनुः,—शिष्यर्त्विक्बान्धवेषु च पक्षिणीत्यर्थः । बान्धवानाह कात्यायनः,—

आत्ममातुः स्वसुः पुत्रा आत्मपितुः स्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः ।
पितृमातुलपुत्राश्च विज्ञेया पितृबान्धवाः ॥
मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ।

एतेषु पक्षिणीत्यर्थः ।

---

## एकाहः ।

विष्णुः,—आचार्य्यपत्नीपुत्रोपाध्यायमातुलमातुःस्वसृश्वशुर-[1]सहाध्यायिशिष्येष्वेकरात्रेण । अत्र श्वशुरादिपदं विदूरपरम् ।[2]

अहरित्यनुवृत्तौ जावालः,—

मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा ।

---

(१) D. श्वशुरसहा० ।

(२) A. दूरपरम् ।

मनुः,—

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् ।
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः ॥

सूर्य्यज्योतिर्मृतौ यावत्सूर्य्यालोकमशौचम् । एवं नक्षत्र-ज्योतिषि मरणे यावन्नक्षत्रदर्शनम् ।

---

## सद्यः ।

डिम्बाहवहतानाञ्च तथैव प्राणक्षयिणाम् ।
नदीश्वापददंष्ट्रिभ्यः सद्यःशौचं विधीयते ॥

सद्यःशौचं स्नानमात्रम् । द्वे सन्ध्ये सद्य [1]इत्यस्य नादरः । एतच्च बुद्धिपूर्व्वमरणे । पराशरः,—

विषोद्बन्धनशस्त्रेण आत्मानं योऽभिघातयेत् ।
मृतोऽमेध्येन लेप्तव्यो नान्यं संस्कारमर्हति ॥
[2]पतितानां न दाहः स्यान्नान्त्येष्टि[3]र्न च सञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्य्यः श्राद्धादिकं तथा ॥

षट्त्रिंशन्मते,—

गोब्राह्मणहतानाञ्च पतितानां तथैव च ।

---

(१) B इत्यनादरः । D. इति नादरः ।

(२) D. Here adds.— ब्राह्मे.—पतितानां ० ।

(३) D. ० र्नास्थिसञ्चयः ।

ऊर्द्धं संवत्सरात् कुर्य्यात् सर्व्वमेवौर्द्धदेहिकम् ॥

नारायणबलिपूर्व्वकमित्यर्थः । सुमन्तुः,—अग्निजलसङ्ग्राम-देशान्तरस्थसन्न्यास्यनशनिमहाध्वनिकानामुदकदानं कार्य्यं सद्यः शौचं भवति । सन्न्यासिमरणे पुत्रस्यापि तद्दिने उदकदानमात्रं[1] श्रवणे सद्यःशौचमेव । महाध्वनिको महाप्रस्थानमृतः ।

विष्णुपुराणे,—

मित्रे जामातरि प्रेते दौहित्रे भगिनीपतौ ।
श्यालके तत्सुते चैव सद्यः शौचेन शुध्यति ॥

मित्रे वैवाहिकव्यतिरिक्ते । कौर्म्मे,—

देशान्तरमृते चैव क्लीवे वैखानसे यतौ ।
सद्यः शौचं समाख्यातं श्यालादिमरणे तथा ॥

आदिशब्देनाभिचारमृतानां ग्रहणम् ।

ब्रह्मचारिणि भूपे च शवौ शिल्पिनि दीक्षिते ।

नाशौचमित्यर्थः । कात्यायनः,—

अशौचं कर्म्मणोऽन्ते स्यात् त्र्यहं वा ब्रह्मचारिणाम् ।

[ तथा,—

आदिष्टा नोदकं कुर्य्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥

तथा,—

आचार्य्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती ।
शकटान्नञ्च नाश्नीयान्न च तैः सह संवसेत् ॥

---

(१) A उदकमात्रदानं ।

आदिष्टा ब्रह्मचारी। पितृपदमेकशेषात् पितृमातृपरम्। [1]आचार्यादिव्यतिरिक्तप्रेते कार्यं न कार्यम्। शकटान्नं प्रेतान्नम्। ][2] पराशरः—

कारवः शिल्पिनो दासा वैद्यामात्यास्तथैव च।

राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः॥

दातारो नियमी चैव[3] ब्रह्मविद्ब्रह्मचारिणौ।

दातारो नित्यदातारः। एवं नियमाः।[4] बौधायनः,—परशवोपस्पर्शनेऽनभिसन्धिपूर्व्वकं सचेलोऽपः स्पृष्ट्वा शुचिर्भवति। अभिसन्धिपूर्व्वके त्रिरात्रम्। अभिसन्धिर्धनग्रहणादि। तथा पुष्पवतीशवस्पर्शने त्रिरात्रम्। मनुः,—

शवं तत्स्पर्शकञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति।

याज्ञवल्क्यः,—

प्रवेशनादिकं कर्म्म प्रेतसंस्पर्शनामपि।

नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत्॥

आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य च।[5]

विजातीयास्थ्नि वशिष्ठः,—मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रम्। अस्निग्धे त्वहोरात्रम्। गोतमः,[6]—अवरश्चेत् पूर्व्वं वर्णमुपस्पृशेत्

(१) E. F. आचार्यादिव्यतिरिक्ततया तत् कार्यं न कार्यम्।

(२) B. D. Omit the portion bracketed.

(३) A. C. नियमाचैव ०।

(४) D. ० नियमः।

(५) B. मिष्यते C. मीक्ष्यते।

(६) B. D. गौतमः।

पूर्व्वो वाऽवरं तदा स्वजात्युक्तमशौचम्। उपस्पर्शनं निर्हरणम्। बृहस्पतिः,—

यस्तैः सहासपिण्डोऽपि प्रकुर्य्यात् शयनासनम्।

स दशाहेन शुध्यति। सजातीयविषयमिदम्। सर्व्वे वर्णाः सजातीयं दग्ध्वा त्र्यहमशौचिनः। विजातीयञ्च निर्हृत्यावरजातिवत्। मूल्येन सजातीयं परजातीयं सर्व्वथा। मनुः,—प्रेतानुगमने सचेलस्नानं वह्न्युपस्पर्शनं घृतप्राशनम्। शूद्रशवानुगमने पराशरोक्तं त्रिरात्राशौचम्। क्षत्रियवैश्यशवानुगमने वशिष्ठोक्तमेकाहः। ब्राह्मे,—

मृतस्य यावदस्थीनि ब्राह्मणस्याहृतान्यपि।
तावत् तद्बान्धवस्तत्र रौति चेत् स्नानतः शुचिः॥

जर्द्धमाचमनम्। अस्थिसञ्चयनात् पूर्व्वं क्षत्रवैश्यशवे रोदनेऽहः। तदूर्द्धं सचेलस्नानम्। अनस्थिसंस्थिते शूद्रे रोदने त्रिरात्रं तदूर्द्धमेकाहः। कात्यायनः,—

अस्थ्नामलाभे पर्णानां शकलान् पूर्व्वया वृता।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम्॥

इदमाहिताग्निविषयम्। दाहादूर्द्धमाहिताग्नेरशौच[1]मित्यस्यैवानुवादः। [ यत्तु ][2] ब्राह्मे,—अनाहिताग्नेर्देहस्तु दाह्यो वाह्याग्निनेत्युपक्रम्य पर्णनरदाहमुक्त्वा

(१) D. ० मित्यस्यानुवादः।
(२) D. Omits the portion bracketed.

एवं पर्णनरे दग्धे त्रिरात्रमशुचिर्भवेत्।

इति वचनं पर्णदाहे निमित्ते त्रिरात्राशौचविधायकम्। श्रौताग्नेरपि 'पर्णदाहोत्तराशौचस्य समान'[1]विषयत्वेन बाधकम्[2]। निरग्नेस्तु दशाहमध्ये पर्णदाहे मरणज्ञानावधिकस्याशौचस्य भिन्न-विषयकतया पर्णदहननिमित्ताशौचेन बाधः। किन्त्वशौच-सन्निपातन्यायेन दशरात्रस्य बहुकालीनत्वेन दाहनिमित्तत्रिरात्र-बाधकत्वम्। न च दाहनिमित्तकत्रिरात्रं दशरात्रबाधकं किं न स्यादिति वाच्यम्। निरग्नेर्दशाहोर्द्ध्वपतितपर्णदाहसावकाश-त्वेन भिन्नविषयतया बाधकत्वासम्भवात्। श्रौताग्नेस्तु दाहावध्य-शौचस्य समानत्वाद् बाधकत्वमित्युक्तम्। आतुरसन्न्यासिमरणे-ऽपि सद्यःशौचमिति केचित्। वस्तुतः सुमन्तुवचने सन्न्यासिपदो-पादानेऽपि सन्न्यस्ते सद्यःशौचं विधीयत इति वचनात्। सन्न्यस्त-पदे निष्ठान्ते साङ्गप्रधानक्रियोपरमप्रतीतेः। दीक्षितनियमे साङ्गदीक्षाव्यापारोपरमप्रतीतिवत्। सर्व्वेतिकर्त्तव्यतायुक्तसन्न्यास-स्यापवर्गे सन्न्यस्तत्वमिति। तदुक्तं परेण,—वेदनादीक्षितः स्यात् सर्व्वैर्दीक्षाभिः सम्बन्धादित्यत्र पञ्चमे। तथाहिताग्निधर्म्माः साङ्गाभिधानाभिनिर्वृत्त्यनन्तरमेव। तदुक्तं संस्कृते कर्म्मसंस्काराणां तदर्थत्वादित्यपि पञ्चमे। प्रैषोच्चारणमात्रे सन्न्यस्तत्वाभावादप-वादाभावेन दशाहाशौचमेव। अतएव साङ्गप्रधानाभिनिर्वृत्त्या-

(१) D. पर्णदाहे त्रिरात्रस्य समानविषयत्वेन ०।

(२) A. ० विषयत्वबाधकम्।

हिताग्नित्वमिति तन्मध्यमरणे नाहिताग्निविधिः। एवं सुमन्तु-वचने सन्नासिपदं सन्नास्तपरमिति प्रतिभाति।

---

## सर्व्वौषधिगणः।

विष्णुपुराणे,—

व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः।
प्रियङ्गुसप्तमा ह्येते अष्टमाः सकुलत्थकाः॥
श्यामाकास्त्वथ नीवारा [1]जर्त्तिलाः सगवेधुकाः॥
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने॥
[2]ग्राम्यारण्यास्तृता ह्येता औषध्यस्तु चतुर्दश।

[3]जर्त्तिलाः पर्व्वततिलाः। स्कान्दे,—

यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः।
माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः॥[4]
गवेधुकाः सनीवारा आढ़क्योऽथ कुलत्थिकाः।
चणकास्तिलकाश्चेति धान्यान्यष्टादशैव तु॥

---

(१) B. जम्भलाः ०।
(२) E. F. ग्राम्यारण्याः स्मृता ह्येता ०।
(३) B. जम्भलाः।
(४) A. निष्पावाश्चत्वसर्षपाः।

निष्पावः सितसिम्बिः। आढ़की तितुड़ी। छन्दोगपरिशिष्टे,—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः[1] ॥

तथा,—

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम्।
शठीचम्पकमुस्ताश्च सर्व्वौषधिगणः स्मृतः ॥

गारुड़े,—

कर्पूरं चन्दनं दर्पं कुङ्कुमञ्च समांसकम्।
सर्व्वगन्धमिति प्रोक्तं समस्तसुरदुर्लभम् ॥

दर्पः कस्तूरिका।

कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा।
कक्कोलञ्च भवेदेभिः पञ्चभिर्यक्षकर्द्दमः ॥
कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च।
कुङ्कुमस्य त्रयश्चैकं शशिनः स्याच्चतुः समम् ॥

शशिनः कर्पूरस्य। कालिकापुराणे,—

कनकं कुलिशं नीलं पद्मरागञ्च मौक्तिकम्।

एतानि पञ्चरत्नानि। आदित्यपुराणे,—

कनकं रजतं मुक्ता राजावर्त्तप्रवालकम्।

---

(१) C. ० धारिणः।

पञ्चरत्नमुक्तम्। तथा,—

अभावे सर्व्वरत्नानां हेम सर्व्वत्र योजयेत्।

ब्रह्माण्डे,—

अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः।
पञ्चभङ्गा इति प्रोक्ताः सर्व्वकर्म्मसु शोभनाः॥

शिवधर्म्मे,—

पञ्चामृतं दधिक्षीरशितामधुघृतं नृप।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
पञ्चगव्यमिति प्रोक्तं सर्व्वपापप्रणाशनम्॥

याज्ञवल्क्यः,—

जालसूर्य्यमरीचिस्थं त्रसरेणू रजः स्मृतम्।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते॥
गौरस्ते तु त्रयः षट् ते यवो मध्यस्तु ते त्रयः।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श॥
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्।
द्वे कृष्णले रूप्यमाषो धरणं षोड़शैव ते।
शतमानन्तु दशभिर्धरणैः पलमेव च।
निष्कं सुवर्णाश्चत्वारस्ताम्रिकः कार्षिकः पणः॥

रूप्यस्य सुवर्णमानाद्भिन्नं मानमित्यभिप्रायेणाह द्वे कृष्णले रूप्यमाषः। सुवर्णस्य द्वितीया संज्ञा कर्षक इति सुवर्णमानमितं ताम्रं पण उच्यते। ताम्रकर्षकृता मुद्रेति बृहस्पतिवचनात्।

नारदः,—

[1]कार्षापणो दक्षिणस्यां दिशि रौप्ये प्रवर्त्तते।

पणैर्निबद्धः पूर्व्वस्यां षोड़शैव पणस्य तु॥

एवं ताम्रषोड़शकर्षेण कार्षापणः। लौकिकमाढ़द्वात्रिंश-न्मितं ताम्रमित्यर्थः।

काकणी तु चतुर्भागो माषकस्य पलस्य च।

माषकचतुर्भागे पलचतुर्भागे च काकणीशब्दो मानार्थ इत्यर्थः। विष्णुगुप्तः,—रूप्यपलं दश धरणिकं तत्पलानां शतं तुला तुलाविंशतिभिर्भारः। अष्टाढ़मितं रूप्यं पलं तच्छतं तुलेत्यर्थः। तथा,—

दीनारो रौपकैरष्टाविंशत्या परिकीर्त्तितः।

सुवर्णस्य सप्ततितमो भागो रौपक उच्यते। विष्णु-धर्म्मोत्तरे,—

पलञ्च कुड़वः प्रस्थ आढ़को द्रोण एव च।

धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः॥

द्रोणैः षोड़शभिः खारी विंशत्या कुम्भ उच्यते।

कुम्भैस्तु दशभि र्वाहो धान्यसंख्याः प्रकीर्त्तिताः॥

---

[1] (१) The original text of नारदस्मृति published by the A. S. B. reads :—

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते।

पणैर्निबद्धः पूर्व्वस्यां विंशतिस्तु पणाः स तु॥

See page 229 verse 57.

गोपथब्राह्मणे,—

पञ्चकृष्णलको माषस्तैश्चतुःपञ्चभिः पलम्।

पलैर्द्वात्रिंशभिः प्रस्थो मागधेषु प्रकीर्त्तितः॥

आढ़कस्तैश्चतुर्भिस्तु द्रोणः स्याच्चतुराढ़कः।

अत्र लौकिकाष्टाढ़मितपलं तेन द्वात्रिंशत्पलैः प्रस्थम्। एवञ्च प्रस्थषोड़शपलत्वं षोड़शमाषात्मकपलाभिप्रायम्। वैद्यशास्त्रे तथैव व्यवहारात्। तथा,—

खारिद्रोणाढकः प्रस्थः कुड़वश्च पलं पिचुः।

माशको माषकश्चेति यथापूर्व्वं चतुर्गुणाः॥

द्रवद्रव्यविषये स्कान्दे,—

पलद्वयेन प्रसृतं द्विगुणं कुड़वं मतम्।

चतुर्भिः कुड़वैः प्रस्थ आढकस्तैश्चतुर्गुणैः॥

चतुर्गुणो भवेद् द्रोण इत्येतद् द्रवमाणकम्।

---

## भूमानम्।

आगमे,—

त्रसरेणुरथ रेणुर्वालाग्रं तदनु लिख्या च।

यूका यवोऽङ्गुलमिति परिमाणानि क्रमशोऽष्टगुणानि।

आदित्यपुराणे—एतादृशमङ्गुलिमुक्त्वा

द्वादशाङ्गुलमात्रो वै वितस्तिस्तु प्रकीर्त्तितः।

अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते॥

तालः स्मृतो मध्यमया गोकर्णाख्यस्त्वनामया।
कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलिकः स्मृतः॥
रत्निस्त्वङ्गुलिपर्व्वाणि विज्ञेयस्त्वेकविंशतिः।
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु॥
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलिः।
षट्नवत्यङ्गुलेश्चैव धनुर्द्दण्डः प्रकीर्त्तितः॥
धनुर्द्दण्डयुगं नाली वेदा न्यूने यवाङ्गुलैः।
[धनुषा त्रिंशतानल्पमाहुः संख्याविदो जनाः॥][1]
धनुःसहस्रे द्वे वापि गव्यूतिरुपदिश्यते।
अष्टौ धनुःसहस्राणि योजनन्तु प्रकीर्त्तितम्॥

मार्कण्डेये,—

क्रोशो धनुःसहस्रे द्वे गव्यूतिश्च चतुर्गुणा।

[बृहस्पतिः,—][2]

दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्त्तनम्[3]।
दश तान्येव गोचर्म्ममानमाह प्रजापतिः॥

वशिष्ठः,—

दशहस्तेन दण्डेन दशवंशान् समन्ततः।
पञ्चकाभ्यधिकान् दद्यादेतद् गोचर्म्म चोच्यते॥

---

(१) B. Omits the portion bracketed.

(२) D. Omits the portion bracketed.

(३) C. ० वर्त्तकम्।

# मन्त्रदीक्षाद्युपयुक्तमण्डपादिकं लिख्यते ।

तत्रादौ दिक्साधनम् । कात्यायनः,—समे शङ्कुं [1]निखाय शङ्कुसम्मितया रज्ज्वा [2]मण्डलं परिलिख्य यत्र रेखयोः शङ्क्वग्र-च्छाया निपतति सा प्राची ।

घटनागमे,—

सारदखदिराद्येन दारुणा द्वादशाङ्गुलः ।
मूले षडङ्गुलस्थूलः शङ्कुः स्याद् द्वादशाङ्गुलः ॥
क्रमेण कृशयाग्रेऽसौ यवमात्रः प्रकीर्त्तितः ।
तं समे भूतले न्यस्य शङ्कुं तत्परितः क्रमात् ॥
द्वादशाङ्गुलमानेन वृत्तान्यष्टौ समालिखेत् ।
शङ्कुच्छायां वृत्तरेखां प्रविशन्तीं प्रतीचीतः ॥
प्राच्यां विनिष्क्रमन्तीं चाप्यङ्कयेद् विषुवे गुरुः ।
प्रथमे मण्डले चिह्नात् प्राची स्याद् विषुवेऽन्यदा ॥
षण्णवत्यङ्गुलिमिते त्वष्टमे मण्डले क्रमात् ।
षण्णवत्याप्नुवा[3] प्राची ततो हीना चलत्यपि ॥
विन्दुद्वये सूत्रदानात् पूर्व्वरेखा प्रसिद्ध्यति ।
विन्दुद्वयान्तरालस्थं सूत्रं नीत्वास्य मूलकम् ॥
पूर्व्वविन्दौ च संस्थाप्य तदग्रान्मण्डलं लिखेत् ।
एवं पश्चिमविन्दौ तन्मूलं दत्त्वा च मण्डलम् ॥

---

(१) D. निधाय ० ।
(२) D. मण्डलं ० ।
(३) A. प्ता ० ।

मण्डलयोर्यत्र योगो दक्षिणोत्तरयोर्भवेत्।
तत्र सूत्रप्रदानेन रेखा स्याद् दक्षिणोत्तरा॥

सूर्य्यसिद्धान्ते,—

शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपिवा समे।
तत्र शङ्क्वङ्गुलैरिष्टैः समं मण्डलमालिखेत्॥
तन्मध्ये स्थापयेच्छङ्कुं कल्पनाद्वादशाङ्गुलम्॥
तच्छायाग्रं स्पृशेद् यत्र वृत्ते पूर्व्वापरार्धयोः।
तत्र विन्दू विधायोभौ वृत्ते पूर्व्वापराभिधौ॥
तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा।
याम्योत्तरदिशोर्मध्ये तिमिना पूर्व्वपश्चिमा॥
दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि।

यत्र च्छायाग्रसंस्पर्शनस्थानस्थविन्दुद्वयान्तरालम्बितसूत्रेण विन्दुद्वये मण्डलद्वयं तत्र मण्डलद्वयसम्बन्धान्मत्स्यो दृश्यते तन्मत्स्यमुखपुच्छसूत्रा दक्षिणोत्तरं रेखा। विन्दुद्वयान्तरा तस्यां रेखायां चिह्नं कृत्वा तच्चिह्ना दक्षिणोत्तरयोर्विन्दुद्वयान्तरालम्बितसूत्रार्द्धमानानवचिह्नद्वयं तच्चिह्नद्वयान्तरालम्बितसूत्रे तच्चिह्नद्वयवेष्टनेन मण्डलद्वयं कार्य्यं तन्मण्डलद्वयसन्निपातेन मत्स्यो दृश्यते तन्मत्स्यमुखपुच्छयो रेखा कार्य्या सा पूर्व्वापररेखा। विदिक्साधनं वक्ष्यते। स्मृत्यन्तरे,—

कृत्तिकारोहिणीपुष्याचित्रास्वात्योर्यदन्तरम्।
एतत् प्राच्या दिशो रूपं युगमात्रोदितेऽम्बरे॥

युगमात्रं षड़शीत्यङ्गुलम्।

उदीची ध्रुववेधेन मत्स्यवेधेन वा भवेत्।

## दीक्षामहादानलक्षहोमाद्युपयुक्तमण्डपे शारदानुसारेण वास्तुपूजा।

आचार्य्यस्तु षष्टिपदमितं मण्डलं कृत्वा कोणसूत्रद्वयं दत्वा पञ्चवर्णैनालङ्कृत्य मध्यकोष्ठचतुष्टये ब्रह्माणं तत्पूर्व्वादिषु कोष्ठद्वन्द्वचतुष्के क्रमेणार्य्यमणं विवस्वन्तं मित्रं महीधरं ब्रह्मचतुष्पदाग्न्यादिकोणार्द्धकोष्ठद्वन्द्वेषु क्रमेण सावित्रं सवितारं इन्द्रमिन्द्रजयं रुद्रं रुद्रजयं आपं आपवत्सं तद्बहिःकोणार्द्धकोष्ठसहितकोष्ठद्वन्द्वेषु प्राच्यां शर्व्वं गुहं दक्षिणेऽर्य्यमणं जृम्भकं पश्चिमे पिलिपिच्छं चरकं उत्तरे विदारीं पूतनाम्। अन्तिमपंक्तौ कोणार्द्धकोष्ठमादायाष्टाष्टपदेषु ईशानपर्ज्जन्यजयन्तशक्रभास्करसत्यभृशान्तरीक्षान् प्राच्याम्। अग्निपूषवितथ्यगृहक्षतगन्धर्व्वभृङ्गराजमृगान् दक्षिणे। निर्ऋतिदौवारिकसुग्रीववरुणपुष्पदन्तासुरशोषरोगान् पश्चिमे। वायुनागमुख्यसोमभल्लाटार्गलमुख्यदित्यदितय उत्तरे। पूजयित्वा पयोऽन्नेन बलिदानम्। ब्रह्मादिभ्यः क्रमेण एष पयोऽन्नबलिर्ब्रह्मणे नम इति मन्त्रैः। एतावन्मात्रम्। गृह्यादौ मत्स्यपुराणोक्तो वास्तुबलिः। सोऽग्रे वक्ष्यते। अयं वास्तुबलिः सर्व्वसम्मतः। तत्र दीक्षायां प्रपञ्चसारानुसारेण पञ्चसप्तनवहस्तमितो वा मण्डपः। अयुतादिहोमत्रये अष्टषोड़शचतुर्विंशतिहस्तः। प्रतिष्ठासु,—

दशाष्टहस्तं हीनन्तु मध्यं द्वादशषोड़शम्।
चतुर्विंशतिहस्तं स्यादुत्तमं द्विजपुङ्गव॥

धूमनिर्गमनोपेतं विचित्रस्तम्भनिर्मितम्।

शारदायाम्,—

षोड़शस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः।
अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशान्ततः॥
पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः समाः।
यद्वा मण्डपविस्तारस्यार्द्धा चत्वार उच्छ्रिताः॥
चूड़ान्विताश्च तेषाञ्च वलीका मूर्द्ध्नि सुस्थिताः।
मण्डपस्य त्रिभागेण स्तम्भा द्वादश चान्ततः॥
तत् पञ्चमांशं निखनेन्मेदिन्यां मन्त्रवित्तमः।

चूड़ान्विता वलीकाप्रवेशनोचितशिखान्विताः। वलीका च श्रेणीस्थापनोचितान्युत्तरासङ्गदारुणि।

द्वारेषु तोरणानि स्युः क्रमात् चीरमहीरुहाम्।
अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि च॥
पञ्चहस्तप्रमाणान्ते सप्तहस्तास्तथोत्तमे।
तिर्य्यक्फलकमानं स्यात् स्तम्भानामूर्द्धमानतः॥

ऊर्द्धमानं पञ्चांशं प्रोतं त्यक्त्वा दृश्यमानस्तम्भस्योर्द्धमानमित्यर्थः।

द्विहस्तमन्तरालं स्यान्मध्यमे च षड़ङ्गुलम्।
अधिकं चोत्तमे तद्वद् द्वादशाङ्गुलमुच्यते॥

हयशीर्षे,—

वर्त्तुलं चतुरस्रं वा तोरणं परिकल्पयेत् ।
चतुःपञ्चाङ्गुलं कुर्य्याद् द्वैगुख्यं[1] तोरणस्य च ॥
नवाष्टदशभिर्वापि कुर्य्याद् द्वादशभिस्तथा ।

द्वैगुख्यमित्यर्थः ।

मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।
प्रागादिक्रमयोगेन न्यसेत् तेषां स्वदारुतः ॥

हयशीर्षे,—

त्रिभागेनाथवार्द्धेन कुर्य्याद् वेदीं सुशोभनाम् ।
द्वादशाङ्गुलमुत्सेधा[2] विन्यसेत् परिकीर्त्तिता ॥
चतुरङ्गुलया ह्रद्या मध्यमोत्तमयोर्भवेत् ।
पक्केष्टकचितां वेदीं सुधालेपेन सुप्रभाम् ॥

योगशिवीये,—

विस्ताराष्टांशतः कुर्य्याद्वैष्टिकीमुपजङ्घिकाम् ।
मण्डपप्रान्तेषु स्तम्भवहिरित्यर्थः । मण्डपे पूर्व्वादिषु ध्वजाः ।
अरुणोऽग्निर्नभश्चैव कृष्णः शुक्लोऽथ पीतकः ।
रक्तवर्णस्तथा श्वेतः सर्व्ववर्णस्तथैव च ॥
मध्ये सिन्दूरसदृशं ध्वजं [3]समभिकल्पयेत् ।
[4]पञ्चहस्ता ध्वजाः कार्य्या विस्तारे षोड़शाङ्गुलाः ॥

मयः,—

द्वादशाङ्गुलविस्तीर्णा विन्यसेत् त्रिकरायतिः ।

---

(१) C. वैपुल्यं ० । (२) B. ० मुत्सेधा ० । (३) B. D. सम्यक् प्रकल्पयेत् । (४) B. पञ्चवर्णध्वजाः ० ।

एते च मण्डपस्य बाह्ये तोरणबहिः सप्तहस्तदण्डे [1]भूमिगे बन्धनीयाः। तथा प्रतिस्तम्भं लोकेशवर्णाः सप्तहस्ताः पताकाः द्वादशाङ्गुलविस्तीर्णा भूमिप्रोतद्वग्रहस्तदण्डेन बन्धनीयाः। ध्वजपताकयोर्दण्डा वंशमयाः। नवचित्रवस्त्रेण वितानं शुक्लेन मध्ये पद्मभूषितं मण्डपमानसुत्तमं वेदीमानं मध्यमं मण्डलमानं कनीयसम्। कलशाः,—सुवर्णरौप्यौडुम्बराः स्युर्जलातकस्तुपूरिताः (?)। [2]अष्टाविंशत्यधिकशतपलपूराश्च मृन्मयाः। अवक्राः स्फोटरहिताः। कालमण्डलवर्ज्जिताः।

---

## अथ कुण्डानि।

देवीपुराणे,—

वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा।

कुण्डवेद्यन्तरालं वेदीचतुर्थांशमितमित्यर्थः। शारदातिलके वेदीवाह्यं मण्डलावशिष्टं त्रिधा विभज्य मध्येऽंशे कुण्डानीत्युक्तम्। [ नारदीये ][3] कुण्डवेद्यन्तरालं सपादकरमात्रमुक्तम्।

चतुरस्रं योनिमर्द्धचन्द्रं त्र्यस्रं सुवृत्तकम्।
षड़स्रं पङ्कजाकारमष्टास्रं प्राक्क्रमेण तु॥
आचार्य्यकुण्डं मध्ये स्याद् गौरीपतिमहेशयोः।
चतुःकुण्डानि दिक्षु स्युरीशाने पञ्चमी भवेत्॥

---

(१) भूमिगतेषु ०। D. ० दण्डेषु भूमिषु ०।

(२) A. B. अष्टाविंशाधिक ०।

(३) B. D. Omits the portion bracketed.

मन्त्रागमे,—चतुरस्रार्द्धचन्द्रवृत्तपद्माकाराणि [ दिक्षु।
घटनागमे,—चतुरस्रार्द्धचन्द्रवृत्तपद्माकाराणि ][1] [2]प्रागादिदिक्षु।
अथ प्रपञ्चसारे,—अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्या[3]च्चतुर्हस्तमेकमेव।

---

## अथ कुण्डनिर्म्माणम्।

छन्दोगपरिशिष्टे,—

अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्मिनुयात् सदा॥

शारदातिलके,—

कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्व्वणः।
मध्यस्य दीर्घमानेन मानाङ्गुलमुदीरितम्॥

कात्यायनः,—

अङ्गुलस्य प्रमाणन्तु षट्यवाः [4]पार्श्वसङ्गताः।

छन्दोगपरिशिष्टाङ्गुलं स्मार्त्तग्रहयज्ञादिविषयम्। मध्यपर्व्वाङ्गुलं तान्त्रिकविषयम्। षट्यवाङ्गुलं श्रौतमानविषयम्। यवाष्टाङ्गुलन्तु साधारणत्वादनारभ्य विधानात् सर्व्वत्र वैकल्पिकम्। मध्यमाङ्गुलिकूर्परयोर्मध्ये प्रामाणिकः कर इति बौधायनोक्तं

---

(१) A. Omits the portion bracketed.

(२) D. प्रागादिषु।

(३) D. ० चतुरस्रमेकमेव।

(४) D. ० पार्श्वसम्मिताः।

स्मार्त्तविषयमेव। यत्तु कात्यायनवचनम्,—यजमानेनोर्द्ध्वबाहुना समस्थितेन प्रपदस्थितेन वा पुरुषसम्मितरज्जुमित्या तस्य पञ्चमांशः करः तस्य चतुर्विंशाङ्गुलमिति तदग्निचयनस्थलमानाधिकारात् तद्विषयमेव। अत्र सर्व्वकुण्डानां ऋजुस्थानज्ञानाय मण्डपे द्वारमध्ये शङ्कुं दत्त्वा दक्षिणोत्तरसूत्रदानम्। [एवं पूर्व्वपश्चाद्-द्वारमध्ये शङ्कोः सूत्रदानेन पश्चिमोत्तरसूत्रदानम्। एवं कोण-सूत्रद्वयदानम्।][1] तेषु सूत्रेषु च वेदीपादान्तरं त्यक्त्वा वेदी-बाह्यं त्रिधा विभज्य मध्यभागे वा दिक्षु विदिक्षु च कुण्डानि।

चतुरस्रं शारदायाम्,—

हस्तमात्रमितां भूमिं पूर्व्ववत् परिसूत्रयेत्।
समन्तात् कुण्ड[2]मेतस्याश्चतुरस्रं सुशोभनम्॥

दिक्साधनोक्तरीत्या प्राचीरेखादक्षिणरेखयोः साधनं मध्य-द्वादशाङ्गुले चतुर्दिक्षु लाञ्छनम्। तल्लाञ्छनोपरि[3]सूत्रमूल-दानेन द्वादशाङ्गुलमितरज्जुभ्रामणेन चतुर्दिक्षु मण्डलं मण्डल-द्वयसन्निपातस्थाने कोणचिह्नम्। तेषु सूत्रचतुष्कदानाच्चतुरस्रम्। एतदेवोक्तं सूर्य्यसिद्धान्ते दिङ्मध्यमत्स्यैः संसाध्या विदिश इति। हयशीर्षे च पूर्व्वस्यां दिश्युदङ्मुखयोनिकम्। आग्नेये योनि-कुण्डम्। तत्र,—

(१) A. Omits the portion bracketed.

(२) A. ० मेव स्याद्य ०।

(३) A. द्वादशाङ्गुलमितसूत्रदानेन चतुर्द्दिक्षुमण्डलं ०।

चतुरस्रे करमिते [1]अङ्गुलानां समन्ततः।
षट्सप्तत्युत्तरा पञ्चशती चेत्रस्य विद्यते॥
तथा योन्यादिकुण्डानि तावत्चेत्रमितानि च।
मूलभूतमतस्तेषां चतुरस्रं लिखेद् बुधः॥

तथाच तन्त्रराजे,—

चतुरस्रेऽभितो या च व्यक्ता भूखान्यतस्तथा।
लभ्यते सर्व्वकुण्डेषु तेन सर्व्वाणि सर्व्वतः॥

तथाच शारदातिलकादौ योन्यादिकुण्डलक्षणं चतुरस्रं न्यूनचेत्रत्वा[2]दनादेयमिति रामवाजपेयिदेवेन्द्राश्रमादयः। तत्त्वयुक्तं [3]चतुरस्रस्यास्य शास्त्रस्य कुण्डान्तरे सावकाशत्वान्निरवकाशशारदातिलककाठिन्ययुक्तयोन्यादिकुण्डलक्षणस्य बाधकत्वासम्भवात् तद्बलेनान्यथा व्याख्यानादिपरत्वकल्पनानुपपत्तेः। अन्यथा यज्जुहोति तदाहवनीय इत्यादि [4]सामान्यस्य शास्त्रस्य बाधभयेन पदे जुहोतीत्यादावपि पदस्याहवनीये जुहोतीत्येवं लक्षणाकल्पनापत्तेः। तेन सम्भवे चतुरस्रे साम्यं विकल्पो वा। शारदातिलके योनिकुण्डम्,—

चतुरस्रीकृतं चेत्रं पञ्चधा विभजेत् सुधीः।
न्यसेत् पुरस्तादेकांशं कोणार्द्धप्रमाणतः॥

---

(१) B. ॰ ङ्गुलानान्तु समन्ततः। D. ङ्गुलानाञ्च समन्ततः।
(२) D. ॰ इनादरणीयमिति ॰।
(३) B. चतुरस्रस्य च शास्त्रस्य ॰।
(४) ॰ A. B. D. सामान्यशास्त्रस्य ॰।

भ्रामयेत् तेन मानेन तथान्यदपि साधकः ।
सूत्रयुग्मं ततो दद्यात् कुण्डं योनिनिभं भवेत् ॥

चतुरस्रीकृतक्षेत्रस्य ब्रह्मसूत्रं चतुर्विंशाङ्गुलम् । तस्य पञ्चमोऽंशो यूकात्रयाधिकषट्-यवसहितमङ्गुलचतुष्टयम् । पूर्व्वभागे ब्रह्मसूत्रेण तावद् वन्धनीयम् । नैर्ऋतकोणे कोणसूत्रचतुर्थांशे लाञ्छयित्वा तल्लाञ्छनन्यस्तमूलसूत्रस्याग्रचतुरस्रपश्चिमरेखामध्ये दत्वा परिभ्राम्य मण्डलं कार्य्यम् । [एवं वायव्ये मण्डलं कार्य्यम् ।][1] पश्चिमरेखामध्यं मण्डलद्वयसन्निपातस्थानम् । कोणस्था च मण्डलरेखा । ब्रह्मसूत्रप्रागग्रान्मण्डलद्वयस्पर्शरेखाद्वयं दक्षिणोत्तरयोः । एवमश्वत्थपत्राभं योनिकुण्डम् । अत्र दक्षिणे योनिरुदङ्मुखी

प्रागग्नियाम्यकुण्डेषु प्रोक्ता योनिरुदङ्मुखी ।

इति वचनात् । एवञ्च ब्रह्मसूत्रे यूकात्रयाधिक्यं परित्यज्याष्टत्रिंशयववर्द्धनं श्रेष्ठोऽसोनविंशतियववर्द्धनेन मण्डलं रामवाजपेयिनो देवेन्द्राश्रमस्य च नादरणीयम् । योनिकुण्डम् । शारदायाम्,—

चतुरस्रीकृतं क्षेत्रं दशधा विभजेत् पुनः ।
एकमेकं त्यजेदंशमध ऊर्द्धञ्च मन्त्रवित् ॥
ज्यासूत्रं पातयेदग्रे तन्मानाद् भ्रामयेत् ततः ।
अर्द्धचन्द्रनिभं कुण्डं रमणीयं ततो भवेत् ॥

---

(1) A. B. C. Omit the portionbracketed.

चतुर्विंशाङ्गुलमितदक्षिणोत्तरकुण्डसूत्रस्य दशधाभागेन दशमोऽंशः । पञ्चलिख्याधिकैकयूकायुक्तयवत्रयसहितमङ्गुलद्वयमिति न दक्षिणोत्तरयोरेकैकांशत्यागे मध्यसूत्रं लिख्यापञ्चकयुक्तयूकाधिकोनविंशाङ्गुलमितं भवति। उदङ्मुखस्य कर्त्तुरग्रे मध्यदक्षिणोत्तरसूत्रस्य दक्षिणाग्रे पूर्व्वपश्चिमायतं ज्यासूत्रम् । [दक्षिणोत्तरायतसूत्रदक्षिणपाते सूत्रमूलं दत्वा तस्य सूत्रस्योत्तराग्रे सूत्राग्रं दत्वा भ्रमणेनार्द्धचन्द्रम् । ][1] [दक्षिणे मण्डलमुत्तरे । ][2] दैवेन्द्राग्रमेण ज्यासूत्रं पश्चिमे मण्डलं पूर्व्वे दर्शितम् । अस्य दक्षिणस्था उदङ्मुखी योनिः । शारदातिलके,—

चतुर्द्धा भेदिते चैत्रे न्यसेदुभयपार्श्वयोः ।
एकैकमंशं तन्मानादग्रतो लाञ्छयेत् ततः ॥
सूत्रद्वयं बुधः कुर्य्यात् त्र्यस्रं कुण्डमुदाहृतम् ।

पश्चिमसूत्रस्य दक्षिणे षडङ्गुलद्वरा चिह्नम् । एवमुत्तरे । यथा पूर्व्वापरायतकुण्डमध्यसूत्रस्य पूर्व्वदिशि षडङ्गुलद्वरा चिह्नम् । तेषु सूत्रत्रयदानात् त्र्यस्रम् । अस्य पश्चिमे योनिः ।

---

(१) A. B. C. Omit the portion bracketed.

(२) D. Omits the portion bracketed.

## वृत्तकुण्डः ।

त्रिपुरासारे,—

दिग्गजाभ्यधिकपंक्तिभागतः चैवतो निश्चितधीर्विवर्द्धयेत्
भागमेकमनेन सर्व्वतो भ्रामयेद् भवति वृत्तमुत्तमम् ॥

दिग्गजाधिकपंक्तिभागः अष्टादशभागः । पञ्चयूकाधिकयवद्वययुक्तमेकाङ्गुलम् । चतुर्द्दिक्षु तावद् वर्द्धयित्वा कुण्डमध्ये सूत्रं दत्वा वर्द्धितांशे सूत्राग्रं दत्वा भ्रामणेन वृत्तं कुण्डम् । पश्चिमेऽस्य योनिः । शारदातिलके,—

अष्टधा विभजेत् चेत्रं मध्यसूत्रस्य पार्श्वयोः ।
भागं न्यसेदेकमेकं मानेनानेन मध्यतः ॥
कुर्य्यात् पार्श्वद्वये मत्स्यचतुष्कं तन्त्रवित्तमः ।
सूत्रषट्कं ततो दद्यात् षड़स्रं कुण्डमुत्तमम् ॥

हस्तमितकुण्डस्य दक्षिणोत्तरमध्यसूत्रचतुर्विंशाङ्गुलं तस्याष्टमांशमङ्गुलत्रयम् । दक्षिणोत्तरपार्श्वयोः प्रत्येकं वर्द्धयित्वा चिह्नं कार्य्यम् । तत्र दक्षिणचिह्ने सूत्रमूलं दत्वा कुण्डमध्ये सूत्रान्तरदानेन पञ्चदशाङ्गुलमितरज्जुभ्रामणेन वृत्तम् । एवं कुण्डमध्ये सूत्रमूलं दत्वा [ दक्षिणचिह्ने सूत्राग्रं दत्वा ][1] भ्रामयित्वा वृत्तं कार्य्यम् । तथाच वृत्तद्वयसन्निपातस्थाने पूर्व्वाग्नेयमध्ये एको मत्स्यः । नैर्ऋतपश्चिममध्येऽपरो मत्स्य इति मत्स्यद्वयसिद्धिः । पुनश्च उत्तरचिह्ने सूत्रमूलं दत्वा कुण्डमध्ये सूत्राग्रप्रदानेन भ्राम-

(१) D. Omits the portion bracketed.

यित्वा वृत्तं कुण्डमध्ये सूत्रमूलं दत्वा उत्तरचिह्नसूत्राग्रं दत्वा भ्रामणेन वृत्तम्। वृत्तद्वयसन्निपातस्थाने पूर्व्वेशानमध्ये एको मत्स्यः। वायव्यपश्चिममध्ये चापरो मत्स्यः। एवं मत्स्यचतुष्टयम्। मत्स्ययोरुपरि एकं सूत्रम्। मत्स्याद् दक्षिणचिह्नं यावत् सूत्रम्। दक्षिणचिह्नात् पश्चिमनैर्ऋतमध्ये मत्स्यपर्य्यन्तं सूत्रम्। प्रतीच्यां मत्स्ययोरुपरि सूत्रम्। तन्मत्स्यादुत्तरचिह्नं प्रतिसूत्रम्। उत्तर-चिह्नात् [1]पूर्व्वेशानमध्ये मत्स्यं प्रतिसूत्रम्। तत् सूत्रषट्कमध्ये षड़स्रं कुण्डम्। [2]एवं वायव्ये पश्चिमे योनिः।

---

## पद्मकुण्डम्।

शारदातिलके,—

चतुरस्रीकृतं चेत्रं विभज्याष्टादशांशतः।
[3]एकं भागञ्च विन्यस्य भ्रामयेत् तेन वर्त्तुलम्॥
वृत्तानि कर्णिकादीनां वहिस्त्रीणि प्रकल्पयेत्।
पद्मकुण्डमिदं प्रोक्तं विलोचनमनोहरम्॥

अत्र खाताद् वहिः केशरादिपत्रान्तं खातन्तु कर्णिकास्थाने। तद् वहिः कण्ठमेखलादि। [4]यदाह कामिके,—

---

(१) D. पूर्व्वेशानमध्यमत्स्यं प्रतिसूत्रम्।
(२) A. B. D. इदं ०
(३) D. एकं भागं वहिर्न्यस्य भ्रामयेत् ०
(४) A. C. D. यदा।

चतुरस्राष्टभागेन कर्णिका स्याद् विभागशः।
बहिस्त्वेकेन भागेन केशराणि प्रकल्पयेत्॥
तृतीये दलमध्यानि तुरीये दलकोटयः।
भ्रामणात् पद्मकुण्डं स्याद् दलाग्रं दर्शयेद्बहिः॥

बहिश्चतुरस्रचेत्राद् बहिरष्टमांशेन दलाग्राणि वृत्तरेखा च। एवञ्चाष्टमांशवृद्धा मण्डलं कृत्वा तन्मध्ये कर्णिकार्थं भागद्वयेन वृत्तम्। केशरार्थमुभयतो भागद्वयेन वृत्तं दलमध्यार्थमुभयतो भागद्वयेन वृत्तं दलकोट्यर्थमुभयतो भागद्वयेन वृत्तमिति कृत्वा कर्णिकास्थाने खननकाले एकांशेनोच्चता कार्य्या। अतएव पद्मकुण्डे नाभिर्नास्ति। पत्राकारपरित्यागेन केशरस्थानावधिखननम्। पत्रमध्ये केशरद्वयदर्शनम्। अनुपातरीत्या खनने दलाग्रं कण्ठसमभूमौ दर्शयित्वा तत्र कण्ठस्ततो मेखला। पद्ममुत्तरे पश्चिमेऽस्य योनिः। हेमाद्रिदानप्रकाशादिस्वरसादेवं लिखितम्।

---

## अष्टास्रम्।

शारदातिलके —

पूर्व्वोक्तं विभजेत् चेत्रं चतुर्विंशतिभागतः।
एकभागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत्॥
अन्तस्थचतुरस्रस्य कोणार्द्धप्रमाणतः।
बाह्यस्य चतुरस्रस्य कोणाभ्यां प्रतिलाञ्छयेत्॥

दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत्।
अष्टास्रं कुण्डमेतद्धि तन्त्रविद्भिरुदाहृतम्॥

कामिके तु द्वादशभागस्यैकं भागं वह्निर्ध्यस्येदुक्तम्। तेनाष्टाविंशत्यङ्गुलं वाह्यचतुरस्रम्। शारदामते षड्विंशाङ्गुलम्। तत्र चान्तस्थचतुरस्रकोणार्द्धार्द्धं चतुर्थ्यैवाधिकमङ्गुलाष्टकम्। तेन मानेन कोणपार्श्वेषु चिह्नाष्टकम्। अन्तस्थचतुरस्रं मार्जयित्वा वाह्यचतुरस्रस्य पूर्व्वचिह्नाद् दक्षिणचिह्नं प्रतिसूत्रे दत्ते वह्निकोणं त्यक्त्वा कुण्डस्याग्नेये सूत्रम्। एवं प्रतिकोणं विदिक्-सूत्रदाने कोणप्रोञ्छनम्। अस्य पश्चिमे योनिः। अथ विज्ञानललिते त्रिपुरासारसमुच्चये चाधिकं कुण्डद्वयम्।

---

## पञ्चास्रम्।

विज्ञानललिते,—

सप्तमांशं वह्निर्ध्यस्य कृत्वा वृत्तमिह भ्रमात्।
चतुर्थभागन्यूनेन पूर्व्वक्षेत्रेण सम्मितैः॥

धनुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रकुण्डकम्[१]॥ हस्तकुण्डमध्यसूत्रस्य सप्तमो भागः। अङ्गुलत्रयं त्रयो यवा यूकात्रयञ्च। चतुरस्रं चतुर्दिक्षु दत्वा तत्र सूत्राग्रदानेन वृत्तं कार्य्यम्। पूर्व्वक्षेत्रस्य चतुर्विंशाङ्गुलस्य चतुर्थभागन्यूनेनाष्टाङ्गुलेन सम्मितानि पञ्च सूत्राणि [ वृत्तस्पृष्टोभयान्तानि धनुर्ज्याकृतीनि समन्ताद् वृत्त-

---

(१) C ० कुण्डकम्।

मध्ये दत्वा सूत्रद्वयस्थानि कोणं कल्पयित्वा वृत्तरेखां चतुरस्रां च मार्जयित्वा पञ्च सूत्रं रचयित्वा पञ्चसूत्रपरिच्छिन्नं पञ्चास्रकुण्डं][1] वृत्तमध्ये दत्वा यत्र वृत्तस्थं सूत्रद्वयसन्निपातस्थानं तत्कोणमिति पञ्च कोणानि तानि च सूत्राणि [2]धनुर्ज्याकाराणि। वृत्तरेखा धनुः। वृत्तरेखाञ्च प्रोञ्छयित्वा पञ्चसूत्रलक्षणेन वृत्तं पञ्चधा विभागं कृत्वा पञ्च चिह्नानि कृत्वा तेषु चिह्नात् चिह्नान्तरं यावत् एकसूत्रं [एवमन्यानि चत्वारि सूत्राणीति।][3] पञ्चसूत्रपरिच्छिन्नं पञ्चास्रं कुण्डं वायव्यकोणे वैकल्पिकम्। भूतग्रहशान्त्यर्थंहोमे शस्तमिदम्।

---

## सप्तास्रम्।

त्रिपुरासारसमुच्चये,—

क्षेत्रव्यासे दशांशैर्वहिरिह विनिधायैकमंशञ्च वृत्तं
मानेनैतेन कृत्वा पुनरपि च चतुःषष्टिभागीकृते तु।
[4]उक्त्वा यावत्प्रमाणं दृढ़मतिरमुना सप्तकैस्त्रिंशदंशैः
कुर्यात्सप्तास्रकुण्डं भवति हि तदिदं सप्तसूत्रप्रयोगात्॥

---

(१) A. B. D. Omit the portion bracketed.

(२) D. धनुर्गुणाकाराणि।

(३) D. Omits the portion bracketed.

(४) त्रिपुरासारसमुच्चय Published by Rasik Mohan reads षड्वायाम-प्रमाणं दृढ़मति॰ See page 30 verse no. 14.

हस्तचतुरस्रस्य सार्द्धयूकाधिकयवत्रययुक्ताङ्गुलद्वयं दशमांशं चतुरस्रं वहिर्विन्यस्य तत्र सूत्रायदानेन वृत्तं कृत्वा चतुरस्रस्य चतुःषष्टिभागान् कृत्वा यवत्रयमितस्य तस्य भागस्य त्रयस्त्रिंशता यवत्रयाधिकद्वादशाङ्गुलमानेन सप्तसूत्राणि वृत्तरेखास्पृष्टोभयान्तानि धनुर्ज्याकृतीनि वृत्तमध्ये समन्ताद् दत्वा सूत्रद्वयसन्निपातस्थाने कोणं कल्पयित्वा [1]मण्डलं रेखाञ्च चतुरस्रञ्च सम्मार्ज्य समास्त्रम् । विज्ञानललितेऽप्येवम् । तन्त्रान्तरेऽपि,—

चतुःषष्टिषु भागेषु त्रयस्त्रिंशांशमानतः ।
वृत्ते निधाय चिह्नानि सप्तसूत्राणि पातयेत् ॥

इदमीशानेऽष्टास्रेण सह वैकल्पिकम् । पश्चिमेऽस्य योनिः । अभिचारशान्त्यर्थहोमे शस्तमिदम् ।

---

## कण्ठमानम् ।

कालोत्तरे,—

खातादाद्येऽङ्गुलः कण्ठः सर्व्वकुण्डेष्वयं विधिः ।

द्विहस्तादिकुण्डेषु [2]कुण्डचतुर्विंशांशोऽङ्गुलम् । एवं मेखलादावपि । तथा च मोहनचूड़ोत्तरे,[3]—

चतुर्विंशतिमं भागमङ्गुलिं [4]परिकल्पयेत् ।
चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत् ॥

---

(१) D. मण्डलरेखाञ्च चतुरस्रञ्च सम्मार्ज्ज्य ० ।
(२) D. कुण्डचतुर्विंशा ० ।
(३) A. B. मोहचूड़ोत्तरे ।
(४) D. ० परिकल्पत ।

हस्तमात्रं खनेत्तोर्ध्वमूर्द्धं मेखलया सह ।

एवञ्च कण्ठाद्यङ्गुलमानं कुण्डचतुर्विंशांशरूपपारिभाषिकाङ्गुलपरम् । खातं द्वैधम् । शारदादिमते [1]मेखलां विना ।

यावान् कुण्डस्य विस्तारः खननं तावदीरितम् ।

मेखलासहितः खातः [2]पक्षो बहुसुसम्मतः ॥

प्रतिष्ठासारे,—

पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत् ।

विश्वकर्म्मा,—

व्यासात् खातः करः प्रोक्तो निम्नस्तिथ्यङ्गुलेन तु ।

तिथ्यङ्गुलानि पञ्चदशाङ्गुलानि । मेखलोच्छ्रायो नवाङ्गुलाभिप्रायेण । वशिष्ठसंहितायाम्,—

वितस्तिद्वयखातं यत्कुण्डः स चतुरङ्गुलम् ।

विप्राणां क्षत्रियाणां तदङ्गुलित्रयसंयुतम् ॥

वैश्यानां द्व्यङ्गुलाधिक्यं शूद्राणां हस्तमात्रकम् ।

इति तत्राशक्यपरम् । सामान्यवचनानां वैयर्थ्यप्रसङ्गात् । मेखलालक्षणमुक्तं कामिके,—

[3]नेत्रार्कांशेन तस्योष्ठस्तथा वेदत्र्यंभागतः ।

मेखला पृथुतोच्छ्रायैः कुण्डाकारा तु मेखला ॥

सर्व्वेषां सा तु कर्त्तव्या मेखलैका च लाघवात् ।

---

(१) D. ॰ मेखलादिना ।

(२) D. ॰ पक्षोऽत्र बहुसम्मतः ।

(३) D. पत्राकांशेन ॰ ।

यस्य मते हस्तकुण्डेऽङ्गुलद्वयं कण्ठः। षड़ङ्गुलविस्तृतचतुरङ्गुलोच्छ्राया चैका मेखला सर्व्वकुण्डेषु। पिङ्गलामते तु,—

एका षड़ङ्गुलोत्सेधविस्तारा मेखला मता।

उन्नतापि षड़ङ्गुला। [1]द्वित्रिमेखलं क्रियासारे,—

नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम्।
मध्यं द्विमेखलं कुण्डं नीचं स्यादेकमेखलम्॥

एतेनाशक्तविषयत्वेनैकद्विमेखलपक्षः। कामिके तु लाघवादिति कर्म्मलाघवं प्राप्यैका मेखला।

एकमेखलकं कुण्डं शस्तं संक्षेपकर्म्मणि।

इति ग्रन्थान्तरात्। यत्तु सोमशम्भुतन्त्रे,—

[2]त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्।
मेखलैका तु वैश्यस्य

इति। तत् तेषां विशेषफलदमित्येवं [3]रूपमेव।

मेखलानां त्रयं वापि द्वयमेकमथापि वा।

इत्यविशेषेण वायुसंहितापाठात्। वैश्यः सप्तदशसामिधेनीरनुब्रूयादितिवन्नियमकाशत्वाभावात्। द्विमेखलापक्षे च त्रिमेखलस्य द्वितीयतृतीयमेखलाद्वयमिति सम्प्रदायः। लक्षणसंग्रहे,—

प्रथमा द्व्यङ्गुलव्यासा उन्नता सा [4]नवाङ्गुला।
मध्या तु त्र्यङ्गुला बाह्ये तृतीया द्व्यङ्गुला मता॥

(१) A. D. द्विमेखलम्। B. त्रिमेखलम्। (३) D. ० परमेव।
(२) C. द्विमेखलं ० (४) D. ० नवाङ्गुलैः।

एकहस्तद्विहस्तादिसर्व्वकुण्डेषु कुण्डविस्तारचतुर्विंशभागात्मकेनाङ्गुलेन प्रथमा। कुण्डसन्निहिता मेखला द्व्यङ्गुला चतुरङ्गुलविस्तृता। नवाङ्गुलोच्चा। मध्या बाह्यपार्श्वे त्र्यङ्गुलविस्तृता षड़ङ्गुलोत्सेधा। तृतीया द्व्यङ्गुलविस्तारा त्र्यङ्गुलोत्सेधेत्यर्थः। तदुक्तमन्यत्र—खाते चतुर्विंशतिधाविभाजिते समन्ततः कण्ठवहिश्च मेखला [1]तिस्रश्चतस्रः त्रयभागविस्तृता नवत्युत्तरांशत उन्नता मताः। तथा पञ्चमेखलापक्षे तत्रैव

मेखलाः पञ्च वा कार्य्या षट्पञ्चद्वित्रिपञ्चकैः।
भागैर्विस्तारतो ज्ञेया उन्नता या नवाङ्गुलैः॥

तत्पञ्चमांशोना द्वितीया पञ्चमांशद्वयोना तृतीया पञ्चमांशत्रयोना चतुर्थी पञ्चमांशचतुष्टयोना पञ्चमीत्याहुः।

---

## अथ योनिः।

प्रपञ्चसारे,—

योनिस्तत्पश्चिमस्यामथ दिशि चतुरस्रस्थलारब्धनाला[2]
तन्मध्योल्लासिरन्ध्रोपरि विरचिताश्वत्थपत्रानुकारा। (?)
उत्सेधायामकाभ्यां प्रकृतिविकृतिसंख्याङ्गुलाष्टाङ्गुला स्या-
द्विस्तृत्याद्वादशार्द्धाङ्गुलमितनमितायां निविष्टे च कुण्डे॥

---

(१) C. तिस्रश्चतस्रस्त्रयभाग०।
(२) A. ०लब्धजाला। B. ०लब्धनाला। C. ०लब्धनाधी।

शारदायाम्,—

अष्टारत्न्येकहस्तानां कुण्डानां योनिरीरिता।
षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनी ॥
एकाङ्गुलन्तु योन्यर्थं कुर्य्यादोष्ठदधोमुखम् ।

[1]तथा—

कुण्डार्द्धेनायता योनिस्तत्त्रिभागेण विस्तृता ।
कुण्डाष्टमांशेनोच्चा सा मूले कुम्भद्वयोपमा ॥
क्रमात् सङ्कोचमापन्ना बोधिपत्त्रनिभा च सा ।
योनिरन्तर्बलं वाह्येऽजिनांशक्षतमेखला ॥
खलादारभ्य नालं स्यात् योनिमूलस्य धारणे ।
नालमेखलयोर्मध्ये रन्ध्रं योनिरधस्तथा ॥
रन्ध्रं परिधिमार्गार्थं द्वितीयमेखलोपरि ।

तथा—

कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसन्निभम् ।
तत् तत् कुण्डानुरूपं वा मानमस्य निगद्यते ॥
अष्टारत्न्येकहस्तानां नाभिरुत्सेधतारतः ।
नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत् ॥
योनिकुण्डे योनिमब्जकुण्डे नाभिञ्च वर्जयेत् ।

शारदायाम्,—

---

(1) E. F. Reads before it—अन्यत्र च,—
सर्व्वकुण्डेषु योनिः स्यात् कुण्डस्यार्द्धं न दीर्घतः ।
then तथा,—

सर्व्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम्।
पुत्रप्रदं योनिकुण्डमर्द्धचन्द्रं शुभप्रदम्॥

शत्रुक्षये त्र्यस्रम्। वर्त्तुलं शान्तौ। छेदने मारणे षडस्रम्। पद्माभं पुष्टिदम्। अष्टास्रं रोगशान्तौ। इदञ्च गुणफलार्थम्। तथासत्याश्रयालाभे वाक्येनाश्रयदाने वाक्यभेदापत्तेः। किन्तु यथा हिंसीति वृष्टिकामाय निधनं कुर्य्याद् दुर्गत्यन्नाद्यकामायेति[1] तत् तत् फलकसौभरे निधनव्यवस्था। एवं तत् तत् फलकहोमे कुण्डव्यवस्था।

विप्राणां चतुरस्रं स्याद् राज्ञां वर्त्तुलमिष्यते।
वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम्।

वैश्यः सप्तदशसामिधेनीरनुब्रूयादितिवत् कर्त्तुर्विशेषनिमित्तेन विशेषविधिः। चतुरस्रन्तु सर्व्वेषामिति वचनाद् वैकल्पिकम्। एतेन

स्त्रीणां [2]वर्णानि राजेन्द्र योन्याकाराणि कारयेत्।

इति लैङ्गोक्तं[3] व्याख्यातम्। स्त्रीणां यजमानरूपाणाम्। तथा मुष्टिमानं शतार्द्धे शतेऽरत्निमितम्। सहस्रे हस्तमितम्। द्विहस्तमयुते। चतुर्हस्तं लक्षे। दशलक्षे षट्करम्। कोट्यामष्टकरं स्मृतम्। अथवा

---

(१) D. Here adds स्वर्गकामायेति।

(२) D. ० कुण्डानि ०।

(३) C. लैङ्गेनोक्तम्।

एकहस्तमितं कुण्डमेकलक्षे विधीयते।

हस्तानां दशकं यावत् तावद्धस्तेन वर्द्धयेत्॥

[1]दशहस्तमितं कोटिहोमे।

---

## द्विहस्तादिकुण्डविधिः।

समचतुरस्रस्याक्षयारज्जुर्द्विकरणीति कात्यायनेन यद्यपि हस्तमात्रचतुरस्रस्य कोणसूत्रं मध्यसूत्रं कृत्वा द्विहस्तक्षेत्रं साधितम्। तथा प्रमाणं तिर्य्यक् द्विकरणायामस्तस्याक्षयारज्जुस्त्रिकरणीति। यस्य क्षेत्रस्यैकहस्तादिरूपस्य त्रैगुण्यं चिकीर्षितं तत् प्रमाणं तिर्य्यक्सूत्रं तत् कोणसूत्रञ्चायामसूत्रं कृत्वा चतुरस्रं कृत्वा तस्य कोणसूत्रेण मितं चतुरस्रं त्रिहस्तक्षेत्रमुक्तं तथापि तस्य कुण्डविषयशास्त्रत्वाभावात्। कुण्डविषये द्विहस्तादिविधिः [2]एकहस्तद्वैगुण्यपर इति।

हस्तक्षेत्रे दशाङ्गुलानां षट्सप्तत्या सहैव हि।[3]

शतानि पञ्च विद्यन्ते तन्मूलं मध्यसूत्रकम्॥

[4]चतुर्विंशत्यङ्गुलानि विदध्याद् द्विकरे पुनः।

अङ्गुलानि द्विपञ्चाशदेकादशशतानि च॥

तन्मूलमुच्यते दीर्घा चतुष्कं चार्द्धसंयुतम्।

---

(१) D. दशलक्षमितं कोटिहोमे।

(२) D. क्षेत्रद्वैगुण्यपर इति।

(३) C. ० सहैव हि।

(४) C. चतुर्विंशत्यङ्गुलानि ०।

[1]चतस्रश्च यथा यूका यवाः सप्त तथैव च॥
अङ्गुलानि त्रयस्त्रिंशन्मानं सूत्रे तु मध्यमे।

एवं [2]त्रिहस्तस्य मध्यसूत्रम्। अङ्गुलान्येकचत्वारिंशत् चतुर्यवा यूकाचतुष्टयं किञ्चिदूनं लिख्याचतुष्टयं चतुर्हस्तचेत्तस्य मध्यसूत्रम्। अष्टचत्वारिंशदङ्गुलानि। पञ्चहस्तचेत्ते मध्यसूत्रं त्रिपञ्चाशदङ्गुलानि। पञ्च यवाः षट् लिख्याः। षट्करे अष्टपञ्चाशदङ्गुलानि। षट्यवाः किञ्चिद्भागाधिकयूकाद्वयं सप्तहस्ते मध्यसूत्रं त्रिषष्ठ्यङ्गुलं चतुर्यवाः। अष्टकरे मध्यसूत्रं सप्तषष्ठ्यङ्गुलानि सप्तयवाः किञ्चिदूनाः। नवहस्ते ब्रह्मसूत्रं द्विसप्तत्यङ्गुलानि दशहस्ते ब्रह्मसूत्रं पञ्चसप्तत्यङ्गुलानि सप्तयवाः एका यूका लिख्याचतुष्टयञ्च। न्यूनाधिक्यपरिहाराय तथा यत्नः कार्य्यः। विश्वकर्म्मा,—

खातेऽधिके भवेद् रोगी हीने धेनुधनक्षयः।
वक्रतुण्डे तु सन्तापो मरणं छिन्नमेखले।
मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः॥
भार्य्याविनाशनं कुण्डं प्रोक्तं योन्या विनाकृतम्।
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम्॥
मानाधिके भवेन्मृत्युर्मानहीने दरिद्रता।
न्यूनाधिकप्रमाणं यत् कुण्डं झर्झरमेखलम्॥
शृङ्गाररहितं यच्च यजमानविनाशकृत्।

(१) B. ततस्तस्य ०।
(२) D. द्विहस्तस्य ०।

शृङ्गारपदं योनिपरम्। क्रियासारे,—

क्षत्रियोऽथ समर्थो यः कुण्डं ताम्रेण बन्धयेत्।

तदभावे इष्टकाभिर्वा सम्बध्य सुवृत्तं तथा समर्थो ब्राह्मणादिरपि। त्रिपुरासारे,—

[1]नित्यनैमित्तिके होमे हस्तमात्राणि वालुकाः।

स्थण्डिलानि चतुरङ्गुलोच्चान्येकाङ्गुलोच्चानि वा चतुरस्रयोनिवृत्ताद्याकाराणीत्युक्तम्। शारदातिलके,—

नित्यं नैमित्तिकं [2]होमं स्थण्डिले वा समाचरेत्।

हस्तमात्रेण तत् कार्य्यं वालुकाभिः सुशोभनम्॥

अङ्गुलोत्सेधसंयुक्तं चतुरस्रं सुशोभनम्।

महादानाधिकारे लैङ्गे स्थण्डिलं केवलन्तु वा। अयुतादिहोमे स्थण्डिलस्यापि द्विहस्तादिवृद्धिरूहनीया। प्रतिष्ठादिकर्मसु हयग्रीवोक्तकुण्डानि चतुरस्रार्द्धचन्द्रवृत्तपद्माष्टास्राणि। सौरकाण्डे चतुरस्रसाधनमुक्त्वा

खातं कुण्डस्य कर्त्तव्यं मेखलोच्छ्रायसम्मितम्[3]।

अङ्गुलद्वितयं त्यक्त्वा मेखला चतुरङ्गुला॥

कर्त्तव्या प्रथमा रम्या चतुरङ्गुलमुच्छ्रिता।

अङ्गुलद्वितयं त्यक्त्वा मेखला कर्त्तव्येतिच्छेदः। तेन चतुरङ्गुला प्रथमेति सम्बन्धः। प्रथमा च प्रथमवहिरावरणरूपा।

अष्टाङ्गुला द्वितीया च तृतीया द्वादशाङ्गुला।

---

(१) D नित्ये नैमित्तिके ०। (३) B. D. ० संयुतम्।
(२) D. ० कर्म्म ०।

तृतीया कुण्डपार्श्वस्था।

सर्व्वासामेव विस्तारं कुर्व्वीत चतुरङ्गुलम्।

केचित्तु यथाश्रुतशब्दस्वरसात् कुण्डपार्श्वे चतुरङ्गुलोचेति वदन्ति। [ अन्येतु ][1]

योनिं दशाङ्गुला कार्य्या पश्चिमाशाव्यवस्थिता।

अश्वत्थपत्रसदृशा षट्चतुरङ्गुलाग्रका॥

किञ्चित्कण्ठे निविष्टा सा गजाष्टसदृशीमता।

नाभेर्भागं परित्यज्य कार्य्या कुण्डस्य मेखला॥

नाभिरत्र योनिः।

एकमेखलकं कुण्डं शस्तं संक्षेपकर्म्मणि।

---

## अथार्द्धचन्द्रकुण्डम्।

सौरे,—

चतुरस्रे समे क्षेत्रे चतुःकोष्ठीकृते गुरुः।

मध्ये सूत्रन्तु संस्थाप्य कोणे संस्थापयेत् ततः॥

ततो यदतिरिच्येत तदर्द्धं त्यज्य लाञ्छयेत्।

पूर्व्वतः पश्चिमे चैव त्यक्त्वोदीचीञ्च भ्रामयेत्॥

[2]अयमर्थः—हस्तमात्रं चतुरस्रं चतुःकोष्ठं कृत्वा तस्य मध्ये हस्तमात्रसूत्रं दत्वा तदेव सूत्रं कोणे दत्वा ततश्चतुर्विंशाङ्गुलसूत्रात् कोणपर्य्यन्तं सूत्रशून्यं यावत् क्षेत्रमवशिष्टं दशाङ्गुलात्मकं तदर्द्धं

(1) A. C. D. Omit the portion bracketed. D. Reads here तथा।

(2) D. Here reads तेन दक्षिणे चतुरस्राकार उत्तरे व्यस्तम्। अयमर्थः ०

पञ्चाङ्गुलं सूत्राद् गृहीत्वा सूत्रशून्यचेत्रे प्रवेश्य सूत्रे लाञ्छयेत्। [तथाचोनविंशाङ्गुले सूत्रे लाञ्छनं भवति।][1] तथाचोनविंशाङ्गुल-मितरज्जुमूलं चतुरस्रोत्तरसूत्रमध्ये दत्वा तत्सूत्राग्रेण पूर्व्वतः पश्चिमपर्य्यन्तं मण्डलम्। एवञ्चोत्तरे [2]रज्जुसूत्रमष्टविंशाङ्गुलं धनुर्विस्तार ऊनविंशाङ्गुलं भवति। चतुःकोष्ठकरणं सूत्रस्य कोणपाते रज्जुप्रस्थानार्थम्।

---

## अथ वृत्तकुण्डम्।

सौरकाण्डे,—

> चतुरस्रेसमे कुण्डे पूर्व्ववत्परिकल्पयेत्।
> कुण्डार्द्धे कर्णभागार्द्धं दिशि स्थाप्य विचक्षणः।
> भ्रामयेत्पूर्णचन्द्राभं कुण्डं स्यात् सुमनोहरम्॥

अयमर्थः—चतुरस्रं चतुःकोष्ठं कृत्वा कुण्डार्द्धे कुण्डप्रान्तसूत्रे [ द्वादशाङ्गुलमिते ][3] [ कर्णभागार्द्धं ][4] चतुःकोष्ठकरणसामर्थ्या-चतुःकोष्ठिककोष्ठकोणसूत्रस्य भागचतुर्थोऽंशस्तदर्द्धं यवाङ्गुलद्वयरूपं कुण्डप्रान्तसूत्रात् वर्द्धयित्वा यवाधिकचतुर्द्दशाङ्गुलसूत्रमूलं चतु-रस्रमध्ये स्थाप्य तदग्रं दिशि स्थाप्य भ्रामयेत्।

---

(१) D. Omits the portion bracketed.

(२) D. ज्याङ्गुलमष्ट०।

(३) B. C. D. Omit the portion bracketed.

(४) A. Omit the portion bracketed. D. कर्णभागार्द्धं सूत्रे द्वादशाङ्गुल-मिते चतुः०।

## पद्मकुण्डम्।

तत्रैव,—

वर्त्तुले मेखलायाञ्च कुर्य्यात् पद्मदलानि च।
षोड़शातिसुरम्याणि यथाशोभान्वितानि च॥
पद्माभमेवं कुण्डं [1]तद्भवेदतिमनोहरम्।

अस्य पश्चिमे योनिः।

---

## अथाष्टास्रम्।

ईशाने। तत्रैव,—

चतुरस्रे समे क्षेत्रे परिधीकर्णभूषिते।
अष्टास्रं वर्द्धयेद् येन विधिना तच्छृणुष्व मे॥
कर्णात्कर्णगतं सूत्रं [2]समस्यात्यात् समं बुधः।
कुण्डार्द्धसूत्रमानेन कर्णसूत्राणि लाञ्छयेत्॥
एकत्र लाञ्छने स्थाप्य सूत्रं कुण्डार्द्धसम्मितम्।
लाञ्छयेज्जीवरेखासु ततस्तेन विचक्षणः॥
लाञ्छनान्निर्गतान् दिक्षु ततोऽन्यानि समालिखेत्।
परिध्याख्यानि सूत्राणि दिग्विदिक्षु समन्ततः॥
अष्टास्रमेवं कुण्डं तु कथितं तत्त्ववेदिभिः॥
अथवा पद्ममालिख्य हस्तमात्रं समन्ततः।
पद्मवत् खातयेत्कुण्डमष्टास्रं [3]सुमनोहरम्॥

---

(१) B. ०द्व०।
(२) E. F. समास्थाप्यात्०
(३) D. ०द्व मनोहरम्।

कर्णसूत्राणीतिबहुवचनात् कुण्डमध्यात् कोणसूत्रोपरि कुण्डार्द्धसूत्रं पातयित्वा तदन्ते चिह्नं कार्य्यम् । एवं चतुःकोणे कृत्वा तेषु चिह्नेषु कुण्डार्द्धसूत्रस्य मध्यं यथा भवति एवं विदिक्समरेखयोः पातयित्वा

चतुरस्राद् बहिर्यत्र सूत्राग्रं तत्र लाञ्छयेत् ।

जीवरेखास्विति निमित्तसप्तमी जीवरेखानिमित्तम् । चैत्र-वृद्धार्थत्वात् करिष्यमाणरेखा जीवरेखा । ततस्तेषु चिह्नेषु दिक्षु सूत्रचतुष्टयं विदिक्षु च सूत्रचतुष्टयमिति सूत्राष्टमिति । कोणप्रोञ्छनेन जीवरेखामध्यरेखाप्रोञ्छनेनाष्टास्रं भवति । नात्र चतुरस्रसमानक्षेत्रतानियमः । पद्मवत्खातपक्षे सर्व्वथाऽसम्भवात् । इत्यष्टास्रम् । अत्र पद्मवत्खातपक्षेऽपि मेखला वृत्तरूपैव न तु पद्मदलानुरूपेण पद्मनिर्गतत्वात्[1] । प्रतिष्ठागमे च कुण्डमध्ये नाभिविधानाभावात् नाभिर्नास्ति । अन्यत् सर्व्वं मन्त्रागम-वदवगन्तव्यम् । स्थण्डिलं घटनागमेनोक्तमेव । अत्यन्तासम्भवे मन्त्रागमादेवानुसर्त्तव्यम् ।

---

## अथ मण्डलम् ।

शारदातिलके पूर्व्वापरायताः सप्तदश रेखाः पश्चिमोत्तरायता-स्तावत्यः । तेष्वभितः षोड़शकोष्ठव्यवस्थया षट्-पञ्चाशदधिकशत-द्वयमितानि पदानि जायन्ते । मध्ये षट्त्रिंशत्पदैः पद्मम् । पद्मपार्श्वे

(१) A. पद्मस्यवृत्तनिर्गतत्वात् । B. D. पद्मवृत्तनिर्गतत्वात् ।

एकपंक्त्याभितः पीठं तद्बाह्ये पंक्तिद्वयेन वीथिम्। अवशिष्टपद्माभ्यां मध्ये द्वारं षट्पदैः। तत्पार्श्वद्वये च चतुर्भिश्चतुर्भिः शोभा। पद-षट्केन कोणमेवं चतुर्दिक्षु। पद्मक्षेत्रस्य द्वादशभागमभितः सन्त्यज्य मध्ये वृत्तत्रयं समान्तरम्। [1]वृत्तमध्ये कर्णिका। द्वितीयं केशरस्थानं तृतीयं पत्रस्थानं त्यक्तांशेन दलाग्राणि। मध्यवृत्ते युग्मशः केशरषोडशकरणम्। बाह्यवृत्तेः केशराग्रे सूत्रमूलं दत्वा वृत्तबाह्यरेखायां सूत्राग्रं दत्वार्द्ध[2]चन्द्राकृतिकरणम्। अर्द्धचन्द्राष्ट-सन्धिस्थाने मध्यवृत्ते रज्जुरेखाकरणम्। त्यक्तांशप्रान्ते वृत्तं कृत्वा दलाग्राष्टलिखनमनुपातरीत्या। पद्मपार्श्वे अपीठपंक्तौ [3][पदत्रय-मुपान्ते।] कोणचतुष्के पत्रत्रयमेकीकृत्य पीठपादकरणम्। अव-शिष्टपदैरेकीकृतैः प्रतिदिशं पीठपात्राणि। वीथिपदपंक्तिद्वयस्य पदानां प्रतिपंक्त्येकीकरणम्। अन्त्यपंक्तौ [4][पदचतुष्कमुपान्ते पंक्तौ] पदद्वयमिति षट्पदैर्द्वारम्। द्वारपार्श्वयोरुपान्त्यपंक्तौ पदत्रयमन्त्यपंक्तौ च पदमिति चतुष्पदैः शोभा। तत्पार्श्वयो-रन्त्यपंक्तौ पदत्रयमुपान्ते पदमेकमिति चतुःकोष्ठैरुपशोभाद्वयम्। पंक्तिद्वयपार्श्वे पदद्वयसहिते कण्ठकोष्ठे कोणम्[5]। एवं चतुर्दिक्षु। रजसांशे विशेषः[6]। कर्णिकाः पीतवर्णाः केशराः पीतरक्ताः

---

(१) D. मध्यवृत्ते ०

(२) B. ० चन्द्राकृतिकरणमपचार्द्धचन्द्राष्ट ०

(३) A. C. Omit the portion bracketed.

(४) D. Omits the portion bracketed.

(५) A. B. D. पंक्तिद्वयपार्श्वपदद्वयसहितकोणकोष्ठेन कोणम्।

(६) A. रजसां पाते विशेषः।

केवलारुणवर्णा वा। शुक्लानि पत्राणि पत्रसन्धीनि श्यामलानि। पीतरक्तकर्णिकापचे कृष्णवर्णदलसन्धयः। पत्राण्यरुणानि। पीठपादा अरुणाः। पीठपत्राणि [1]पीतानि शुक्लानि कृष्णानि वा। वीथिषु पत्रपुष्पफलयुक्तकल्पलता नानावर्णेन। द्वाराणि शुक्लानि। शोभा रक्ताः। उपशोभाः पीताः। कृष्णानि कोणानि। शुक्लरक्तकृष्णवर्णा रेखास्तिस्रो बहिः। अङ्गुलोत्सेधविस्ताराः। समा रेखाः शुक्लाः। एतत् सर्व्वतोभद्रमण्डलम्। मण्डलरजांसि तत्रैवोक्तानि। पीतं हरिद्राचूर्णं व्रीहियवादितण्डुलचूर्णं शुक्लं कुसुमचूर्णं रक्तं दग्धपुलाकजं कृष्णं विल्वादिपत्रजं श्यामम्। यत्तु मण्डलाधिकारे देवीपुराणे,—मुक्ताफलचूर्णं शुक्लं प्रवालचूर्णं मरकतचूर्णं वा रक्तं पुष्परागचूर्णं कुङ्कुमचूर्णं वा पीतं नीलमणि-चर्णं कृष्णं मरकतचूर्णं श्याममित्युक्तं तन्महाव्ययविषयमेव। तत्रैव शालिपिष्टकचूर्णैर्वा यवगोधूमजैरित्यादिप्रकारान्तरकथनात्।

---

## स्रुक्स्रुवलक्षणम्।

शारदातिलके, देवीपुराणे च,—अश्वत्थपलाशवैकङ्कतखदिर-भवं तदन्यक्षीरशाखिभवं वा काष्ठं हस्तमितं ग्राह्यम्। देवी-पुराणे तु सार्द्धहस्तं स्रुगर्थं। तस्य षट्त्रिंशता भागः। विंशत्यंशै-र्दण्डः। वेदी चाष्टभिः। एकांशेन कण्ठः। सप्तभागेन मुखम्।

---

(१) D. अरुणानि शुक्लानि।

[1]दण्डस्य मूले त्रिभागेण कुम्भः। तथा दण्डमूलाग्रयो खण्डी। कण्ठी युगांशेनांशद्वयेन। यमांशेनांशद्वयेन तथा दण्डस्य बाह्वोर्वेष्टनरज्जुपरिमाणम्। षड्भिरंशैर्वेदी। मध्ये एकांशेन वृत्तरूपा कर्णिका। तद्वहिरंशेन खातरूपं वृत्तम्। खातस्य गभीरता चांशेन। तद्वहिरर्द्धांशेन वृत्तम्। वहिःपद्मदलान्यंशेन। अर्द्धांशेन परितो मेखला। [ षड्भिरंशै ][2] र्वेद्याः पृष्ठे कूर्म्माकृतिः। कण्ठस्य विस्तारो वेदीचांशेन। वेदीविस्तारं त्रिधा विभज्य तस्य मध्यभागसमः कण्ठविस्तारः। मुखस्यापि कण्ठसमो विस्तारः। मुखे वेदीगर्त्तप्रभृतिकनिष्ठाङ्गुलिमितो घृतनिर्गममार्गः। मुखस्य परितोऽर्द्धांशेन मेखला। मुखपृष्ठभागे हंसस्य हस्तिनो वराहस्य वा मुखं लेख्यम्। स्रुचश्चतुर्भिरंशैः स्रुवः। देवीपुराणे,—हस्तमितः। अस्य द्वाविंशत्यंशेन दण्डः। तस्या बाह्वोर्वेष्टनमंशचतुष्टयेन। अंशद्वयेन शिरः। तन्मध्ये घृतकर्षपूर[3]योग्यं खातं पङ्के मृगपदाकारम्। मध्ये भित्तिः। दण्डमूलाग्रयोर्गण्डश्च स्यात्। अंशद्वयेन [4]कङ्कणभूपिता च सा। खण्डीशब्दश्च कङ्कणावच्छिन्नदण्डैकदेशवाचकः।

---

(१) D. Here reads दण्डस्य मूले त्रिभागेण मुखम्। दण्डस्य मूले त्रिभागेण कुम्भः। दण्डस्याग्रे चतुर्थभागेन कुम्भः। तथा दण्डस्य ०

(२) A. Omits the portion bracketed.

(३) A. ० पूरण ०

(४) D. कङ्कणशोभिता च सा।

## श्रौतस्मार्त्तयोः स्रुवलक्षणम्।

स्रुवोऽरत्निमात्रोऽङ्गुष्ठपर्व्वमात्रः पुष्करः। बाहुमात्रः स्रुचः पाणिमात्रा पुष्करा। त्वग्बिला हंसमात्रप्रसेका। वैकङ्कतो यज्ञकर[1] इति वचनात् वैकङ्कती। प्रणीतापात्रं वारणम्। चतुरङ्गुलविलम्बमसवत् संवृत्तं वारणमेवारत्निमात्रम्। स्फोऽस्याकृतिः खादिरोऽरत्निमात्र [2]उल्लेखनार्थः। उलूखलं जानुमात्रं वारणम्। मुषलं वारणमेव यथेच्छमानम्। प्रतिष्ठाद्यर्थन्तु हयशीर्षे,—

हस्तमात्रं स्रुवं कुर्य्याच्चटुकेन समन्वितम्।
तस्मात् तदङ्गुलं वृत्तं कार्य्यं निम्नं यथा भवेत्॥
मध्ये तु गोष्पदं यावत् कुर्य्यान्निम्नं तथाकृतिम्।
अङ्गुष्ठकपरीणाहं स्रुवदण्डं प्रकल्पयेत्॥

चटुकेनेति स्रुवशिरसि मण्डलाकारं चटुकं कृत्वा तदुपरि द्व्यङ्गुलं वर्त्तुलं कृत्वा तन्मध्ये मध्ये गोष्पदाकारं मध्यभित्तिसहितं खातं कुर्य्यादित्यर्थः।

---

## स्रुक्लक्षणम्।

तत्रैव,—

स्रुचं कुर्य्यात्तु होमार्थे बाहुदण्डमितं सदा।
समाङ्गुलप्रविस्तारं चतुरस्रं समन्ततः॥

---

(१) A. वैकङ्कतो यज्ञावचर ० D. वैकङ्कतो यज्ञचर ०

(२) A. D. लेखनार्थः।

पञ्चाङ्गुलानि विस्तारं[1] कुर्य्याद् वा चतुरस्रकम्।
त्रिभागेण ततो वृत्तं कुर्य्याद् गर्त्तन्तु[2] मध्यतः॥
खनेत् त्र्यङ्गुलं निम्नं तिर्य्यगूर्द्ध्वं समन्ततः।
यवद्वयं परित्यज्य कुर्य्याद् वै मेखलात्रयम्॥
अर्द्धाङ्गुलप्रविस्तारं [3]तद्बाह्यं शोभयेत् ततः।
[4]तथा शोभानुरूपेण चतुः [5]कोष्ठेषु सर्व्वतः॥
त्रिभागविस्तरं कण्ठं स्रुचोऽङ्गुष्ठ[6]समायतम्।
तत्समं विस्तृतञ्चाग्रे मुखं तस्य षडङ्गुलम्॥
आयामे च तथा कुर्य्यात् [7]कण्ठान्तेन त्रिविस्तरम्।
आज्यनिर्गमणं मध्ये तद्वि कुर्य्यात् षडङ्गुलम्॥
तन्मानेनैव तन्निम्नं क्रमाद् यावद्द्विरङ्गुलम्।
कुर्य्यात् कण्ठे तु शुषिरं विशेद् यावत् कनीयसी॥
स्रुच एवं कृतायाश्च मूलं कुर्य्यात् सुशोभनम्।
दण्डन्तु कारयेच्छेषमवक्रं निर्व्रणं शुभम्॥
कलसं कारयेन्मूले वेष्टनञ्च षडङ्गुलम्।
स्रुङ्मूले मकरास्यन्तु कारयेत् सुमनोहरम्॥
शेषमन्यच्च कर्त्तव्यं यथाशोभानुरूपतः।

स्रुगर्थं सप्ताङ्गुलपञ्चाङ्गुलान्यतमविस्तारं चतुरस्रं वेदी

---

(१) A. B D. पञ्चाङ्गुलप्रविस्तारं ०
(२) B. D. ० वृत्तञ्च ०
(३) D. तद्द्वारं शोभ ०
(४) D. यथा ०
(५) D. ० कोषेषु ०
(६) A. ० ऽङ्गुल ०
(७) A. ० कण्ठान्ते द्वित्रिविस्तरम्।

ततस्त्रिभागेण तृतीयांशेन मध्ये वृत्तरूपं खातम्। गर्त्तस्य गभीरत्वं त्र्यङ्गुलम्। गर्त्तविस्तारोऽपि पत्ते त्र्यङ्गुलः। गर्त्तस्य समन्ततः यवद्वयं परित्यज्य मेखलात्रयम्। अर्द्धाङ्गुलविस्तृता मेखला। कोणेष्ववशिष्टस्थाने पुष्पादिलिखनेन शोभा। वेदीतृतीयांश-विस्तृतं वेदिलग्नं कण्ठम्। दैर्घ्यमङ्गुष्ठमितम्। तदनन्तरं षड़-ङ्गुलदीर्घं मुखम्। मुखस्य विस्तारोऽग्रे कण्ठसमः। मूले पञ्चाङ्गुलवेदीपक्षे द्व्यङ्गुलं सप्ताङ्गुलवेदीपक्षे त्र्यङ्गुलम्। तद्वि मुख-रूपं षड़ङ्गुलम्। मध्ये आज्यनिर्गमणम्। आज्यं निर्गम्यते अनेनेति व्युत्पत्त्या तदुपयोगिखातमित्यर्थः। मुखस्य द्व्यङ्गुल-पर्य्यन्तं खातं तन्मानेन तन्निम्नम्। तन्मानविस्तारं तन्माननिम्नञ्च। उपरि खातस्य निम्नविस्तारयोरनियमः। कण्ठे शुषिरं कनिष्ठा-ङ्गुलिमितम्। स्रुचो दण्डस्य वेष्टनं षड़ङ्गुलम्।

तत्रैव,—

स्रुवार्थे खदिरं शस्तं चन्दनं मधुकं तथा।
चम्पकं चूतकं सीषं पालाशं समिदेव च॥
अन्येऽपि याज्ञिका वृक्षाः शस्यन्ते सारवद्दृढ़ाः।
द्वादशाङ्गुलविस्तारं कारयेच्च समं बुधः॥
मूले षड़ङ्गुलं दण्डं कुर्य्यात् समतलं शुभम्।
अष्टाङ्गुलप्रविस्तारं द्वादशाङ्गुलमायतम्॥
उल्लेखनार्थं कुर्व्वीत खड्गं हस्तमितं शुभम्।

(१) B. चन्दन॰

## अथ जपधर्म्माः ।

योगियाज्ञवल्क्यः,—

गृहे त्वेकगुणं जाप्यं नद्यान्तु त्रिगुणं[1] स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यागारे दशाधिकम्[2] ॥
सिद्धक्षेत्रे पुण्यतीर्थे देवतायाश्च सन्निधौ ।
सहस्रशतकोटीनामनन्तं विष्णु[3]सन्निधौ ॥

पञ्चरात्रे,—

पुण्यक्षेत्रं नदीतीरं गुहा पर्व्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरिः ।
तुलसीकाननं गोष्ठं वृक्षशून्यः शिवालयः ॥
अश्वत्थामलकीमूलं गोशाला तीर्थ[4]मध्यतः ।
देवतायतनं तीरं[5] समुद्रस्य निजं गृहम् ॥
गुरूणां सन्निधानञ्च चित्तैकाग्र्यस्थलं तथा ।

---

(१) B. द्विगुणं ० D. नद्यादौ द्विगुणं ०
(२) B. D. ० शताधिकम् ।
(३) B. D. ० शिव ०
(४) A. ० जल ०
(५) A. ० कूलं ।

## आसनानि।

पञ्चरात्रे,—

सर्व्वसिद्ध्यै व्याघ्रचर्म्म मोक्षसिद्ध्यै मृगाजिनम्।
वस्त्रासनं रोगहरं वेत्रजं वैश्यकर्म्मणि[1]॥
[2]विद्वेषे जाम्बुकं प्रोक्तं कम्बलं दुःखमोचनम्
अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्म्मणि॥
शान्तिके धवलं प्रोक्तं चित्रकं सर्व्वकर्म्मसु।
स्तम्भने गजचर्म्म स्यान्मारणे माहिषं तथा॥
मेषचर्म्म तथोच्चाटे खड्गिजं वैश्यकर्म्मणि।
विद्वेषे जाम्बुकं प्रोक्तं भवेद्‌ गोचर्म्म शान्तिके॥
वंशासने च दारिद्र्यं दौर्भाग्यं दारुजासने।
धरण्यां दुःखसम्भूतिः[3] पाषाणे व्याधिसम्भवः॥
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः।
इष्टकायामथाधिः स्यादेतत् साधारणो जपे॥
[4]कुशाजिनाम्बरेणापि चतुरस्रं समन्ततः।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुन्नतम्॥

---

(१) A. B. D. ० श्रीविवर्द्धनम्।

(२) B. D. कौशेयं पुष्टिदं प्रोक्तं कम्बलं दुःखमोचनम्। A. कौशेयं पुष्टिदं प्रोक्तं ०

(३) A. B. D. सम्पत्तिः ०।

(४) A. कृष्णाजि ०।

[1]पद्मकं स्वस्तिकं वीरं सिद्धञ्चेति चतुष्टयम्।
जपे प्रशस्तमित्युक्तमासनं मुनिसत्तमैः॥

स्मृतिः,—

सहस्रगुणितो ज्ञेय ऊर्द्ध्वपुण्ड्रवतो जपः।
ब्राह्मणस्योर्द्ध्वपुण्ड्रं स्यात् क्षत्रियस्यार्द्धचन्द्रिका॥
वैश्यः पुण्ड्रं तथा कुर्य्याच्छूद्रस्यापि त्रिपुण्ड्रकम्।

अत्र ब्राह्मणस्योर्द्ध्वपुण्ड्रं जपाङ्गतया विधीयते। तेन पुरुषार्थ-भस्मत्रिपुण्ड्रकस्य न बाधः।

---

## अक्षमाला।

योगियाज्ञवल्क्यः,—

स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रञ्जीवसमुद्भवैः।
अक्षमाला प्रकर्त्तव्या प्रशस्ताह्युत्तरोत्तरा॥
कोट्यादिका भवेद् वृद्धिरक्षमालाविशेषतः।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठः परः परः॥

स्फटिकापेक्षया इन्द्राक्षे कोटिगुणं फलम्। रुद्राक्षे इन्द्राक्षादर्बुदगुणमित्यादिरूपेण। तथा

अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना।

इति। शिवपुराणे,—

---

(१) D. Adds तथा,—

अङ्गुल्या जपसंख्यानमेकमेकगुणं स्मृतम्।
रेखयाष्टगुणं विद्यात् पुत्रञ्जीवैर्दशाधिकम्॥
शतं स्यात् शङ्खमालाभिः प्रवालैश्च सहस्रकम्।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते॥
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते।
कुशग्रन्थ्याथ रुद्राक्षैरनन्तगुणितं भवेत्॥

अन्यत्र च,—चतुर्वर्गाप्तये पद्माक्षमाला शत्रुनाशाय वा [1][अणिमादिगुणाप्तये वा] मोक्षाय च। सर्व्वकामाप्तये रुद्राक्षाणि मोक्षाय च। स्फाटिकैर्मौक्तिकैरक्षमाला राज्यदा सौभाग्यदा च। रुद्राक्षमाला राज्यदा। पुत्रञ्जीवमाला पुत्रदा। कुशग्रन्थ्या पापक्षयो मोक्षश्च। अरिष्टरूप्यमाला शान्तिके। स्वर्णरजतमाला सर्व्वकामदा। प्रवालमाला धनलाभाय। मुक्ताभिः [2]पुत्राय। शङ्खैर्यशः। ताम्रमाला मेधावीर्य्यतेजःप्रदा। रत्नैर्विभूतिः। [3]तथा नारदकल्पे—अष्टाक्षरे विशेषः,—

कुशवन्थैर्जपेद् विप्रः सुवर्णरजतैर्नृपः।
पुत्रञ्जीवैर्जपेद् वैश्यः पद्माक्षैः शूद्र[4] एव च॥

---

(१) D. Omits the portion bracketed.

(२) A. B. D. स्त्रीपुत्राय।

(३) A. तथा अष्टाक्षरे विशेषः,—कुशवन्थैर्विप्रः सुवर्णरजतैर्नृपः पुत्रञ्जीवैर्वैश्यः पद्माक्षैः सर्व्वे। नारसिंहे •

(४) B D. सर्व्व एव च।

नारसिंहे,—कोटिर्भवेत्तु रुद्राक्षपद्माक्षैः।

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे।

इन्द्राक्षैस्त्रिपुरायाः। सारस्वते पद्मरागैः प्रवालैर्वा।

गर्द्दभाश्ववराहाणां दन्तैस्तैराभिचारिके।

नीलसारस्वते महाशङ्खैः। सर्व्वैरुद्राक्षादिभिर्मोक्षाय। मातृकया मन्त्रसिद्धिः। अत्र कोट्यादिका वृद्धिरिति याज्ञवल्क्यीयगुणफलमविरुद्धसर्व्वपापक्षयाणां वृद्धिमभिप्रेत्य। अन्यत्र कामनाभेदेन व्यवस्थितानां न वृद्धिः सजातीयापेक्षत्वात्। भविष्यपुराणे,—

सर्व्वासामक्षमालानां जपे यत् फलमुच्यते।

तत् फलं शतमादेयं जपेनाङ्गुलिपर्व्वभिः॥

एतत् सर्व्वमङ्गलामन्त्रपरम्। तत्प्रकरणादित्याहुः।

अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना।

इत्यनुकल्पत्वविधानात्। अत्राङ्गुलिजपादष्टगुणो रेखाभिर्जप इति पाणिजपो द्वेधा। रेखापदमत्र पर्व्वपरमेव।

अनामिकाया मध्यादि मध्यादधः क्रमेण तु।

तर्ज्जन्या आदिपर्व्वान्त अक्षमाला प्रकीर्त्तिता॥

इति स्मृत्यन्तरात्। रेखासु चैव सर्व्वासु न च मध्यमाद्यपर्व्वणोरिति रेखानिषेधाच्च। तेनाङ्गुलिभिरविशेषात् पञ्चभिर्गणनम्। पर्व्वभिर्वा यथोक्तम्। मध्यमाद्यपर्व्वद्वयं मेरुः।

अङ्गुलीर्न वियुञ्जीत किञ्चित् सङ्कोचयेत् तलम्।

इति वचनादङ्गुलीनां निःसन्धितां सम्पाद्य पर्व्वगणना कार्य्या ।
[1]रुद्राक्षे विशेषः,—

एकवक्त्रैस्त्रिवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ।
षड्वक्त्रैर्वाथ कर्त्तव्यं तस्मान्मिश्रैस्तु वर्जयेत् ॥
अनुलोमविलोमस्थैर्विन्दुयुङ्मातृकाक्षरैः ।
सविन्दुकैः साष्टवर्गैः क्लृप्तया वर्णमालया ॥
प्रत्येकं वर्णयुङ्मन्त्राः क्लृप्ताः स्युः क्षिप्रसिद्धिदाः ।

---

## अक्षमालाग्रथनम् ।

कृतनित्यक्रियो यथोक्तान्यक्षाणि कीटादिदोषरहितानि नातिस्थूलकृशानि रुद्राक्षाणि कपिलानि वृत्तानि दृढ़ानि [2]कर्कट-संयुतानि अष्टोत्तरशतान्युत्तममालार्थं शतार्द्धमितानि मध्यमे तदर्द्धमितानि कनिष्ठे । धर्म्मार्थं त्रिंशत् । मोक्षार्थं पञ्चविंशतिः । अभिचारे षोड़श । पुष्ट्यर्थे सप्तविंशतिः । चतुःपञ्चाशत् काम्य-कर्म्मणि । अष्टोत्तरशतैः सर्व्वसिद्धिः । क्वचिच्च

शतं वाथ तदर्द्धं वा सर्व्वसाधारणे जपे ।

एतानि सम्पाद्य सूत्रञ्च

सर्व्वासामक्षमालानां सूत्रं कार्पासिकं स्मृतम् ।
शुक्लं कृष्णं तथा रक्तं शान्तिवश्याभिचारिके ॥

---

(१) C. रुद्राक्षे विशेषः ।
(२) D. कर्किसंयुतानि ।

पद्मसूत्रं पट्टसूत्रं क्षौमं कार्पासिकं [1]तथा।

द्विजस्त्रिनिर्म्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम्॥

इति सूत्रञ्च सम्पाद्य पञ्चगव्यैः सूत्रमक्षांश्च प्रक्षाल्य नवभिरश्वत्थपत्रैर्निर्म्मिते पद्माकारे पत्रे स्थापयेत्। प्रणवं शक्तिबीजं मातृकां सूत्रे मणिषु च विन्यसेत्। मूलमन्त्रेण सूत्रे मणिषु निजेष्टदेवस्य पूजनम्। तेनैव तिलसर्पिषा होमः। होमाशक्तौ द्विगुणजपः।

---

## ततो ग्रथनम्।

मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत्।

[एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत्॥][2]

इत्येवंरूपेण गोपुच्छसदृशी सर्पाकारा वा कार्य्या। तत्सजातीयमेकं मेरुत्वेन कल्पयेत्। कालोत्तरे तु,—

मेरुहीनाक्षमाला वा कर्त्तव्या च प्रयत्नतः।

भवेच्छतगुणं पुण्यं न दोषो मेरुलङ्घने॥

आग्नेयेऽपि,—

समेरु मेरुहीनं वा जप्यसूत्रन्तु कारयेत्।

---

(१) A. ० ह्रु वा।

(२) B. D. Omit the portion bracketed

## अथाक्षमालाप्रतिष्ठा।

त्रिरात्रं पञ्चरात्रं वा पञ्चगव्येऽधिवासनम्।

शुभदिने पञ्चगव्येन प्रोक्ष्य गन्धतोयेन प्रोक्षणम्। शुभपात्रे अवस्थाप्य कवचेनावगुण्ठ्य धेनुमुद्रयामृतीकृत्यास्त्रेण रक्षणम्। मूलमन्त्रस्याक्षमालायां न्यासः। तेनैव तत्रेष्टदेवतापूजनम्। तिलसर्पिषा होमः। होमाशक्तौ जपः। तत्त्वसारसंहितायाम्,—

प्रतिष्ठामक्षसूत्रेषु रक्षां विद्यासु च शृणु।
आलिख्य चतुरस्रन्तु रजसा मण्डलं भुवि।
पद्ममध्येऽत्र वा लिख्य पूज्यस्योपरि विन्यसेत्॥
सौवर्णं राजतञ्चान्यद्‌ विपुलं पात्रमुत्तमम्।

अन्यत् ताम्रादि।

पात्रन्तु तत्र यत्तस्यं तेन सर्व्वाः क्रिया भवेत्।

यत्तस्यं या या देवता तत्तन्मन्त्रेण सर्व्वा वक्ष्यमाणक्रियाः।

अस्त्रेण पूरयेत् पात्रं शालितण्डुलकैः शुभैः॥
तस्योपरि लिखेत् पद्ममष्टपत्रं सकर्णिकम्।
अश्वत्थस्य तु पत्राणि पद्मपत्रेषु विन्यसेत्॥

लिखितपद्माष्टपत्रेष्वष्टावश्वत्थपत्राणीत्यर्थः।

तत् पुनर्गन्धपुष्पाद्यैः पूज्य तन्मध्यतो न्यसेत्।
[1][पञ्चरत्नानि हैमं वा अक्षसूत्रं ततो न्यसेत्॥]

---

(१) D Omits the portion bracketed.

अभ्युक्ष्य मूलमन्त्रेण पुनः शुद्धोदकेन च।
सम्पूज्य मूलमन्त्रेण तत्त्वन्यासञ्च कारयेत्॥
प्रतिग्रन्थि प्रतिमणीन् त्रिःकृत्वो वैकशोऽपि वा।
स्पृशन् मन्त्रजपं कुर्य्यात् तत्त्वन्यासोऽयमीरितः॥
पुनः पञ्चोपचारेण पूज्य मुद्रां प्रदर्श्य च।
अक्षमालां समादद्याद्धर्मकामार्थमोक्षदाम्॥

मुद्रा च तत्तद्देवतामुद्रा। अत्राप्यधिवासनप्रवृत्तिः। तद्विधिः। त्रिदिनं पञ्चदिनं वा पञ्चगव्येऽधिवास्य शुभदिने स्वस्ति वाच्य संकल्प्य उपलिप्ते चतुरस्रमध्ये यथोक्तं पद्मं लिखित्वा पद्माय नम इति पूजयित्वा तदुपरि सौवर्णं राजतं तदभावे ताम्रादिपात्रं वा विन्यस्य तत्पात्रं शुभैः शालितण्डुलैर्वस्त्रेणापूर्य्य शालितण्डुलोपरि सकर्णिकमष्टदलपद्मं लिखित्वा तत्पद्मपत्रेष्वष्टावश्वत्थपत्राणि विन्यस्य तत् पत्रं पद्माय नम इति गन्धपुष्पाद्यैः पञ्चभिः सम्पूज्य तत्र पञ्चरत्नं स्वर्णं वा विन्यस्य तदुपरि अक्षसूत्रं विन्यस्य पञ्चगव्येन शुद्धोदकेन च क्रमात् प्रोक्ष्य तत्र मूलमन्त्रेणेष्टदेवं सम्पूज्य प्रतिग्रन्थि प्रत्यक्षञ्च स्पृशन् सकृत् त्रिर्वा मूलमन्त्रं जप्त्वा तत्र पुनरिष्टदेवं पञ्चोपचारैः सम्पूज्य तन्मुद्राः प्रदर्शयेत्। ततोऽक्षमालां गुरुहस्ते दत्वा गुरुदत्तां प्रतिगृह्णीयात्। शान्तिकरणमच्छिद्रावधारणञ्च। शैवे तु विशेषः,—

क्षालयेद् पञ्चगव्येन सद्योजातेन सज्जलैः।
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत्[1]॥

---

(१) A. ० चार्चयेत्।

'पूजयेत् ताम्रघोरेण लेपयेत् पुरुषेण तु।
मन्त्रयेत् पञ्चमेनैव प्रत्येकन्तु शतं शतम्॥
मेरुञ्च पञ्चमेनैव मन्त्रेणैव च मन्त्रयेत्।

इति।

जीर्णे सूत्रे पुनः पत्रे ग्रथयित्वा शतं जपेत्।
नवे सूत्रे तथा च्छिन्ने सहस्रं जप उच्यते॥
जपान्त्यकाले तां मालां पूजयित्वा तु गोपयेत्।
अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत्॥
प्रमादात् पतिते हस्तात् शतमष्टोत्तरं जपेत्।

तथा करभ्रंशे गन्धवारिणा चालनम्। गायत्रीं शतं जप्त्वा नमस्कृत्य स्थापनम्। अशुचिस्पर्शे तीर्थोदकेन चालनम्। नोच्छिष्टेन स्पर्शः स्त्रीणां हस्ते न कारयेत्। शूद्रस्पर्शे तु पुनः संस्कारः।

आकाशे स्थापनं कुर्य्याद् यदीच्छेत् परमां गतिम्।
अङ्गुष्ठेन जपेज्जाप्यमन्यैरङ्गुलिभिः सह॥

अन्याङ्गुलयस्तर्जनीवर्जिताः। तर्जनीवर्जिताभिरिति प्रपञ्चसारात्। अतएव,—

तर्जन्यङ्गुष्ठयोगेन जपं कुर्य्याच्च वाचिकम्।

वाचिकजपस्य द्वेषोच्चाटनादिगतस्य तर्जनीयोगोऽङ्गम्। क्वचिच्च

तर्जन्यङ्गुष्ठयोगेन विद्वेषोच्चाटने जपेत्।

---

(१) A. धूपयेत्ता •

इति स्फुटं वाक्यम्। तथा

अङ्गुष्ठस्याक्षमालां चालयेन्मध्यमाग्रतः।
तर्जन्या न स्पृशेत् सोऽयं मुक्तिदो गणनाक्रमः॥
भुक्तौ मुक्तौ तथाकृष्टौ मध्यमायां जपेत् सुधीः।

अनामिकाङ्गुष्ठयोगात् स्तम्भने। कनिष्ठाङ्गुष्ठयोगान्मारणे।

तथा,—

अनामाङ्गुष्ठमाक्रम्य जपं कुर्य्यात्तु मानसम्।
मध्यमाङ्गुष्ठमाक्रम्य जपं कुर्य्यादुपांशुकम्॥

---

## जपभेदाः।

नरसिंहपुराणे,—

यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः।
मन्त्रमुच्चारयेद् व्यक्तं जपयज्ञः स वाचिकः[1]॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत्।
[2]किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः॥
धिया यदक्षरश्रेण्या वर्णाद् वर्णं पदात् पदम्।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः॥
त्रयाणां जपयज्ञानां श्रेयः स्यादुत्तरोत्तरम्।

शब्दचिन्तनं जपः। अर्थचिन्तनं तदङ्गम्। मानसं द्वैधमुक्तं

---

(१) C. ० स उच्यते।

(२) A. B. C. कचिच्छब्दं ०

पुरश्चरणचन्द्रिकायाम्,—

जिह्वया चिन्तयेन्मन्त्रं मनसा केवलेन वा ।

योगियाज्ञवल्क्यः,—

उपांशुजपयुक्तस्य संख्या शतगुणं भवेत् ।
साहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः ॥

अन्यत्र

उच्चैर्जपाद् विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः ॥

[ एवञ्च सति ][1]

मानसः सिद्धिकामैस्तु पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥

इति प्राशस्त्यपरं न व्यवस्थापरम् । योगियाज्ञवल्क्यः,—

न चंक्रमन् न विहसन् न पार्श्वमवलोकयन् ।
न चाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पदमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥
उत्तिष्ठन् वीक्षमाणोऽर्कं जपं कुर्य्यात् समाहितः ।
अन्यथा प्राङ्मुखः कुर्य्यात् वक्ष्यमाणक्रमेण तु ॥
प्राक्कूलेषु कुशेष्वेवमासीनः स्वासने शुभे ।

तथा,—

(१) B. D. Omit the portion bracketed,

ध्यायेत्तु मनसा मन्त्रं जिह्वोष्ठौ न च चालयेत्।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत्॥

तथा,—

स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम्।
जपकाले न भाषेत व्रतहोमादिकेषु च॥
तूष्णीमासीत च जपंश्चाण्डालपतितादिकान्।
दृष्ट्वा तान् वार्य्युपस्पृश्याभाष्य स्नात्वा पुनर्जपेत्॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने।
सौरान् मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः॥
यदि वाग्यमलोपः स्याद् व्रतादिषु कथञ्चन।
व्याहरेद् वैष्णवं मन्त्रं स्मरेद् वा विष्णुमव्ययम्॥

कौर्म्मे,—

गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं भयात्।
एकान्तेषु शुभे देशे तस्माज्जप्यं समाचरेत्॥

अङ्गिराः,—

असंख्यातन्तु यज्जप्यं तत् सर्व्वं निष्फलं भवेत्।

इति जपसाधारणधर्म्माः। [तान्त्रिकाः साधारणधर्म्मा वक्ष्यन्ते।][१]

---

(१) B. D. Omit the portion bracketed.

# अथ होमपरिभाषा।

होमो नाम देवतोद्देशेन द्रव्यत्यागः प्रक्षेपार्थकः। तदुक्तं [1]यदा तु चोदनाद्रव्यदेवताक्रियासमुदाये कृतार्थत्वात् तदुक्तेः श्रवणाज्जुहोतिरासेचनार्थकत्वात् द्रव्यदेवताक्रियाणां समाहारः। द्रव्यदेवताक्रिया क्रिया च त्यागः। आसेचनं प्रक्षेपः। तेन जुहोतीत्युक्ते एतदुक्तं भवति। देवतां चतुर्थ्यन्त्यपदेनाभिधाय द्रव्यं न ममेति बुद्धिं कृत्वाग्नौ प्रक्षिपेदिति। तदन्यत् सर्व्वं तदङ्गम्। छन्दोगपरिशिष्टे,—

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
[2]मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥

मन्त्रस्य देवतायाश्चानादेशे प्रजापतिर्देवता प्राजापत्यो मन्त्रश्च समस्ता व्याहृतयः। मन्त्रविधाने देवतानां स्थाने मन्त्रवर्णको[3] देवता। मन्त्रस्यास्पष्टलिङ्गत्वे तु देवतानामनादेशे अग्निरिन्द्रः प्रजापतिरिति याज्ञवल्क्योक्तं ग्राह्यम्। देवताज्ञाने मन्त्रानादेशे तु गारुड़े,—

प्रणवादिनमोऽन्तश्च चतुर्थ्यन्तश्च सत्तम।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः॥

विष्णुधर्म्मोत्तरे,—

---

(१) A. यजति चोदना देवता ० C. यजन्ति ये जना द्रव्य ० D. यजन्ति चोदना ० रासेचनार्थकः स्यात्। द्रव्य ० समाचारः।

(२) B. D. Here read इति। मन्त्रस्य ०

(३) A. ० वर्णिका ०

मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः।
मन्त्रावसाने जुहुयाद् ध्यायन् वै मन्त्रदेवताम्॥

छन्दोगपरिशिष्टे,—

पाण्याहुतिर्द्वादशपर्व्वपूरिका
द्रवादिना चेत् स्रुवमात्रपूरिका।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्च्चिषि तच्च पावके॥

गोभिलः,—

गोवक्त्रावत्करं कुर्य्यात् तर्जनीकन्यसाहृते।
अधोमुखेन तेनैव व्रीह्यादीन् होमयेत्ततः॥

पञ्चरात्रे,—

होमे मुद्रात्रयं प्रोक्तं मृगी हंसीच शूकरी।
करसङ्कोचः शूकरी हंसी मुक्तकनिष्ठिका॥
मुक्ता कनिष्ठातर्ज्जन्यौ मृगीमुद्रा प्रदर्शिता।
शान्तिपौष्टिककर्म्मार्थे मृगी हंसी प्रकीर्त्तिता॥
आभिचारिककर्म्मार्थे शूकरी कथिता बुधैः॥
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम्।
उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः॥
तत्समं मधुदुग्धान्नमर्घ्यपात्रमुदाहृतम्।
दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः॥
पृथुकास्तत्प्रमाणाः स्युः शक्तवोऽपि तथोदिताः।
गुड़ं पलार्द्धमानं स्यात् शर्करा हि तथा स्मृताः॥

ग्रासार्द्धं चरुमानं स्यादिन्धुः पर्व्वावधिः स्मृतः।
एकैकं पत्रपुष्पाणि तथापूपानि कल्पयेत्॥
कदलीफलनारङ्गफलान्येकैकशो विदुः।
मातुलुङ्गं चतुःखण्डं पनसं दशधाकृतम्॥
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः।
त्रिधाकृतं फलं बैल्वं कपित्थं खण्डितं द्विधा॥
[1][उर्व्वारुकफलं होमे गदितं खण्डितं त्रिधा।]
फलान्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः॥
दुर्व्वात्रयं समुद्दिष्टं गुलुची चतुरङ्गुला।
व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि॥
तण्डुलाः स्युस्तदर्द्धांशाः कोद्रवा मुष्टिसम्मिताः।
गोधूमरक्तकलमा विहिता मुष्टिमानतः॥
तिलाश्चुलुकमात्राः[2]स्युः सर्षपास्तत्प्रमाणकाः।
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः॥
पुरं बदरमानं स्याद्रामठं तत्समं स्मृतम्।

पुरं गुग्गुलम्।

चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च।
तिन्तिड़ीबीज[3]मानानि समुद्दिष्टानि देशिकैः॥

---

(१) D. Omits the portion bracketed.

(२) B. ० मात्रा: ०।

(३) A. B. ० फल ०।

वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु साधकः।
शयानमाज्यहोमेषु निषसं शेषवस्तुषु॥
आस्ये तु होमयेदग्नेर्विपश्चित्सर्व्वकर्म्मसु।
कर्णहोमे भवेद्व्याधिर्नेत्रेऽन्धत्व[1]मुदाहृतम्॥
नासिकायां मनःपीड़ा मस्तके धनसंचयः।

तथा,—

स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसन्निभः।
हिरण्यरेतसो वर्णः शोभनः परिकीर्त्तितः॥
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः।
नागचम्पकपुन्नागपाटलीयूथिकानिभः॥
पद्मेन्दीवरकल्हारसर्पिर्गुग्गुलसन्निभः।
पावकस्य शुभो गन्ध इत्युक्तं तत्त्ववेदिभिः॥
प्रदक्षिणाचिर्निष्कम्पश्छत्राभः श्वसनः शिखी।
शुभदो यजमानस्य राज्यस्यापि विशेषतः॥
कुन्देन्दुधवलो धूमो वह्नेः प्रासः शुभावहः।
कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत्॥
श्वेतो राष्ट्रं [2]निहन्त्यासु वायसस्वरसन्निभः।
खरस्वरसमो वह्नेर्ध्वनिः सर्व्वविनाशनः॥
पूतिगन्धो हुतवहो होतुर्दुःखप्रदो भवेत्।
छिन्ना वृत्ता शिखा कुर्य्यान्मृत्युं धनपरिक्षयम्॥

---

(१) D. ० सुदीरितम्।
(२) D. निहन्त्याशु ०

शुकपत्रनिभो धूमः पारावतसमप्रभः।
हानिं तुरगजातीनां गवाञ्च कुरुते चिरात्॥
एवंविधेष्वरिष्टेषु प्रायश्चित्ताय देशिकः।
मूलेनाज्येन जुहुयात् पञ्चविंशतिसंख्यया॥

छन्दोगपरिशिष्टे,—

अङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।
[1]न विशीर्णा त्वचा चैव न सकीटा न पाटिता॥
प्रादेशान्नाधिका नोना न तथा स्याद्‌द्विशाखिका।
न सपर्णा न निर्वीर्या होमेषु तद्विजानता॥

ब्राह्मे,—

पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः।
काश्मर्य्यौदुम्बरौ विल्वश्चन्दनः सरलस्तथा॥
सालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः।

मरीचिः,—

प्रागग्राः समिधो ज्ञेयास्ताश्च कामेषु पाटिताः।
शान्त्यर्थेषु सवल्काद्रा विपरीता जिघांसतः॥
विशीर्णा विदला ह्रस्वा वक्राः [2]सशुषिराः कृशाः।
दीर्घा स्थूला [3]घुणैर्जुष्टाः सर्व्वसिद्धिविनाशकाः॥
[4]नाशुष्कक्लिन्नपूतिभिर्दारुभिरग्निसिद्धितः।

(१) B. न विवर्णत्वचा चैव ०। (४) D. Here reads हारीतः,—नाशुष्क ०
(२) C. सशिषिराः ० D. शिशुशिराः ०
(३) A. C. ० गुणै ०।

आपस्तम्बः—नाप्रोक्षितमग्नावादध्यात्। भविष्यपुराणे,—

भूमौ स्थितेन पात्रेण विष्टब्धेन च पाणिना।
वामेन यदुशार्दूल [1]नान्तरीक्षेण हूयते॥

छन्दोगपरिशिष्टे,—

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्चाभिजायते॥
जुह्वंश्च हुतचैव[2] पाणिसूर्पस्फ्य दारुभिः।
न कुर्य्यादग्निधमनं कुर्य्यात्तु व्यजनादिना।
मुखेनैव धमेदग्निं मुखाद्ध्येषोऽभ्यजायत॥
नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत्।

कौर्म्मे,—वस्त्रेण नैवोपधमेत्। आदित्यपुराणे,—

क्षुत्तृट्क्रोधत्वरायुक्तो मन्त्रहीनं जुहोति यः।
अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि॥

---

## अथानुकल्पप्रतिनिधिविचारः।

अनुकल्पो नाम यत्र साधनमविशेषेण विधीयते तदसम्भवे साधनान्तरं विधीयते। यथा खादिरो यूपो भवति इति विधाय खादिराभावे पालाश इति सोमे। यत्र व्रीहिभिर्यजेतेति

(१) B. C. D. ० नान्तरीक्षे च ०।
(२) A. B. D. ० हुते चैव ०।

व्रीह्यादिसाधनविधौ तदसम्भवे कर्म्मलोपप्रसङ्गे तत्सदृशं द्रव्यान्तरं साधनमुपादीयते स्वोत्प्रेक्षया तत्र प्रतिनिधिः । यथा नित्यकर्म्मणि व्रीह्यपचारे नीवारादिः । तत्र प्रतिनिधौ विधिव्यापारो नास्ति अनुकल्पे त्वस्ति । यत्र तु सोमाभावे पूतिकानभिषुणुयादिति श्रूयते तत्र सोमाभावे सादृश्येन पूतिकाः प्राप्ता एवं किन्तु पूतिकावदन्येऽपि सोमसदृशास्तत्र पूतिका नियम्यन्ते। एवं काम्येषु यद्यपि सर्व्वाङ्गसम्पत्तावधिकार इति न प्रतिनिधिसम्भवस्तत्राप्यारम्भानन्तरमवश्यसमापनीयत्वात् प्रतिनिधिप्रवेशः । अनुकल्पस्य तु शास्त्रीयसाधनत्वादनुकल्पमादायाप्यारम्भः । केवलं,—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य [1]दुर्म्मतेर्विद्यते फलम् ॥

इति मुख्यकल्पसम्भवे नानुकल्पाधिकारः । छन्दोगपरिशिष्टे,—

यथोक्तवस्त्वसम्पत्तौ कार्य्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥

व्रीहयः षष्टिकाः । पैठीनसिः,—काण्डमूलपर्णपुष्पफलप्ररोहरस[2]गन्धानां सादृश्येन प्रतिनिधिं कुर्य्यात् । सर्व्वालाभे यवः प्रतिनिधिर्भवति । काण्डं नालं प्ररोहा अङ्कुराः । मैत्रायणीयपरिशिष्टे,—घृतमाज्यार्थे प्रतिनिधिः । तदभावे दधि पयो वा

(१) A. B. C. ० दुर्गते ० ।
(२) D. ० गन्धादीनां ।

तण्डुलपिष्टयवपिष्टनाभिः समभाज्यार्थान् कुर्व्वन्ति। दर्भास्तरणार्थे काशः प्रतिनिधिस्तदभावे [1]यववतीभिः काण्डवतीभिरोषधीभिस्तरणार्थान् कुर्व्वन्ति। कटोशीरवन्दनीपनलवल्बजावीलय (?) वर्जम्। इध्मार्थे पलाशाश्वत्थखदिरलोहितकोदुम्बराणाम्। तदभावे सर्व्ववनस्पतीनाम्। तिन्दुकनीपबिल्वराजवृत्तशाल्मलीरजतककपित्थकोविदार[2]हरीतकश्लेष्मातकसर्व्वकण्टकिवर्जम्। कटादयस्तृणविशेषाः। राजवृत्तः करवाल इति कान्यकुब्जे प्रसिद्धः। [3]तथा व्रीहियवौ पुरोडाशार्थे [4]तदभावे तुषवतीभिस्तण्डुलवतीभिरोषधीभिः पुरोडाशार्थान् कुर्व्वन्ति। कुशूलशाकमासमतूरकुरवक(?)कोद्रवकोरदूषकवर्जम्। दक्षिणालाभे फलानां मूलानां दक्षिणां ददाति न त्वेवं यजेत।

बौधायनः,—

आज्यहोमेषु सर्व्वत्र गव्यमेव घृतं स्मृतम्।
तदभावे माहिष्यन्तु आजमाविकमेव वा॥
तदभावेऽपि तैलं स्यात् तदभावेऽपि जर्त्तिलम्।
तदभावेऽपि कौसुम्भं तदभावेऽपि सार्षपम्॥

इति। वृद्धपराशरः,—

---

(१) A. B. B. यव (:) प्रतिनिधिः। ताभिः काण्डवतीभि ०।

(२) D. ० विभीतकश्लेष्मा ०।

(३) A. B. C. यथा ०।

(४) D. तदलाभे ०।

दर्भैर्लोहितदर्भैश्च काशवीरणवल्वजैः ।
शुकधान्यतृणैर्वापि दर्भं कार्य्यं श्रिये बुधैः ॥

एवञ्च वल्वजादिनिषेधस्तरणकार्य्ये न सर्व्वत्र कुशकार्य्ये ।

---

## अथ प्रतिनिध्यपवादः ।

जैमिनिः,—'न देवाग्निशब्दक्रियमन्यार्थसंयोगात्' (१) 'देवतावधिगम्यासादृश्येन न प्रतिनिधिः। (२) स्मरणस्यैवास्मरणे सादृश्याज्ञानेकः प्रतिनिर्धिः। अग्नेराहवनीयादेरलौकिकस्य सादृश्याज्ञानान्न प्रतिनिधिः। अग्न्यभावे विप्रपाणिजलाकीर्णविधानमनुकल्पमेव। शब्दो मन्त्रो नास्य प्रतिनिधिः स्मरणास्मरणयोर्वैयर्थ्यात् । क्रियाणां यागहोमादीनां न प्रतिनिधिः। अदृष्टार्थत्वात् ।

कृतानां पशुसोमानां निष्कृत्यर्थमसम्भवे ।
इष्टिं वैश्वानरीं कुर्य्यात्

इत्यनुकल्परूपमेव। तथा प्रतिषिद्धञ्च न प्रतिनिधीयते। दर्शे व्रीहियवविधेरेव माषादिनिवृत्तेरयज्ञिया माषा इति निषेधः प्रतिनिधिप्राप्तस्यैव। तथा स्वामिनः फलसमवायात् फलस्य कर्म्मयोगित्वात् स्वामिनः प्रतिनिधिर्नास्ति। सत्रे तु यजमानमरणे सप्तदशसंख्यपुरुषकर्त्तृत्वस्याङ्गत्वेन कर्त्तृत्वांशेन प्रतिनिधिः। तथा प्रतिनिधिना कर्म्मोपक्रमे प्रतिनिध्यपचारे

(१) B. न देवताग्नि ०
(२) B. देवतावधिगम्यात् सादृश्येन ० A. देवतावधिगम्यात् तत्सादृश्येन ० ।

तत्सदृशं नोपादेयम्। किन्तु मुख्यसदृशं प्रतिनिध्यन्तरम्। तदुक्तं न प्रतिनिधौ समत्वात्। वैकल्पिके तु व्रीहिणा कर्म्मोपक्रमे व्रीह्यपचारे यवलाभेऽपि न यवादरः किन्तु व्रीहिः प्रतिनिधिर्य्यवस्य तत्प्रयोगेऽङ्गत्वात्। प्रतिनिधिना कर्म्मारम्भे प्रतिनिधौ कतिपय-संस्कारेऽपि मुख्यलाभे मुख्येनैव प्रधानकर्म्म। प्रधानसमाप्तौ मुख्यलाभेऽपि न संस्कारलाभाय मुख्यादरः। द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्। संस्कारसमर्थस्यापि मुख्यस्य ग्रहणम्। मुख्यप्रयोजनासमर्थत्वे प्रतिनिध्यादरः। [1]तथा हि व्यवधान-मात्रयोग्यव्रीहिलाभेऽपि न प्रतिनिध्यादरः। तथा—

मुख्यकालानुरोधेन गौणमप्यस्तु साधनम्।
न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणम्॥

---

## वृद्धिश्राद्धम्।

शातातपः,—

नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकं किञ्चिदाचरेत्।
तत्रापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः॥

विष्णुपुराणे,—

कन्यापुत्त्रविवाहेषु प्रवेशे [2]नववेश्मनः।
नामकर्म्मणि बालानां चूड़ाकर्म्मादिके तथा॥

---

(१) D. तथाह्यवदानमात्रयोग्य॰।
(२) D. नववेश्मनि।

सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही॥

चूड़ाकर्म्मादिक इत्यादिशब्दः संस्कारमात्रोपलक्षणः। तेन वहिर्निष्क्रामणान्नप्राशनचूड़ादिकेष्वपि च श्राद्धम्। तथा,—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्॥

अत्र महादानादौ यज्ञशब्दप्रयोगाद् वृद्धिश्राद्धमित्याहुः। यद्यपि शातातपेन वैदिककर्म्ममात्रे वृद्धिश्राद्धमुक्तं तथापि विष्णुपुराणीयवाक्योपात्तवैदिककर्म्मपरं वैदिकपदम्। पुरोडाशं चतुर्द्धा करोतीत्याग्नेयं चतुर्द्धा करोतीत्येतेनोपसंहारवत्।

एवञ्च छन्दोगपरिशिष्टे,—

नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्म्मप्रोषितागतकर्म्मसु॥
गृहस्तवक्षुद्रपशुपुष्ट्यर्थं परिविश्वतोः।
सूर्य्येन्द्वोः कर्म्मणीये च तयोः श्राद्धं न विद्यते॥

इति प्रतिषेधोऽत्यन्ताप्राप्तविषयत्वान्नित्यानुवादः। अतएव यथाप्राप्तानुवादत्वाज्जातकर्म्मणि तिलपूर्णपात्रश्राद्धविधानादन्नश्राद्धप्रतिषेधात् तस्यानुवादः। '[1]इत्वां अतितिष्ठया सन्तिष्ठत इत्युक्तेऽनुयाजान् यजन्तीत्यस्य नित्यानुवादत्ववत्। तथा—

(१) D. इत्वान्नातिष्ठ्या सन्तिष्ठत०।

विवाहादिः कर्म्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते।
विवाहादावेकमेवात्र कुर्य्या-
च्छ्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात्॥

इति गर्भाधाने निषेधोऽपि नित्यानुवाद एव। केवलं

असकृद् यानि कर्म्माणि क्रियन्ते कर्म्मकारिणा।
प्रतिप्रयोगं नैताः स्युर्म्मातरः श्राद्धमेव च॥
आधानहोमयोश्चैव वैश्वदेवे तथैव च।
बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च॥
नवयज्ञे च यज्ञाज्ञा वदन्त्येवं मनीषिणः।

इति वाक्योपात्तकर्म्मणां पुनः प्रयोगे न श्राद्धम्। सोमयागे तु,—पुनः पुनः प्रयोगेऽपि श्राद्धं भवत्येव। तथा,—

प्रदोषे श्राद्धमेकं स्याद् योनिष्कालप्रवेशयोः। (?)
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्म्मणि॥
हलाभियोगादिषु तु षट्कं कुर्य्यात् पृथक् पृथक्।
[ न दशाश्वत्थिके नैव विषवद्दष्टकर्म्मणि॥
कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते।

एष्वपि निषेधो नित्यानुवाद एव[1]। ] तथा,—

गणशः क्रियमाणे तु मातॄणां पूजनं सकृत्।

इति। यानि कर्म्माणि विधिवशेनार्थवशेन वा एकस्मिन्नेव

(1) B. Omits the portion bracketed.

दिने क्रियन्ते। यथा आधानं होमश्च यद्दोत्कृष्य क्रियमाणं जात-कर्म्मादि तत्र न्यायेन सकृदेव करणं प्राप्तमनूद्यते। वहिः प्रयोगगतत्वेन सर्व्वान् प्रत्यवशिष्टत्वादिति। वस्तुतोऽथातो गोभिलोक्तानामित्युपक्रमेऽभिधाय छन्दोगपरिशिष्टे,—

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः।
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र तु मातरः॥

इति गोभिलोक्तगृह्यकर्म्ममात्रे वृद्धिश्राद्धं विधीयत इति। श्राद्धादिष्वपि तदुक्तेः प्रसङ्गान्निषेधः। गृह्यान्तरकर्म्मणां शाखान्तर-न्यायेन तदभिन्नान्येवेति तत्रापि श्राद्धविधिनिषेधौ। एवं विष्णु-पुराणीयं स्मृत्यन्तरं कतिपयेषु प्रापकमिति न तदतिरिक्तगृह्य-कर्म्मस्वप्राप्तिरिति। भविष्यपुराणे,—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।

आत्मदेवता कुलदेवता इति पाठस्तु बहुसम्मतः।

पूज्याश्चित्रेऽथवार्च्चायां वरदाभयपाणयः।

इति। [१]अक्षतपुञ्जेषु वा छन्दोगपरिशिष्टात्। सगणाधिपा इति वचनाद् गणपतिना सहाष्टादश। बह्वृचपरिशिष्टे,—

आदौ विनायकः पूज्यः अन्ते तु[२] कुलदेवता।

---

(१) B. अक्षतपुञ्जेषु वा ० A. अक्षतपुञ्जेषु वा ०।
(२) A. C. D. ० च ०।

छन्दोगपरिशिष्टे,—

कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु।
कारयेत् पञ्चवारान् वा नातिनीचां न चोच्छ्रिताम्॥
आयुष्याणि च शान्त्यर्थं जप्ता तत्र समाहितः।

---

## अथ मधुपर्कः।

तत्र पारस्करः,—षड़र्घ्या भवन्ति आचार्य्यो ऋत्विक् वैवाह्यो राजा प्रियः स्नातक इति। प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्तु ऋत्विजः। आसनमाहार्य्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति। आहरन्ति विष्टरं पाद्यं पादार्थमुदकमर्घ्यमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्यं कांस्येनेति। अन्यस्त्रिस्त्रिः प्राह विष्टरादीन्। विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः। इमं तमभितिष्ठामि यो माकश्चाभिदासति। एनमभ्युपविशति पादयोरन्यं विष्टरमासनाय। सव्यं पादं प्रक्षाल्य दक्षिणपादं प्रक्षालयति ब्राह्मणश्चेद् दक्षिणं प्रथमम्। विराजो दोहोसि विराजो दोहमसीय मयि पाद्यायै विराजो दोह इति। अर्घ्यं प्रतिगृह्णाति आपः स्थ युष्माभिः सर्व्वान् कामानवाप्नुवानीति निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टास्माकं वीरा मापरासेचि मत्पय इति। [1]आचामति

---

[1] D. आचमनमिति।

आमागन् यशसा संसृजवर्चसा तं माकुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टं तनूनामिति। मित्रस्य त्वेति मधुपर्कं प्रतीक्षते। देवस्यत्वेति प्रतिगृह्णाति। सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रचालयति नमस्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि अनामिकयाङ्गुष्ठेन त्रिर्निक्षिपति। तस्य त्रिः प्राश्नाति। यन्मधुनो मधव्यं परमं रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति। मधुमतीभिर्वा प्रत्यृचम्। पुत्रायान्तेवासिने चोत्तरत आसीनायोच्छिष्टं दद्यात्। सर्व्वं प्राश्नीयाद् वा। संचरे निनये वाचम्य प्राणान् संस्पृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलं उर्व्वोरोजो मेऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेत्याचान्तोदकाय गां समादाय गौरिति त्रिः प्राह। प्रत्याह माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्टेति। मम चामुष्य च पाप्मानि हतोसीति यद्यालभेत। यद्युत्सृजेत मम चामुष्य च पाप्माहत ओमुत्सृजत तृणान्यत्तु इति ब्रूयात्। नत्वेवामागुंसोर्घ्यः (?) स्यात् अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात्। यद्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः। तत्र साधु भवानिति यजमानस्य वचनम्। अर्च्चयतेत्युत्तरं आसने उपवेशनं विष्टरः पादार्थमुदकं पुनर्विष्टरः अर्घ्यः आचमनीयं मधुपर्क इति। स्थापयित्वा। अन्येन यजमानपुरुषेण विष्टरो विष्टरो विष्टर इति त्रिरुक्ते प्रतिगृह्यतामिति यजमानः।

प्रतिष्ठामीति विष्टरग्रहणम्। मन्त्रेण तत्रोपवेशनम्। एवमन्यत्र। नमोमें प्राणोऽस्त्वित्यादिप्रयोगः। यज्ञविवाहादन्यत्र गोरुत्सर्गालम्भयोर्विकल्पः। यज्ञे विवाहे चालम्भनियमः। केवलं निषेधात् कलौ वर्जनम्। उत्सर्गपक्षे गौरिति त्रिरुक्ता गोरुपस्थानम्। माता रुद्राणामित्यादिमन्त्रस्य ओमुत्सृजत तृणान्यत्त्वित्यस्य जपः। यज्ञविवाहयोर्न गोरुपस्थानं न वा जपः।

छन्दोगपरिशिष्टे,—

कतिभिस्तु भवेद् ब्रह्मा कतिभिर्विष्टरो मतः।
पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्द्धेन तु विष्टरः॥
ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः॥

यज्ञपार्श्वे,—

गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद् दश।
आवसथ्ये त्रयोविंशमग्न्याधेये शतात् परम्॥
आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च च।
सहस्रं भोजयेत् सोमे ब्राह्मणानां शतं पशौ॥
चातुर्मास्ये च चत्वारि तथा पञ्च सुराग्रहे।
अयुतं वाजपेये तु अश्वमेधे चतुर्गुणम्॥

चत्वारि शतानि सुराग्रहे सौत्रामण्याम्। मैत्रायणीयपरिशिष्याम्,—दक्षिणाभावे फलानां मूलानां भक्ष्याणां वा दद्यान्नत्वेवं यजेत। एवं अदक्षिणम्। उक्तदक्षिणासम्भवे अनुकल्पः।

छन्दोगपरिशिष्टम्,—

ब्रह्मणि दक्षिणा देया या च यत्रोपदिश्यते।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥
यावत्तावत्तु भोक्तुश्च तृप्तिरन्नेन जायते।
नापरार्द्धमतः कुर्य्यात् पूर्णपात्रमिति स्थितिः॥

[1][ गोभिलः,—

अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ [2]तु पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते॥

तथा,—कांस्यं चमसं वान्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वा अपिवा [3]फलानामेव एकं पूर्णपात्रमाचक्षते। इति शक्त्यपेक्षया परिमाणविशेषाः। छन्दोगपरिशिष्टे,—

विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्। ]
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥

यत्र कर्म्मणि या दक्षिणा सा ब्रह्मणे देया। अन्यश्चेद्धौत्रं कुर्य्यात् होमं कुर्य्यात् तदा आम्नातदक्षिणार्द्धं ब्रह्मणि देयम्। अर्द्धञ्च होमकर्त्रे। स्वयमुभयं ब्रह्मत्वं होतृत्वञ्च यदि यजमानः कुर्य्यात् तदा अन्यस्मै ब्राह्मणाय दक्षिणां दद्यात्। तेन स्मार्त्त-कर्म्मसु स्वयं कर्त्तृत्वं मुख्यमित्युक्तं भवति।

---

(१) A. B. Read the portion bracketed after जुहोमहे हौत्रमस्यां

(२) D. ०च ०

(३) D. पक्वानामेवं पूर्णपात्र ०

# अथाङ्कुरार्पणविधिः।

शारदातिलके,—

दीक्षायामभिषेके च नववेश्मप्रवेशने।
उत्सवेषु च सर्व्वेषु विदध्यादङ्कुरार्पणम्॥
मण्डपस्योत्तरे भागे शालां पूर्व्वोत्तरायताम्।
[1]गूढ़ां कुर्य्यात् ततस्तस्यां मण्डलं रचयेत् सुधीः॥
पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत्।
पूर्व्वापरायतान्येषामन्तरं द्वादशाङ्गुलम्।
दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत्॥
पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत्।
पंक्त्या वीथीयतस्तस्तु चतुष्कोभयपार्श्वयोः॥
वीथ्यौ द्वे द्वे चतुःकोष्ठत्रयमत्रावशिष्यते।
पदानि रञ्जयेत् तानि श्वेतपीतारुणासितैः॥
रजोभिः श्यामलेनाथ वीथीरारचयेत् सुधीः।
पात्राणि [2]त्रिविधान्यस्मिन्नङ्कुरार्पणकर्म्मणि॥
पालिकाः पञ्च मुख्याश्च शरावाश्च चतुःक्रमात्।
प्रोक्ताः स्युः सर्व्वतन्त्रज्ञैर्हरिब्रह्मशिवात्मकाः॥
एषामुत्सेध उन्नेयः षोड़शद्वादशाष्टभिः।
अङ्गुलैः क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना॥

---

(१) D. सुश्वं कुर्य्यात् •
(२) D. त्रिविधान्याङ्करङ्कुरा •

प्रक्षाल्य दैशिकस्तेषु पादेष्वाहितशालिषु।
सगन्धदर्भकूर्चेषु पश्चिमादि निवेशयेत्॥
करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत्।
सुधाबीजेन बीजानि दुग्धे प्रक्षाल्य मन्त्रवित्॥
मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम्।
आशीर्व्वादैर्द्विजातीनां मङ्गलाचारपूर्व्वकम्॥
निर्वपेत् तेषु पात्रेषु दैशिको यतमानसः।
शालिश्यामाढ़कीमुद्गतिलनिष्पावसर्षपाः॥
कुलत्थकङ्गुमाषाद्य बीजान्यङ्कुरकर्म्मणि।
हरिद्राभिः समभ्युक्ष्य वस्त्रैराच्छाद्य दैशिकः॥
बलिं त्रिविधपात्राणां दिक्षु पूर्व्वादितः क्षिपेत्।
[1]प्रणवाद्यैर्नमोऽन्त्यैश्च रात्रौ रात्रीशनामभिः॥
भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः।
सप्तानामपि रात्रीणां देवताः समुदीरिताः॥
भूतेभ्यः सक्तु लाजतिलहरिद्रादधिशक्तवः।
सान्नाः पितृभ्यः सतिलास्तण्डुलाः परिकीर्त्तिताः॥
करम्भलाजा यक्षेभ्यो नारिकेलोदकान्वितम्।
शक्तुपिष्टञ्च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम्॥
सापूपमन्नं शर्व्वाय विष्णवे स्याद् गुड़ोदनम्।
ततो लोकेश्वरेभ्योऽपि विधिवद्विकिरेद्बलिम्॥

---

(१) A. B. C. प्रणवादिनमो०

[सप्तदिनात्पूर्व्वमारभ्य सप्त देवताः क्रमेण। नव दिनात्पूर्व्व-मारभ्य हरयेऽधिकदिनद्वये बलिः।[१] ]

---

## अथ ग्रहयज्ञः।

स च बहुप्रयाससाध्यकर्म्माङ्गम्। ग्रहयज्ञाधिकारे मत्स्य-पुराणे—

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्म्मसु।
निर्व्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च॥

याज्ञवल्क्यः,—

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः।
कर्म्मणां फलमाप्नोति [२]श्रियश्चाप्नोत्यनुत्तमाम्॥

ग्रहयज्ञश्चतुर्विधः। ग्रहातिथ्योऽयुतहोमो लक्षहोमः कोटिहोमश्च तत्र ग्रहातिथ्यो याज्ञवल्क्यकात्यायनबह्वृचकठ्याद्युक्तः। तत्र यद्यपि याज्ञवल्कीय आज्यहोमोऽधिदैवत-प्रत्यधिदैवतहोमश्च नोक्तस्तथाप्ययुतहोमादेवातिदिश्यते। न च निराकाङ्क्षत्वेनातिदेशानपेक्षत्वम्। ग्रहवर्ण-ग्रहस्थान-ग्रहस्थापन-दिगभिमुखत्वादीनां याज्ञवल्क्यानुक्तत्वेन तदर्थमतिदेशापेक्षायामधिदैवतादीनामप्यतिदेशात्। नचैवं व्याहृतिकरणकतिल[३]होमातिदेशप्रसङ्गः

---

(१) B. D. Omit the portion bracketed.

(२) D. श्रियं प्राप्नो०।

(३) B. ० होमादिप्रसङ्गः।

[1]प्रधानत्वेनातिदेशायोग्यत्वात्। अधिदैवतहोमादीनां त्वङ्गत्वे-नातिदेशसम्भवात्। अतएव कल्पतरुकारेणोक्तं [2]ग्रहातिथ्यो ग्रहाणां स्थापनदेशाय मध्ये तु भास्करं विद्यादित्यादिनाऽयुत होमे वच्यत इति। अतएव यावत्सन्निपातसमाम्नानलक्षण-मपूर्व्वतालिङ्गं ग्रहातिथ्ये नास्ति ग्रहवर्णवेशादीनामनाम्नानात्। यथाहि प्रयाजादौ यावत्सन्निपातिद्रव्यसंस्कारविधिसत्त्वादव्यक्त-चोदनात्वेऽपि न सोमधर्म्मातिदेशः। नैवमिह। यथाहि दर्श-पौर्णमासपशुसोमप्रवर्ग्यादौ यावत्सन्निपातिसमाम्नानानपेक्षत्वान्न कस्यचिद्धर्म्मग्राहकत्वमिह तु वैषम्यम्। [3]चोदनालिङ्गमूलयुक्त-मस्त्वेव।

स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति।

तत्रापीयमेव युक्तिः। किञ्च [3]ग्रहातिथ्ये बह्वृचस्मृतौ एकै-कस्याष्टसहस्रमष्टशतम्। अष्टाविंशति समिध आज्यञ्च हुत्वोप-हारान् दद्यादित्याज्यहोमः समिद्धोमसमो विहितः। अपिच दानविवेके ग्रहातिथ्ये कात्यायनोक्तत्वेनाधिदेवतप्रत्यधिदेवता दर्शिताः। आश्वलायनेनाग्न्यादयोऽधिदेवता रुद्रादयः प्रत्यधि-देवता इति क्रमभेदेन दर्शिताः। एवञ्चाष्टहस्तशालाद्वद्विश्याह-मधुपर्कहस्तमात्रैकहस्तकुण्डकलसस्थापनवितानबन्धनाभिषेकादि-

(१) A. B. D. तस्य प्रधानत्वे ०।

(२) A. C. यज्ञातिथ्ये। यज्ञाणां ०

(३) D. Here reads—शाखान्तराधिकरणन्यायेन बह्वृचस्मृतौ याज्ञवल्कीयस्य कर्म्म न भिद्यते। अस्ति च बह्वृचस्मृतौ एकैकस्या ०।

कमत्वाच्चतिदेशेन प्रवर्त्तत एव। अधिकदक्षिणा न प्रवर्त्तते दक्षिणाम्नानात्। भूर्धेनुर्दक्षिणेत्यादावधिकदक्षिणा न प्रवर्त्तते। किञ्च नारदेन ग्रहमन्त्रेण षट्त्रिंशत्संख्यकः समिद्धोमः। अधिदैवतमन्त्रेण तावत्संख्यघृतहोमः। प्रत्यधिदैवतमन्त्रेण तावांश्चरुहोम इति पक्षान्तरं दर्शयताधिदैवतादिसद्भावो ग्रहातिथ्ये दर्शितः। अत्र दाक्षिणात्यनिबन्धेषु ग्रहेभ्यः शतहोमेऽधिदैवतादिभ्यो दश दश तिस्रस्तिस्र इतिग्रहापेक्षयाधिदैवतादिभ्यो न्यूनपक्षो दर्शितः।

---

## अथ प्रयोगः।

यजमानताराचन्द्रशुद्धौ शुभलग्ने कार्य्यः। औत्सुक्ये शुभमुहूर्त्तेऽपि वा प्रारम्भः। पूर्व्वदिने ऋत्विक्-यजमानानां हविष्यभोजनम्। प्रातर्नित्यकृत्यानन्तरं गणपत्यादिपूजा स्वस्तिवाचनं सङ्कल्पः—असुककामोऽहं ग्रहातिथ्याख्यग्रहयज्ञेन यक्ष्य इति। मातृपूजा। वसोर्धारा। आयुष्यमन्त्रजपः। वृद्धिश्राद्धम्। नामगोत्रोच्चारणेन अस्मिन् ग्रहयज्ञे ऋत्विक् भवेति द्वयोर्वरणम्। मधुपर्कः।

---

## आचार्य्यकर्म्म।

यजमानगृहैशानप्रदेशे शिवायतने वा प्रागुदक्प्रवणे समचतुरस्राष्टहस्तमण्डपकरणम्। तत्राश्वत्थोदुम्बरप्लक्षवटशाखाभि-

स्तोरणचतुष्टयम्। तस्येशाने हस्तमात्रखातविस्तारं समचतुरस्रं कुण्डम्। तत्र [1]चतुरङ्गुलोच्छ्रायविस्तारा सर्व्वत्र[2] समा एका मेखला। पश्चिमे मेखलोपरि द्वादशाङ्गुलदीर्घा षट्सप्तान्यतमाङ्गुलविस्तृता कूर्म्मपृष्ठोन्नतमध्याङ्गुलोच्छ्रितप्रान्ता गजोष्ठसदृशी अश्वत्थपत्रनिभा वा योनिः। कुण्डेशाने देवस्थापनाय वेदी। हस्तविस्तृता वितस्त्युच्छ्राया चतुरस्रा उदक्-प्रवणा वप्रद्वययुता[3] कार्य्या। प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायः द्वितीयस्त्र्यङ्गुलोच्छ्रायः। द्वावप्यङ्गुलविस्तारौ। आत्ययिककार्य्ये गृह्यादावेकशालां कल्पयित्वा हस्तमात्रे चतुरङ्गुलोच्छ्रिते [वा][4] वालुकास्थण्डिले होमः। ग्रहवेदिरुक्तरूपैव। कुण्डमुपलिप्य वालुकाभिः[5]प्रपूर्य्य देवीपुराणोक्तमन्त्रैः परिसमूहनादिपञ्चभूसंस्कारं कृत्वाग्निस्थापनम्। अथ वेद्याः पश्चिमे उपविश्य पूजा। वेद्या मध्ये पूर्व्वापरायतसूत्रद्वयं दक्षिणोत्तरायतसूत्रद्वयञ्च दत्वा नवधा विभागः। [6]मध्ये ताम्रवर्णतण्डुलैर्मण्डलाकारं कृत्वा सूर्य्यस्थापनम्। आग्नेये शुक्लतण्डुलै चतुरस्रं सोमस्य। दक्षिणे रक्ततण्डुलैस्त्रिकोणं भौमस्य। ईशाने

---

(१) A. B. C. चतुरङ्गुलोच्चविस्तारा।

(२) A. सर्व्वतः ० D. सर्व्वत्रैका मेखला।

(३) B, D. ० युता ०।

(४) A. B. C. Omit the portion bracketed.

(५) D. प्रपूर्य्य।

(६) D. मध्यभागे ०।

पीततण्डुलैर्बाणाकारं बुधस्य। उत्तरे पीततण्डुलै दीर्घचतुरस्रं गुरोः। पूर्व्वे शुक्लतण्डुलैः पञ्चकोणं शुक्रस्य। पश्चिमे कृष्णतण्डुलैर्धनुराकृति शनेः। नैर्ऋते कृष्णतण्डुलैः शूर्पाकृति राहोः। वायव्ये धूम्रतण्डुलैर्ध्वजाकृति केतोः। एवं स्थानं कृत्वा मध्ये ताम्रमयपूर्व्वाभिमुखसूर्य्यप्रतिमास्थापनम्। स्फटिक[1][रजत]रक्तचन्दनस्वर्णमयरजतलोहसीसकांस्यमयानां सोमाद्यष्टप्रतिमानां सूर्य्याभिमुखानां स्वस्वमण्डले स्थापनम्। चित्रपटानां वा स्थापनम्। स्वस्वगन्धैर्वा लिखनम्। ग्रहदक्षिणेऽधिदेवताः। वामे प्रत्यधिदेवताः। [2]राहूत्तरे विनायकः। शनेरुत्तरे दुर्गा। सूर्य्योत्तरे वायुः। राहुदक्षिणे आकाशः। केतुदक्षिणेऽश्विनी। एताः प्रतिमाः शिल्पशास्त्रप्रसिद्धद्रव्यमयाश्चित्रलिखिता गन्धमया वा।

---

## अथावाहनम्।

[3]रक्ततण्डुलपुष्पाण्यादाय

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः।
सप्ताश्वरथसंस्थश्च द्विभुजः स्यात् सदा रविः॥

---

(१) A. B. C. Omit the portion bracketed.

(२) D. राहोर्दक्षिणे आकाशः। केतोर्दक्षिणे ०।

(३) A. B. C सित ०।

इति ध्यात्वा औं भूर्भुवः स्वः कलिङ्गदेशोद्भवं काश्यपगोत्रं धनिष्ठानक्षत्रं रक्तवर्णं ईश्वराधिदैवतं अग्निप्रत्यधिदैवतं कपिलनामाग्निकं सूर्य्यभट्टारकमावाहयामि सूर्य्यभट्टारक इहागच्छ इह तिष्ठ

कलिङ्गदेशसम्भूत दाड़िमीकुसुमप्रभ ।
काश्यपान्वय मार्त्तण्ड मण्डलेऽत्रागतो भव ॥

एवं श्वेतं श्वेतवस्त्रं दशाश्वरथं हेमभूषणं गदावरदपाणिं द्विभुजं सोमं ध्यात्वा औं भूर्भुवः स्वः यमुनातीरसञ्जातमात्रेयगोत्रं रोहिणीनक्षत्रं श्वेतवर्णमुमाधिदैवतमप्प्रत्यधिदैवतं पिङ्गलनामाग्निकं सोममावाहयामि सोमभट्टारक इहागच्छ इह तिष्ठ

[1]भिण्डीरपिण्डसंकाश यमुनातीरसम्भव ।
आत्रेयगोत्र शीतांशो मण्डलेऽत्रागतो भव ॥

[2]एवं रक्तमाल्याम्बरधरं शक्तिशूलगदाधरपाणिं मेषस्थं भौमं ध्यात्वा औं भूर्भुवः स्वः अवन्तीपुरसञ्जातं भारद्वाजसगोत्रं स्वातीनक्षत्रं रक्तवर्णं स्कन्दाधिदैवतं क्षितिप्रत्यधिदैवतं धूम्रनामाग्निकं भौमभट्टारकमावाहयामि भौमभट्टारक इहागच्छ इह तिष्ठ

---

(१) A. भण्डार॰ B. भिङ्गार॰

(२) D. रक्तपुष्पतण्डुलं गृहीत्वा दक्षिणे भौमं मेषसंस्थं रक्तमाल्याम्बरधरं चतुर्भुजं दक्षिणाधःक्रमेण वरखड्गशक्तिगदाधरं अवन्तीदेशसञ्जातं स्वातीनक्षत्रं भरद्वाजसगोत्रं स्कन्दाधिदैवतं भूमिप्रत्यधिदैवतं धूम्रनामाग्निकं॰ ।

[1]सुरेन्द्रगोपवर्णाभ अवन्तीदेशसम्भव।
भारद्वाज महीपुत्र मण्डलेऽत्रागतो भव॥

एवं पीतमाल्याम्बरधरं कर्णिकारप्रभं खड्गचर्म्मगदावरकरं बुधं ध्यात्वा ओँ भूर्भुवः स्वः मगधदेशसञ्जातमात्रेयगोत्रं विशाखानक्षत्रं पीतवर्णं [2]हर्य्यधिदैवतं विष्णुप्रत्यधिदैवतं जठरनामाग्निकं बुधभट्टारकमावाहयामि बुधभट्टारक इहागच्छ इह तिष्ठ इत्यावाह्य

विशुद्धकाञ्चनाभास मगधोद्भव सोमज।
आत्रेयगोत्र सर्व्वज्ञ मण्डलेऽत्रागतो भव॥

एवं [3]पीतं दण्डवराक्षसूत्रकमण्डलुधरं बृहस्पतिं ध्यात्वा ओँ भूर्भुवः स्वः सिन्धुदेशसञ्जातं आङ्गिरसगोत्रं उत्तरफल्गुनीनक्षत्रं पीतवर्णं ब्रह्माधिदैवतमिन्द्रप्रत्यधिदैवतं शिखिनामाग्निकं बृहस्पतिभट्टारकमावाहयामि बृहस्पतिभट्टारक इहागच्छ इह तिष्ठ इत्यावाह्य

गुरो गोरोचनाभास सिन्धुदेशसमुद्भव।
अङ्गिरोऽन्वयसम्भूत मण्डलेऽत्रागतो भव॥

एवं [4]श्वेतवर्णं दण्डाक्षसूत्रवरकमण्डलुधरं शुक्रं ध्यात्वा ओँ

---

(१) D. ओँ भुर्भुवः स्वः। सुरेन्द्रगोप०।
(२) D. विष्णुधिदैवतं०।
(३) B. पीताम्बराक्षसूत्रकमण्डलुधरं० D. पीतं वराक्ष०।
(४) A. सितं दण्डाक्ष० C. पीतं दण्डाक्ष०।

भूर्भुवः स्वः [1]भोजकट(क)देशसञ्जातं भार्गवसगोत्रं पुष्यानक्षत्रं शुक्लवर्णमिन्द्राधिदैवत[2]मिन्द्राणीप्रत्यधिदैवतं हाटकनामाग्निकं शुक्रभट्टारकमावाहयामि शुक्रभट्टारक इहागच्छ इह तिष्ठेत्यावाह्य

[3]महिषीक्षीरवर्णाभ भृगो न्यग्रोधसम्भव।
भार्गवान्वय दैत्येन्द्र मण्डलेऽत्रागतो भव॥

एवं [4]इन्द्रनीलवर्णं शूलवरवाणधनुर्धरं रथस्थं शनिं ध्यात्वा ओं भूर्भुवः स्वः सौराष्ट्रदेशसञ्जातं काश्यपसगोत्रं कृत्तिकानक्षत्रं कृष्णवर्णं यमाधिदैवतं प्रजापतिप्रत्यधिदैवतं महातेजोनामाग्निकं शनैश्चरभट्टारकमावाहयामि शनैश्चरभट्टारक इहागच्छ इह तिष्ठेत्यावाह्य

नीलाञ्जनचयाभास सौराष्ट्रदेशसम्भव।
काश्यपान्वयसञ्जात मण्डलेऽत्रागतो भव॥

करालवदनं खड्गशूलाभयवरहस्तं नीलसिंहासनस्थं राहुं ध्यात्वा ओं भूर्भुवः स्वः मलयाद्रिसञ्जातं [5]पाठीनसगोत्रं भरणीनक्षत्रं कृष्णवर्णं कालाधिदैवतं सर्पप्रत्यधिदैवतं हुताशन-नामाग्निकं राहुभट्टारकमावाहयामि राहुभट्टारक इहागच्छ इह तिष्ठेत्यावाह्य—

---

(१) B भोजराघटदेश ०। D. भोगवट्ट।
(२) B. ० मिन्द्राग्निप्रत्य ० C. ० मिन्द्राणीप्रत्य ०।
(३) B. D. माहिषक्षीर ०।
(४) A. दैत्येन्द्रनीलवर्णं ०।
(५) A. पाठीनगोत्रं।

कृष्णाम्बुधरसङ्काश मलयाचलसम्भव।
पाठीनगोत्र सोमारे मण्डलेऽत्रागतो भव॥

धूम्रं विकृताननं गदावरहस्तं गृध्रस्थं केतुं ध्यात्वा ओं भूर्भुवः स्वः अन्तर्वेदिसमुद्भवं जैमिनिसगोत्रं अश्लेषानक्षत्रं धूम्रवर्णं चित्रगुप्ताधिदैवतं ब्रह्मप्रत्यधिदैवतं [1]रौद्रनामाग्निकं केतुभट्टारकमावाहयामि केतुभट्टारक इहागच्छ इह तिष्ठेत्यावाह्य

[2]पलालधूम्रवर्णाभ अन्तर्वेदिसमुद्भव।
जैमिन्यन्वयसम्भूत मण्डलेऽत्रागतोभव॥

इति ग्रहावाहनम्।

---

## अथाधिदेवतावाहनम्।

ओं भूर्भुवः स्व ईश्वरमावाहयामीति सूर्य्यदक्षिणभागे। एवमुमास्कन्दहरिब्रह्मेन्द्रयमकालचित्रगुप्तानामधिदेवतानां सोमादिग्रहदक्षहस्तभागे आवाहनम्। एवम्,—

अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवता।
प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदैवतम्॥

इति सूर्य्यादिग्रहाणां वामभागे क्रमेण प्रत्यधिदेवतावाहनम्। राहोरुत्तरे विनायकावाहनम्। शनेरुत्तरे दुर्गावाहनम्। सूर्य्यो-

---

(१) धूम्रनामाग्निकं।

(२) C. पलाशधूम्रसङ्काश०।

त्तरे वायोः। राहोर्दक्षिणे आकाशावाहनम्। केतोर्दक्षिणेऽश्विनयोरावाहनम्। सर्व्वेषां शुक्लपुष्पाक्षतै र्व्याहृतिभिरावाहनम्। ग्रहाणां याज्ञवल्क्योक्तमन्त्रैः पूजा। अधिदेवतादीनां मत्स्यपुराणोक्तमन्त्रैः। सर्व्वेषां स्वनामचतुर्थ्यन्तमन्त्रेण वा।

---

## षोड़शोपचाराः।

आसनं सम्भवे स्वस्वमण्डलाकारं यथासम्भवं वा। स्वागतम्। पाद्यं—श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिः। गन्धपुष्पाक्षतयवकुशाग्रतिलश्वेतसर्षपदूर्व्वापयःफलयुक्तमुदकमर्घ्यः। आचमनीयम्—जातिलवङ्गककोलयुक्तं जलम्। दधिमधुघृतं कांस्ये कांस्यापिहितं मधुपर्कः। पुष्पगन्धयुक्तजलं पुनराचमनीयम्। गन्धपुष्पयुक्तमुदकं स्नानीयम्। सम्भवे पञ्चामृतञ्च। वस्त्राणि। रवे रक्तं चन्द्रशुक्रयोः शुक्लं [1]भौमस्यातिरक्तं बुधगुर्व्वोः पीतं शनिराह्वोः कृष्णं केतोर्धूम्रम्। आभरणम्—यथावर्णरत्ननिर्म्मितम्। सौवर्णं वा सर्व्वेषाम्। गन्धः,—सूर्य्यभौमयो रक्तचन्दनम्। चन्द्रशुक्रयोः शुक्लचन्दनम्। बुधगुर्व्वोः कुङ्कुमचन्दनम्। शनिराहुकेतूनां कस्तूरिकागन्धः। यथालाभं वा सर्व्वेषाम्। जवापाटलिपलाशादिरक्तपुष्पाणि रविभौमयोः। शुक्लजातिमल्लिकादीनि सोमशुक्रयोः। पीतकुरुण्टकादीनि बुधवृहस्पत्योः। कृष्णापराजिताकृष्णतुलसीप्रभृतीनि शनि-

---

(१) D. भौमस्य रक्तं।

राहोः। धूम्रवर्णसिम्बुवारजवाविशेषाश्च[1]वकुलानि केतोः। कुन्दुरुधूपो रविः। मयूरशिखा विधोः। सर्ज्जरसो भौमस्य। अगुरुर्बुधस्य। बृहस्पतेस्तुरस्कम्। शुक्रस्य विल्वसारम्। शनेर्गुग्गुलुः। राहोर्मदः। केतोर्लाचा। एवं विधानामसम्भवे सर्व्वेषां गुग्गुलुः। दीपो घृतेन तिलतैलेन वा। नैवेद्यानि यथावर्णं वलय इति वचनात् रक्तवर्णपिष्टादियुक्तमन्नं गुड़ान्नञ्च रविः। शुक्लवर्णपिष्टकादियुक्तमन्नं पायसञ्च सोमस्य। हविष्यान्नं रक्तवर्णपुलिकादिभक्ष्यसहितं भौमस्य। पीतवर्णपिष्टकादियुक्तं चीरोदनं वुधस्य। पीतवर्णपिष्टकयुक्तमन्नं दध्योदनं गुरोः। शुक्लवर्णपिष्टकादियुक्तमेव माषान्नसहितमन्नं शुक्रस्य। कृष्णवर्णपिष्टकादियुक्तमेव तिलपिष्टमिश्रमन्नं सघृतं शनेः। कृष्णवर्णफलपिष्टकयुक्तं छागमांसयुक्तमन्नं राहोः।[2] धूम्रवर्णफलपिष्टकयुक्तमन्नं चित्रान्नञ्च[3]केतोः। अजाचीरखिन्नतिलतण्डुलसर्पिषा अजाकर्णरक्तयुक्तं चित्रान्नमधिदेवतानाम्। वस्त्राणि। शुक्लगन्धपुष्पधूपदीपा यथासम्भवं शास्त्रोक्ताः। नैवेद्यं यथालाभफलमूलभक्ष्यादिमिष्टान्नम्। ताम्बूलं सर्व्वेषाम्। पूजाच सर्व्वेषां पदार्थानुसमयेन। ग्रहानन्तरमधिदेवतास्ततः प्रत्यधिदेवतास्ततो विनायकादयः पूजनीयाः। वक्ष्यमाणनवग्रहस्तोत्रेण स्तुतिस्ततः प्रणामः। [4][तत्र मन्त्राः,—]

---

(१) B. D. ० वकुलादीनि ०।

(२) D. राहोः।

(३) D. ० युक्तचित्रान्नं केतोः। अधिदेवतादीनां वस्त्राणि शुक्ल ०।

(४) D. Omits the portion bracketed.

दाड़िमीपुष्पसङ्काशं काश्यपेयं कलिङ्गजम् ।
धनिष्ठातारकं देवं मार्त्तण्डं प्रणमाम्यहम् ॥
यमुनातीरसञ्जातमात्रेयं क्षीरसम्भवम् ।
रोहिणीतारकं देवं सुधांशुं प्रणमाम्यहम् ॥
अवन्तीदेशसम्भूतं भारद्वाजसगोत्रकम् ।
लोहितं स्वातिनक्षत्रं भूसूनुं प्रणमाम्यहम् ।
विश्रुतकाञ्चनाभासमात्रेयसमगोत्रजम् ।
विशाखातारकं देवं सोमजं प्रणमाम्यहम् ॥
अङ्गिरोगोत्रसम्भूतमुत्तराफाल्गुनीयकम् ।
सिन्धुदेशोद्भवं पुण्यं वाक्पतिं प्रणमाम्यहम् ॥
[1]भोजकटकसम्भूतं भार्गवेयं सिताङ्गजम् ।
पुष्यतारोद्भवं देवं दैत्येन्द्रं प्रणमाम्यहम् ॥
[2]सौराष्ट्रदेशसम्भूतं कृष्णं काश्यपगोत्रजम् ।
कृत्तिकातारकं देवं सौरिं तं प्रणमाम्यहम् ॥
[3]मलयाचलसम्भूतं पाठीनान्वयसम्भवम् ।
भरणीतारकं देवं स्वर्भानुं प्रणमाम्यहम् ॥
[4]पलालधूमसङ्काशमन्तर्वेदिसमुद्भवम् ।
अश्लेषातारकं देवं केतुं तं प्रणमाम्यहम् ॥

---

(१) D. भोगवर्द्धनसमुद्भूतं ०।
(२) D. सौराष्ट्रदेशजननं कृष्णं ०।
(३) B. D. मलयाद्रिसमुद्भूतं ०।
(४) D. जैमिन्यन्वयसम्भूतं कुशद्वीपसमुद्भवम्।

इति मन्त्रैः प्रत्येकं दण्डवत् प्रणामः। वेद्या उपरि फलपुष्पयुक्तपञ्चवर्णवितानबन्धनम्।

---

## अथ कलसस्थापनम्।

धान्यमसीति मन्त्रेण धान्याधारकल्पनम्। तत्र तीर्थजलपूर्णकुम्भस्थापनम्। कलशश्च (२)कालमण्डलरन्ध्रशून्यः। वहिर्दध्यक्षतविभूषितः। भूरसीति सप्तमृत्तिकाप्रक्षेपः। अश्वस्थानगजस्थान(रथ्या)वल्मीकनदीसङ्गमाकृत्रिमजलाशयरूपह्रदगोगोष्ठसम्भवाः सप्त मृदः। यदा बध्नन्निति पञ्चरत्नप्रक्षेपः। या ओषधीरिति सर्वौषधिप्रक्षेपः। गन्धद्वारेति चन्दनम्। श्रीश्च त इति पुष्पम्। वनस्पतेव मृजोप इति (चूत)वटाश्वत्थोदुम्बरप्लक्षपल्लवानां निधानम्। यदश्वाय इति वस्त्रद्वयेनावेष्टनम्। पूर्णादर्व्वीति कुम्भोपरितण्डुलपूर्णशरावस्थापनम्। याः फलिनीति नारिकेलफलम्। वरुणस्योत्तम्भनमिति वरुणस्थापनम्।

गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च सरांसि च।
आयान्तु यजमानस्य दुरितक्षयकारकाः॥

इति तीर्थावाहनम्। देवीपुराणोक्तमन्त्रैस्तदुक्तदेवतास्मरणपूर्व्वकं ब्रह्मोपवेशनाद्याज्यभागान्तं तत्र ब्रह्मोपवेशनप्रणीताप्रण-

---

(१) B. मलयाद्रिसमुद्भूत ०

(२) A. B ० कालमण्डलः रन्ध्रशून्यः ०

यनपरिस्तरणं कृत्वा पात्रासादनम्। शूर्पं हविर्ग्रहणी[1]। पवित्रच्छेदनानि पवित्रे आज्यस्थाली द्वात्रिंशच्चरुस्थाल्यः सम्मार्जनकुशाः उपयमनकुशाः तिस्रः समिधः स्रुवः आज्यं व्रीहयो यवा वा दक्षिणा। शूर्पं गृहीत्वा शूर्पे हविर्ग्रहणीं दत्त्वा वामहस्ते गृहीत्वा व्रीहिभ्यः [2]प्रतिदैवतं चतुर्मुष्टिग्रहणम्। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सूर्य्याय जुष्टं गृह्णामीति मन्त्रेण मुष्टित्रयं तूष्णीं चतुर्थम्। एवमन्येषां ग्रहाणाम्। [3]ततोऽधिदेवतानां ततः प्रत्यधिदेवतानां ततो विनायकादीनाम्। भूमौ स्थापनम्। पवित्रकरणम्। प्रोक्षणी संस्कारः। एवमाज्यप्रोक्षणानन्तरं सूर्य्याय त्वा जुष्टं प्रोक्षामीत्यादिद्वात्रिंशन्मन्त्रैर्हविःप्रोक्षणम्। कृष्णाजिनमास्तीर्य्य तदुपरि उदूखलं निधाय हविर्निर्वापः। मुषलावधानम्। अवघातः। निःपवनम्। [4]तुषनिरसनम्। त्रिः फलीकरणम्। [5]द्वात्रिंशधा विभज्य इदं सूर्य्यस्येत्यादिमन्त्रैर्यथादैवतं निर्देशः। आज्यनिर्वापः। सोदकचरुपात्रेषु चरुतण्डुलप्रक्षेपः। आज्याधिश्रयणं [6]ब्रह्मणः। सूर्य्यचरोराचार्य्येणाधिश्रयणं विशेषचरूणां ब्राह्मणान्तरैः पर्य्यग्नि-

---

(१) B. D. हविर्ग्रहणी शूर्पं।

(२) B. D. प्रत्यधिदैवतं।

(३) D. ततोऽधिदैवतप्रत्यधिदैवतविनायकादीनां प्रत्येकम्। भूमौ ०।

(४) A. C. तुषनिरासः।

(५) D. द्वात्रिंशद्विभज्य।

(६) B. D. ब्रह्मणः शेषचरूणां ब्राह्मणान्तरैः पर्य्यग्निकरणं स्रुवं ०

करणम्। स्रुवं प्रतप्य संमृज्य पुनः प्रतप्याभ्युक्ष्याज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीनामुत्पवनम्। अभिघार्य्यं चरुमुद्वास्योपयमनकुशानादाय समिधोऽभ्याधाय पर्य्युक्ष्याग्निं संयुज्य प्रजापतये इन्द्रायाग्नये सोमायान्तरीक्षाय हुत्वा [1]भूः स्वाहा भुवः स्वाहा स्वः स्वाहेति होमः। इत्यग्निमुखम्। पुण्याहवाचनम्। आदित्यहोमाङ्गत्वेन कपिलनामाग्निपूजनम्। मध्वाज्यदध्यक्तानां मध्वाज्यपयोक्तानां वा वक्ष्यमाणसमिधां होमः। अर्कसमिधामष्टसहस्रमष्टशतमष्टाविंशतिं वा होमः। आकृष्टेन इति मन्त्रेण। समिद्धोमसमाप्तौ आज्यादपि समित्समानसंख्यो होमः। आज्यहोमसमाप्तौ चरोरपि समित्समानसंख्यो होमः। अनामिकामध्यमातर्जन्यग्रपर्व्वभिरधोमुखैश्चरुहोमः। सोमहोमाङ्गत्वेन कपिलनामाग्नि[2]पूजा। इमं देवा इति मन्त्रेण पलाशसमिधां पूर्व्ववत्संख्यो होमः। [3]चरुहोमश्च तत्संख्यः। भौमहोमाङ्गत्वेन धूम्रनामाग्निपूजनम्। अग्निर्मूर्द्धा दिव इति खदिरसमिद्धोमः। [4]तत आज्यचरुहोमौ। बुधहोमाङ्गत्वेन जठरनामाग्निपूजनम्। उद्बुध्यस्वेतिमन्त्रेण पूर्व्ववदपामार्गसमिद्धोमः। आज्यहोमश्चरुहोमश्च। बृहस्पतिहोमाङ्गत्वेन शिखिनामाग्निपूजनम्। बृहस्पतेऽतीति मन्त्रेण पिप्पलसमिद्धोमः। आज्यहोम-

---

(१) D. भूर्भुवः स्वरितिव्याहृतित्रयहोमः। इत्यग्नि०।

(२) D. ०पूजनम्।

(३) D. तत्राज्यहोमश्चरुहोमश्च तावत्संख्यकः। भौम०।

(४) D. तत्राज्य०।

चरुहोमश्च। शुक्रहोमाङ्गत्वेन हाटकनामाग्निपूजनम्। अन्नात् परिस्रुत इति मन्त्रेण उदुम्बरसमिद्धोमः। आज्यचरुहोमौ। शनिहोमाङ्गत्वेन महातेजो-नामाग्निपूजनम्। शन्नोदेवीरिति शमीसमिद्धोमः। आज्यचरुहोमौ। राहुहोमाङ्गत्वेन हुताशन-नामाग्निपूजनं काण्डात् काण्डा[1]दित्यनेन दूर्व्वासमिद्धोमः। [2][तत आज्यचरुहोमौ।] केतुहोमाङ्गत्वेन रौद्रनामाग्निपूजनं केतुं कृण्वन्निति मन्त्रेण कुशसमिद्धोमः। आज्यचरुहोमौ। एवं ग्रहहोमं समाप्य अधिदैवतप्रत्यधिदैवतहोमः। पलाश-समिधः सर्व्वेषाम्। सम्भवे ग्रहहोमसमसंख्योऽधिदेवताहोमः। असम्भवे ग्रहेभ्यः सहस्रहोमेऽधिदेवादिभ्यः शतं ग्रहेभ्यः शतहोमेऽधिदेवतादिभ्योऽष्टाविंशतिः। अष्टाविंशतिहोमेऽधि-देवतादिभ्यस्तिस्रः। एकैका वा। दुस्थग्रहस्य सहस्रहोमेऽन्येषां शतम्। अधिदेवतादीनां ततो न्यूनत्वम्। [3]आवोराजानमिति ईश्वरस्य [4]चरुणा होमः। आपोहिष्ठेत्युमायाः। स्योना पृथ्वीति स्कान्दस्य। इदं विष्णुरिति हरेः। [5]त्वमिन्द्रप्रथा

(१) D. ० दितिमन्त्रेण दूर्वा ०।

(२) D. Omits the portion bracketed.

(३) B. तमीशानमिति मन्त्रेण ईश्वरस्य समिदाज्यहोमः। D. तमीशानमिति मन्त्रेण ईश्वरस्य समिदाज्यचरुहोमः।

(४) A. समिदाज्यचरुहोमः।

(५) D. त्वामन्नामिति ब्रह्मणः।

इति ब्रह्मणः। [१][२]त्रातारमिन्द्रमितीन्द्रस्य। आयं गौरिति यमस्य। ब्रह्मजिन्वतमिति कालस्य। अनाप्नातं यदाम्नातमिति चित्रगुप्तस्य।

---

## अथ प्रत्यधिदैवतहोमः।

अग्निं दूतमित्यग्नेः। उदुत्तममित्यपाम्। पृथिव्यन्तरीक्षमिति चितेः। सहस्रशीर्षेति विष्णोः। इन्द्रायेन्द्र इतीन्द्रस्य। उत्तानपर्णे सुभगे इतीन्द्राण्याः। प्रजापते नत्वदिति प्रजापतेः। नमोऽस्तु सर्पेभ्य इति सर्पाणाम्। एष ब्रह्माय ऋत्विज इति ब्रह्मणः।

---

## अथ विनायकादीनाम्।

आतेन इन्द्र इति विनायकस्य। जातवेदसे सुनवाम सोममिति दुर्गायाः। क्राणा शिशुर्महीनामिति वायोः।

---

(१) B. Reads in the place of bracketed portin. सजोति इन्द्रस्य यमेन दत्तमिति यमस्य कालस्य कार्षिरसीति चित्रगुप्तस्य चित्रावसो इति अग्निं दूतमित्यग्नेः। उदुत्तममित्यपां। भूरसीति भूमेः। सहस्रशीर्षेति विष्णोः। त्रातारमिन्द्रमितीन्द्रस्य। इन्द्राण्यदैवीरितीन्द्राण्याः। प्रजापते नत्वदिति प्रजापतेः। नमोऽस्तुसर्पेभ्य इति सर्पाणां ब्रह्मयज्ञानमिति ब्रह्मणः। गणानां त्वेति विनायकस्य। इंहस्व देवीति दुर्गायाः। वोनोनियुद्भिरिति वायोः। तमीशानमित्याकाशस्य। विश्वे अस्मा इत्यश्विन्योः। तत्वा ० D. सजोषा इन्द्र इति इन्द्रस्य। यमेन दत्त इति यमस्य। वातोवा इति वायोः। कालस्य कार्षिरसी(ति) चित्रगुप्तचित्रावसोरिति। अग्निं दूतमित्यग्ने: then follows the reading of Ms. B.

(२) A. C. इन्द्रमिन्द्रे वेति इन्द्रस्य।

[1]तमीशान इति आकाशस्य। [2]विश्वे अस्या इत्यश्विनयोः। अत्रा]धिदेवतादीनां पलाशसमिध एव भूपालादिनिबन्धप्रामाण्यात्। अधिदेवताप्रत्यधिदेवतादीनां स्वस्वग्रहसमिधः [3][इति केचित्।] दानप्रकाशादौ दिक्पालहोम उक्तः क्वचिदस्मद्देशेऽपि [4]समाचारः। सर्व्वचरूणामुत्तरार्द्धेभ्यः सोमं राजानमिति स्विष्टकृद्धोमः। ततो भूरादिप्राजापत्यान्ता नवाहुतयः।

---

## पूर्णाहुतिः।

चतुर्गृहीतमाज्यं गृहीत्वा स्रुक्पूरणम्। गन्धपुष्पाक्षतसमिद्ग्रहणम्। मूर्द्धानं दिव इत्यनेन स्वाहावौषडन्तेन होमः। वेदीशान उपविष्टं यजमानं द्विमस्रग्भूषणं स्थापितकलसोदकेन स्नापयेयुः। ओं

सहस्राक्षं शतधारमृषिभिः पावनं कृतम्।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते॥
भगन्ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि।
ललाटे कर्णयोरक्ष्णोरापस्तं घ्नन्तु ते सदा॥

---

(१) A. C. आदित्यवत्सस्य रेतस इति आकाशस्य।
(२) A. C. अथ उषा इत्याश्विनयोः। E. F. अथो उषा इत्य०
(३) D. Omits the portion bracketed.
(४) A. B. C. समाचारात्।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय [1]ते।
आखण्डलोऽग्निर्भगवान् यमो वै नैरृतस्तथा॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
[2]ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा बुद्धिर्लज्जा क्रिया मतिः।
पुष्टिः श्रद्धा क्षमा शान्तिस्तुष्टिः कान्तिश्च मातरः॥
एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समाहिताः।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।
देवदानवगन्धर्व्वा यक्षराक्षस[3]किन्नराः॥
ऋषयो मुनयो गावो देवमातर एव च।
देवपत्न्यो ध्रुवो नागा दैत्याश्चाप्सरसां गणाः॥
अस्त्राणि सर्व्वशास्त्राणि राजानो वाहनानि च।
[4]औषधानि च रत्नानि कालस्यावयवाश्च ये॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः।
एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये॥

---

(१) D. च।
(२) D. ब्रह्मणा सहिताः शेषा दिक्०।
(३) D. ० पन्नगाः।
(४) A. ओषधीनि च ०।

अश्विन्यौ भैषज्येन। इत्यादिना। एवं मन्त्रेण स्नापयित्वा तूष्णीं सर्व्वौषधिसर्व्वगन्धजलैः स्नापयेयुः। यजमानः [1]शुक्लमाल्या-म्बरधरी गन्धानुलेपनो दक्षिणां दद्यात्।

धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा।
कृष्णा गौरायसश्छाग एता वै दक्षिणा क्रमात्॥

अविशेषोक्तेऽपि रक्ता धेनुः। रक्तोऽनड्वान्। पीतं वासः। बह्वृचग्रह्यपाठात्। बुधे रजतस्वर्णयोर्विकल्पः। इमां रक्तां धेनुं [2]भवद्भ्यां ददानि सूर्य्यः प्रीयतामित्यादिवाक्येनाचार्य्य-[3]ब्रह्मणोरेकैकस्य दानम्। आचार्य्याय वा देयम्। दक्षिणा ब्रह्मणे किञ्चिद्देयमित्येके। एतद्-दक्षिणासम्भवे भूहिरण्यादि-द्रव्यान्तरं वा। इदं हिरण्यं भवद्भ्यां ददानि [4]सूर्य्यादयः प्रीयन्तामित्यादि। वस्त्रमाल्यादिभिराचार्य्यब्रह्मणोस्तोषणम्। यज्ञोपकरणमाचार्य्यस्य। अथ यजमानोऽग्निं प्रदक्षिणीकृत्य वेदी-समीपे उपविश्य ग्रहाधिदेवप्रत्यधिदेवविनायकादीन् पूजयेत्। [ नमस्कुर्य्याच्च[5]। ]

यान्तु देवगणाः सर्व्वे पूजामादाय पार्थिवात्।
इष्टभोगप्रदानार्थं पुनरागमनाय च॥

---

(१) A. शुक्लमाल्यानुलेपनो दक्षिणां ०। D. शुक्लमाल्याम्बरगन्धानुलेपनो ०
(२) D. भवद्भ्यो।
(३) A. B. C. ब्राह्मणयो ०।
(४) D. सूर्य्यः प्रीयता ०।
(५) B. D. Omit the portion bracketed.

यथाशक्ति ब्राह्मणभोजनम्। शान्तिकरणम्। [1]इति ग्रहा-
तिथ्याख्यग्रहयज्ञः।

यदा तु स्वल्पवित्तः सर्व्वग्रहदक्षिणादानासमर्थः सर्व्वग्रहहोम-
सम्भारासमर्थश्च दुःस्थग्रहं द्वौ वा त्रीन् वा दुःस्थग्रहान् विशेषेण
होमबलिदक्षिणादिभिः सन्तोष्य शेषेभ्यः स्वल्पपूजाहोमादि
कुर्य्यात्। अथवा दुःस्थद्वित्रिचतुर्ग्रहमात्रस्वस्वाधिदैवतप्रत्यधि-
दैवतविनायकादिपञ्चकसहितं होमादिभिः पूजयेत् न ग्रहान्तरं
मात्स्ये वचनात्।

दानप्रकाशे,—

तस्माद्दातुमशक्तोऽसौ दक्षिणाचान्नमेव च।
जपैः प्रणामैः स्तोत्रैश्च तोषयेत् तर्पयेद् ग्रहान्॥

जपप्रणामस्तोत्रतर्पणानि ग्रहपूजापूर्व्वकाणि ब्राह्मणद्वारा
कार्य्याणि होमतुल्यसंख्यानि। तदन्ते ग्रहदक्षिणा। यथाशक्ति
हिरण्यादि वा। इति परिभाषा।

दक्षः,—

उदयास्तमयं यावन्न विप्रः क्षणिको भवेत्।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः॥
स्वकं कर्म्म परित्यज्य यदन्यत् कुरुते द्विजः।
अज्ञानाद् [2]यदि वा लोभात् स तेन पतितो भवेत्॥

तत्र कालविभागक्रमञ्च स एवाह

---

(१) B. D. Here add अच्छिद्रावधारणम्।

(२) D अथवा ०।

उक्तं कर्म्म क्रमो नोक्तो न कालस्तत एव हि।
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत्॥
दिवसस्याद्यभागे तु [1]कृत्यं तस्योपदिश्यते।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्।
विभागेष्वेषु यत्कर्म्म तत्प्रवक्ष्याम्यशेषतः॥
नैमित्तिकानि काम्यानि निपतन्ति यदा यदा।
तदा तदा तु कार्य्याणि [2]न कालस्तु विधीयते॥

उक्तं कर्म्म मन्वादिभिः। क्रमो नोक्तस्तैरेव। यतः कर्म्ममात्र-मुक्तमतएव कालोऽपि नोक्तः। दक्षस्तु स्वयमब्रवीत् कालं क्रमञ्च। अत्र

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते।

इत्यनेन उपदिश्यत इत्याख्यानेन तत्तद् वक्ष्यमाणकर्म्मणां क्रमो विधीयते। क्रमवतां स्वरूपं वक्ष्यमाणवचनैः

द्वितीये च तथा भागे वेदाभ्यासो विधीयते।

इत्याद्यैरेवावगम्यते। [3][विभागेष्वेषु यत्कर्म्म तत् प्रवक्ष्यामीति साकाङ्क्षत्वात्।] वक्ष्यमाणवचनैस्तु कालविधिः। तत्र क्रमस्यापि विधाने प्राप्ते [4]कर्म्मस्वनेकगुणविधानाद् वाक्यभेदा-

---

(१) D. शेषं कर्म्मोपदिश्यते।
(२) D. तत्कालस्तु ०।
(३) A. B. C. Omit the portion bracketed.
(४) D. कर्म्मस्वनेकविधानात्।

पत्तेः। न च तत्र क्रमोऽर्थप्राप्तः। इहोपक्रमे क्रमकालयोर्द्वयोर्विधेयत्वप्रतीतेः। अतएव क्रमविधाने कालोऽर्थप्राप्त इति निरस्तम्। नित्येषु कालविधानाभावे नैमित्तिककाम्येषु "न कालस्तु विधीयत" इति वचनासङ्गतेः। नित्यकर्म्मणामेवाष्टधाविभागकालोऽङ्गं न काम्यनैमित्तिकयोरित्येव हि तस्यार्थः। न चानुपादेयकालं प्रति प्रकरणान्तरे कर्म्मविधाने कर्म्मभेदप्रसङ्गः। उक्तं कर्म्मेत्यनेन मन्वाद्युक्तकर्म्मप्रत्यभिज्ञानात्। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादौ यथा कर्म्मान्तरत्वे रूपालाभ एवमिहापि फलकल्पनाप्रसङ्गश्चाधिकः। किञ्च उक्तं कर्म्मेत्यनेन मन्वाद्युक्तकर्म्मानुवादो विधेयसम्बन्धार्थ इति ज्ञातम्। तदुद्दिश्य किं विधेयमित्येव नावगतम्। तच्छन्दान्तरा[१]क्रमकालरूपमित्यवगम्यते। तच्चैकवाक्येनाशक्यमिति नानावाक्यैरित्यवगम्यते। तेन न कर्म्मभेदसम्भावनापि। यथा तस्मात् तपस्ते पनात्(?)त्रयो वेदा अजायन्त इत्युपक्रम्य वेदस्य स्तुतौ तदुद्दिश्य किञ्चिद् विधेयमित्याकाङ्क्षायां उच्चैरुपक्रियत [२]इति निगमनैरुच्चैस्त्वविधिमात्रं गृह्यते। रूपादिपदं वेदपरमेव वेदा एवोद्देश्यकोव्यो न रूपादयः। एवमिहापि मन्वाद्युक्त[३]कर्म्मणामेवाप्राप्तक्रमकालविधानम्। न चैवं पारणादौ भोजनापकर्षेऽपि स्वकाले तर्पणादिक्रियाप्रसङ्गः

(१) D. कर्म्मकाल ०।

(२) B. D. इति निगम्य नैर्ह्रतेष्वविधिमात्रं ०

(३) B. D. कर्म्मणामेव। प्राप्तक्रमकाले विधानम्।

क्रमस्य विधेयत्वेऽपि [1]कालदुर्व्वलत्वादिति वाच्यम्। बौधायनेन सर्व्वावश्यकावसाने भोजनविधानात्। न चैतदपि क्रमरूपं [2]कालाद् दुर्व्वलं सर्व्वावश्यकपदस्य भोजनप्राक्कालीननित्यकर्म्म-परत्वादावश्यकत्वेन दक्षस्मृतिसापेक्षत्वात् तेनैव भोजनस्य तदुत्तरस्य सिद्धौ यस्य वैयर्थ्यभयेन भोजनप्रकरणबाधेन तत्पूर्व्वकर्म्मसु भोजनाभावस्याधिकारसम्पादनपरत्वात्। एवञ्च दैवात् तर्पणादि-विलम्बे पञ्चमभाग आगते तर्पणात् पूर्व्वं भोजनप्रसङ्गः प्रत्युक्तः। अत्र दिवसस्याद्यभाग इति वचनात् उदयास्तमयं यावदिति वचनाच्च दिवसस्याष्टधा विभागः [न तूषःकालप्रदोषप्रवेशनेनाष्टधा विभागः[3]।]

अतएव,—

अष्टमे लोकयात्रा तु वहिः सन्ध्या ततःपरम्।

इत्यष्टमभागानन्तरं सन्ध्योक्ता। न चैवम्,—

उषःकाले तु संप्राप्ते शौचं तत्र विधीयते।

इत्युषःकालादिषु कर्म्मविधानमप्रतिज्ञातोक्तं स्यादिति वाच्यम्। विभागकथनात् पूर्व्वमेव

प्रातरुत्थाय कर्त्तव्यं यद् द्विजेन दिने दिने।

तत् सर्व्वं संप्रवक्ष्यामि

---

(१) A. C. कालाद् दुर्व्वलत्वा०

(२) B. कालदुर्व्वलं०

(३) A. B. D. Omit the portion bracketed.

इति सर्व्वेषामादावेव प्रतिज्ञानात्। अन्यथा यामद्वयं शयान इति रात्रेरष्टधाविभागभिन्नायाः कर्म्मकथनस्यासङ्गतिः।

---

## तत्र रात्रेरन्तिमे यामे शयनादुत्थानम्।

नमोऽस्तु प्रियदत्तायै तव चेति दिने दिने।
भूमिमाक्रमते प्रातः शयनादुत्थितश्च यः।
स सर्व्वकामव्यप्तात्मा सुखं याति यमालयम्॥

इति मन्त्रपाठपूर्व्वकं भूमौ पादन्यासः। वस्त्रान्तरं परिधाय [1]लालादिप्रोञ्छनपादप्रक्षालनादिशुद्धिसम्पादनम्।

सर्व्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभम्।
नारायणं नमस्कृत्य सर्व्वकर्म्माणि कारयेत्॥

इतिवचनात् प्रथमं नारायणनमस्कारः।

शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम्।
कीर्त्तनात् तस्य पापानि नाशमायान्त्यशेषतः॥

इतिवचनान्मधुसूदननामकीर्त्तनम्। अथ करिष्यमाण-यावत्-कर्म्मणां भगवति समर्पणम्।

यदुच्छ्वासादिकं कर्म्म तत् त्वया प्रेरितो हरे।
करिष्यामि त्वदाज्ञेयमिति विज्ञापनं मम॥
साधु वासाधु वा कर्म्म यद् यदाचरितं मया।
तत् सर्व्वं भगवन् विष्णो गृहाणाराधनं परम्॥

---

(१) A. ललाटादिप्रोञ्छन०

प्रातः प्रबोधितो विष्णो हृषीकेशेन यत् त्वया।
यद् यत्कारयसीशान तत् करोमि तवाज्ञया॥

त्रैलोक्यचैतन्यमयादिदेव
श्रीनाथ विष्णो भगवन् प्रसीद।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये॥
संसारयात्रामनुवर्त्तमानं
त्वदाज्ञया श्रीनृहरेऽन्तरात्मन्।
[1]स्पर्द्धातिरस्कारकलिप्रमाद-
भयानि मां नाभिभवन्तु भूमन्॥
जानामि धर्म्मं न च मे प्रवृत्ति-
र्जानाम्यधर्म्मं न च मे निवृत्तिः।
केनापि देवेन हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करिष्ये॥

दक्षः,—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्।

इति वचनाद् वेदाभ्यासः कार्य्यः।

ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत्।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च॥

---

(१) B. स्वह्वातिरस्कार०।

[1]ब्राह्मो मुहूर्त्तो रात्रेः पश्चिमयाम इति स्मृतिरत्नमालाकारः।
विष्णुपुराणे,—

ब्राह्मे मुहूर्त्ते स्वस्थे च मानसे मतिमान् नृप।
विबुद्धश्चिन्तयेद्धर्म्ममर्थं तदविरोधनम्॥
अपीड़या तयोः कामं

तेन पश्चिमे यामे किञ्चिद् वेदाभ्यासं कृत्वानुष्ठानार्थं धर्म्मं सोपायं चिन्तयित्वा धर्म्माविरोधेनार्थं सोपायं चिन्तयित्वा तयोरविरोधेन कामं चिन्तयित्वा वेदतत्त्वार्थस्य ब्रह्मणो ध्यानं [2][ कर्त्तव्यम्। ] अतएव तस्य ब्राह्म इति समाख्या ब्रह्मणोऽयं ध्यानोपायिकस्तेन ब्राह्मः। समाख्यापि प्रमाणमङ्गविनियोगे।
यत्तु,—

[3]रात्रेस्तुरीययामस्य मुहूर्त्तो यस्तृतीयकः।
स ब्राह्म इति विज्ञेयो विहितः संप्रबोधने॥

इति तद् रोगादिना प्रबोधासहत्वेऽनुकल्परूपं बोध्यम्। निराकारध्यानाशक्तस्य [4]साकारस्य विष्णोर्ध्यानम्। योगाभ्यासश्चात्र वक्ष्यमाणविधिना [5]कर्त्तव्यः।

(१) B. ब्राह्मे मुहूर्त्ते रात्रेः पश्चिमे याम इति स्मृति ०
(२) B. D. कार्य्यम्। A. Omits the portion bracketed.
(३) D. रात्रेः पश्चिमयामस्य ०।
(४) B. ० साकारस्य ध्यानं योगाभ्यासस्च वक्ष्यमाणविधिना कर्त्तव्यं तथा ब्राह्मे मुहूर्त्ते ०।
(५) A वक्तव्यः।

तथा—

ब्राह्मे मुहूर्त्ते बुध्येत स्मरेद् देववरान् ऋषीन्।

एवञ्च प्रातरुत्थाय यः पठेदित्यादिरूपेण यत्र[1] स्तोत्रेषु तदपि पठनीयम्। भगवन्नामकीर्त्तनं कियत्कालं कर्त्तव्यम्। एषां मन्त्रविशेषविहितत्वात् सन्ध्याहीनोऽशुचिरित्येतद्दोषाप्रसङ्गः।

महाभारते,—

सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥

विष्णुपुराणे,—

यन्नामकीर्त्तनं पुंसां विलायनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः॥

तथा,—

यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते॥

विष्णुधर्म्मोत्तरे,—

आर्त्ता विशीर्णा विषयाभिभूता
घोरेषु च व्याधिषु [2]पच्यमानाः।

---

(१) B. D. Omit यत्र।

(२) B. ० वर्त्तमानाः।

सङ्कीर्त्त्य नारायणशब्दमात्रं

विमुक्तदुःखाः सुखिनो [1]भवन्ति ॥

तथा,—

मङ्गल्यं सर्व्वपापघ्नमायुष्यं कीर्त्तिवर्द्धनम्।

भुक्तिमुक्तिप्रदं पुंसां वासुदेवस्य कीर्त्तनम्॥

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्।

यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्त्य केशवम्॥

विष्णुधर्म्मे,—

नामसङ्कीर्त्तनं विष्णोः क्षुतप्रस्खलनादिषु।

यः करोति महाभाग तस्य तुष्यति केशवः॥

कलेर्द्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।

कीर्त्तनादेव कृष्णस्य मुक्तवन्धः परं व्रजेत्॥

विष्णुपुराणे,—

कमलनयन वासुदेव विष्णो

धरणिधराच्युत शङ्खचक्रपाणे।

भवशरणमितीरयन्ति ये वै

त्यज भट दूरतरेण तानपापान्॥

तथा,—

अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः।

पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव॥

---

(1) D. ० भवन्तु।

क्वचिच्च,—

साङ्केत्यं पारिहास्यं वा स्तोभ्यं हेलनमेव वा।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥

तेन भक्तिश्रद्धाव्यतिरेकेण कीर्त्तनमात्रादेव पापक्षयः।

यावज्जीवं प्रणवमथवा व्याहरेद् रौद्रियं वा
[1]याजुर्वेद्यं वसतिमथवा वारणस्यां विदध्यात्।
त्यक्त्वा लज्जां कलिकलुषमलच्छेदकानीरयेद् वा
विष्णोर्नामान्यनिशममृतप्राप्तिरेषा चतुर्द्धा॥

अत्र नामकीर्त्तनस्य मुक्तिहेतुत्वं सत्वशुद्धिद्वारा ज्ञानोत्पादकत्वेन बोध्यं तच्चाशौचेऽपि कार्य्यम्। तदुक्तम्,—

चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत्।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः॥

नारसिंहे,—

इति सङ्कीर्त्तिते विष्णौ नारकैर्भक्तिपूर्व्वकम्।
नारकी यातना सर्व्वा तेषां नष्टा च तत्क्षणात्॥

अत्यन्ताशुचीनां नारकिणामप्यधिकारदर्शनात्। [2]नृसिंहकल्पे,—

यदि स्यादशुचिस्तत्र स्मरेन्मन्त्रं न तूच्चरेत्।
मनो हि सर्व्वजन्तूनां सर्व्वदैव शुचि स्मृतम्॥

---

(१) A. यावज्जीवं वसति॰ B. याजुर्वेदं॰
(२) E. F. यद्दु वा नृसिंह॰

इति मनसा वाग्शौचे। लेपाशौचे मनसा। सूतकादौ नैवेति व्यवस्था। तेन नाशुचिर्देवर्षिपितृनामानि कीर्त्तयेदिति लेपाशौचविषयम्।

औषधे चिन्तयेद् विष्णुं भोजने च जनार्द्दनम्।
शयने पद्मनाभञ्च मैथुने च[1] प्रजापतिम्॥
सङ्ग्रामे चक्रिणं देवं प्रवासे च त्रिविक्रमम्।
[2]नारायणमसुत्यागे श्रीधरं प्रियसङ्गमे॥
दुःस्वप्ने स्मर गोविन्दं विपत्तौ मधुसूदनम्।
[3]कानने नरसिंहन्तु पर्व्वते रघुनन्दनम्॥
जलमध्ये च वाराहं पावके जलशायिनम्।
मायासु वामनं देवं सर्व्वकार्य्ये च माधवम्॥
इति षोड़शनामानि प्रातरुत्थाय यः पठेत्।
सर्व्वकार्य्यमवाप्नोति विष्णुलोकं [4]च गच्छति॥

एषां [5]तत्तत्काले विधानादेव नाशौचदोषः। तथा,—

वासुदेवाच्युतानन्त सत्वाज पुरुषोत्तम।
परमेश्वरेत्याद्यैश्च स्तौति नामभिरच्युतम्।
विभक्तभावं भगवान् विमुक्तो यात्यधोक्षजम्॥

---

(१) B. विवाहे च ०।

(२) B. C. D. नारायणं प्राणत्यागे ०।

(३) A. Reads "अन्धकारे नरसिंहं कानने रघुनन्दनम्।" After जलमध्ये e.t.c.

(४) C. ० स ०।

(५) B. D. तत्र काले ०।

विष्णुधर्म्मे,—

धर्म्मगुप् धर्म्मकृद्धर्म्मी धर्म्मात्मा धर्म्मवित् शुचिः।
शुचिषद्विष्णुयज्ञाद्यः पुष्कराक्षो ह्यधोक्षजः॥
शुचिश्रवाः शिपिविष्टो यज्ञेशो यज्ञभावनः।
नाम्नामित्येव[1]मादीनां समुच्चारणतो नरः॥
धर्म्मं महान्तमाप्नोति पापबन्धक्षयं तथा।
श्रीदः श्रीशः श्रीनिवासः [2]श्रीधरः श्रीनिकेतनः॥
[3]श्रियः पतिः श्रीपरमः श्रीमान् श्रीवत्सलाञ्छनः।
नृसिंहो [4]दुष्टशमनो जयो विष्णुस्त्रिविक्रमः॥
सुतः प्रयच्छति चार्थमेवमादिभिरच्युतः।
कामः कामप्रदः कान्तः कामपालस्तथा हरिः॥
आनन्दो माधवश्चैव कामसंसिद्धये जपेत्।
रामः [5]परशुरामश्च नृसिंहो विष्णुरेव च॥
त्रिविक्रमश्चैव[6]मादीनि जप्यानि विजिगीषुभिः।
विद्यामभ्यसता नित्यं जप्तव्यः पुरुषोत्तमः॥
दामोदरं बन्धगतो नित्यमेव जपेन्नरः।
केशवं पुण्डरीकाक्षं नेत्रबाधासु संस्मरेत्॥

---

(१) B. ० मादीनामुच्चारणयुतो नरः।
(२) B. D. ० श्रीनिधिः ०।
(३) A. श्रियः प्रीतिः ०।
(४) E. F. ० दुःखशमनो ०
(५) A परमरामश्च ०।
(६) C. ० मादीन् जप्यानि ०।

भयेष्वन्येषु सर्व्वेषु हृषीकेशं सदा स्मरेत्।
अच्युतञ्चामृतञ्चैव स्मरेदौषधकर्म्मणि॥
भ्राजिष्णुमग्निहानौ च [1]जपेदालम्बने स्थितः।
सङ्ग्रामाभिमुखो गच्छन् संस्मरेदपराजितम्॥
पाताले नरसिंहञ्च जले क्रोड़तनुं स्मरेत्।
चक्रिणं गदिनञ्चैव शार्ङ्गिणं खड्गिनं तथा॥
क्षेमार्थी प्रवसन्नित्यं दिक्षु प्राच्यादिषु स्मरेत्।
अजितं गदिनं सर्व्वं सर्व्वेशं व्यवहारतः॥

व्यवहारे ऋणादिप्रयोग[2]विवादे।

नारायणं सर्व्वकालं क्षुतप्रस्खलनादिषु।
ग्रहनक्षत्रपीड़ासु चौरव्याघ्रादिसङ्कटे॥
अटवीष्वन्धकारे च नरसिंहमनुस्मरेत्।
तरत्यखिलदुःखानि तापार्त्तो जलशायिनम्॥
गरुड़ध्वजानुस्मरणाद्विषवीर्य्यं प्रणश्यति।
स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे॥
कीर्त्तयेद्भगवन्नाम वासुदेवेति नित्यशः।
स्थापने [3]चात्र धान्यादेरपध्याने च दुष्टजे॥
क्रियेत तन्मना भूत्वा अच्युतानन्तकीर्त्तनम्।
नारायणं शार्ङ्गधरं श्रीधरं पुरुषोत्तमम्॥

---

(१) A. D. ० जपेदालम्बनस्थितः। B. ० जपेदाम्बनस्थितिः।
(२) B. D. ० वादे।
(३) A. ० घतधान्यादे ०।

वामनं शङ्खिनश्चैव दुःस्वप्नेषु च कीर्त्तयेत्।
एकार्णवेऽहिपर्य्यङ्के शयानं च्चि परं स्मरेत्॥
वाय्वग्निस्टहदाहादिग्रहडिमुपलभ्य च।
विद्यार्थी मोहविभ्रान्तचित्तो ह्यश्वशिरः स्मरेत्॥
बलभद्रं सम्पदर्थी मारकर्म्मणि [1]चिन्तयेत्।
[2]जगत्स्थितिमपत्यार्थी सुप्रजाख्यं विवाहकृत्॥
श्रीशं सर्व्वाभ्युदयिके सर्व्वानिष्टेष्वशोककम्।
मृत्युकाले च तच्चित्तो वासुदेवं जपेद्बुधः॥
सर्व्वार्थशक्तियुक्तस्य वासुदेवस्य चक्रिणः।
यथाभिरोचते नाम तत् सर्व्वार्थेषु कीर्त्तयेत्॥
सर्व्वाण्येतानि नामानि परस्य ब्रह्मणो यतः।

एवम्,—

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते।
भस्मीभवन्ति राजेन्द्र महापातककोटयः॥

तथा,—

प्राणकान्तारपाथेयं संसारव्याधिभेषजम्।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम्॥
[ जितं तेन जितं तेन जितं [3]तेनेति निश्चितम्।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम्॥ ][4]

(१) D. ० कीर्त्तयेत्।
(२) D. जगत्स्थितिमपत्या ०।
(३) D. ० तेन सुनिश्चितम्।
(४) A Omit the portion bracketed.

नरसिंह नरसिंह नरसिंह जनार्द्दन।
वासुदेव हृषीकेश त्राहि मां भवसागरात्॥

श्रीशब्दपूर्व्वं [1]जयशब्दमध्यं
जयद्वयानन्तरमेतदेव।
त्रिःसप्तकृत्वो नरसिंहनाम
[2]जपन्निहन्याद् द्विजकोटिहत्याम्॥

तथा,—

ध्यायन् कृते जपन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्त्य केशवम्॥

तथा,—

तन्नास्ति कर्म्मजं लोके वाग्जं मानसमेव च।
यत्तु न क्षीयते पापं कलौ गोविन्दकीर्त्तनात्॥
गोविन्देति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितैः।
हरते सर्व्वपापानि कल्पान्ताग्निरिवोत्थितः॥

अत्र भक्तिराराध्यत्वज्ञानपूर्व्वकमाराध्ये स्वात्मसमर्पणम्। न च भज सेवायामिति स्मृतेः सेवैव भक्तिः। भक्त्या समाराधयते भक्त्या पूजयते भक्त्या स्तौतीत्यादौ पौनरुक्त्यापत्तेः। [3]नापि भावः प्रीतीरतिरित्यादिपर्य्यायवाच्यः पदार्थविशेषो भक्तिर्गोपीनां च

(१) B. C. ० जयशब्दपूर्व्वं ०।
(२) A. ० जप्तुर्निहन्याद् ०।
(३) B. यदि भावः ०। D. यदि भावः प्रीतिरिति पर्य्यायवाच्यः ०।

यथा श्रीकृष्ण इति वाच्यं लोके कामिन्यादौ तथाभाववतो भक्तत्वाप्रसिद्धेः। लोकवेदाधिकरणन्यायविरोधापत्तेः। अतएव तदेकशरणत्वं भक्तिरिति गीताभाष्ये शङ्कराचार्य्यैर्व्याख्यातम्।

यत्तु विष्णुपुराणे,—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥

यच्च पाद्मे,—

युवतीनां यथा यूनि यूनाञ्च युवती यथा।
मनोऽभिरमते तद्वन्मनो मे [1]रमतां त्वयि॥

इति। गीतायाम्,—

कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।

इति। नैतावता रतेर्भक्तित्वं किन्तु रतेरनवच्छिन्नतच्चिन्ताध्यायकत्वेन बहुतरपापचयहेतुत्वात् भक्तित्वाभावेऽपि पुरुषार्थसाधनत्वेन स्वतः प्रियरूपत्वेन च प्रार्थनीयत्वम्। यथा शिशुपालस्य निरतिशयद्वेषः श्रीकृष्णसन्ततानुस्मरणहेतुत्वात् तस्य मुक्तिप्रदोऽपि न भक्तिः। एवं गोपीनां प्रेमापि सन्ततानुस्मरणहेतुत्वाद् भक्तिरूपत्वाभावेऽपि।

तच्चिन्ताविपुलाह्लादक्षीणपुण्यचयास्तथा।
तदप्राप्तिमहादुःखविलीनाशेषपातकाः॥

---

(१) C. D. ० रमते ०।

चिन्तयन्ति जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥

इतिविधया मुक्तिरूपफलसाधनम्। अन्यथा शिशुपालद्वेषस्यापि भक्तित्वापत्तेः। किञ्च साहित्यशास्त्रे,—

सञ्चारिणः प्रधानानि देवादिविषया रतिः।
उद्बुद्धमात्रस्थायी च भाव इत्यभिधीयते ॥

इति देवादिविषयरतेरेव भावत्वम्। गोपीनां पुनः श्रीकृष्णविषयरतेर्निरुपमरमणीयप्रियतमविषयत्वेन तच्चरितास्वादस्य सम्भोगविप्रलम्भशृङ्गारमध्यपातित्वमिति न भक्तित्वसम्भावनापि। न चाराध्यत्वज्ञानमेव भक्तिरिति वाच्यं निर्व्व्यापारस्य परमेश्वरे आराध्यत्वज्ञानेऽपि भक्तित्वाप्रसिद्धेः। नापि स्वात्मसमर्पणमात्रं भक्तिः कार्य्यानुरोधेन नीचे स्वात्मसमर्पणे भक्तित्वाप्रसिद्धेः। तथा च भगवद्वाक्यम्,—

सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्व्वपापेभ्यो मोचयिष्यामि मा शुचः ॥

तथा,—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ॥

तथा,—

माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥

यत्तु,—

ये च धर्म्मामृतमिदं यथोक्तं पर्य्युपासते।

श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे मताः॥

इति। नानेन धर्म्माणां भक्तित्वम्। स्वात्मसमर्पणापरपर्य्याय-तत्परमत्वस्य [1]धर्म्मानुष्ठानत्वे तु [2]फलजनकत्वेनातिशय[3]भक्तित्वा-दतीवभक्तत्वम्। एवं ज्ञानित्वात् सैव मे मत इत्यादीनि व्याख्ये-यानि। तदेवंविधभक्तियोगेन कृतस्य नामकीर्त्तनस्य बहुतरपाप-क्षयहेतुत्वं भक्तिं विनापि कृतस्य पापक्षयहेतुत्वं वचनप्रामाण्या-देवावगम्यते। नचाबुद्धिपूर्व्वकृतस्यानिच्छाकृतस्य भगवन्नाम-कीर्त्तनस्य पापक्षयहेतुत्वे उपदेशवैयर्थ्यं शास्त्रस्य ज्ञानेच्छाद्वारा प्रवृत्तिफलत्वादिति वाच्यम्। हितैषिभिर्ज्ञात्वा [4]कस्यानिच्छो-रपि प्रवर्त्तयितुं शास्त्रव्यापारात्। यथा स्वाध्यायविधेः पितृद्वारा माणवकप्रवृत्तिफलत्वमिति सर्व्वञ्चैतदस्माभिर्विस्तरेण भक्तिप्रदीपे प्रपञ्चितमिति नेह प्रणीयते। तदेवं नामकीर्त्तनरूपाणि स्नानस-न्ध्याद्यधिकार[5]सम्पादनानपेक्षणाच्छयनादुत्थानमात्रे कर्त्तव्यानि। यानि तु स्तोत्ररूपाणि जपरूपाणि वा प्रातरुत्थाय कर्त्तव्यत्वेन विहितानि तानि

(१) D. धर्म्मानुष्ठानत्वहेतुफलजनक०।

(२) B. ०फलयोगेनातिशय०।

(३) A. ०भक्तित्वाददतीव०।

(४) A. B. C. ज्ञानस्यानिच्छो०।

(५) B. ०सम्पादकानपेक्षणा०।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि।

सन्ध्याहीनोऽशुचिर्विप्रो नित्य—

मित्यादिवाक्यात् सन्ध्योत्तरं कर्त्तव्यानि। उत्थानानन्तरमात्रकर्त्तव्यत्वेन लेपाशौचापनयनवस्त्रपरिवर्त्तनादिव्यवधानस्यापि दोषत्वापत्तेः। नहि सत्वादुदवसाय पृष्ठसवनीयेन यजेरन्नित्यादौ कालशौचाद्यनादरेणानन्तर्य्यमाद्रियन्त इति। छन्दोगपरिशिष्टे,—

पापिष्ठं दुर्भगां दीनं नग्नमुत्कृत्तनासिकम्।
प्रातरुत्थाय यः पश्येत् तत्कलेरुपलक्षणम्॥
श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते॥

एवम्,—

कल्यमुत्थाय यो मर्त्यः संस्पृशेद् गां घृतं दधि।
सर्षपांश्च प्रियङ्गुञ्च कल्मषात् स प्रमुच्यते॥

कल्यमुत्थायेति वचनादुषसि स्नानाद्यप्रतीक्षाप्रतीतिः।

विष्णुपुराणे,—

ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर।
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः॥

मैत्रं विड्-विसर्गः। मित्रोऽपाने समाश्रित इति वचनात्। अत्र भोजनाश्रितदिङ्नियमवद् देशकालनियमः पुरुषार्थः। [1]स च नित्यकर्म्ममध्यपाठात्तन्न्यायेन दुरितक्षयफलः। न [2]परिसंख्या

(१) A. स च पुरुषार्थनित्यकर्म्म०।
(२) B. ०परिसंख्यातिदोषदुष्टत्वादेव।

त्रिदोषदुष्टत्वादेव। अतएव देवलेन सन्ध्याकाले निषेधः स्मर्य्यते। अन्यथा कल्यव्यतिरिक्तकाले निषेधादेव सन्ध्यायामपि निषेधात् पृथङ्निषेधो दोषातिशयार्थः कल्पेत तच्च गौरवम्। एवञ्चान्य-दाकरणे दोषाभावः। सन्ध्यायामप्यावेगे कर्त्तव्यम्। [1]पक्वाशयाख्य स्थानस्थितस्यावेगकरत्वात्। स्थानाच्चैव मलाद्युता इत्यशौचकर-त्वात्। नाशुचिः क्षणमपि तिष्ठेदिति शौचस्य विधेयत्वेनावेगे सति सन्ध्यायामुत्सर्गस्य विहितत्वान्न [2]निषेधविषयत्वम्। आप-स्तम्बः,—[3]दूरादावसथान्मूत्रपुरीषे कुर्य्याद् दक्षिणां दिशं गत्वेति शेषः। अस्तमिते वहिर्ग्रामादाराच्चावसथान्मूत्रपुरीषे वर्जयेत्। आराद् दूरे। विष्णुपुराणे,—

अयज्ञियैस्तृणैः काष्ठैः पत्रैर्लोष्टैरथापि वा।
आस्तीर्य्य वसुधाञ्चैव वस्त्रप्रावृतमस्तकः॥

हारीतः,—प्राणास्ये संवेष्टयित्वा मूर्द्धानं ग्रीवायामासज्य [4]दक्षिणबाहुपार्श्वे कमण्डलुमाधाय उत्सर्गं कुर्य्यात्। प्राणास्ययो-र्वेष्टनं वस्त्रादिना। शाङ्खायनगृह्यम्,—यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा। एतेनात्र नोत्तरीयनियमः। मनुः,—

तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्टं तृणानि वा।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः॥

---

(१) A. B. पक्वाशयाख्य०।
(२) D. निषेधविहितत्वम्।
(३) D. दूरादावसथान्निं मूत्र०।
(४) D. बाहुदक्षिणपार्श्वे कमण्डलुमादाय उत्सर्गं०।

संवीताङ्गः—कण्ठसक्तयज्ञोपवीतः। संवीतं मानुषमिति तैत्तिरीयश्रुतिः। बौधायनः,—शुष्कतृणमयज्ञियं काष्ठं लोष्टं वा तिरस्कृत्य। मेहनानुवृत्तौ वायुपुराणे,—

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा।
मृन्मयैर्भाजनैर्वापि अन्तर्द्धाय वसुन्धराम्॥

यमः,—

प्राङ्मुखस्तु पूर्व्वाह्णे अपराह्णे तु प्राङ्मुखः।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः॥

[1][देवलः,—

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः।]
विण्मूत्रमुत्सृजेन्नित्यं सन्ध्यासु परिवर्जयेत्॥

अत्रेयं व्यवस्था—देवलवचनात् त्रिमुहूर्त्तात्मकप्रातः-सायं-कालयोरुदग्दक्षिणामुखत्वम्। यमस्मृतेस्त्रिमुहूर्त्तादूर्द्धं पूर्व्वाह्ण-घटिकाद्वये प्रत्यङ्मुखत्वम्। सायाह्नत्रिमुहूर्त्ताधोघटिकाद्वये प्राङ्मुखत्वं मध्याह्ने उदङ्मुखत्वं रात्रौ दक्षिणामुखत्वमिति। गौतमः,—न वाय्वग्निविप्रादित्यापोदेवता गाश्च प्रतिपश्यन् मूत्र-पुरीषामेध्यान्युत्सृजेत्। एतत्-सम्मुखो न कुर्य्यादित्यर्थः।

याज्ञवल्क्यः,—

न प्रत्यग्न्यर्कगोसोमवाय्वम्बुस्त्रीद्विजन्मनः।

एतेषामुत्सर्गमार्गाभिमुख्यं वर्ज्ज्यम्। यमः,—प्रतिपन्थानमेव च।

---

(1) A. B. C. Omit the portion bracketed.

मेहयन्ति य एतांश्च ते भवन्ति गतायुषः ।

अत्र पूर्व्वाह्ने प्रत्यङ्मुखत्वे आवरणादिना व्यवधानमित्येव-मन्यत्र[1] । मनुः,—

छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्य्यात्प्राणबाधभयेषु च ॥

हारीतः,—

आहारञ्च रहः कुर्य्यान्निर्हारञ्चैव सर्व्वशः ।

निर्हारं--मूत्रपुरीषोत्सर्गम् । मनुः,—

न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्व्वते ॥

चित्यामग्निचयने ।

न जीर्णदेवायतने न वल्मीके कदाचन ।
ससत्वेषु च गर्त्तेषु न गच्छन्नापि च स्थितः ॥

गमनस्थाननिषेधे प्रह्वत्वस्यानिषेधः । उपविष्ट एव कुर्य्या-दित्यर्थः ।

न नदीतीरमासाद्य न च पर्व्वतमस्तके ।

पुनः पर्व्वतमस्तकनिषेधो दोषातिशयार्थः । नचाग्नेयं चतुर्द्धा करोतीति श्रुत्या यथा पुरोडाशं चतुर्द्धा करोतीति सामान्यश्रुतिराग्नेये विशेषे उपसंह्रियते तथेह किं न स्यादिति

---

(१) D. ० मन्यत् ।

वाच्यम्। तत्र शाखाद्वयवाक्ययोः पुरुषभेदेन सार्थकत्वात् तथा इह लेकग्रन्थे वाक्यद्वयमित्येकवैयर्थ्यभयेनादृष्टातिशयकल्पना। पर्व्वतमस्तकयोरवयवावयवित्वभेदाच्च नोपसंहारः। देवलः,—

वापीकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु।
अग्नौ काम्ये श्मशाने वा विण्मुत्रं न समाचरेत्॥

चैत्यो ग्रामप्रसिद्धो वृक्षः। काम्यः कमनीयप्रदेशः। यमः,—

पल्वलानि तड़ागानि नदीप्रस्रवणानि च।
नखगोमयभस्मानि फालकृष्टञ्च वर्जयेत्॥
तुषाङ्गारकपालानि देवतायतनानि च।
राजमार्गश्मशानानि चैत्यानि च मलानि च॥
उपरुद्धो न सेवेत च्छायादृश्यं चतुष्पथम्।

दृश्यं शोभितम्।

उदकञ्चोदकान्तञ्च पन्थानञ्च विवर्जयेत्।
वर्जयेद् वृक्षमूलानि चैत्यश्वभ्रबिलानि च॥

राजमार्गचतुष्पथनिषेधो दोषातिशयार्थः। हारीतः,—न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्य्यात्। न तीर्थे न शस्यपूर्णे न यज्ञभूमौ यज्ञियानां वृक्षाणामधस्तात्। तीर्थं जलावतरणमार्गः। वशिष्टः,—नोप्ते न शाद्वलोपजीव्यच्छायासु। शाद्वलः हरितः स्निग्धो भूभागः। विष्णुः,—नोषरे न परशुचौ तथा नाकाशे। आकाशे अट्टालिकादौ। यदा

यथाकाशः स्मृतो भौमस्तस्मान्नासंवृते क्वचित्।
कुर्य्यान्मूत्रं पुरीषं वा न भुञ्जीत स्वपेन्न च॥

इति वायुपुराणवचनादसंवृतदेश एवाकाशपदार्थः। छाया-धिकारे आपस्तम्बः,—स्वाञ्च न मेहेत। स्वां छायां प्रतीत्यर्थः। न सोपानत्को मूत्रपुरीषे कुर्य्यात्। यमः,—

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।

दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणं तथा॥

तच्च शौचानन्तरम्। अशुचेस्तु सूर्य्यादिदर्शने

दृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्।

गात्राणि चैव सर्व्वाणि [1]नाभिं पाणितले नहि॥

इति प्रायश्चित्तं मनूक्तम्। कामतोऽधिकप्रायश्चित्तम्।

---

## [2]शौचम्।

हारीतः,—गुदं लोष्टेन प्रमृजीत शुष्ककाष्ठेन वा।

यमः,—

शुद्ध्यर्थञ्च त्रिभिः काष्ठैस्तृणैर्वापि निघर्षयेत्।

आपस्तम्बः,—[3]अश्मानं वा लोष्टमार्द्रौषधिवनस्पतीन् दूर्व्वा-माच्छिद्य मूत्रपुरीषयोः शोधनं वर्जयेत्। गौतमेन पर्णेन निघर्षणं निषिद्धम्। व्यासः,—

अश्ममूलफलाङ्गारैरुन्मृज्यात्राक्षिवर्हिषाम्।

---

(१) D. नाभिपाणितले न तु।

(२) D. अ(थ)शौचम्।

(३) B. D. अश्मानं लोष्टमार्द्रौषधिवनस्पतीदूर्व्वामाच्छिद्य मूत्रपुरीषयोः शुद्ध्यर्थं वर्जयेत्।

एवं शुष्ककाष्ठेन गुदमार्जनम्। तदभावे अश्ममूलफलाङ्गा-राखिकुशार्द्रौषधिवनस्पतिदूर्व्वालोष्टव्यतिरिक्तेन द्रव्येण। तदभावे लोष्टेन गुदमार्जनम्। लोष्टस्य विहितनिषेधादनुकल्पत्वम्।

ब्रह्माण्डपुराणे,—

उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः।
उदङ्मुखो दिवा कुर्य्याद् रात्रौ चेद्दक्षिणामुखः॥

शौचमिति सम्बन्धः।

आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा।
नाखूत्कृष्टान्न वल्मीकान्न पांशुलान्न कर्द्दमात्॥
न मार्गान्नोषराच्चैव शौचशिष्टात्परस्य च।

विष्णुपुराणे,—

वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम्॥
अन्तःप्राण्यवपन्नाञ्च हलोत्खाताञ्च पार्थिव।

शातातपः,—

[1]शुची देशे तु संग्राह्या शर्कराश्मादिवर्जिता।
रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता॥
न मृदं नोदकं वापि निशायां [2]न च गोमयम्।

---

(१) D. शुचौदेशे तु संग्राह्याः शर्कराश्मादिवर्जिताः।
रक्ता गौरास्तथा श्वेता मृत्तिकास्त्रिविधा मताः॥

(२) D. च न गोमयम्।

न गोमूत्रं प्रदोषे च गृह्णीयाद् बुद्धिमान् नरः।
अष्टाङ्गुलानि खानित्वा उद्धरेत्तु मृदं [1]ततः॥

इति पठन्ति तस्य प्रामाण्येऽपि दृष्टार्थत्वाय यत्राशुद्धिशङ्का [2]तत उद्धरणे तद्बोध्यम्। [3]प्रकरणाविशेषेऽपि दृष्टार्थत्वाय व्रीह्यादि-सम्बन्ध इवावघातादेः। अन्यथा शौचशिष्टादिनिषेधोऽप्राप्तत्वाद् व्यर्थः स्यात्। देवलः,—

आशौचान्नोत्सृजेत् शिश्नं प्रस्रावोच्चारयोः स्वयम्।

याज्ञवल्क्यः,—गृहीतशिश्नश्चोत्थाय अन्यत्रोपविश्य शौचं कुर्य्यादित्यर्थः। शिष्टाः,—

धर्म्मविद् दक्षिणं हस्तमधःशौचे न योजयेत्।
तथैव वामहस्तेन नाभेरूर्द्धं न शोधयेत्॥

वामहस्तेन शौचम्। ब्राह्मे,—

सुनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वप एव च।

सुनिर्णिक्ते काष्ठादिघर्षणेन सम्यक्क्षालिते। दक्षः,—

एका लिङ्गे तु सव्ये त्रिरुभयोर्मृद्द्वयं स्मृतम्।

सव्ये वामे। उभयोर्हस्तयोः। [4]एतत्

मूत्रे शौचं समाख्यातं शुक्रे तु द्विगुणं स्मृतम्॥

---

(१) B. ० तथा।

(२) D. तत्र।

(३) D. प्रकरणविशे ०

(४) C. एतत्तु।

[1][ मनुः,— ]

एका लिङ्गे गुदे [2]तिस्रो दश वामकरे तथा।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता॥

दक्षः,—

[3]अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका भवेत्।
द्वितीया च तृतीया च तदर्द्धार्द्धप्रमाणतः॥
[4]लिङ्गेऽप्यत्र समाख्याता त्रिपर्व्वी पूर्य्यते यया।
आर्द्रामलकमानेन मृदं गात्रविशोधनम्॥

इति वाक्यात् शेषमृत्तिकापरिमाणं तन्मात्रम्। हारीतः,—षट् पृष्ठे। [5]पृष्ठे वामहस्तपृष्ठे। शङ्खः,—

तिस्रस्तु मृत्तिका देया कृत्वा नखविशोधनम्।

शङ्खः,—लिङ्गे द्वे एकेन गन्धलेपानुवृत्तौ। एवमुत्तरत्राधिकसंख्यत्वे बोध्यम्। पैठीनसिः,—अपाने पञ्च। शङ्खः,—मेहने सप्त। [6]त्रयेणाशुचौ पञ्च। पञ्चभिः शुद्ध्यभावे सप्त देया इत्यर्थः। यमः—वामे पाणौ चतुर्द्दश। शङ्खः,—

एकस्मिन् विंशतिर्हस्ते द्वयोर्द्देयाश्चतुर्द्दश।

---

(१) A. B. C. Omit the portion bracketed.
(२) D. ० तिस्रस्तथा वामकरे दश।
(३) D. अर्द्धप्रसृतिमात्राभिः प्रथमा ०
(४) D. लिङ्गेऽप्यर्द्धसमा ०
(५) D. वामहस्तस्य पृष्ठे।
(६) A B त्रयेणाशुद्धौ ०।

ब्राह्मे,—

[1]द्वाविंश वामहस्ते तु। द्वयोः षोड़श पुनः सप्त च।

देवलः—

यावत् साध्विति मन्येत तावत् शौचं विधीयते।

प्रमाणं शौचसंख्याया न शिष्टैरनुमन्यते॥

[2][ संख्यामात्रेण न तुष्टिः। ]

गन्धलेपानुवृत्तौ न्यूनसंख्यां त्यक्वाधिकसंख्याश्रयणम्। तावताप्यनुवृत्तौ पुनरन्तिमसप्तसंख्या[3][ऽभ्यसनीया ]। न्यूनसंख्यया गन्धलेपक्षये विहितसंख्यापर्य्यन्तं कर्त्तव्यम्। तदुक्तं दक्षेण,—

न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता।

हारीतः,—तिसृभिः पादौ प्रक्षाल्य गोमयेन मृदा कमण्डलुं परिमृज्य पूर्ब्ववदुपस्पृश्य आदित्यं सोममग्निं वीक्षेत। शङ्खलिखितौ,—आचम्य ईशानं मनसा ध्यायेत्। ईशानः सर्व्वेश्वरो विष्णुः। स्मृत्वा विष्णुं सनातनमिति ब्रह्मपुराणात्। सोमसूर्य्याग्निवीक्षणं यथासम्भवम्। विष्णुस्मरणञ्च विण्मूत्रशुक्रशौचाङ्गम्।

नत्वाचमनमात्रे। दक्षः,—

यथोक्तन्तु दिवाशौचमर्द्धं रात्रौ विधीयते।

आतुरस्य तदर्द्धं स्यात् तदर्द्धञ्च पथि स्मृतम्॥

आतुरोऽत्र जलसंसर्गवर्द्धिष्णुरोगवान्। स्वस्थस्य चतुर्थांश

(१) D. द्वात्रिंशद् वाम॰

(२) A. B. C. Omit the portion bracketed.

(३) A. B. C. Omit the portion brac eted.

आतुरस्य दिवा रात्रौ च। एवं पथिकस्यानातुरस्य दिवा रात्रौ च तदष्टमांशेन शुद्धिः। मनुः,—

एतत् शौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्।
त्रिगुणञ्च वनस्थानां यतीनाञ्च चतुर्गुणम्॥

शङ्खः,—

शौचमेतद् गृहस्थानां तथा गुरुनिवासिनाम्।
द्विगुणं स्याद् वनस्थानां यतीनां त्रिगुणं भवेत्॥

एतच्छौचं विण्मूत्रोत्सर्गनिमित्तम्। [1]विण्मूत्रलेपे तु मृज्जलाभ्यां शुद्धिः न संख्यानियमः। मनुः—मृद्वार्य्यादेयमर्थवदित्युक्त्वा

दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि।

तथा,—

वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविन्नखाः।
श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः॥

अत्र,—

षण्णां क्रमेण चैतेषां शुद्धिरुक्ता मनीषिभिः।
मृद्वारिणा तु पूर्व्वेषामितरेषान्तु वारिणा॥

इति वाक्यात् समाचारः। अनोद्धृतोदकासम्भवेऽनुद्धृतेनापि। तथा च पठन्ति,—

कुर्य्यादनुद्धृतेनापि यदि निर्जन्तुकं जलम्।
वितस्तिमात्रं सन्त्यज्य कुर्य्यात् शौचं जलाशयात्॥

(१) D. विण्मूत्रलेपने तु मृज्जलाभ्यां शुचिः ०

क्वचिच्च,—

[1]अरत्निमात्रं सन्त्यज्य कुर्य्याद् वारिण्यनुद्धृते ।

इति । केवलम्,—

चिप्ताम्नावशुचिद्रव्यं तथैवाम्भसि वा पुनः ।

माममात्रं व्रतं कुर्य्यात्

इति गुरुदोषाज्जले शौचोदकपरिहाराय यत्नः कार्य्यः । मृन्मयकमण्डलुसम्भवेऽप्येतन्न कार्य्यम् । कमण्डलुशब्दो ह्याकार-निमित्तः । तथा च मेधातिथिः,—आकारनिमित्तः कमण्डलुशब्दो न जातिनिमित्तः । तेन मृन्मयस्य सौवर्णस्य राजतस्य वा तथैव शुद्धिः । ताम्रगडुकादिकमपि कमण्डलुरेव । केवलं तस्य शौचे यत्नः कार्य्यः । बौधायनः,—

कमण्डलुं परिहरेत् सर्व्वावस्थोऽप्यशौचतः ।
न चैवं कुत्सयेद् विद्वान् [2]न च शङ्केन दूषयेत् ॥

तथा,—

तस्माच्छौचं ततः कृत्वा परिसृज्य कमण्डलुम् ।
पर्य्यग्निकरणं [3]ह्येतद्धस्तत्परिमार्जनम् ॥

हस्तपरिमार्जनमुच्छिष्ट-पुरुषसंयोग-निमित्तं कमण्डलु-संस्कारः । मूत्रादिलिप्ते तु कमण्डलुर्यद्द्रव्यजातस्तदुक्तं शौचम् ।

(१) D. वितस्तिमात्रं ।
(२) B. D. न शङ्केन च दूषयेत् ।
(३) D. ह्येतद्धस्तपरिमार्जनं । (?)

एवञ्च सति धारणञ्च कमण्डलोरिति निषेधः काष्ठस्य समाचारमूलकः।

इति शौचम्।

---

## अथाचमनम्।

देवलः,—

शौचलक्षणमित्याहुर्मृद्भ्योगोमयादिभिः।
लेपे स्नेहे च गन्धे च व्यपकृष्टे सुदूरतः॥
पश्चादाचमनं वापि शौचार्थे वक्ष्यते विधिः।

गोमयेन शरीरोपघातशुद्धिर्वक्ष्यते। तद्विषयं गोमयग्रहणम्। एतेनाचमनानन्तरमेव कर्म्मार्हतालक्षणं शौचं सिद्धं भवति।

देवलः,—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः॥

दैवकर्म्माचमनाङ्गपादप्रक्षालने प्राङ्मुखत्वमुदङ्मुखत्वञ्च वैकल्पिकम्। एवं पित्राचमनाङ्गपादप्रक्षालने दक्षिणामुखत्वं प्राङ्मुखत्वञ्चैव वैकल्पिकमित्यर्थः। प्रत्यक्पादावनेजनमिति त्वापस्तम्बीयमाचमनार्थक्रियमाणव्यतिरिक्तविषयम्।

तथा,—

इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक्।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः॥

तथा,—

शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे।

तूष्णीं भूत्वा समाधाय नोद्गच्छन् न विलोकयन्॥

उद्गच्छन् उत्तिष्ठन् विलोकयन् दिश इति शङ्खस्मृतेः।

न गच्छन्न शयानश्च न चलन्न परान् स्पृशन्।

न हसन् नैवाकलयन्नात्मानं न विलोकयन्॥

आकलयन् कम्पमानः। आत्मानं हृदयं विलोकयन्निति स्वार्थे निच्।

केशान्नीवीमधः कायमस्पृशन् धरणीमपि।

[1][ सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः।

उष्णीषी वापि नाचामेद् वस्त्रेणावेष्ट्य वा शिरः॥ ]

अथातः प्रथमात् तीर्थाद् दक्षिणात् त्रिः पिबेत् समम्॥

अगन्धमनवस्रावमवह्निजाम्बुबुद्बुदम्।

प्रथमात् तीर्थात् ब्राह्मतीर्थात्।

द्विस्ततोऽङ्गुष्ठमूलेन परिमृज्यात् ततो मुखम्।

नाग्राङ्गुल्या न पृष्ठैर्वा परिमृज्यात् कथञ्चन॥

आपस्तम्बः,—तिष्ठन् प्रह्वो वा नाचामेत्। मरीचिः— न यानासनस्थो न पादुकास्थः। मरीचिः,—

भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन।

---

(1) A. B. C. Omit the portion bracketed

व्यासः,—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥

तथा,—

सोपनत्को जलस्थो वा मुक्तकेशोऽपि वा नरः।
उष्णीषी वापि नाचामेद् वस्त्रेणावेष्ट्य वा शिरः॥

[1]गौतमः,—वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वा अप आचामेत्। [2]त्रिश्चतुर्वेति भावशुद्ध्यपेक्षया। हृदयगामिन्योऽपः।

[3]भविष्ये,—

समौ च चरणौ कृत्वा तथा बद्धशिखो नृप।
घनाङ्गुलिकरं कृत्वा [4]एकाग्रसुमना द्विजः॥

नारसिंहे,—

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः।
त्रिः पिबेद् वीक्षितं तोयं आस्यं द्विः परिमार्जयेत्।

दक्ष,—

संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात् ततो मुखम्।
संहताभिस्त्रिभिः पूर्व्वमास्यमेवमुपस्पृशेत्॥॥

---

(१) D. गौतमः,—
(२) D. त्रिश्चतुर्वेति भावशुद्ध्यपेक्षायाम्।
(३) B. D. भविष्यपुराणे।
(४) D. एकाग्रः सुमना०

मुखं संवृत्य [1]प्रक्षाल्यात् । एवम्,—संवृत्यास्यमुपस्पृशेत् ।

आपस्तम्बः,—त्रिरोष्ठौ परिमृजेत् द्विरित्येके । सकृदुपस्पृशेत् द्विरित्येके । दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् । पादौ शिरश्च प्रोक्षयेदित्यन्वयः । सकृदुपस्पृशेदोष्ठाविति सम्बन्धः । ओष्ठ[2]स्पर्शादनन्तरं दक्षः,—

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्यान्तु चक्षुः श्रोत्रे पुनः पुनः ॥
नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै ।
[3]सर्व्वाभिस्तु शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत् ॥

प्रदेशिनी तर्ज्जनी । अत्र आस्यं स्पृष्ट्वा पश्चाद् घ्राणं तदनन्तरं चक्षुषी पुनः श्रोत्रे पुनर्नाभिमित्यर्थः । [4]नतु चक्षुःश्रोत्रयोः स्पर्शनावृत्तिरिति [5]भ्रमः कार्य्यः । नाभिस्पर्शानन्तरं व्यासः,—पुनरपश्च संस्पृशेत् । हृदयस्पर्शादनन्तरं चात्मालम्भादुदकस्पर्शनम् । भविष्ये,—

यद्भूमावुदकं वीर समुत्सृजति मानवः ।
वासुकिप्रमुखान् नागान् तेन प्रीणाति पार्थिव ॥

शिष्टाः पठन्ति,—

तावन्नोपस्पृशेद् विद्वान् यावत्सव्येन न स्पृशेत् ।

---

(१) D. संक्षाल्यात् ।

(२) B. D. संस्पर्शनानन्तरं दक्षः ।

(३) D. सर्व्वाभिश्च ०

(४) A. B. C. अनन्तरं चक्षुः ०

(५) A. B. C. न भ्रमः

मनुः,—

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥

ब्राह्मतीर्थस्य व्रणादिदोषे इदमनुकल्परूपं कायत्रैदशिकाभ्यामिति ।

अपः पाणिनखस्पृष्टाः पिबेदाचामति द्विजः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

इति वचनान्नखस्पर्शपरिहारः कार्य्यः । कमण्डलूपस्पर्शनं सोमतीर्थेनेति [1]हारीतवचनादुद्धृतोदकेन कमण्डलोर्गृहीतेनाचमने सोमतीर्थाख्येन करमध्येन । [2]कमण्डलुशब्दश्च संस्थानवचन इत्युक्तं तेन ताम्रपात्रादिभ्योऽपि ग्रहणे तथा मन्तव्यम् ।

अतएव स्मरन्ति,—

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि नैव शुद्धिमवाप्नुयात् ॥

कांस्यादिपात्राणामाकारेण [3]कमण्डलुत्वेन प्रसङ्गे निषेधः । अन्यथा प्रसङ्गाभावात् । आचामेदित्यनुवृत्तौ शङ्खलिखितौ,—उद्धृतपरिपूताभिरद्भिर्विच्छिताभिरनधिश्रिताभिरबुद्बुदाभिः शूद्राशुच्येकपाण्यावर्जिताभिः शूद्रावर्जिताभिरशुच्यावर्जिताभिरेकपाण्यावर्जि-

---

(1) B D. ० हारीतस्य वचनाद् ० ।

(2) A. कमण्डलुशब्दश्च संस्कारमित्युक्तम् ।

(3) B. कमण्डलुप्रसङ्गनिषेधः । D कमण्डलुप्रसङ्गे निषेधः ।

ताभिश्च नाचामेत् । परिपूतत्वमपद्रव्यनिरासेन । आपस्तम्बः,—भूमिगतास्वप्स्वाचम्य प्रयतो भवति यद्वा प्रयत आचामेत् । एतेन स्वयमाहृतेनाचमनं नाशुद्धिहेतु । वशिष्ठः,—

तस्मादुदकपाणिभ्यां परिसृज्य कमण्डलुम् ।
पर्य्यग्निकरणं ह्येतत् मनुराह प्रजापतिः ॥
कृत्वा चावश्यकार्य्याणि आचामेत् प्रयतस्ततः ।

ततः कमण्डलोः । आपस्तम्बः,—न वर्षधारास्वाचामेत् । तथा प्रदरोदके । तत्राभिधाकारणात् । प्रदरः स्वयं दीर्णो भूभागः । अकारणाद् व्याधिव्यतिरेकेण । वशिष्ठः,—प्रदरादपि या आपस्तर्पणसमर्थाः स्युर्न वर्णरसदुष्टा याः स्युरशुभागमाः । बौधायनः,—पादप्रक्षालनात् शेषेण नाचामेत् यदाचामेद् भूमौ स्रावयित्वाचामेत् । आपस्तम्बः,—अभ्युदकशेषेण वृथा कर्म्माणि कुर्य्यात् । आचामेद् वा [1]पाणिसंक्षुब्धोदकेन नाचामेत् । अग्निपर्य्युक्षणार्थोपात्तजलशेषेणेत्यर्थः । विष्णुः,—

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च [2]सकृत्स्पृष्टाभिरन्ततः ॥

अन्ततः ओष्ठप्रान्ते । ब्राह्मे स्त्रीशूद्राधिकारे,—क्षालनाच्च करोष्ठयोः । शूद्राधिकारे [3]गौतमः,—आचमनार्थे पाद[4]प्रक्षालनमेवैके ।

(१) D. पाणिसंक्षुब्धोदके नाचामेत् । (३) D. गौतमः,—
(२) D. सकृत् स्पृष्टाद्भि ॰ (४) D. क्षालन ॰

## आचमनक्रमः।

दक्षिणपूर्व्वक्रमेण पादप्रक्षालनं प्राङ्मुखत्वेन। [1]पित्र्यर्थाचमनाङ्गपादप्रक्षालनमुदङ्मुखत्वेन वा। आमणिबन्धात् पाणिप्रक्षालनम्। शिखाबन्धनम्। यज्ञोपवीतानुसन्धानम्। वासोद्वयधारणम्। उष्णीषशिरःकण्ठप्रावरणपरीहारः। उपानत्पादुकात्यागः। भोजनान्तराचमनव्यतिरिक्ताचमने आसनत्यागः। न प्रौढ़पादत्वम्। [2][शुचिदेशे पादद्वयदानम्।] दिशां हृदयस्य चानवलोकनम्। गमनोत्थानप्रह्वताशयनकम्पनहासत्वरात्यागः। केशनीवीनाभ्यधोभागपरदेहभूमीनां हस्तेन स्पर्शनपरीहारः। स्नानाङ्गाचमनेऽन्तरेकं वहिरेकं पादं दत्वा। पुरुषार्थाचमनेऽप्यार्द्रवस्त्रस्य जलमध्येऽपि जानुदघ्ने तदधिके वा। वाग्यतः समाहितचित्तः प्रसन्नचेता भवेत्। उर्व्वोररत्निकरणम्। संहताङ्गुलि गोकर्णाकृति हस्तकरणम्। कांस्यायसत्रपुसीसपित्तलव्यतिरिक्तस्वकीयदारुमृत्तैजसान्यतमकमण्डलोरसम्भवे सम्मृज्य परकीयस्य वामहस्ते धारणम्। तत्र [3]वामहस्तशूद्रानीतव्यतिरिक्तपरजनानीतजलधारणम्। दिवोद्धृतमेव। असम्भवे अग्निदर्शनपूर्व्वकं [4]रात्र्युद्धृतमपि। स्रोदबुद्बुदवर्णधाराद्रव्यान्तरसंसर्ग-

(१) D. पित्र्यर्थाचमनाङ्गपादप्रक्षालनं दक्षिणाभिमुखत्वेन वा। दैवकर्म्माङ्गाचमनार्थं पादप्रक्षालनमुदङ्मुखत्वेन वा। आमणि ॰

(२) D. Omits the portion bracketed.

(३) D. वामहस्तशूद्रव्यतिरिक्तशुद्रपरजनानीतजलधारणम्।

(४) D. रात्र्यानीतमपि।

दूषितपादक्षालनशेषव्यतिरिक्तम्। असम्भवे पादक्षालनशेषमव-स्रावितैकदेशं नखसंस्पृष्टाग्निपर्य्युक्षणशेषप्रदरोदकभिन्नं प्रदरादपि गोतृप्तिसमर्थादविकृतरसगन्धं जलं कमण्डलोर्हस्ते कार्य्यम्। वामहस्तेन दक्षिणहस्तस्पर्शनम्। तोयस्य वीक्षणम्। करमध्येन सोमतीर्थेन पानम्। यथा हृदयं यावद् गच्छति। एवं द्विरपरं त्रिर्वा। भूमिष्ठादीदृशोदकं गोकर्णाकृतिहस्तेनादायाङ्गुष्ठकनि-ष्ठाभ्यां किञ्चिदवस्राव्य ब्राह्मतीर्थेन पानम्। तदसम्भवे प्राजा-पत्येन। तस्याप्यसम्भवे नखस्पर्शपरीहारेण देवतीर्थेन पानम्। कमण्डलोराचमने सोमतीर्थनियमः। मुखं संहत्याङ्गुष्ठमूलेन द्विः परिमार्जनं त्रिर्वा। भोक्ष्यमाणस्य द्विरेव। ततः सव्यपाणेः पादयोः शिरसः क्रमेण प्रोक्षणम्। मुखं संवृत्य संहतमध्याङ्गुलित्रयेण द्विः सकृद् वा स्पर्शनम्। भोक्ष्यमाणस्य सकृत्। तर्ज्जन्यङ्गुष्ठाभ्यां नासिकयोः। अनामिकाङ्गुष्ठाभ्यां नेत्रयोः श्रोत्रयोश्च। कनिष्ठा-ङ्गुष्ठाभ्यां नाभिं स्पृष्ट्वा जलस्पर्शनम्। सर्व्वाङ्गुलिभिः शिरः अङ्गुल्य-ग्रेण बाहुमूलद्वयस्पर्शनम्। भूमौ किञ्चिदुदकप्रक्षेपः। इन्द्रिय-स्पर्शनशेषजलस्य सव्यपाणौ प्रक्षेपः। ततः सर्व्वेश्वरस्य विष्णोः स्मरणम्। आदित्यसोमाग्नीनां यथासम्भवमीक्षणम्। एतच्च पुरीषोत्सर्गाचमनाङ्गं (१)न सर्व्वत्र। देवलः,—

रेतोमूत्रशकृच्छौचे भोजनेऽध्वपरिश्रमे।
शौचमेवंविधं प्रोक्तमीषच्चान्यत्र वर्त्तते॥

(१) D. सर्व्वत्र न।

उक्तनिमित्तपञ्चकातिरिक्तनिमित्ते किञ्चिदङ्गसहितमप्याचमनं सगुणं भवति केवलं शिरःकण्ठप्रावरणमुक्तकचशिखायज्ञोपवीतत्वपादशौचानामावश्यकत्वम्। एतैर्विनाचमनं शुद्धिकरं न भवति। उक्तपञ्चनिमित्ते सर्व्वाङ्गादर इत्याहुः।

---

## अथाचमननिमित्तानि।

ब्राह्मे,—

क्षुते श्लेष्मपरित्यागेऽधीते वा भक्षिते सति।
अववर्णस्य संलापे स्वप्ने वा दन्तधावने॥
आचम्य प्रयतो भूत्वा ततः शुचो भवेन्नरः।

अधीते पाठे।[1]अववर्णस्य चण्डालादेः। हारीतः,—रथ्यामाक्रम्य कृतमूत्रपुरीषो भोक्ष्यन् (भोक्ष्यमाणः) वा पाणिपादं प्रक्षाल्याचामेत्। पैठीनसिः,—उच्छिष्टरेतोमूत्रस्पर्शं उत्सृज्याचम्य प्रयतो भवति चिः प्रक्षाल्य च तं देशम्। तं देशमुच्छिष्टादिलिप्तम्। बौधायनः,—नीवीं विस्रंस्य परिधायोपस्पृशेत्।

वायुपुराणे,—

निष्ठीविते तथाभ्यङ्गे तथा पादावसेचने।
उच्छिष्टस्य च सम्भाषादशुच्यप्रयतस्य वा॥
सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा तथैव च।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥

---

(१) B. D. अवर्णस्यचण्डालादेः।

सन्देहः आचमनं कृतं न वा। आचमननिमित्तं नवेति च। तथा,—

उच्छिष्टस्य च संस्पर्शे [1]दर्शने चान्त्यवासिनाम्।

मनुः,—अध्येष्यमाणश्चाचामेत्। आपस्तम्बः,—रिक्तपाणिर्वायसमुद्यम्य अप उपस्पृशेत्। तथा,—श्वावातपर्य्यन्तावोष्ठौ चोपस्पृश्य। श्वावातपर्य्यन्तावलोमकौ। यमः,—

उत्तीर्य्योदकमाचम्य अवतीर्य्य उपस्पृशेत्।

उत्तीर्य्य जलान्निष्क्रम्य। अवतीर्य्य जले प्रविश्य। हारीतः,— "नोत्तरेदनुपस्पृश्य" उत्तरेत् सन्तरेत्। देवलः;—

यदश्च: शौचनिर्मुक्तं चितिं प्राप्य विनश्यति।
प्रक्षाल्याशुचिलिप्तञ्च स्पृष्टाचम्य विशुद्ध्यति॥

शौचनिर्मुक्तं [2]शौचस्थानादन्यत्र गतम्। संवर्त्तः,—

चर्म्मारं रजकं वेणं धीवरं नटमेव च।
एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन्॥

आपस्तम्बः,—सिंहाणिकाद्यालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यञ्चोपस्पृश्याप्रयतञ्च मनुष्यं नीवीं च परिधायाप उपस्पृशेत्। आर्द्रं वा शकृदोषधिं भूमिं वा। अमेध्यं चतुर्विधम्। देवलः,—

दूषितं वर्ज्जितं दुष्टं कश्मलञ्चेति लिङ्गिनाम्।
चतुर्विधममेध्यं स्यात् सर्व्वं व्याख्यास्यते पुनः॥

---

(१) B. D. ॰दर्शनेऽप्यन्त्यवासिनाम्।

(२) D. शौचगात्रादन्यगतम्।

शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते।
अभक्ष्याभोज्यापेयानि वर्जितानीह चक्षते॥
त्यक्ताः पतितचाण्डाला ग्रामकुक्कुटशूकरौ।
श्वा च नित्यं विवर्ज्याः स्युः षड़ेते धर्म्मतः समाः॥
सव्रणः सूतिकासूतीमत्तोन्मत्तरजस्वलाः।
मृतबन्धुरशुद्धश्च वर्ज्याश्चाष्टौ स्वकालतः॥
नैचाश्रु विप्रुषः केशा निरस्तं नखलोम च।
आर्द्रं चर्म्मासृगित्येतद् दुष्टमाहुर्मनीषिणः॥
मानुषास्थि शवं विष्ठां रेतो मूत्रार्त्तवानि च।
कुणपः पूयमित्येतत् कश्मलं समुदाहृतम्॥
दूषिते प्रोक्षणेनापि शुद्धिरुक्ता विधानतः।
दुष्टे मार्जनसंस्कारैः कश्मले सर्व्वथा भवेत्॥

लेपापकर्षणादिभिर्यथोक्तशुद्धेः पूर्व्वं स्पर्शनमाचमननिमित्तम्। सव्रणोऽत्र कुष्ठभगन्दरादिरोगयुक्तः। सूती प्रसवकारयित्री। मत्तो मादकभक्षणेन। उन्मत्त उन्मादरोगी। मृतबन्धुर्मृतकाशौची। [1]एतेषां यथोक्तशुद्धेः पूर्व्वं स्पर्शनमाचमननिमित्तम्। अत्र सव्रण इति वचनात् क्षताशौचं केचिदिच्छन्ति तन्न दुष्टव्रणविषयत्वेनोपपत्तौ व्रणमात्रेऽशौचकल्पनानवकाशात्। दन्त[2]लग्नाधिकारे च देवलवचनम्,—

(१) D. एषां ०।
(२) D. ० लग्नाधिकारे देवल ०।

न तत्र बहुशः कुर्य्याद् यत्नमुद्धरणे पुनः।

भवेदशौचमत्यर्थं व्रणवेधाद् व्रणे कृते॥

इति रुधिरस्य मुखप्रवेशादत्यन्ताशौचप्रतिपादनार्थम्। कालिकापुराणवचनात्तु न क्वचिन्निबन्धे क्वचिद्देशे चादरो दृश्यत इति [1]चेपशङ्के(व)नावतिष्ठते। देवलः,—

ततः [2]शरीरस्रोतेभ्यो मलनिःस्यन्दविस्रवात्।

अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः॥

तथा,—

शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः।

लेपे स्नेहे च गन्धे च व्यपकृष्टे सुदूरतः॥

पश्चादाचमनं चेति शौचार्थं कथ्यते विधिः।

[3]शरीरस्रोतेभ्यः शरीरच्छिद्रेभ्यः। मलं द्वादशविधम्। निःस्यन्दो लालादि। तयोर्विस्रवः स्थानाच्चलनम्। अन्नादीनां प्रवेशो मुखद्वारा। [4]तेन भोजनादावशुद्धिराचमनेनापोह्यते। एतदाचमनं त्रिविधम्,—शुद्ध्यर्थं नैमित्तिकं कर्म्माङ्गञ्च। तत्र शुद्ध्यर्थाचमननिमित्तानि,—स्वकीयविण्मूत्ररेतसामुत्सर्गः। तेषां स्पर्शनम्। अशौचोदकतदार्द्रभूमिस्पर्शनम्। क्षुतम्। श्लेष्मत्यागः। भोजनम्। पानम्। चाण्डालादिभाषणम्। निद्रा। दन्तधावनम्। अनृतभाषणम्। [5][परुषभाषणम्।] वस्त्रपरिवर्त्तनम्। रथ्याक्रम-

---

(१) A. B. C. चेपशङ्कैवावतिष्ठते। (४) D. तत्र न भोजनादा०।
(२) D. शरीरस्रोतोभ्यो ०। (५) D. Omits the portion bracketed.
(३) D. शरीरस्रोतोभ्यः ०।

णम्। द्वादशविधमलानां स्वस्थानात् प्रच्यवनम्। मानुषेतरनिः-स्नेहपञ्चनखास्थिस्पर्शनम्। निर्लोमोष्ठादिदेशस्पर्शनम्। उच्छिष्ट-ब्राह्मणस्पर्शनम्। बुद्धिपूर्व्वकातिक्षुद्रनिःस्नेहमानुषास्थिस्पर्शनम्। चाण्डालादिस्पर्शनम्। चाण्डालादिस्पृष्टस्य बुद्धिपूर्व्वं स्पर्शनम्। अमेध्यलेपप्रदेशस्य त्रिःचालनपूर्व्वकमाचमननिमित्तत्वम्। अस्थि-सञ्चयनादूर्द्धं रोदनम्। जलाशयप्रवेशः। तत उत्तरणम्। भुक्त-मात्रवमनं चाण्डालोदक्यासूतकीपतितशवतत्स्पृष्टस्पर्शनम्। पर-कीयशुक्रादिद्वादशविधमलस्पर्शनम्। रथ्याकर्दमस्पर्शनम्। भास-काक-वलाक-वानर-मार्जारखरोष्ट्र-श्व-शूकर-कुक्कुट-वराह-चेल-निर्णेजक-रजक-चर्म्मकृद्व्याधकैवर्त्ततैलकृत्सुराविक्रयिनटनपुंसक-वेश्यानां स्पर्शनम्।

नाभेरूर्द्धं करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानमधस्तात्तु चालनेनैव शुद्ध्यति॥

इति वचना[1]दुत्तमाङ्गे स्नानमधिकम्। एवञ्च,—

एभिर्यदङ्गं संस्पृष्टं शिरोवर्ज्यं द्विजातिषु।

इत्यत्र शिरःपदं नाभ्यूर्द्धभागपरमेव। तथाचमनकृताकृत-सन्देहः। आचमननिमित्तसन्देहश्च। एतानि [2]शुद्धर्थाचमन-निमित्तानि।

---

(१) D. ० दुत्तमाङ्गस्नान ०।
(२) D. शुद्धर्थान्याचमन ०।

## अथ पुरुषार्थाचमननिमित्तानि ।

व्यासः,—अमकृतविकृतश्वासः । ब्राह्मणस्पर्शनम् । अग्नि-स्पर्शनम् । गोस्पर्शनम् । लोष्टादिरहितस्य हस्तस्य पश्चिणं प्रत्युद्यमः । पादप्रक्षालनम् । शिखाबन्धनम् । नीवीविस्रंशनम् । वस्त्रपरिधानम् । यज्ञोपवीतवहिष्करणम् । स्नानं भोजनारम्भः । उच्छिष्टदोषरहितताम्बूलादिभक्षणम् । शयनारम्भः । श्मशाना-क्रमणम् । अभ्यङ्गस्याशुचिकरत्वे मानाभावादेव तत्राचमनं पुरुषार्थः । [1]श्मशानाक्रमणं नाशुद्धिकरम् ।

न च मेध्यतरं किञ्चित् श्मशानादिह विद्यते ।

इति दानधर्म्मवचनात् । एतेषु निमित्तेष्वाच[2]मनस्य दुरित-क्षयः फलम् । कर्म्माङ्गाचमनञ्च सामान्यतः

क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ।

इति वायुपुराणोक्तम् । विशेषतश्च

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन् ।

इत्यादौ सन्ध्यान्तर्गतप्राणायामस्य निमित्तत्वम् । तत्त्वसागर-संहितायाम्,—

अर्चयित्वा महेशानमनाचम्य क्रियान्तरम् ।
कुर्व्वन् किल्बिषमाप्नोति सत्यमीश्वरभाषितम् ॥

---

(१) D. श्मशानाक्रमणमपि नाशुद्धि ० ।
(२) D. ० मनस्योपात्तदुरित ० ।

तथा,—

आदित्यञ्च गणाध्यक्षं क्षेत्रपालञ्च पार्व्वतीम्।
आराध्याचमनं कार्य्यं सुधिया [1]कार्य्यसिद्धये॥
लङ्घयित्वा च निर्म्माल्यमेतेषां त्रिदशाधिप।
सद्य आचमनं कार्य्यं कर्म्मान्तरविशुद्धये॥

इत्यादौ [2]कर्म्माङ्गमाचमनम्। तथा श्राद्धे [3]पिण्डदानादौ कर्म्माङ्गमाचमनम्। अतएव पैतृके दक्षिणामुख इति पादक्षालने दिङ्नियम उक्तः। यत्तु शुद्ध्यर्थाचमनमेव कर्म्माङ्गं न पृथक् कर्म्माङ्गमाचमनमस्ति। अतएव शिष्टाः कोपाधिकरणे,—

वेदिरेव ह्यनाचम्य कुर्व्वतो विगुणो भवेत्।
तामेव सगुणां कर्त्तुं शुद्ध्या न व्यवधास्यते॥

इति शुद्ध्यर्थाचमनस्य [4]क्रमविरोधो विचारितः। तदयुक्तं तत्र तत्र कर्म्माङ्गाचमनमध्ययनाङ्गमेव। एवञ्च क्षुतादौ शुद्ध्यर्थाचमनस्यापि न व्यवधायकत्वमित्यतिशयार्थम्। शुद्धेः कर्म्माङ्गत्वेऽपि तदर्थाचमनस्य न कर्म्माङ्गत्वम्। आहवनीयस्य कर्म्माङ्गत्वेऽप्या-

---

(१) D. ० कर्म्मसिद्धये।

(२) D. कर्म्माङ्गाचमनम्।

(३) D. पिण्डदानार्घ्यदानादौ कर्म्माङ्गाचमनम्।

(४) B. क्रमविशेषो ०। D. क्रमविशेषो विचारितः। तदुक्तं तत्र कर्म्माङ्गाचमनस्य दर्शितत्वात्। अतएव भाष्यकारेणापत्तौ न कर्त्तव्यमित्यविशेषेणाङ्गत्वबोधकं स्मरणमित्युदाहृतम्। वार्त्तिककारेण ब्रह्मयज्ञाङ्गमाचमनं जपमात्राङ्गमित्युक्तम्। अतएवाध्येष्यमाणश्चारम्भे प्रयतः सन्नित्यध्ययनारम्भे आचमनमध्ययनाङ्गमेव। एवञ्च ०।

धानस्य न कर्म्माङ्गत्ववत्। अतएव विध्यन्तरसिद्धत्वादशौचस्य च यथाशक्त्युपबन्धविषयत्वमिति। व्रीह्याद्यपचार इव शौचापचारे न कर्म्माधिकारः। न चैवं निरग्नेरिवाशुद्धस्याधिकाराभावादग्निहोत्राद्यकरणे दोषाभावः स्यादिति वाच्यम्। शक्तिविषये न मुहूर्त्तमप्यप्रयतः स्यादित्यापस्तम्बवचनादशुचेरेव स्नानस्याधर्म्महेतुत्वादग्निहोत्रादिलोपवत्। शौचविलम्बे त्रिरात्रोपवासादिविधानाच्च। एवञ्च दैवान्मुख्यगौणकालयोः शौचाभावे कर्म्मलोपदोषो नास्ति। अशुच्यवस्थानदोषः स्यादेव। अशक्तौ नाशुचित्वदोषोऽपि। मुख्यकाले शुद्ध्यभावे गौणकाले शुद्धौ कर्म्माधिकारः स्यादेव। मुख्यकालेऽसन्निहिताग्नेर्गौणकालेऽग्निहोत्रवत्। यथा च शौचस्य [1]वैदिककर्म्मत्वेऽपि जननाद्यशौचेऽपि कर्त्तव्यत्वं तथा च तत्रैवोक्तम्।

---

## अथ द्विराचमननिमित्तानि।

याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेत् [2]वासोऽपि परिधाय च॥

आपस्तम्बः,—भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्। द्विः परिमृजेत्। सकृदुपस्पृशेत्। भोजनपूर्व्वाचमने द्विः परिमार्जननियमः। अन्यत्र द्विस्त्रिर्वा। ओष्ठस्पर्शनमत्र सकृदन्यत्र सकृत्

---

(1) C. विदितकर्म्म०। (2) B वासोऽन्यद्द०।

[1]त्रिर्वा। पैठीनसिः,—कलिलकासश्वासापगमे रथ्याचत्वरश्म-शानाक्रान्तेष्वाचान्तः पुनराचामेत्। कलिलं कठिनं श्लेष्म। श्वासो व्यायामादिकाले [2]विकृतः। चत्वरं [3]भूत्यादीनां बलिदान-स्थानम्। शङ्खलिखितौ,—मूत्रपुरीषष्ठीवनादिषु शुक्तवाक्याभि-धानेषु पुनरुपस्पृशेत्। शुक्तं परुषम्। आदिपदं शुक्रोत्सर्गस्याप्युप-लक्षणम्। द्विराचमनाधिकारे वशिष्ठः,—

ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ।

स्नानम्। पानम्। क्षुतम्। स्वापः। भोजनान्तः। रथ्योप-सर्पणम्। वस्त्रपरिधानम्। भोजनारम्भः। कठिनश्लेष्मत्यागः। कासः। विकृतश्वासः। चत्वराक्रमणम्। श्मशानाक्रमणम्। मूत्रोत्सर्गः। पुरीषोत्सर्गः। ष्ठीवनम्। शुक्रोत्सर्गः। परुषवाक्याभि-धानम्। इत्यष्टादश द्विराचमननिमित्तानि। शुद्ध्यर्थे नैमित्तिके च यथासम्भवम्। [4]तत्र द्विराचामेदिति द्वित्वविधौ विधेस्त्र्यंश-विशिष्टभावनाविषयत्वादितिकर्त्तव्यताया अपि द्वित्वं विधीयत इतीन्द्रियस्पर्शनमपि द्विः कर्त्तव्यमित्याहुः। वस्तुतो विधेर्भावना-विषयत्वेऽपि द्विराचामेदित्यत्रेतिकर्त्तव्यतांशस्याश्रवणेन धात्वर्थ-[5]मात्रोपदेशेनैव द्वित्वविधिः। न चाचमनानुवादेन द्वित्वविधा-वाचमनेऽङ्गसाहित्यमुद्दिश्य विशेषणं विवक्षार्हम्। तथा च सति न तौ पशौ करोतीत्याज्यभागनिषेधस्य पश्वङ्गपुरोडाशे प्रसङ्गात्।

(१) D. द्विर्वा।
(२) A. B. C. विस्तृतः।
(३) A. भूपादीनां०।
(४) D. अत्र।
(५) D. मात्रोद्देशेनैव०।

किञ्च यथाथर्व्वणादौ काम्या इष्टयस्ता उपांशु कर्त्तव्या न तौ पशौ करोति। दीक्षाः सोमस्य दक्षिणाः सोमस्येत्यादौ सर्व्वेति-कर्त्तव्यताकप्रधानभावनायां विध्यन्वयेऽङ्गानामप्युपांशुत्वमाज्य-भागनिषेधौ दक्षिणासम्बन्धश्च स्यादिति तत्तदधिकरणविरोधः। ननु चाचान्तः पुनराचामेदिति क्तप्रत्ययस्य क्रियोपरमवाचित्वे [1]साङ्गाचमनक्रियोपरमवतः पुनराचमने कर्त्तृत्वविधानात् पूर्व्वा-चमनस्येन्द्रियस्पर्शादिसमाप्तावेव पुनराचमनं विधीयत इति चेत् न क्तदन्तानां भावनानभिधायित्वेन [2]धात्वर्थापवर्गविशिष्टस्यैव कर्त्तृत्वात्। नह्यभिषुत्य हुत्वा भक्षयतीत्याद्यभिषवहोमकर्त्तुर्भक्षण-विधानेऽपि साङ्गहोमभावनोत्तरं भक्षणम्। किन्तु होमाभिषव-धात्वर्थमात्रोत्तरत्वेन विध्युपपत्तावर्थाक्षिप्तभावनोत्तरत्वं न विधीयते। यत्त्वग्निं चित्वा सौत्रामण्या यजेतेत्यत्र साङ्गाभि-निवृत्तिः शब्दार्थस्तत्राग्निमिति द्वितीयाश्रुत्या चयनसंस्कार्य्यत्व-मग्निस्थलस्य ज्ञातमिति साङ्गादेव संस्कारोत्पत्तेस्तथात्वम्। एव-माहिताग्निर्नानृतं वदेदिति कर्म्मणि निष्ठाप्रत्ययात् साङ्गाधान-निवृत्तिः शब्दार्थः। यत्तु दीक्षितधर्म्माणां साङ्गदीक्षापवर्गेऽनुष्ठान-मिति तत्र [3]दीक्षितत्वस्यालौकिकसंस्काररूपत्वात् साङ्गक्रियोपरम एव तत्संस्कारादिति विशेषः। नाचान्तत्वमलौकिकं माना-भावात्। किञ्च तथा सति पादप्रक्षालनमप्यावर्त्तेत। न च वहिः-

(१) A. B. C. आचमन०।

(२) C. धात्वर्थापसर्गविशिष्ट०। D. धात्वर्थापवर्गावमर्षमात्रविशिष्ट०।

(३) D. दीक्षितत्वस्य लौकिक०।

प्रयोगाङ्गत्वादनावृत्तिः। तथात्वेऽपि भावनान्तर्गतत्वेन द्विरावृत्ति-विधौ तत् तत्रानुपपत्तेरिति। देवलः,—

रेतोमूत्रशकृन्मोचे भोजनेऽध्वपरिश्रमे।
शौचमेवंविधं प्रोक्तमीषच्चान्यत्र वर्त्तते॥

[1][शौचमाचमनम्।] रेतोमूत्रशकृन्मोचे भोजनाध्वगमनेषु यथोक्त[2]सर्व्वाङ्गोपेताचमननियमः। उक्तपञ्चनिमित्तादन्यत्र किञ्चि-दङ्गसहितानुष्ठानेऽप्यवैगुण्यम्। यद्यपि नित्यत्वेन यथाशक्त्यङ्गोप-संहारः सिद्ध एव तथापि वचनात् शक्तिकृताङ्गहानेऽप्यवैगुण्यम्। केवलम्,—

शिरः प्रावृत्य कण्ठञ्च मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥

इति व्यासवचनात्। तथा,—विना यज्ञोपवीतेन, बहिर्जानु-रेकहस्तार्पितैर्जलैः सोपानत्कस्तिष्ठन्नैव शुद्धिमवाप्नुयादिति भविष्य-पुराणादिति।

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः।
आचान्तः शतकृत्वोऽपि नैव शुद्धिमवाप्नुयात्॥

इति च। एतेषामङ्गानां सर्व्वत्रावश्यकत्वमित्याहुः। अङ्गाना-चरणनिन्दाया अर्थवादत्वेन कथमेवमिति विचारणीयम्। [इत-राङ्गाणां शक्तावपि त्यागो बद्धशिखत्वादीनामशक्तौ त्यागेन दोष इति वा।][3]

(१) D. Omits the portion bracketed. (२) A. B. C. सर्व्वाङ्गाचमन ०।
(३) B. D. Omit the portion bracketed.

## अथाचमनानुकल्पाः।

आपस्तम्बः,—स्वप्ने क्षवथौ [1]सिङ्घाणिकालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा[2][अमेध्यञ्चोपस्पृश्याप्रयतं मनुष्यं नीवीञ्च परिधाय अप उपस्पृशेत् [3]आर्द्रं वा शकृत् ओषधिं भूमिं वा। उक्तनिमित्तेष्वाचमनासम्भवे आर्द्रगोमयस्पर्शनम्। तदभावे आर्द्रतृणस्पर्शनम्। पराशरः,—

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥
प्रभासादीनि तीर्थानि] गङ्गाद्याः सरितस्तथा।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत्॥
आदित्यो वरुणः [4]सोमो वायुरग्निस्तथैव च।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः॥

एतद्वाक्यशेषात् सर्व्वत्राचमननिमित्ते दक्षिणकर्णस्पर्शनमनुकल्पः। [5]एषु निमित्तेष्ववश्यमनुकल्परूपणमिति वाक्यान्तरेणाचमनस्यैव विधानात्। दन्तश्लिष्टेचाचमनविध्यभावात् कर्णस्पर्शनं मुख्यम्।

---

(१) D. सिङ्घाणिकाश्रुलम्भे ०।

(२) D. Omits the portion bracketed.

(३) B. आर्द्रञ्च वा शकृत् ०।

(४) B. C. D. ० सोमः वह्निर्वायुस्तथैव च।

(५) A. B. C. एषु च निमित्तेष्ववश्यमनुकल्परूपमिति वाक्यान्तरेणाचमनस्यैव विधानात्। दन्तश्लिष्टेत्वाचमनविधानाभावात् कर्ण ०

मार्कण्डेयपुराणे,—

क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेद् बुधः।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्॥
कुर्व्वीतालम्भनं [1]वापि दक्षिणश्रवणस्य च[2]।
अविद्यमाने पूर्व्वोक्ते उत्तरप्राप्तिरिष्यते॥

क्षुतष्ठीवनवस्त्रपरिधानेषु प्रथमकल्प आचमनम्। तदसम्भवे गोपृष्ठस्पर्शनम्। तदसम्भवे सूर्य्यदर्शनम्। तस्याप्यसम्भवे दक्षिणकर्णस्पर्शनमिति। [3][ यत्तु ] स्मृत्यन्तरे,—

गङ्गा वै दक्षिणे कर्णे नासिकायां हुताशनः।
[4]उभावपि च स्पृष्ट्वा तत्क्षणादेव शुद्ध्यति॥

इति तदुक्तनिमित्तादन्यत्राचमनानुकल्परूपमित्याहुः।

क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने।
कर्म्मस्थ एषु नाचामेद् दक्षिणं श्रवणं स्पृशेत्॥

इति रत्नाकरलिखितवाक्यात् कर्म्ममध्ये एषु नाचमनं कर्णस्य स्पर्शनं [5]मुख्यकल्पः।

---

(१) D. ० चापि ०।
(२) A. D. ० तु।
(३) D. Omits the portion bracketed.
(४) B. उभावपि तु ०।
(५) D. अनुकल्पः।

## अथाचमनापवादाः।

अत्राङ्गिरसौ,—

मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च।
नोच्छिष्टस्तु भवेद् विप्रो यथावेदवचनं तथा॥

अत्राप्स्विति प्राणाहुतिसाहचर्य्यादापोशानविषयमिति लक्ष्मीधरः। तदन्यजलपाने '(१)त्वाचमनम्। शातातपः,—

दन्तलग्ने फले मूले भक्ष्यस्नेहे तथैव च।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः॥

फले मुखशुद्धार्थे कटुतिक्तकषायादौ। (२)अत्र शुद्धर्थमाचमनं नास्ति। नैमित्तिकं स्यादेव। अतएव भट्टाः,—परस्परस्पृष्टताम्बूलभक्षणं तदवसानानाचमनञ्च दुराचार इत्याहुः। गौतमः,—दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षात्। प्राक्च्युतेरित्येके। च्युतेरास्रावववन्निगिरन्नेव तत् शुचिः। अत्र च जिह्वाभिमर्षणात् यावज्जिह्वया दन्तेभ्यो भेदो नोपलभ्यत इत्यर्थः। सत्यपि जिह्वाभिमर्षणे यावन्न च्यवति तावत् शुचिरित्येके मन्यन्ते। च्युतेरास्रावववत् लालावत्। निगिरन्नेव तत् शुचिः। देवलः,—

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्।
दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्॥

वशिष्ठः,—न श्मश्रुगतलेपः। अशुचिरित्यर्थः। तथा,—यश्चाप्यन्तर्मुखे आचान्तस्यावशिष्टं निगिरन्नेव तत् शुचिः। आचा-

(१) D. ऽप्याचमनम्।

(२) D. मुखशुद्धार्थे अत्राचमनं नास्ति।

न्तस्य यदवशिष्यते मुखे दन्तलग्नातिरिक्तमपि तदपि निगिरन्नेव शुचिरित्यर्थः। पैठीनसिः,—भूमिगता विन्दवः परामृष्टाः पूताः। विप्रुषः शुद्धाः। द्वौरोमक्लिन्नेष्वाचामेत्। विन्दवः आचमनविन्दवः। परामृष्टाः स्पृष्टाः। पूता '[1]नाप्रयत्यहेतवः। अङ्गे पतिता अपि रोमद्वयार्द्रभावमापादयितुं समर्था एवाचमननिमित्तं भवन्ति। याज्ञवल्क्यः,—

सुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः।
श्मश्रु चास्यगतं दन्तश्लिष्टं त्यक्त्वा ततः शुचिः॥

मनुः,—

स्पृशन्ति विन्दवः पादौ य आचामयतः परान्।
भूमिगास्ते समाज्ञेया न तैरप्रयतो भवेत्॥

वृहस्पतिः,—

प्रचरन्नन्नपानेषु यदोच्छिष्टमुपस्पृशेत्।
भूमौ निधाय तद् द्रव्यमाचान्तः प्रचरेत् पुनः॥
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दूष्यति॥
शौचन्तु प्रथमं कुर्य्यात् पादौ प्रक्षालयेत् ततः।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्॥

मनुः,—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥

---

(१) D. नाप्रत्ययहेतवः।

इदमन्नव्यञ्जनादिव्यतिरिक्तद्रव्यविषयमिति विश्वरूपः।

इत्यग्निचिद्-वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे
[1]आचमनकल्पः।

---

## दन्तधावनम्।

वृद्धशातातपः,—

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद् दन्तधावनम्॥

अत्र भक्षयेदिति पूर्व्वोक्ताचमनरूपभक्षणधर्म्मप्राप्त्यर्थमिति लक्ष्मीधरः। यद्यपि भोजनस्य दृष्टार्थस्याचमनं नाङ्गं [2]तथाप्य-दृष्टार्थप्राणाहुत्यङ्गत्वादतिदेशः। छन्दोगपरिशिष्टे,—

नारदाद्युक्तवार्क्षयमष्टाङ्गुलमपाटितम्।
सत्वचं दन्तकाष्ठं स्यात् तदग्रेण प्रधापयेत्॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्॥
आयुर्बलं यशो वर्च्चः प्रजापशुवसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो धेहि वनस्पते॥

---

(१) B. आचारकल्पः। D. आचमनानुकल्पः।
(२) C. तथापि दृष्टार्थे०।

नारदेति नारदशिक्षाग्रन्थोक्तवचनसम्भवम्। नारदः,—

आम्रपालाशबिल्वानामपामार्गशिरीषयोः।

वदरस्य कदम्बस्य करवीरकरञ्जयोः॥

सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः।

[1]नरसिंहपुराणे,—

खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा।

तिन्तिड़ी [2]वेणुपृष्ठश्च आम्रनिम्बौ तथैव च॥

अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा।

तथा,—

अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते।

प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत्॥

विष्णुः,—न दक्षिणापराशामुखः। उदङ्मुखः प्राङ्मुखो वा। वटाशनार्क-खदिरकरञ्ज-करवीर-सर्ज्जारिमेदापामार्गमालतीवकुल-कुरुविन्दानामन्यतमं कषायं कटुतिक्तं वा कनीनिकाग्रौल्यं सकूर्चं द्वादशाङ्गुलं

प्रातर्भुक्त्वा च यतवाक् भक्षयेद् दन्तधावनम्।

हारीतः,—काले पालाशकोविदारश्लेष्मातकतिल्वकशाकतृच-शिखण्डीवेणुवर्जम्। प्लक्षमासकवदरीकरञ्जशम्यशनकानीत्येके। दधित्थहरीतक्यश्वकर्णशालाशनकानीत्यपरे। बिल्वखदिराम्र-पालाशशिरीषापामार्गाणामेकतममनार्द्रं नातिशुष्कं नातिस्थूलमा-

(१) C. D. नारसिंह०।

(२) C. ०वेणुवेतश्च आम्रबिल्वौ तथैव च।

पोथिताग्रमनोष्ठग्रन्युदङ्मुखो वाग्यत आसीनो दन्तकाष्ठं भक्ष-येत्। काले उषःकाले। तिल्वकः बिल्वकः। शाकवृक्षः शागवन इति प्रसिद्धः। शिखण्डी मयूरशिखा। दधित्थः कपित्थः। एके अपरे इत्युभयत्रापि [1]वर्जयित्वेति शेषः। पलाशः आम्रातक-वृक्षः। आर्द्रं सद्यश्छिन्नं ततोऽन्यदनार्द्रम्। आपोथिताग्रमीष-च्चूर्णिताग्रम्। अनोष्ठग्रन्थि दन्तधावनकाले ओष्ठसमीपग्रन्थि-रहितम्। विष्णुः,—न पालाशं दन्तधावनं स्यात्। न श्लेष्मातका-रिष्टविभीतकधवधन्वनवर्ज्यम्। न कोविदारशमीपीलुपिप्पलेङ्गुद-गुग्गुलवर्ज्यम्। बन्धुकनिर्गुण्डीतिलतिलुकवर्ज्यम्। न पारिभद्रा-म्लिकामोचशाल्मलीषणवर्ज्यम्। न मधुरम्। नार्द्रं नोर्द्धशुष्कम्। न शुषिरम्। न पूतिगन्धम्। न पिच्छिलम्। दन्तकाष्ठं भक्षये-दित्यर्थः। धन्वनः धमनः। पीलुः गुड़फलः। पारिभद्रः पाल-घोणा इति प्रसिद्धः। अम्लिका तिन्तिड़ी। ऊर्द्धशुष्कं वृक्ष एव शुष्कम्। शुषिरं छिद्रयुक्तम्। अशनः असन इति प्रसिद्धः। महाभारते,—

प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा [2]जान्वन्तरान्ततः॥
क्षीरिणो वृक्षगुल्माया भक्षयेद् दन्तधावनम्।
त्यज्यं सपत्रमच्चात[3]मूर्द्धशुष्कञ्च पाटितम्॥

---

(१) D. वर्जयित्वेत्यर्थः।
(२) D. ० जान्वन्तराहतः।
(३) A. ० मूर्द्धशुष्कमपाटितम्।

त्वग्घीनं ग्रन्थिमुखं तथा पालाशशीर्णपम्।
ऋजु वितस्तिमात्रञ्च कीटाग्निभिरदूषितम्॥

विद्याकरपद्धतौ,—

गुवाकस्तालहिन्तालौ तथा ताड़ी, च केतकी।
खर्जूरं नारिकेलञ्च सप्तैते तृणराजकाः॥
तृणराजपलाशैश्च न कुर्य्यात् दन्तधावनम्।

तथा,—

इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा।
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम्॥

उशना,—नाङ्गुलीभिर्दन्तान् प्रक्षालयेत्। अत्र ये क्षीरिणः कण्टकिनः प्रतिषिध्यन्ते तत्र विहितनिषेधे विकल्पापत्तेः पर्य्युदासः। एवं तिक्तकटुकषायाणां येषां निषेधस्तेषां पर्य्युदासः। तेनैतेषां निषेधाभावाद् विहितासम्भवे प्रतिनिधित्वेनोपादानम्। ये तु न क्षीरिणो न कण्टकिनो न तिक्तकटुकषाय[1]सुगन्धिनस्तेषां प्राप्त्यभावात् प्रतिनिधित्वेन प्राप्तानां प्रतिषेधः। यथा व्रीहि-यवविधानादेव माषनिवृत्तौ [2]अयज्ञिया माषा इति निषेधः प्रतिनिधिप्राप्तिविषयः। [3]तेनैषां न प्रतिनिधित्वेनापि ग्रहणम्। पालाशे तु विशेषतः

आसनं शयनं यानं पादुके दन्तधावनम्।
वर्जयेद् भूतिकामस्तु पलाशं नित्यमात्मवान्॥

---

(१) A. D. ॰ दुर्गन्धय ॰। (३) D. तेनैतेषां ॰।
(२) D. अयज्ञिया वै माषा ॰।

आसनादिसाहचर्य्यात् कषायचीरित्वेऽपि न पर्य्युदासः। किन्तु निषेध एवेति न प्रतिनिधित्वमपि। पारस्करः,—दन्तप्रक्षालनादीनि नित्यमपि अन्नाद्यायेतिमन्त्रस्तु न दन्तधावनाङ्गम्। छन्दोगपरिशिष्टे तु परिजप्य च मन्त्रेणेति काष्ठसंस्कारत्वेन मन्त्रजपविधिरिति भिन्नार्थत्वाद् द्वयोः समुच्चयः। विष्णुः,—

प्रक्षाल्य भंक्त्वा तज्जह्यात् शुचौ देशे प्रयत्नतः।

महाभारते,—

प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत्।
पतितेऽभिमुखे सम्यक् भोज्यमाप्नोत्यभीप्सितम्॥
ऐश्वर्य्यभङ्गमाप्नोति क्षिप्ते तदशुचौ भुवि।

नरसिंहपुराणे,—

प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैव सत्तमाः।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥
अलाभे दन्तकाष्ठस्य प्रतिषिद्धे तथा दिने।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति॥

अत्र दन्तकाष्ठकार्य्ये मुखशुद्धौ गण्डूषविधाने परिधौ पशुं नियुञ्जीतेति यूपकार्य्ये पशुनियोजने परिधिविधौ [1]पशुयूपनिवृत्तिवत् [2][दन्तकाष्ठनिवृत्तौ प्रतिपदादितिथिषु दन्तकाष्ठनिन्दा गण्डूषप्ररोचनार्था। न च प्रतिषिद्धे दिने इति वचनात् प्रतिषेध एवायम्। अर्थान्निवृत्तौ प्रतिषेधवैयर्थ्यात्। [3]गिरा गिरेति ब्रूयादैरं कृत्वोदेय-

(१) C. यूपनिवृत्तिवत्।
(२) C Omits the portion bracketed.
(३) A. गिंगिरा०।

ष्मिति गिरापदविधानादेव गिरापदे निवृत्ते गिरापदनिषेधस्यार्थवादत्ववत्।] तेन संक्षेपेणार्थवादोक्ततिथिचतुष्टयानुवादार्थं प्रतिषिद्धपदम्। न च मुख्यार्थंदन्तधावने काष्ठनिषेधपरमिदं वचनम्। नित्यदन्तधावनप्रकरणे बाधापत्तेः। (१)यदि तु,—

कुह्वष्टम्योर्नवम्याञ्च पञ्चाद्यौ दन्तधावनम्।
पर्णैरन्यच काष्ठैः स्याद् जिह्वोल्लेखः सदैव हि॥

तत्र पत्राणां धावनसाधनत्वं गण्डूषेण सह (२)वैकल्पिकमुच्यते। तत्र व्यक्तं काष्ठस्यान्यदिनविषयत्वं न निषेधः। तेन प्रतिपदादिषु काष्ठेनापि सुखार्थंदन्तधावने भोजनोत्तरादृष्टार्थंदन्तधावने वा न कश्चिद्दोषः। यच्च महाभारते,—

भक्षयेच्छास्त्रदृष्टानि पर्व्वस्वपि च वर्जयेत्।

इति (३)तत्रायं पञ्चपर्व्वसु शास्त्रदृष्टानीतिपदोक्तकाष्ठानां प्रतिषेध इति। न दन्तधावनप्रतिषेधः। तेन पर्व्वसु गण्डूषैरेव सुखशुद्धिः। प्रतिषिद्धे तथा दिन इति (४)नरसिंहपुराणे स्मृत्यन्तरोक्तप्रतिषिद्धदिनस्यापि ग्रहणात्। यद्यपि स्मृत्यन्तरे,—

श्राद्धे जन्मदिने चैव विवाहे सुखदूषिते।
व्रते चैवोपवासे च वर्जयेद् दन्तधावनम्॥
न भक्षयेद्दन्तकाष्ठमेकादश्यां नरेश्वर।
आदित्यदिवसे चैव तस्मादेनो महद् भवेत्॥

---

(१) A. यत्तु ० D. यदि,—कुह्व ०।
(२) A. ० विकल्प ० D. ० वैकल्प ०।
(३) A. D. तत्रापि ०।
(४) D. नरसिंहपुराणोक्तस्मृत्यन्तरोक्त ०।

इत्यत्रापि कर्म्माङ्गत्वेन दानहोमादिप्रतिषेधवत् श्राद्धाद्यङ्गत्वेन दन्तधावनं काष्ठकरणकं प्रतिषिध्यत [1]इति वचनविहितनिषेधे विकल्पापत्तिभयेन सुखार्थदन्त[2]धावनस्य निषेधकल्पना। अतएव,—

व्रतोपवासदिवसे खादित्वा दन्तधावनम्।
गायत्रीशतसंपूता अपः प्राश्य विशुध्यति॥

इति कर्म्माङ्गभ्रंशत्वे प्रायश्चित्तम्। एवञ्च भोजनोत्तरदन्तधावनस्यापि तत्र निषेधः। सुखार्थदन्तधावनस्य भोगत्वादेव निषेधः। सर्व्वभोगविवर्जित इति वचनात्। अत्र दन्तधावनस्य प्रायत्याख्यकर्म्माधिकारसम्पादकादृष्टसिद्धार्थत्वात् तदङ्गानां तदुपकारकत्वात् तद्भ्रंशे वैगुण्यं नाधर्म्मः। नित्यकर्म्मान्तरवदशक्तिकृताङ्गहानेऽपि फलोदयात्। एवमाचमनाङ्गानामपीत्युक्तम्। तद्विधिः,—प्राङ्मुखतयोदङ्मुखतया वोपवेशनम्। हस्तपादमुखक्षालनम्। आचमनम्। जान्वन्तःस्थदक्षहस्तेन दन्तकाष्ठधारणम्।

आयुर्बलं यशो वर्चः प्रजापशुवसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो धेहि वनस्पते॥

इति काष्ठाभिमन्त्रणम्।

अन्नाद्याय व्यूहध्वं सोमो राजा यमागमत्।
स मे मुखं प्रमार्क्ष्यते यशसा च [3]बलेन च॥

---

(१) A. D. इति च विहित॰ D. इति च विहितप्रतिषेधे विक॰।
(२) D ॰धावन इत्यस्य निषेधकल्पना।
(३) A. ॰ भगेन च।

इति मन्त्रमुपांशु पठित्वा दन्तघर्षणम्। काष्ठं चालयित्वा भंक्त्वा सम्मुखशुचिदेशे पातनम्। काष्ठान्तरेण जिह्वोल्लेखः। तोय गण्डूषैर्वहुशो मुखचालनम्। आचमनम्। दन्तकाष्ठं प्रत्याम्नात-त्वेन गण्डूषकरणे सकृदेवाभिमन्त्रणम्। न प्रतिगण्डूषम्। मन्त्रस्य साधनसंस्कारत्वाद् द्वादशसंख्यावच्छिन्नस्य गण्डूषस्य च साधन-त्वात्। तत्र वनस्पतिपदस्य वृक्षपरस्य काष्ठे गौणत्वेऽपि साधन-स्वरूपपरित्यागात् प्रकृतौ धान्यमसीति मन्त्रस्य तण्डुलपरत्वेऽपि तरसैर्मां समसीत्यूहवत् जलगण्डूष इत्यूहः कर्त्तव्यः। न च जप-स्यार्थानपेक्षणात्रोहः। द्वितीयाश्रुत्या काष्ठस्य मन्त्रसंस्कार्य्य-त्वादर्थज्ञानरूपदृष्टद्वारेव मन्त्रस्य काष्ठसंस्कारत्वम्। धावनमन्त्र-स्त्वविकृत एव प्रयोक्तव्यः। अत्र पांशुरादीनां फलत्वं यद्यपि मन्त्रवर्णात् कल्पितं तथापि मन्त्रस्य नित्यवदाम्नानात् तत्कामना-विरहेऽप्यनुष्ठानम्। तथा च षष्ठे,—तथा भक्षप्रैषाच्छादनसंज्ञप्त-होमद्वेषमित्यत्राधिकरणे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति मन्त्रः द्वेष्याभावेऽपि नित्यवदाम्नानात् प्रयोक्तव्य इति। न च कामनाविरहेऽपि मन्त्रलिङ्गोक्तफलं किं न स्यादिति वाच्यम्। मन्त्रस्य [1]स्वयमप्रमाणत्वेन विध्यनुमानद्वारा तथात्वम्। विधिश्च प्रवर्त्तनारूपो नाकाम्यसाधने प्रवर्त्तयितुं शक्नोतीति कामनायां सत्यामेव फलम्। यथा मुमुक्षोरग्निहोत्राद्यनुष्ठानेऽपि न स्वर्गादि-फलं कामनाविरहात्। यथा वा योगसिद्धौ फलान्तरस्य।

---

(1) D. स्वयमप्रमाणत्वेऽपि न विध्यनु०।

विष्णुपुराणे,—

स्नाचान्तश्च ततः कुर्य्यात् पुमान् केशप्रसाधनम्।
आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च॥

मनुः,—

मैत्रं प्रसाधनञ्चैव दन्तधावनमञ्जनम्।
पूर्व्वाह्न एव कुर्व्वीत देवतानाञ्च पूजनम्॥

देवीपुराणे,—

नेत्राञ्जनं निषेवेत्तु दन्तधावनपूर्व्वकम्।

अत्र दन्तधावनानन्तरं केशप्रसाधनम्। तदनन्तरमञ्जनग्रहणम्। आदर्शादि पश्चात्। अञ्जनं सौवीराञ्जनमिति लक्ष्मीधरः। स्नातकधर्म्मत्वाच्च नित्यम्। अत्रैव वैद्यशास्त्रोक्ताञ्जनान्तरग्रहणमित्याहुः।

इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे
दन्तधावनप्रकरणम्। श्रीः।

---

ततः सम्यगरुणकिरणदर्शने प्रातःस्नानम्। दक्षः,—

लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः॥
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम्।

¹[ तथा च—योगियाज्ञवल्क्यः,— ]

अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम्।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्॥

दृष्टं मलापनयनद्वारा शुद्धिः। अदृष्टं नित्याचरणात् पापक्षयः।

विष्णुः,—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्व्विचिन्तितम्।
अस्नातेनाभिषिक्तस्य नश्यन्तीति च धारणा॥

कालकर्णी दुःसहदुरिता बालविधवा। दुर्व्विचिन्तितं स्वानिष्ट-चिन्तनम्। अस्नातेन उद्धृतानुद्धृतसाधारणेन।

याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः॥

शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम्॥
अस्नातस्तु पुमान् नार्हो जप्याग्निहवनादिषु।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम्॥

---

(१) A. D. Omit the portion bracketed.

छन्दोगपरिशिष्टे,—

> यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः।
> दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत् तदमन्त्रवत्॥
> अत्यन्ताद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः।
> प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः॥

यथाहनीति मध्याह्नस्नाने कर्त्तव्यतानिर्देशः। दन्तान् प्रक्षाल्येति दन्तधावनस्य प्रायत्यार्थत्वात्

> कृतार्थयोस्तु संयोगे देशकालोपलक्षणम्।

इति दन्तधावनानन्तर्य्यं प्रातःस्नानस्योक्तम्। अनातुरः स्नानवर्द्धिष्णुरोगरहितः। गृहे चेदिति तत्प्रातःस्नानं यदि केनचिन्निमित्तेन गृहे क्रियते तदा स्नानाङ्गमन्त्ररहितम्। अन्तर्जलजपमन्त्रः स्यादेव। न च साङ्गस्नानस्य मन्त्रनिवृत्तिः कथन्नेति वाच्यम्। तच्छब्दवैयर्थ्यभयेन प्रधानमात्र[1]परामर्षितच्छब्देन प्रधानमात्रे मन्त्राधानविधेः। एवञ्च प्रातःस्नानं नद्यादौ गृहे वोद्धृतोदकेनेति विकल्पः। तथा च दक्षः,—सन्ध्यास्नानमुभाभ्यान्तु। सन्ध्यास्नानं प्रातःस्नानम्। उभाभ्यामुद्धृतानुद्धृताभ्याम्। प्रातर्न तनुयादिति प्रातःसंक्षेपविधिना स्नानं कुर्य्यात्। विस्तारे होमलोपप्रसङ्गादतिविस्तरनिन्दया संक्षेपस्तुतिः। तथा च व्यासः,—

> प्रातःसंक्षेपतः स्नानं होमार्थं तद् विधीयते।
> सन्ध्याचविधिनिष्पाद्यं मध्याह्ने तत् सुविस्तरम्॥

---

(1) D. ॰परामर्षिततच्छब्देन प्रधानमात्रेषु मन्त्राभावविधेः।

अत्रापि होमार्थं तद्विधीयत इत्यर्थवादः। यथा जामिवा एतद् यज्ञे क्रियते यदन्यथैव पुरोडाशावुपांशुयाजमन्तरा यजतीति पुरोडाशद्वयनैरन्तर्य्यदोषसमाधानार्थत्वेनान्तरोपांशुयाजविधौ दोषसमाधानस्यार्थवादत्वेनैकपुरोडाशीया(ना)मप्युपांशुयाजप्रवृत्तिः।

तथेह [1]होमार्थत्वस्यार्थवादत्वान्निरग्नेरपि प्रातः संक्षेपविधिः। न च वाक्यशेषेण साग्निविषयत्वनिर्णयः सन्देहाभावात्। एवञ्च प्रातःसंक्षेपविधिरेव। मध्याह्ने विस्तराशक्तस्य संक्षेपविधिः। एवं काम्येऽपि तीर्थस्नानादौ विस्तराशक्तस्य संक्षेपविधिरनुकल्पः। अनुकल्पस्याप्यतिदेशात्। अयन्तु विशेषः,—काम्ये विस्तरविधिसामर्थ्ये संक्षेपकरणे न फलम्। नित्ये तु विस्तरसामर्थ्येऽपि संक्षेपकरणे प्रत्यवायाभावः। किन्तु न पापक्षयरूपफलम्। प्रभुः प्रथमकल्पस्येत्यत्र दुर्म्मतेर्विद्यते फलमिति [2]फलाभावस्य कथनात्। तथा च स्मरन्ति,—

स्नातस्य वह्नितप्तेन तथैव परवारिणा।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्॥

योगियाज्ञवल्क्यः,—

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥

उषस्यरुणोदये। सन्ध्यायां सूर्य्योदयात्प्राक्। एवञ्चोदिते

(१) D. होमार्थस्यार्थ०।

(२) C. फलाभावकथनात्।

रवावित्यनुकल्पः। विष्णुः,—प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति। [ अत्र च

य इच्छेद् विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥

इति विष्णूक्तं मासद्वयविहितं प्रातःस्नानम्। यच्च—

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः।

इति प्रातःस्नानम्। यच्च—

प्रातःस्नात्वा मुनिश्रेष्ठ शिवतीर्थेषु मानवः।
अश्वमेधफलं प्राप्य रुद्रलोकञ्च गच्छति॥

इति काम्यतीर्थस्नाम्। एवमादिषु प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति ][1] विष्णुना सर्व्वतः स्नानोद्देशेनारुणोदयकालविधानात् प्रातःस्नानादूर्द्धं सन्ध्यातः पूर्व्वमनुष्ठानम्। न तु काम्यस्नानं नित्यस्य बाधकं गोदोहचमसवदेकद्वारत्वाभावात्। दर्शपूर्णमासात् पूर्व्वप्रयुक्तप्रणयननिवृत्तिर्गोदोहचमसयोर्द्वारम्। तत्रावश्यमेकस्य बाध्यत्वमिति सावकाशदूरफलत्वाभ्यां चमसबाधः। नचेह तथा द्वारं किञ्चिदस्ति द्वयोरदृष्टार्थत्वात्। किञ्च प्रातःस्नानस्य शरीरशुद्धिद्वारा कर्म्माधिकारसम्पादकत्वात् काम्यस्नानान्तरस्यापि [2]प्रातःस्नानानन्तरमेव काल इति कालभेदान्न काम्यनित्यप्रातःस्नानयोस्तन्त्रेणानुष्ठानसम्भवः। न च—

(१) A Omits the portion bracketed.

(२) D. काम्यप्रातःस्नानाकरणे सूर्य्योदयावच्छिन्नपक्षपसन्ध्यावध्यापत्तेः। सन्ध्यानन्तरमेव काल इति कालभेदाच्च काम्यनित्यप्रातःस्नानयोस्तन्त्रेणानुष्ठानसम्भवः।

सन्ध्याहीनोऽशुचिर्विप्रो ह्यनर्हः सर्व्वकर्म्मसु।

इति वचनात् सन्ध्योत्तरं काम्यप्रातःस्नानप्रसङ्गः। सन्ध्यायाः सूर्य्योदयावधित्वात् सूर्य्योदयोत्तरकालीनकर्म्मणामेव सन्ध्योत्तरत्वाधिकारसम्पादकत्वात् सूर्य्योदयात् पूर्व्वं सन्ध्यां कृत्वा [काम्य][1] प्रातःस्नानकरणे सूर्य्योदयावधिजपरूपसन्ध्याबाधापत्तेः सन्ध्याहीनत्वेन सुतरामनधिकारः। नचाग्निहोत्रवन्निरवकाशत्वम्।

सन्ध्याकर्म्मावसाने × स्वयं होमो विधीयते।

इत्यादिवाक्यान्तराद्धोमस्य सन्ध्योत्तरत्व[2]वदिह तथावचनाभावेन सन्ध्याबाधकत्वाभावात् सन्ध्यातः पूर्व्वमेवानुष्ठानम्। नित्यकाम्याग्निहोत्रयोरेककर्म्मत्वात् स्वर्गार्थमग्निहोत्रकरणकालेऽग्निहोत्रकरणाभावस्य प्रत्यवायहेतोरभावात्। तत्कालेऽन्यकरणाभावाद्वा प्रत्यवायाभावो नतूपात्तदुरितक्षयरूपं नित्याग्निहोत्रफलं योगसिद्ध्यधिकरणविरोधादित्युक्तमेव। एवं माघस्नानमप्यनुदिते रवाविति पद्मपुराणवचनात् सन्ध्यातः पूर्व्वं प्रातःस्नानादूर्द्ध्वमनुष्ठानम्। यत्तु,—

कार्त्तिकं सकलं मासं [3]वह्निःस्नायी जितेन्द्रियः।
जपन् हविष्यभुग् दान्तः सर्व्वपापैः प्रमुच्यते॥

इति विष्णूक्तं काम्यस्नानम्। तस्य प्रातःकालविध्यभावात्

(1) D. Omits the portion bracketed.

(2) D. ० वदितरथा वचनाभावेन सन्ध्याबाधकत्वासम्भवात् ०।

(3) D. ० प्रातःस्नायी ०।

मार्कण्डेयः,—

भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम्।
ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्॥
तीर्थतोयं [1]ततः पुण्यं महानद्यम्बु पावनम्।
ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः॥

शङ्खः,—

सर्व्वे प्रस्रवणाः पुण्याः सर्व्वे पुण्याः शिलोच्चयाः।
नद्यः पुण्याः सदा सर्व्वा जाह्नवी च विशेषतः॥

भविष्यपुराणे,—

भास्करायतनाभ्यासे यत्तोयं पुरतः स्थितम्।
सूर्य्यगङ्गेति [2]तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत्॥

तथा,—

शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।
शिवगङ्गेति [3]तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत्॥

[4]तथात्राविशेषोपादानात् कृत्रिमस्यापि जलस्य सूर्य्यगङ्गात्वं शिवगङ्गात्वञ्च। अत्र [5]जलसामीप्यं पुरस्थत्वञ्च सूर्य्यगङ्गात्वं शिवगङ्गात्वञ्च। यत्तु,—

---

(१) A. ० महापुण्यम् ०।
(२) C. ० संज्ञेयं ०।
(३) C. ० संज्ञेयं ०।
(४) A. तत्राविशेषो ० D. यत्राविशेषो ०।
(५) C. जलसामीप्ये ०।

शिवलिङ्गसमीपस्था नद्यः सर्व्वाश्च भारत।

वापीकूपतड़ागाश्च शिवतीर्था इति स्मृताः॥

इति तत्रापि पुरस्थत्वं बोध्यं सामान्यस्य विशेषे उपसंहारात्। योगियाज्ञवल्क्यः,—

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः।

समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः॥

एवं देश्यां त्रिंशत्सहस्रजलधिगतनदीस्नानमन्योन्यतुल्यम्। विद्याकरपद्धतौ,—

नदीस्नानमवाप्नोति स्नातः सेतुजलाशये।

बाहुखाते जले स्नातो गङ्गास्नानमवाप्नुयात्॥

अत्र नद्यादीनां स्नानाङ्गत्वेन विधानेऽपि त्रिरात्रफलदा इति संयोगपृथक्त्वेन गुणफलसम्बन्धः। खादिरो यूपो भवतीत्युक्ते खादिरं वीर्य्यकामस्येतिवत्। यद्यपि मध्याह्नस्नान एव गुणफल-सम्बन्धो न तद्विकारे प्रातःस्नाने गुणफलस्यानतिदेशात्। तथापि भाष्यकारमते तस्मिंस्तु प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तते इति नीत्या भवत्येव गुणफलम्। वार्त्तिककारमते नास्ति। अत्र यद्यपि स्नानस्याकृत्रिमे जल इत्यकृत्रिमस्य स्नाना-ङ्गत्वमुक्तं तथापि विष्णुना उद्धृताद् भूमिष्ठमुदकं पुण्यमित्यविशेषेण कृत्रिमाकृत्रिमसाधारणभूमिष्ठमात्रस्याङ्गत्वबोधनात्।

प्रभूते विद्यमाने वा उदके सुमनोहरे।

नाल्पोदके द्विजः स्नायान्नदीञ्चोत्सृज्य कृत्रिमे॥

इति याज्ञवल्क्यवचनात् नद्यादावपि प्रभूतोदकसम्भवे अल्पोदकस्य यथा नाङ्गत्वं [1]एवमकृत्रिमसम्भवे कृत्रिमस्य नाङ्गत्वम्। तेन स्नानत्वाकृत्रिम इति नद्याद्यनुवादो न कृत्रिमनिषेधः। अतएव स्वकारिते तु न विरोध इति लक्ष्मीधरः। विष्णुः,--परनिपानेषु न स्नायात्। आचरेद् वा पञ्चपिण्डानुद्धृत्यापदि। आपदि जलान्तरासम्भवे। अत्र परनिपानपदं परकर्तृकनिपानपरम्। तथा च

मनुः,--

परकीयनिपानेषु न स्नायाद्धि कदाचन।

निपानकर्त्तुः [2]स्नात्वा तु दुष्कृतांशेन लिप्यते॥

योगियाज्ञवल्क्यः,--

परकीयनिपानेषु यदि स्नायात् कदाचन।

सप्तपिण्डान् समुद्धृत्य ततः स्नानं समाचरेत्॥

शङ्खलिखितौ,--स्नायात् तड़ागोदकनिपानकूपेषु सप्त पञ्च च त्रीन् पिण्डानुद्धृत्य देवपितृंश्च तर्पयेत्। बौधायनः,--

स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः।

प्रातरुत्थाय कुर्व्वीरन् देवर्षिपितृतर्पणम्॥

निरुद्धासु न कुर्व्वीरन्नंशभाक् तत्र सेतुकृत्।

तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत्॥

---

(१) D. एवमकृत्रिमजलसम्भवे०।

(२) D. ० स्नानात्तु ०।

उद्धृत्य वापि त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा।
निरुदासु तु मृत्पिण्डान् त्रींस्त्रीनम्बुघटांस्तथा॥

अत्रेयं व्यवस्था,—परकृततडागेषु शङ्खलिखितयोगियाज्ञवल्क्यवचनाद्वा सप्तपिण्डोद्धरणम्। कूपतड़ागातिरिक्तपरकृतजलाशये शङ्खलिखितविष्णुयाज्ञवल्क्यवचनैः पञ्चपिण्डोद्धरणम्। [1][ परकृतकूपेषु पिण्डत्रयोद्धरणम् ] [2]प्रवाहसेतुकरणेन जलाधिक्यं यत्र तत्र मृत्पिण्डत्रयोद्धरणम्। अम्बुघटत्रयोद्धरणञ्च। अत्र च,—

चतुर्विंशाङ्गुलैर्हस्तैश्चतुर्भिर्धनुरुच्यते।
एकधन्वादितुर्य्यान्तं कूपमानमुदाहृतम्॥
शतधन्वन्तरा वापी पुष्करिणी चतुर्गुणा।
सहस्रेण तड़ागः स्यादयुतेन तु सागरः॥

इत्युक्तलक्षणाः कूपादयः। एवं परकृतेषूत्सृष्टेष्वनुत्सृष्टेषु निषेधपिण्डोद्धरणे। इह च निपानकर्त्तुर्दुष्कृतांशभागित्वदोषस्यार्थवादत्वं परकृतनिपानस्नानाङ्गत्वेन पिण्डोद्धरणं विधीयते। [3]अत्र दानदोषजलोदरकीर्त्तनस्य वारुणचतुःकपालविधिप्ररोचनार्थवदित्याहुः। वस्तुतो मनुना स्नानप्रकरणाद् वहिरेव स्नातकव्रतप्रकरणे [4]परकीयनिपानेषु स्नानं [5]निषिध्य तद्-

(१) C. Omits the portion bracketed.

(२) D. प्रवाहविरोधार्थं सेतुकरणेन ०।

(३) A. C. अत्रदान ०।

(४) A. D. ० परकृत ०।

(५) D. निषिद्ध्यते दुष्कृत ०।

दुष्कृतभागित्वदोषकथनात् पुरुषार्थोऽपि निषेधोऽस्ति। तेन क्रतुमध्येऽनृतवदनेकक्रत्वर्थपुरुषार्थनिषेधद्वयातिक्रमवत् वैधस्नाने परकृतजले कृते स्नानाङ्गनिषेधातिक्रमवत् पुरुषार्थनिषेधातिक्रमोऽप्यस्ति तदुभयसमानार्थत्वेन पिण्डोद्धरणविधिः। तथा च योगियाज्ञवल्क्यः पिण्डोद्धरणं विधायाह,—

अनुद्धृत्य तु यः कुर्य्यात् परकीयजलाशये।
वृथा स्नानफलं तस्य कर्त्तुः पापेन लिप्यते॥

स्नानवैगुण्यं [1]पुरुषदोषं च पिण्डोद्धरणाभावे दर्शयति। अर्थात् पिण्डोद्धरणं तदुभयदोषसमाधानार्थमित्युक्तं केवलं जलान्तरसम्भवे परकृतजले वैधस्नानकरणे न स्नानफलं न वा पुरुषदोषपरीहारः। [2]शरीरशुद्धिः प्रत्यवायपरीहारश्च स्यादेव। तदुक्तम्,—

स्नातस्य वह्नितप्तेन तथैव परवारिणा।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्॥

एवं संक्रान्तिग्रहणादिनैमित्तिकस्नाने बोध्यम्। कर्म्माङ्गस्नानस्य जलान्तरासम्भवेऽवैगुण्यमेव। जलान्तरसम्भवेऽपि तत्र स्नानधर्म्मानतिदेशात् परकृतेऽपि स्नानस्वरूपनिर्वाहादवैगुण्यमेव पुरुषार्थनिषेधातिक्रमदोषः स्यादेव। निपानकर्त्तुः काशीमरणेन मुक्तत्वे पापाभावे न पुरुषार्थदोषः। स्नानाङ्गपिण्डोद्धरणं

---

(१) D. पुरुषार्थदोषञ्च०।
(२) D. शरीरशुद्धिपरीहारश्च०।

स्यादेव। न च यथैकं युगपत् (१)स्पृशेदेष ते वायो इति ब्रूयादिति प्रायश्चित्तस्य लौकिकस्पर्शविषयत्ववदिह न वैधे दोषः परकृते विध्यभावात्। स्वकृततड़ागादौ विक्रयादिना परकीये कृते नदी-सेतु(२)बन्धादिना गर्त्ते परकीये जाते परकीयनिम्नभूमौ वर्षोदक-पूर्णे च जलस्य परकीयत्वे[(३)ऽपि परकृतत्वाभावान्न] पिण्डोद्धरणम्।

स्नातस्य वह्नितप्तेन तथैव परवारिणा।

इत्यत्र परवारिपदस्य परवारिकृत्रिममकृत्रिमञ्च परेणो-पार्ज्जितमिति लक्ष्मीधरव्याख्यानान्निषेधः। शरीरशुद्धिः प्रत्यवाय-परीहारश्च स्याताम्। नात्र पिण्डोद्धरणम्। योगियाज्ञवल्क्यः,—

न ग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगिताः।
प्रक्षोभिताश्च केनापि याश्च तीर्थादिनिःसृताः॥

प्रथमवेगितानिषेधः शुष्कनदीविषय इति लक्ष्मीधरः। प्रक्षो-भिता हस्तिमहिषादिना। तीर्थादिनिःसृतास्तीर्थादिच्छिन्ना-स्तत्तीर्थागतत्वेनाप्रत्यभिज्ञायमानाः। छन्दोगपरिशिष्टे,—

मासद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्व्वीत वर्जयित्वा समुद्रगाः॥

समुद्रगाः साक्षात्प्रत्यभिज्ञायमानसमुद्रप्रवेशाः। (४)यत्तु,—

---

(१) A. ० स्पृशेदेषते वायो ०।
(२) A. D. ० भङ्गादिना ०।
(३) D. Omits the portion bracketed.
(४) D. यत्तु कालादर्शकारः,—०।

भागीरथी च कालिन्दी नर्म्मदा च सरस्वती।
विशोका च वितस्ता च गौतमी कृष्णवेणिका॥
तुङ्गभद्रा भीमरथी तापी चैव पयोष्णिका।
द्वादशैता महानद्यः [1]प्राणिनः पावयन्ति याः॥

इति वचनात् समुद्रगापदं द्वादशनदीपरमिति तत्र समुद्रगापदस्य प्रसिद्धयोगत्यागेनाप्रसिद्धरूढ़िकल्पनायां मानाभावात्। तथा,—

आदौ कर्कटके नद्यः सर्व्वा एव रजस्वलाः।
त्रिदिनन्तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा॥

इति तेन सर्व्वा इति वचनात् समुद्रगाणामपि त्रिरात्राशुद्धिनं गङ्गायाः शुद्धौ दृष्टान्तत्वेनोपादानात्। ये चान्ये नदसंज्ञका इत्यपवादात् शोणादिनदेषु न रजोदोषः। [2]तत्र स्नाननिषेधस्य सुखार्थस्नानपरत्वे उपाकर्म्मादिष्वपवादवैयर्थ्यापत्तेः। विहितस्नाननिषेधे विकल्पापत्तेरगत्या स्नानप्रकरणाभावेऽपि पर्य्युदासत्वम्। वस्तुतो दर्शप्रकरणेऽनृतवदननिषेधवत् मासद्वयसम्बन्धिस्नानाङ्गत्वेन नदीनिषेधः। [न च विकल्पः[3]।] अनृतवदनवद्विशेषाकारेण मासद्वयस्नानाङ्गत्वेन नदीविध्यभावादिति। तेन लौकिकस्नानादौ न दोषः। रजस्वलाशब्दलिङ्गात् तत्रापि दोष इत्यन्ये। छन्दोगपरिशिष्टे,—

(१) A. D. ० पापिनः ०।
(२) A. D. अत्र ०।
(३) D. Omits the portion bracketed.

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

जलान्तराभावे न रजोदोष इति कालादर्शे। तेन विशेषविधानादवैगुण्यम् ।

अन्त्यजैः खानिताः कूपास्तड़ागा, वाप्य एव च ।
एषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति ॥

इति निषेधस्य पुरुषार्थत्वेऽपि परक्लृप्तत्वेन स्नानवैगुण्यमप्यस्ति जलान्तराभावे स्नाने न फलं प्रत्यवायपरीहारः स्यादेव । पुरुषार्थं प्रायश्चित्तं कार्य्यम् । इह च नद्यादिस्नानाङ्गदेशानां प्रातःस्नानेऽतिदेशेऽपि दक्षेण [1][ सन्ध्या]स्नानमुभाभ्यामित्युद्धृतानुद्धृताभ्यां विकल्पेन विधानादुद्धृतपक्षे औपदेशिकेनातिदेशिकनद्यादिबाधः । विष्णुपुराणे च,—

कूपेषूद्धृततोयेन स्नानं कुर्व्वीत वा भुवि ।

इत्येतदपि प्रातःस्नानपरमेव । यत्तु पद्मपुराणे,—

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् ।

इति तस्य माध्याह्निकस्नानपरत्वेऽप्यनुकल्परूपमेव । तेन प्रातःस्नाने दक्षस्मृत्या समकल्पत्वान्नानुवादरूपता । एवञ्च मज्जनस्य पाक्षिकत्वान्न स्नानशब्दार्थत्वं किन्तु सर्व्वाङ्गजलसंयोग एव स्नानम् । पद्मपुराणे,—अनुद्धृतैरुद्धृतैर्वा स्नानमित्येकस्य स्नानपदस्यानुद्धृतपक्षे मज्जनपरत्वेन मुख्यत्वमुद्धृतपक्षे गौणत्वमिति

(1) C. Omits the portion bracketed.

विरोधात् । तेन सर्व्वाङ्गजलसंयोग एव [1]स्नानशब्दार्थः । [2]अन्तर्जलजपश्च तोयकुम्भेनाभिषिच्यमानस्य स्यादेव । [3]एवञ्च प्रातःस्नानप्रकृतिषु माघस्नानादिषूद्धृतजलस्यापि प्राप्तिः । तथाच स्नानाङ्गमन्त्रलोपोऽप्यतिदेशात् प्रवर्त्तते । प्रातःस्नानातिरिक्तेऽवश्यकर्त्तव्ये ग्रहणादिस्नाने उद्धृतजलस्नानत्वेऽपि प्रतिनिधिन्यायेन क्रियमाणे प्रारब्धकाम्यस्नाने वोद्धृतजलस्नानत्वेऽपि न स्नानाङ्गमन्त्रलोपः । अनारब्धकाम्यस्नानस्य [4]नोद्धृतोदकेन प्रसङ्गः । एवं माध्याह्निकस्नानेऽप्यनुद्धृतासम्भवे भूमिष्ठमुद्धृतात् पुण्यमिति वचनादुद्धृतेनावैगुण्यम् । अनुद्धृतसम्भवे वैगुण्यमेव । अत्र मनुः,—

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

कृतभोजनस्य यदृच्छास्नाननिषेधः । नित्यस्य प्राप्तभावाच्चाण्डालादिस्पर्शनिमित्तकस्यावश्यकर्त्तव्यत्वादिति मेधातिथिः । एवमातुरस्य । महानिशायामनवरतञ्च लौकिकमेव निषिध्यते । अविज्ञात इत्यस्य वैधविषयत्वे विकल्पभयेन पर्य्युदासत्वे [5]दूरस्थुतिलक्षणापत्तेरेव लौकिकविषयत्वम् । अविज्ञातत्वं गाधत्वेन निन्दितविषयत्वेन च । [6]जावालः,—

(१) A. स्नानस्य शब्दार्थः ।
(२) D. अन्तर्जलजपश्चोय ०
(३) D. एवं प्रातः ०
(४) A. नोद्धृतोदके प्रसङ्गः ।
(५) A. C. दूरस्थुति ०
(६) D. जाबालिः,—

त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन॥

शूद्रादीनां यथाक्रमं रागप्राप्तस्य। विद्याकरपद्धतौ,—

दशमी नवमी चैव तृतीया च त्रयोदशी।
प्रतिपच्च विशेषेण स्नानमत्र विवर्ज्जयेत्॥
द्वादश्यां कृष्णपक्षे तु न स्नातव्यं कथञ्चन।
दर्शे स्नानं न कुर्व्वीत मातापित्रोस्तु जीवतोः॥
(१)न वर्ज्यञ्च नवम्यां तन्निमित्तान्तरसम्भवे।

अयमपि सुखार्थस्नानस्य कालविशेषानियतकाम्यस्नानस्याच निषेध इत्येके। वस्तुतः,—

भोगाय क्रियते यत्तु स्नानं याद्दच्छिकं नरैः।
तन्निषिद्धं नवम्यादौ नित्यं नैमित्तिकं न तु॥

आपस्तम्बः,—शिरोमज्जनमप्सु वर्जयेदस्तमिते च स्नानम्।

---

## अथ स्नानाङ्गानि।

बौधायनः,—न नग्नः स्नायात्। एतेन स्नानाङ्गत्वेन नग्नतानिषेधः। दर्शप्रकरणेऽनृत(२)वदननिषेधवत्। यत्तु पठन्ति,—

नग्नः कौपीनवासा वा द्विवासा स्नाति यो नरः।
वृथा स्नानफलं तस्य निराशाः पितृदेवताः॥

(१) D. नवम्यां (च) न वर्ज्यं तत् निमित्ता० A. नवम्याञ्च न वर्ज्यं०।
(२) C. ० वदने निषेध ०

[ इति ][1] तदधोवस्त्रविषये बोध्यम्। उत्तरीयस्याङ्गत्वात्। स्नानाधिकारे [2]जाबालः,—

नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन।

शङ्खलिखितौ,—अनग्नन्ननग्नः स्नायात्। नाप्सु मेहनोद्वर्त्तनं(नि) कुर्य्यात्। न पादेन पाणिना वोदकमभिहन्यात्। न स्रवन्तीं द्वयातिक्रामेदनवसिच्य। अमेध्योदकं परिहरेत्। अल्पोदके न स्नायात्। न समुद्रोदकमवगाहेत। अनश्नन् ताम्बूलादिकमभक्षयन्। मेहनं मूत्रोत्सर्गः। अङ्गक्षालनार्थमुद्वर्त्तनञ्च जले न कुर्य्यात्। अनवसिच्य तर्पणमकृत्वा नदीमतिक्रम्य न गच्छेत्। एतच्च तर्पणकाले [3]दृष्टार्थत्वात्। अमेध्योदकं परिहरेत् सर्व्वजलकार्य्येषु। नाल्पोदके स्नायात् प्रभूतोदकसम्भवे। समुद्रोदकं नावगाहेत न बहुदूरं गच्छेत्। इहाङ्गघर्षणजलमेहनाल्पोदकस्नानसमुद्रमध्यदूरप्रवेशानां निषेधः स्नानाङ्गप्रकरणादनृतवदननिषेधस्य दर्शाङ्गत्ववत्। वचनान्तरवारितानां भक्षणमेहनामेध्योदकानां निषेधो न कर्म्माङ्गम्। कर्म्मणि प्राप्तप्रभावात्। किन्तु न मलवद्वासिसा सह संवसेदितिवत् पुरुषार्थ इति भाव्यम्। योगियाज्ञवल्क्यः,—

(१) D. Omits the portion bracketed.

(२) D. जाबालिः,—

(३) D. सन्निहितदृष्टार्थत्वात्।

पादेन पाणिना वापि यस्या वस्त्रेण चोदकम्।
न हन्यान्न च बाधेत न च प्रक्षोभयेत् [1]तथा॥
न कुर्य्यात् कस्यचित् पीड़ां कर्म्मणा मनसा गिरा।
आचरन्नभिषेकन्तु कर्म्माण्यन्यानि नाचरेत्॥

अन्यानि पूर्व्वोक्तानि पादघातप्रभृतिपरपीड़ापर्य्यन्तानि नाचरेदिति लक्ष्मीधरः। एतदपि स्नानाङ्गम्। देवलः,—

न नदीषु नदीं ब्रूयात् पर्व्वते न च पर्व्वतम्।
नान्यत् प्रशंसेत् तत्रस्थस्तीर्थेष्वायतनेषु च॥

तथा न चत्वरोपद्वारयोः स्नायात्। चत्वरं यज्ञादिबलिदानस्थानम्। उपद्वारं द्वारसमीपम्। बौधायनः,—श्मशानमापो देवगृहं गोष्ठं यत्र च ब्राह्मणा अप्रक्षाल्य पादौ [2]नान्तः प्रवेष्टव्यम्। तथात्रिः,—पादौ प्रक्षालयेदिति। इदमनुद्धृतस्नानाङ्गम्। विष्णुः,—न स्नानवर्णकयोरर्थं प्रयच्छेदन्य(त्र)देवगुरुब्राह्मणेभ्यः। स्नानं स्नानसाधनं कुशादि। वर्णकं सुगन्धिद्रव्यम्। शङ्खः,—

उदकस्याप्रदानादि स्नानशाटीं न पीड़येत्।

योगियाज्ञवल्क्यः,—

यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत्।
तावन्न पीड़येद् वस्त्रं येन स्नातो न चोदके॥

---

(१) A. ॰वृध:।
(२) D. नात्र॰

येन वस्त्रेण स्नातस्तर्पणात् पूर्व्वं [1][ तद् वस्त्रं ] न पीड़येत्। [ उदके न च पीड़येत्। ][2] एतदपि स्नानाङ्गम्। तत्प्रकरणात्। नरसिंहपुराणे,—

नद्यां स्रवत्सु च स्नायात् प्रतिस्रोतःस्थितो द्विजः।
तड़ागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्॥

योगियाज्ञवल्क्यः,—

नराद्दापः प्रसूता वै तेन नारा इति स्मृताः।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥
यो हि व्रतानां तपसां यमस्य नियमस्य च।
भोक्ता च यज्ञतपसां योगिनां ध्येय एव च॥
स्मरेन्नारायणं देवं स्नानादिषु च कर्म्मसु।
प्रायश्चित्तेषु सर्व्वेषु दुष्कृतान्मुच्यते पुमान्॥
प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति [3]श्रुतिः॥

एवञ्च सर्व्वस्नानाङ्गभ्रंशे प्रायश्चित्तमिदम्। विशेषेणात्र विधानात्। अन्यकर्म्मभ्रंशेऽपि वाक्यसंयोगात्। यत्तु बौधायनः,—[4][ नाप्सु सतः प्रयमणं विद्यते। ] न वाससः पल्लनं नोपस्पर्शनम्। यद्युपरुद्धाः स्युरेतेनोपतिष्ठते नमोऽग्नयेऽप्सुमते

(१) C. Omits the portion bracketed.

(२) C. Omits the portion bracketed.

(३) D. ॰ स्मृतिः।

(४) D. Omits the portion bracketed.

नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः। प्रघर्षणं प्लवनम्। वासःपल्लनं वासोमलक्षालनम्। [1][उपस्पर्शनं देहमल-क्षालनम्।] अस्नानाद् यदि प्लवनादिभि[रेभि[2]]रपि उपरुद्धाः स्युर्व्यद्येतत् क्रियत इत्यर्थः। [3]इति स्नानकालीनान्यङ्गानि।

---

## स्नानेतिकर्त्तव्यता च।

योगियाज्ञवल्क्यः,—

स्नानं[4]मन्त्रजलञ्चैव मार्जनाचमने तथा।
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम्॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः।
अन्यान् वा वारुणान् मन्त्रान् कामतः संप्रयोजयेत्॥

अत्र,—

असामर्थ्यान्न कुर्य्याच्चेत् तत्रायं विधिरुच्यते।

इति प्रथमतोऽभिधाय नित्यश [5]इत्यभिधानात् प्रातःस्नाने नित्यं संक्षेपविधिर्मध्याह्ने विस्तरासामर्थ्ये सतीति वाक्यार्थस्तेन

---

(१) C. Omits the portion bracketed.

(२) C. Omits the portion bracketed.

(३) D. इति स्नानाङ्गकालान्यङ्गानि। Then adds स्नानोत्तराङ्गानि। हारीतः,—न स्नात्वा गात्रमवमृज्यात्। न शिरो विधुनुयात्। न वासो विधुनुयात्।

(४) D. ० मन्त्रजले चैव ०

(५) D. इति पुनरभिधाय प्रातः ०

निरग्नेरपि प्रातःसंक्षेपविधिरिति प्रतिभाति। अत्रचासामर्थ्यान्न कुर्य्यादित्युक्तविस्तरासामर्थ्ये निमित्ते प्रातःकाले वा निमित्ते स्नान-कार्य्यमुद्दिश्य पदार्थषट्के मन्त्रविधानेऽर्थात् पदार्थान्तरनिवृत्तिः। नन्वुक्तपदार्थषट्के मन्त्रसम्बन्धेन स्नानकार्य्यसिद्धावन्यापेक्षास्ति। न चैवं पदार्थषट्कस्य यथाश्रुत एव क्रमः स्यात्। पदार्थषट्कस्य विस्तरविधिगतस्यैवानुवादेन तत्त्यक्रमबाधे मानाभावात्। तत् स्वरूपस्यैवोत्पत्तिविधेरभावेनावश्यं तत्त्वानुवादात्। न च मन्त्रस्तत्तत्विलक्ष्य कथमेकस्य विधेयं प्राप्ति कर्म्मस्वनेकविध्यभावा-दिति वाच्यम्। अघमर्षणसूक्तेन प्रयोजयेत् त्रिरावृत्तेन प्रयोजये-दिति क्रियापदस्योभयत्रानुषङ्गेण वाक्यद्वयस्य स्पष्टत्वात्। तथाच मन्त्रस्य त्रिवारपाठपूर्व्वकं तीर्थपरिकल्पनं-तीर्थावाहनं, जलाभि-मन्त्रणं-जलस्य मन्त्रेणावर्त्तनं, आचमनं-मन्त्रेण जलभक्षणं, मार्जनं, अन्तर्जले निमज्य जपः, पुनर्मज्जनमिति पदार्थ-षट्कम्। अन्यान् वारुणान् मन्त्रानित्यत्रापि पूर्व्वपूर्व्वप्रकृत-पदार्थषट्काङ्गमन्त्रानुवादेन वारुणत्वं विस्तरासामर्थ्यनिमित्ते प्रातःकाले वा निमित्ते विधीयत इति पदार्थान्तरनिवृत्तिः। [1]क्रमपदो विस्तरस्नानगत एव। अत्रान्यानघमर्षणभिन्नान्। कामत इति वचनात् स्नानप्रकरणगतानन्यप्रकरणगतान् वा। तेनाग्नेयीन्यायस्य प्रसङ्गः। त्वन्नः सत्वन्न इत्येतयोर्निरपेक्षवरुण-देवतात्वाभावाद् वारुणपदेनाग्रहणम्। वृहत्स्नाने तु स्मृति-

(१) D. क्रमः पूर्व्वविस्तर०

न्यायेन वारुणावारुणेषु वारुणशब्दः। वारुणानिति [1]बहुवचनस्यानुवादः। [2]सत्रादुदवसाय पृष्ठसवनीयेन यजेरन्निति वत्। दक्षिणावर्त्तशङ्खादिना स्नानं मध्याह्न एव नेह काम्यत्वात्।

विष्णुपादोदकं मूर्द्ध्नि कल्यमुत्थाय धारयेत्।

इतिवचनात् प्रातःस्नानकाले कार्य्यम्। तस्य च फलम्,—

स चैवावभृथस्नातः स च गङ्गाजलाप्लुतः।
विष्णुपादोदकं कृत्वा शङ्खे यः स्नाति मानवः॥
स्थानं नैवास्ति पापस्य देहिनां देहमध्यतः।
सवाह्याभ्यन्तरं यस्य व्याप्तं पादोदकेन वै॥

इति सामान्यतो विष्णुप्रतिमासु।

स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत्॥

इति शालग्रामपादोदकफलम्। अत्र मन्त्रः,—

कृष्ण कृष्ण महावाहो भक्तानामार्त्तिनाशन।
सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे॥

अत्र विशेषः,—

तुलसीदलसम्मिश्रं तोयं यत् (यः) शिरसा [3]वहेत्।
सर्व्वतीर्थाभिषेकस्य तेन प्राप्तं फलं ध्रुवम्॥

---

(१) D. ० बहुवचनमनुवादः।
(२) D. सत्रादुदवसीनीयपृष्ठ ०
(३) C. ० जपेत्।

अत्र च,—

नित्यं पादोदकं मूर्द्ध्ना मया धार्य्यं प्रयत्नतः ।

इति वैष्णवधर्म्मनियमात् चित्रप्रतिमादौ मुख्यपादोदका-सम्भवे पञ्चरात्रोक्तविधिः कार्य्यः । स चैवम्,—

शङ्ख[1]पात्रन्तु संचाल्य गन्धपुष्पं ततः क्षिपेत् ।
आपूर्य्य गन्धतोयेन पुनर्गन्धादिनार्चयेत् ॥
पिण्डिकोपरि देवस्य सन्निधाने निधापितम् ।
गङ्गादिसर्व्वतीर्थन्तु[2] शङ्खे न्यस्य जपेदिदम् ॥
त्रिविक्रम क्रमाक्रान्तत्रैलोक्येश्वर केशव ।
त्वत्प्रसादादिदं तोयं पाद्यं तेऽस्तु नमो नमः ॥
इत्युक्त्वा प्रणिपत्याथ देवदेवं श्रियः पतिम् ।
शङ्खे व्यवस्थितं तोयं वैष्णवेभ्यो निवेदयेत् ॥

ईदृशं पादोदकं गृह्णीयात् । अत्र पादोदकस्य कल्ये ग्रहण-विधानात् पर्य्युषितस्यैव कल्ये सम्भवात्

एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः ।

इति निषेधाप्रवृत्तिः । यत्तु,—

न नक्तोदकपुष्पाद्यै[3]रर्चनं स्नानमाचरेत् ।

इति देवपूजादेवस्नानयोरेव पर्य्युषितजलनिषेधो न [4]स्व-

---

(१) D. ॰ पात्रञ्च ॰

(२) D. ॰ न्तु ॰

(३) A. ॰ रर्चयन् स्नान ॰

(४) A. स्वस्य स्नाना ॰

स्नानादाविति तत्र। '[1]देवस्यार्चनपदेनैव स्नाननिषेधे स्नानपदस्य स्वस्नानपरत्वौचित्यात्। शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम्॥
अस्नातस्तु पुमान् नार्हो जप्याग्निहवनादिषु।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम्॥
चाण्डालचितियूपादि स्पृष्ट्वास्नातां रजस्वलाम्।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत्॥
पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम्।
तद्धि काम्यं समुद्दिष्टं नाकामस्तु प्रयोजयेत्॥
जप्तुकामः पवित्राणि अर्चिष्यन् देवतापितॄन्।
स्नानं समाचरेद् यस्तु क्रियाङ्गं तत् प्रकीर्त्तितम्॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्व्वकम्।
सरित्सु देवखातेषु तड़ागेषु सरस्सु च।
स्नानमेव क्रिया यस्मात् स्नानात् पुण्यफलं स्मृतम्॥

इति तत्र नित्यस्नानं प्रातःस्नानमुक्तम्। क्रियास्नानं '[2]चतुर्थे भागे वक्ष्यते। कर्म्माङ्गस्नानञ्च तत्तत्कर्म्माङ्गस्नानं कृच्छ्राद्यङ्ग-त्रिषवणस्नानादिरित्युक्तम्। मलापकर्षणस्नानं मलक्षयहेतुत्वान्ना-दृष्टार्थम्। नात्रेतिकर्त्तव्यतापेक्षा। पुष्यस्नानादिकाम्यस्नानमपि दृष्टार्थत्वादेव नेतिकर्त्तव्यतापेक्षम्। यत्तु तीर्थादिषु काम्यस्नानं

(१) D. देवस्नानस्यार्चन ०

(२) A. D. चतुर्थभागे ०

तदृ(तददृ)ष्टार्थत्वादितिकर्त्तव्यतापेक्षं सत् प्रातःस्नानवद् वाचनिकातिदेशाभावेऽपि चोदनालिङ्गातिदेशेनैव मध्याह्नस्नानधर्म्मान् गृह्णाति। तथा च ब्रह्मपुराणे,—

कृत्वा चाब्दैवतैर्मन्त्रैरभिषेकञ्च मार्जनम् ।

इत्यादि समुद्रस्नाने लिङ्गदर्शनम्। यत्तु ग्रहोपरागसंक्रान्तिलब्धयोगादौ नैमित्तिकस्नानं तदप्यदृष्टार्थत्वादेव [1]तीर्थस्नानवत् सधर्म्मकम्। तथाचैवमादिकाम्ये ब्रह्मपुराणे तर्पणविधिः सधर्म्मकत्वे लिङ्गम्। यत्तु चाण्डालादिस्पर्शननिमित्तं स्नानं तत्र निषेधादेव नेतिकर्त्तव्यताप्रवृत्तिः।

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्म्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

अजीर्णेऽभ्युदिते अशुद्धोद्गारादिना[2]भिव्यक्ते। एतच्चोत्तरकालं स्नानप्राप्त्यर्थमजीर्णावस्थायां स्नाननिषेधात्। स्नानमात्रमदृष्टार्थेतिकर्त्तव्यतारहितम्। आपस्तम्बः,—

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्य्यं दैवपित्र्यविवर्जितम् ॥

इति ।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमीष्यते ।
तर्पणन्तु भवेत् तत्र अङ्गत्वेनेति निश्चितम् ॥

---

(१) D. तीर्थस्नानविधिसधर्म्मकम्

(२) D. ०स्याभिव्यक्ते ।

इतिब्रह्मपुराणविहितस्य तर्पणस्याभावेनादृष्टार्थेतिकर्त्तव्यता-मात्रनिवृत्तिं बोधयति। तथा योगियाज्ञवल्क्यः,—

तूष्णीमेवावगाहेत यदा स्यादशुचिः पुमान्।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्॥

इह मध्याह्नस्नानप्रकरणावाधाय स्नानं विधिवदाचरेदिति मध्याह्नस्नानानुवादः। तूष्णीमित्येतावद्विधीयते। अनुवाद-प्रयोजनञ्चाशुचे[1]र्मन्त्राद्युच्चारणानधिकारात् स्पर्शननिमित्तस्नानस्य मध्याह्नस्नानेन सह तन्त्रानुष्ठानं नास्तीति [2]ज्ञापनम्। अतएव प्रातःस्नानस्यापि दृष्टादृष्टकरत्वेन शरीरशुद्ध्यर्थत्वान्माघकार्त्तिकादि काम्यस्नानं न प्रातःस्नानेन सह तन्त्रेणानुष्ठेयमित्युक्तं भवति। [3]तस्माच्चाण्डालादिस्पर्शननिमित्तशुद्ध्यर्थस्नाने न धर्म्मापेक्षा। नात्र नद्यादिनियमः। उद्धृतेनानुद्धृतेन वा सर्व्वाङ्गजलयोगरूपस्नान-[4]पदार्थानुष्ठानरूपमात्रमेव। एवं [5]मलापकर्षणे काम्यपुष्यादि-दृष्टार्थस्नाने च बोध्यम्। तथा च शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
तीर्थाभावेऽपि कर्त्तव्यमुष्णोदकपरोदकैः॥

इति। एवं कर्म्माङ्गस्नानस्यादृष्टार्थत्वेऽपि तत्र तर्पणविध्य-भावलिङ्गेन [6][न]स्नानेतिकर्त्तव्यतानिर्देशः। स्नानाङ्गतर्पणन्तु वक्ष्य-

(१) D. ॰ मन्त्राद्युच्चार ॰
(२) D. ज्ञापनार्थम्।
(३) D. तथा चाण्डाला ॰
(४) D. ॰ पदार्थमात्रानुष्ठान ॰
(५) D. मलापकर्षे ॰
(६) D. Omits the portion bracketed.

स्नानतर्पणविधिना [1]कार्य्यम् । सन्ध्याकालविलम्ब[2]शङ्कायान्तु संक्षेपतर्पणं कार्य्यम् । तच्च प्रातःस्नानप्रयोगे वक्ष्यते । [3]स्नानाङ्ग-तर्पणञ्चाङ्गत्वादेव स्नानसमकालं कर्त्तव्यम् । तदसम्भवात् [4]पूर्व्वं पश्चाद् वा कर्त्तव्यम् । [5]पूर्व्वकरणमादित्य(त्व)वचनाभावेन युक्त-मितिस्नानसमनन्तरं कार्य्यम् । [किञ्च स्नानस्य कर्म्मान्तराधिकार-सम्पादकत्वमपूर्व्वद्वारकम् । अपूर्व्वञ्च तर्पणाद्यङ्गसहितात् स्नानान्न स्नानमात्रात् । तेन सन्ध्याधिकारसिद्धार्थं पूर्व्वं तर्पणं स्नानं कार्य्यम् ।[6] ] [7]स्मरन्ति स्मृतिरत्नमालायाम्,—

आचम्य प्रयतः पूर्व्वं स्नानं प्रातः समाचरेत् ।
स्नात्वा सन्तर्पयेद् देवानृषीन् पितृगणांस्तथा ॥
आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः ।
सन्ध्यार्घ्य मन्त्रैः

इत्यादिना तर्पणानन्तरं सन्ध्योक्ता । ननु च प्रकृतीभूत-प्रधानतर्पणे सन्ध्योत्तरत्वं दृष्टमिहापि तदतिदिश्येत । स्नानाङ्ग-तर्पणं हि अङ्गिनमनुपादेयमुद्दिश्य प्रकरणान्तरे विधीयमानं प्रकरणान्तरन्यायेन भिन्नं सत् नित्याग्निहोत्रविकृतिकुण्ड[8]याज्य-

(१) D. कर्त्तव्यम् ।
(२) D. ० शङ्कायां न संक्षेप ०
(३) D. स्नानाङ्गतर्पणन्तु ०
(४) D. पूर्व्वं वा पश्चाद् ०
(५) E. F. पूर्व्वकरण आदित्य वचनाभावेन (?)
(६) A. D. Omit the portion bracketed.
(७) D. स्मरन्ति च स्मृतिरत्नमालायां कौर्म्मे,—
(८) E. F. ० पाय्य ०

ग्निहोत्रवत् प्रधानभूततर्पणधर्म्मग्राहित्वात् सन्ध्योत्तरं कार्य्यं स्यात्। नैवम्। चतुर्थे च तथाभागे स्नानं, अस्नाताशी मलं भुंक्ते, सन्ध्यात्रयं कर्त्तव्यं, प्रत्यहं तर्पणं कुर्य्यात्, तर्पणं पितृयज्ञ इत्यादिवाक्यैः स्नानसन्ध्यातर्पणानां पृथगेव फलसाधनत्वेन पुरुषार्थत्वात् क्रमपाठो नान्तरीयकः क्रतूनामिव पृथक्फलानाम्। तदुक्तमङ्गत्ववत् क्रतूनामानुपूर्व्व्यमित्याशङ्क्य न वाऽसम्बन्धादिति। न च दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवद् वाचनिकः सन्ध्यातर्पणयोः क्रमोऽस्ति येन सोमविकारे इष्ट्यन्तरत्वमिवाङ्गतर्पणे सन्ध्योत्तरत्वमिति सन्दिह्येत। तेन [1][यथा] सोमस्याधानानन्तर्य्यविधौ इष्टिपूर्व्वत्वं सोमस्यार्थसिद्धमिति सोमविकारे नातिदिश्यति तथा सन्ध्योत्तरत्वं तर्पणे। न च पाठक्रमानादरे सन्ध्यातः पूर्व्वं तर्पणप्रसङ्गः। [2]शङ्खलिखितौ,—

आचम्यैवं पुरा प्रोक्तास्तीर्थसम्मार्जने तु ये।

मन्त्रास्तैर्मन्त्रितं तोयं मूर्द्ध्नि भूमौ तथा क्षिपेत्॥

इति स्नानाद्याचमनानन्तरं सन्ध्योपक्रमाभिधानान्मध्ये तर्पणानवकाशात्। न च शङ्खमते मध्याह्नसन्ध्यामुक्त्वा

एष एव विधिर्ज्ञेयः सन्ध्ययोश्च द्विजातिषु।

इति मध्याह्नसन्ध्यायाः प्रातःसायंसन्ध्याप्रकृतित्वेन प्रातःसन्ध्यायां स्नानानन्तर्य्यातिदेशे मध्ये स्नानाङ्गतर्पणानवकाशः।

(१) D. Omits the portion bracketed.

(२) A. D. शङ्खस्मृतौ,—

तर्पणन्तु भवेत् तत्राङ्गत्वेनेत्यङ्गत्वस्यानन्तर्य्यघटितत्वेनातिदेशिकत्वेन दुर्ब्बलस्य सन्ध्यानन्तर्य्यस्य बाधात्। योगियाज्ञवल्क्यीये च मन्त्रवत् स्नानभोजनमिति स्नानोत्तराचमने मन्त्रं विधाय

आचम्य [1]प्लाव्य चात्मानं चिराचम्य शनैरसून्।

इति स्नानानन्तर्य्यं मध्याह्नसन्ध्यायामुक्तम्। [2]तेन मध्याह्नसन्ध्यातः पूर्व्वं तर्पणप्रसङ्गो नास्ति। यत्तु तत्रैव,—

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
[3]तदेव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्॥

इति तर्पणस्य स्नानानन्तर्य्यवचनं तस्य पश्चात्तनत्वादनुवादत्वाच्च स्नानोत्तरत्वमात्रमर्थः। स च सन्ध्याव्यवधानेऽपि। इह स्नानोत्तरत्वस्याविधेयस्याङ्गतर्पणेऽनतिदेशात्। तेन तर्पणस्य सन्ध्योत्तरत्वमर्थसिद्धं न स्नानाङ्गतर्पणेऽतिदिश्यते। केवलं स्नानविलम्बे तर्पणकरणे सन्ध्याकाललोपशङ्कायां संक्षेपतर्पणम्। संक्षेपतर्पणेऽपि सन्ध्याकालबाधशङ्कायां सान्तपनीयाग्निहोत्रन्यायेनासम्बन्धात्तु नोत्कर्षः। प्रापणाच्च निमित्तस्येति न्यायेन सन्ध्योत्तरं कार्य्यम्। इदञ्च स्नानाङ्गतर्पणं शिरःस्नातस्यैव। सर्व्वाङ्गजलसंयोगस्यैव स्नानशब्दार्थत्वादित्युक्तम्। तथाच स्मरन्ति,—

शिरःस्नातस्तु कुर्व्वीत दैवं पित्र्यमथापि वा।

---

(१) D. ० यदि चात्मानं ०।

(२) D. एतेन ०।

(३) D. तेनैव सर्व्व ०।

इति। [1][ यत्तु ] वामनपुराणे,—

कृत्वा शिरःस्नानमथाह्निकं वा

सन्तर्प्य तोयेन पितॄन् मनुष्यान्।

इति तदनुवादत्वात् शिरःस्नानपक्षे सन्तर्प्यत्वेवम्परम्। अत्र व्याधि[2]वृद्धागाङ्कया वृष्ट्यादिकालदोषेण जलाशयगमनासामर्थ्ये सर्व्वाङ्गसंयोगक्षमजलासम्भवे वा मन्त्रस्नानादयोऽनुकल्पाः। ते च प्रकरणाविशेषान्माध्याह्निकस्नानस्याप्यनुकल्पा एव। "शृणुध्वं वक्ष्यते स्नान"मित्युपक्रम्य माध्याह्निकस्नानं सुविस्तरमुक्त्वा मध्ये च "न स्नात्वा नाचरेत् कर्म्म, लालास्वेदसमाकीर्णं" इत्यादिसार्थवाद-विधिना,

तस्मात् प्रातः प्रशंसन्ति स्नानमेव हि नित्यशः।

इति प्रातःस्नानं विधाय, अन्ते च

[3]एष वोऽभिहितः कृत्स्नः स्नानस्य परमो विधिः।

गुणाश्च तस्याचरणे दोषास्तस्यानिषेवणे॥

इत्युपसंहृत्य,

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया।

मन्त्रस्नानादयः सप्त केचिदिच्छन्ति सूरयः॥

इतिस्नानानुकल्पविधेः प्रातःस्नानवन्माध्याह्नस्नानेऽप्यविशेषात् प्रवृत्तेः। सन्ध्याप्रकरणे च,—

---

(१) D. Omits the portion bracketed.

(२) D. वृद्धावस्थायां च।

(३) A. एष वो निश्चयः कृत्स्नः च।

उभे सन्ध्ये च स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः।
तिसृष्वपि तु सन्ध्यासु स्नातव्यन्तु तपस्विना॥

इति सन्ध्याङ्गत्वेन स्नानमुक्त्वा

कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ।
तदा स्नात्वा ऋषिभ्यस्[1] मन्त्रैर्दृष्टन्तु मार्जनम्॥

इति मार्जनं स्नानफले सन्ध्यासाद्गुण्यानुकल्पत्वेनोक्तम्।

अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत्।

इति चाण्डालादिस्पर्शे लालादिसङ्करे चाप्रायत्ये स्नानमेव न मार्जनम्। तेनायमर्थः,—[2][स्नानस्य फलद्वयं] अप्रायत्यनिवृत्तिः सन्ध्यासाद्गुण्यञ्च। तेन कर्मसाद्गुण्यं स्नानेन मार्जनाद्यनुकल्पेन वा। अप्रायत्यनिवृत्तिस्तु स्नानादेव। लालादिलेपाशुद्धौ चालनादिना वा। [3]तथाच बौधायनः,—"अथातः सन्ध्योपासनाविधिं व्याख्यास्यामः। तीर्थं गत्वा प्रयतोऽभिषिक्तः[4] प्रक्षालितपाणिपादः अप आचम्य अग्निश्च मामन्युश्चेति सायमपः पीत्वा सूर्य्यश्च मामन्युश्चेति प्रातः सपवित्रेण पाणिना सुरभिमतीभिरब्लिङ्गाभिर्हिरण्यवर्णाभिः[5] पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं संप्रोक्ष्य प्रयतो भवति।" तथाप्युदाहरति,—

(१) C. ॰ पितृभ्यस्तु ॰
(२) C. Omits the portion bracketed.
(३) A. C. तथा बौधायनः ॰
(४) A. C. Here add प्रयतो वाऽनभिषिक्तः प्रक्षालित ॰
(५) D. ॰ वारुणीभिर्हिरण्यवर्णाभिः ॰

अश्वोऽवगाहनं स्नानं विहितं सार्व्ववर्णिकम्।
मन्त्रवत् प्रोक्षणं वापि द्विजातीनां विशिष्यते॥

सर्व्वकर्म्मणामारम्भे प्राक् सन्ध्योपासनाकालाच्चैतेन पवित्र-समुद्रेनात्मानं प्रोक्ष्य प्रयतो भवति। [1]अत्र लक्ष्मीधरः,—"इदमा-म्निव मा मन्युवेत्यादिपवित्रैरित्यन्त्यं (स) पवित्रं मार्ज्जनं, याज्ञ-वल्कीयञ्च शन्न आप इत्यादि, अघमर्षणसूक्तेन वेत्यन्त्यं मन्त्रैर्मार्ज्जनं, प्रयतस्यैव कर्म्माङ्गमुख्यस्नानाशक्तौ बोध्यम्।" सर्व्वकर्म्मणामारम्भे श्राद्धादीनामपि मार्ज्जनं साद्गुण्यार्थमित्यर्थः। अत्र च प्रयतो भवति (इति) [2][किं कर्म्मार्हो भवति] न तु प्रायत्यशून्यो भवती-त्यर्थः। तथा च प्रातःस्नानस्य लालास्वेदादिलेपाप्रायत्यनिर्हरणार्थ-त्वेऽप्यशक्तस्य शिरःप्रोञ्छनपूर्व्वकं

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम्।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः॥

(इति) जावालोक्तं स्नानद्वयमप्रायत्यनिर्हरणार्थम्। तथा,—

नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य कञ्जलैः।
जलार्द्रकर्पटेनाङ्गप्रोञ्छनं कापिलं विदुः॥

एतदपि अशिरस्कस्नानासम्भवेऽङ्गप्रोञ्छनम्।

आतुरस्य वारुणस्नानासमर्थस्य चाण्डालादिस्पर्शननिमित्ता-शौचे यमः,—

---

(१) C. तत्र • इदमम्निव • रित्यन्त्यं मार्ज्जनं •

(२) C. Omits the portion bracketed.

आतुरस्नानसम्प्राप्तौ दशकृत्वस्त्वनातुरः।

स्नात्वा स्नात्वा स्पृशेत् क्षिप्रं ततः शुध्येत् स आतुरः॥

[१][इदञ्च तत्र (ततः) शुध्येत् स आतुर] इति वाक्यशेषात् शुद्ध्यर्थम्। कर्म्माङ्गस्नानकार्य्यन्तु मार्जनादिना कर्त्तव्यम्। आतुरस्य शुद्ध्यर्थं स्नान[२]ममन्त्रकमेव प्राप्नोतीति स्नात्वा स्नात्वेति स्पृष्टुः स्नानममन्त्रकमेव। अमेध्यलेपव्यतिरिक्तसर्व्वप्रकाराप्रायत्ये मानसस्नानमेवाप्रायत्यनिवर्त्तकम्। तदसामर्थ्येनान्येन दशकृत्वः स्नात्वा स्पर्शनमिति विद्याकरवाजपेयिनः*। तेषामभिप्रायः,—"मानसं प्रवरं स्नान"मिति मानसस्नाने प्रवरत्वं कर्म्मसाद्गुण्यकरत्वेनाप्रायत्यनिवर्त्तकत्वेन च। एकार्थत्वे प्रवरत्वासङ्गतेः,

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः।

इति स्मृत्यन्तराच्च।

---

## [३]तत्र स्नानानुकल्पाः।

बोधायनोक्तमन्त्रस्नानमुक्तमेव। योगियाज्ञवल्क्यः,—

कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ।

तदा ज्ञात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टन्तु मार्जनम्॥

[इति।][४]

---

(१) C. Omits the portion bracketed.

(२) D. ० ममन्त्रकमेव ०

* See Bibliotheca Indica A. S. B. नित्याचारपद्धति Part II. p. 144.

(३) C. तेन स्नाना ० A. ते च स्नाना ०

(४) A. C. Omit the portion bracketed.

अत्र आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्।
एतैश्चतुर्भिर्ऋङ्मन्त्रैर्मन्त्रस्नानमुदाहृतम्॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
अघमर्षणसूक्तेन अश्वमेधावभृथसमम्॥

स्नानमब्दैवतै[र्मन्त्रै](१)रित्यब्दैवतैः शन्न–आप, द्रुपदा, आपो हिष्ठा इति तिसृभिर्मार्जनत्रयम्। अघमर्षणसूक्तेन प्राणसंयम इति स्नानमश्वमेधावभृथसममित्यर्थः। अत्र (२)मन्त्रसाङ्गुण्यरूप-स्नानकार्य्येण शन्न–आप इत्यादिमन्त्रचतुष्टयस्य निरपेक्षविधानाच्च बौधायनोक्तसुरभिमत्यादिषु समुच्चयः। बौधायनेऽपि सुरभि-मत्याद्यनन्तर"मन्यैश्च पवित्रै"रिति (३)तच्छाखानामेव मन्त्राणां निरपेक्षेण सन्ध्याङ्गत्वविधेः "शन्न-आप" इत्यादीनामप्रवेशः। केवलं द्वयोः सन्ध्याप्रकरणस्थत्वेन मन्त्रभेदेऽपि मार्जनक्रियारूपप्रत्यभि-ज्ञानादेककार्यत्वेन बौधायनोक्तमन्त्रस्नानेऽङ्गत्वेन विहित"मग्निश्च मा मन्युश्चे"त्यवभक्षणमिहापि प्रवर्त्तते। मध्याह्नसन्ध्यायां सन्ध्या-प्रकरणे "उभे सन्ध्ये(च) स्नातव्य"मिति मध्याह्नस्नानस्य सन्ध्याङ्गत्व-मिति पुरुषार्थत्वञ्च स्नानस्यास्ति तेन पुरुषार्थस्नानकार्य्ये सन्ध्या-दिसाद्गुण्यरूपस्नानकार्य्ये चाविशेषेण मार्जनं विधीयते। विशे-षादप्रायत्यपरीहाररूपस्नानकार्य्यमात्रपर्य्युदासादिति। अतएव "तर्पणन्तु शुचिः कुर्य्या"दित्यत्र "शुचिर्मन्त्रस्नानादिनापी"ति

(१) D. Omits the portion bracketed.

(२) A. C. कर्म्मसाद्गु०

(३) A. C. शाखान्तरीयाणामेव मन्त्राणां०

लक्ष्मीधरः । एवञ्च सायंसन्ध्यायां वचनादेव पुनर्मार्जनविधिः "प्राक्सन्ध्योपासना" इति बौधायनोक्तेः । श्राद्धादिषु च वचनादेव पृथगङ्गत्वमिति । अग्निहोत्रपञ्चमहायज्ञादावपि यद्यपि पृथङ्मार्जनप्रसङ्गस्तथापि "सर्व्वकर्म्मणाञ्चारम्भ" इति यत्र पृथक् स्नानमङ्गं तत्रैव श्राद्धादौ स्नानकार्य्ये मार्जनविधिरिति प्राय(यो)दर्शनादवगतमिति नाग्निहोत्रादौ पृथक् प्रसङ्गः । योगियाज्ञवल्क्यः,—

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
आपो हिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥
[1]यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणञ्चावगाह्यन्तु मानसं विष्णुचिन्तनम् ॥
कालदोषादसामर्थ्यात् सर्व्वं तुल्यफलं स्मृतम् ।

[ इति । ][2]

मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन गदितं यथा ॥

[3][आपो हिष्ठेति मार्जनमन्त्रमात्रोपलक्षणम् । सर्व्वं तुल्यफलमिति यद्यपि वारुणं मुख्यं मन्त्रस्नानादिकमपि तदसम्भवे तत्कार्य्यकारित्वात् तुल्यफलम् । आत्मतीर्थप्रशंसायाम्—

(१) D. यत् तु सातप०
(२) C. Omits the portion bracketed.
(३) D. Omits the portion bracketed.

आत्मा नदी संयमपुण्यतोया
सत्यह्रदा शीलतटा दयोर्म्मिः।
तत्रावगाहं कुरु राजपुत्र
न वारिणा शुद्ध्यति चान्तरात्मा ॥

इति व्यासवाक्यम्। ] [1]तेनैव तद्वाक्यशेषाद् ब्रह्माकारान्तःकरणवृत्तिरूपनिराकारविष्णुचिन्तनं मानसम्। साकारचिन्तनं तदसामर्थ्ये। शिष्टाः,—

स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत्।
तत्पादोदकधाराञ्च निपतन्तीं स्वमूर्द्धनि ॥
चिन्तयेद् ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम्।
तया (तया) संक्षालयेत् सर्व्वमन्तर्देहगतं मलम् ॥
इदं स्नानवरं मन्त्रस्नानाच्छतगुणं स्मृतम्।

एवञ्च मानसं सर्व्वोत्कृष्टमिति। तदसम्भवेऽनुकल्पान्तरम्। अत्र हारीतः,—(हारीतेन)

आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च।

इति पञ्चस्नानान्युक्त्वा

एतैश्च मन्त्रतः स्नात्वा तीर्थानां फलमाप्नुयात्।

इत्युक्तम्। तत्र तीर्थस्नानफलत्वेन विधानेऽप्रकरणपाठे यदि कर्म्मभेदस्तदा हारीतोक्तस्य सधर्म्मकत्वे प्रवृत्तत्वात् याज्ञवल्कीयेऽप्याग्नेयादिस्नाने समन्त्रकत्वमतिदेशात्। द्वयोरैक्ये सुतरां समन्त्रकत्वम्। स्कान्दे,—

(१) D. तत्र एव व्यासवाक्यं तेन एतद्वाक्यशेषाद्।

पुण्यं कनखले यच्च प्रयागे यच्च सुन्दरि!
तत्फलं सकलं देवि भूतिस्नानेन लभ्यति॥
उच्छिष्टं वा प्रमत्तं वा नरञ्चेद्दरनन्दिति।
भस्मच्छन्नं नहि सदा धर्षयन्ति विनायकाः॥

(इति) आग्नेयस्नानस्य फलान्तरम्।

विष्णुपुराणे,—

आकाशगङ्गासलिलं समादाय गभस्तिमान्।
[1]अनन्तगतमेवासौ समुत्क्षिपति रश्मिभिः॥
तस्य संस्पर्शनिर्धूतपापपङ्को द्विजोत्तमः।
न याति नरकं सद्यो दिव्यस्नानं हि तत् स्मृतम्॥

(इति) दिव्यस्नानस्य फलान्तरम्।

एते चानुकल्पा नित्ययोरेव प्रातर्माध्याह्निकस्नानयोस्तदुभयप्रकरणपाठात्। काम्यनैमित्तिकस्नाने तु नैषां प्रवृत्तिः। कार्त्तिकस्नानाद्यसामर्थ्येऽनन्यप्रतिनिधिकर्त्तृद्वारा वारुणस्नानमेव कारयितव्यम्। पुत्रादीनां प्रतिनिधिकर्त्तृत्वस्य वक्ष्यमाणत्वाद्दक्षिणादानादिना ब्राह्मणान्तरद्वारा वा वारुणस्नानमिति।

---

(1) A. C अन्यतगत०।

अप्रायत्ये समुत्पन्ने स्नानमेव न मार्जनादीत्युक्तं

तत्राप्रायत्यनिमित्तान्युच्यन्ते।

गोतमः, — पतितचाण्डालसूतिकोदक्याऽऽशवस्पृष्टतत्स्पृष्टोपस्पर्शने सचेल उदकोपस्पर्शनात्पूतो भवति। उपस्पर्शनं स्नानं सचेल इतिलिङ्गात्। अत्र तत्स्पृष्टपदं शवस्पृष्टपरमित्येके। अन्ये त्वेकपदोपात्तत्वाविशेषात्सर्व्वैत्र सम्बन्ध इत्याहुः। अत्र वर्त्तमानचाण्डालस्पृष्टस्य स्पर्शने स्नानम्। अतीतचाण्डालादिस्पर्शस्याकृतस्नानस्य स्पर्शने तु शातातपः,—

अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति।
[1]तं स्पृष्टान्यो न दुष्येत सर्व्वद्रव्येष्वयं विधिः॥

[ इति। ][2] देवलः,—

उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः।
तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति॥

चण्डालः प्रथमः तत्स्पर्शाद् द्वितीयः तत्स्पृष्टस्पर्शात् तृतीयः। अत्रातीतचण्डालस्पर्शस्य द्वितीयस्य स्पर्शे यदाचमनं तदकामतः कामतस्तु तत्रापि स्नानमेव।

तत्स्पृष्टिनं स्पृशेद् यस्तु स्नानं तस्य विधीयते।
ऊर्द्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥

* अत "शव तत्स्पृष्टोपस्पर्शने" इत्येवं रूप एव पाठः सङ्गतः।

(१) D. संस्पृष्टान्यो ०।

(२) C. Omits the portion bracketed.

इति स्मृत्यन्तरादित्याहुः। शवस्पृष्टस्पर्शे त्वकामतोऽपि स्नानं दोषगुरुत्वादित्यवधेयम्। गुरुत्वञ्च वक्ष्यमाणच्यवनस्मृतौ पृथक् [1]निर्देशात्। शवस्पृष्टपदस्य तत्रातीतशवस्पर्शनद्रव्यपरत्वात्। बौधायनः,—चाण्डालेन सहाध्वगमने सचेलस्नानम्। तेन सहैककार्य्येणाध्वगमनम्। अङ्गिराः,—

यस्तु च्छायां श्वपाकस्य ब्राह्मणो ह्यधितिष्ठति।
सचेलो जलमाप्लुत्य घृतं प्राश्य विशुध्यति॥

आपस्तम्बः,—

एकशाखां समारूढ़श्चाण्डालादिर्भवेद् यदि।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्॥

एकशाखाग्रहणमेकावयव्युपलक्षणम्। "अनेकोढार्य्ये दारुशैले (दारुशिले) भूमिसमे" इतिवचनादनेकपुरुषवाह्यावयविपरम्। तथा,—

चाण्डालं पतितञ्चैव दूरतः परिवर्जयेत्।
गोवालव्यजनादर्वाक् सचेलो जलमाविशेत्॥

इत्यतिसान्निध्ये स्नानम्। [ तेन ][2]

युगञ्च [3]द्वियुगञ्चैव त्रियुगञ्च चतुर्युगम्।
चाण्डालपतितोदक्यासूतिकानामधः क्रमात्॥

इति युगादिदेशपरिहारोक्तावपि तन्मध्यगमनं न स्नाननिमित्तं किन्त्वाचमननिमित्तम्। षड़शीत्यङ्गुलं युगम्।

(१) D. निर्देशाच्च।
(२) D. Omits the portion bracketed.
(३) D. ० द्विगुणञ्चैव त्रिगुणञ्च चतुर्गुणम् ०।

पराशरः,—

चैत्यवृक्षश्चितिर्यूपश्चाण्डालः सोमविक्रयी।

एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत्॥

[ चितियूपयोः कर्म्मसमाप्तौ स्पर्शनं स्नाननिमित्तम्। वार्त्तिके तु,—"कर्म्ममध्येऽवैधस्पर्शे स्नान"मित्युक्तम्। च्यवनः,—"श्वानं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहमनुष्यास्थि शवस्पृष्टं महापातकिनं शवं स्पृष्ट्वा सचेलोऽम्भोऽवगाह्योत्तीर्य्याग्निमुपस्पृशेत्।[1] ] गायत्र्यष्टशतं जपेत्। घृतं प्राश्य पुनः स्नात्वा द्विराचामेत्।" इदं कामकृते। अभ्यस्ते अग्न्युपस्पर्शनादिकमधिकम्। देवद्रव्योपजीवी देवतायै दत्तस्य हिरण्यादेरपहारेण जीवति यः। तथा,—

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम्।

असौ देवलको नाम हव्यकव्येषु गर्हितः॥

स्पृष्ट्वा देवलकञ्चैव सवासा जलमाविशेत्।

कालिकापुराणे,—

स्पृष्ट्वा रुद्रस्य निर्म्माल्यं सवासा आप्लुतः शुचिः।

इदं वैधनिर्म्माल्यग्रहणव्यतिरिक्तपरम्। स्मृतिः,—

शैवान् पाशुपतान् स्पृष्ट्वा वैड़ालव्रतनास्तिकान्।

विकर्म्मस्थान् द्विजान् शूद्रान् सचेलो जलमाविशेत्॥

शैवपाशुपतपदं वामशैवपाशुपतपरं योगियाज्ञवल्क्येन पाशुपतस्य प्रामाण्योक्तेः। कौर्म्मे च,—

(१) D. Omits the portion bracketed.

अन्यानि चैव शास्त्राणि [1]लोके सम्मोहनानि च।
वेदवादविरुद्धानि मयैव कथितानि च।
वामं पाशुपतं शैवं दक्षिणञ्चैव भैरवम्॥

इत्यप्रमाणस्य पृथक् निर्देशात्।

मनुः,—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति॥

शुद्धेरित्यनुवृत्तौ विष्णुः,—सर्व्वस्यैव हि प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेन। मार्कण्डेयपुराणे,—

अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान्।
पतितापविद्धचाण्डालमृतहारांश्च धर्म्मवित्।
संस्पृश्य शुद्ध्यति स्नानात् उदक्याग्रामशूकरौ॥

अत्र मार्जारपदं स्थिरस्थितमार्जारपरम्। "मार्जारश्चंक्रमे शुचि"रिति स्मृत्यन्तराच्चंक्रमणमार्जारस्पर्शे न स्नानम्। आखुपदं कुक्कुटपदसमभिव्याहाराद् ग्राम्याखुपरम्। [2]एवं "मार्जारमूषिकासनशयनाम्बुविप्रुषो नित्यं मेध्या" इति, "मार्जारमूषिकस्पर्शे",—"कर्म्म कुर्व्वन्नपः स्पृशेत्" इति चापवादवचनञ्चंक्रमणमार्जारपरमारण्याखुपरञ्च। कुक्कुटश्चात्र ग्राम्य एव स्नाननिमित्तम्। तथा च देवलः,—

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम्।
सूतिकां सूयिकां नारीं रजसा च परिप्लुताम्॥

(१) C. लोकसम्मो०।
(२) A C एवञ्च मार्जार०।

श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचेलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति॥
अशुद्धान् स्वयमप्येतानशुद्धो यदि संस्पृशेत्।
विशुद्ध्यत्युपवासेन पुनः कृच्छ्रेण चैव हि॥

आरण्यकुक्कुटवराहस्पर्शे न स्नानम्। ['स्मृत्यन्तरात् खरोष्ट्रस्पर्शे स्नानम्।]

अत्र विशेषमाह शातातपः,—

रजकश्चर्मकारश्च व्याधजालोपजीविनौ।
चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा॥
मुखे भगस्तथा श्वा च वनिता सर्व्ववर्णगा।
चक्री ध्वजी विध्यघाती ग्राम्यकुक्कुटशूकरौ॥
एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु।
तोयेन चालनं कृत्वा आचान्तः शुचितामियात्॥

शिरोवर्जमितिशिरःपदं करव्यतिरिक्तनाभ्यूर्द्धभागपरमित्युक्त-मेव। अत्र श्वकुक्कुटवराहाणामत्यमेध्यत्वात् अकामतोऽधमाङ्ग-स्पर्शे आचमनं कामतस्तु स्नानमेव। ब्रह्मपुराणे,—उदक्यासूतिका श्वान्त्यावसायिस्तद्धारस्पर्शे स्नात्वा द्वादशवारस्तद्‌यद्दर्णं मैथुने वमने चेत्युक्तम्। व्यासः,—

भासवानरमार्जारखरोष्ट्राणां शुनां तथा।
शूकराणाममेध्यश्च स्पृष्ट्वा स्नायात् सचेलकः॥

(१) D. Omits the portion bracketed.

लघुहारीतः,—

श्वविष्ठां काकविष्ठाञ्च कङ्कग्टध्रनरस्य च।

अधोत्सृष्टस्तु(?) संस्पृश्य सचेलो जलमाविशेत्॥

नरविष्ठा परकीया। अधोत्सृष्टो(?) मूत्रपुरीषशुक्रोत्सर्गेणाशुद्धः।

शङ्खः,—

रथ्याकर्द्दमतोयेन ष्ठीवनाद्येन वाप्यथ।

नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति॥

ब्राह्मे,—

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः।

उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ॥

तथा,—

पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत्।

मनुः,—

वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्।

आचामेदेव भुक्तान्नं स्नानं मैथुनिनः स्मृतम्॥

भुक्तान्नं वान्त इत्यर्थः। तेन सद्यो वान्ते आचमनमात्रम्।
मैथुनिनः ऋतौ। ब्राह्मे,—

मानुषास्थि तु संस्पृश्य दग्धं सस्नेहमेव वा।

स्नायाद् गां संस्पृशेत् सूर्य्यं पश्येद् विष्णुमनुस्मरेत्॥

[1]मानुषास्थिग्रहणमभक्ष्यपञ्चनखास्थिपरं स्मृत्यन्तरसंवादात्।
देवलः,—

मानुषास्थि वसां विष्ठामार्त्तवं मूत्ररेतसी।

---

(१) C. D. मानुषास्थिग्रहणं भक्ष्यपञ्च०।

मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्।
स्नात्वावमृज्य लेपादीनाचम्य स शुचिर्भवेत्॥
तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात्।

चालनात्। विष्णुः,—"नाभेरधस्तात् प्रबाहुषु कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयेन तदङ्गं [1]प्रक्षाल्याद्भिः शुद्धो भवति। अत्यन्तोपहतश्च तदङ्गं मृत्तोयैः प्रक्षाल्य स्नानेन। चक्षुष्युपहतः स्नात्वा पञ्चगव्येन शुद्धो भवति दशनोपहतश्च।" प्रबाहुर्हस्तः। अत्यन्तोपहतः नाभ्यूर्द्धकायस्पृष्टः। अङ्गिराः ;—

इन्द्रियेषु प्रविष्टं स्यादमेध्यं यदि कर्हिचित्।
मुखेऽपि संस्पर्शगतं तत्र स्नानं विशोधनम्॥

विशोधनं इन्द्रियमुखचालनं स्नानञ्च कार्य्यम्। हारीतः,— स्नातः शुद्धो भवति। अजीर्णवान्तश्मश्रुकर्म्मायोनिपशुदिवामैथुन-गमने च। सुमन्तुः,—अनुदकमूत्रपुरीषकरणे नखकेशरुधिर-प्राशने सद्यःस्नानं घृतकुशहिरण्योदकप्राशनञ्च। लघ्वापस्तम्बः,—

यद्द विष्ठितं काकबलाकिकाभ्या-
ममेध्यलिप्तञ्च भवेच्छरीरम्।
श्रोत्रे मुखे च प्रविशेत्तु सम्यक्
स्नानेन लेपोपहतस्य शुद्धिः॥

काकबलाकाभ्यां यस्योपरि विष्ठा कृता तच्छरीरममेध्यलिप्तं स्नानेन शुद्ध्यति। [2]श्रोत्रमुखप्रवेशे गुरु प्रायश्चित्तमत्र।

---

(१) A. C. प्रक्षाल्य तद्वेतःशुद्धो भवति।

(२) D. श्रोत्रे मुखे प्रविष्टे गुरु ०।

पादेतरांशेन श्मशानस्पर्शे, संवत्सरपर्य्यन्तनित्यकर्म्माकारिस्पर्शे [[1]पुनर्मनो(?) जपेत् महाव्याहृतिभिः समाव्याहुति स्नानम्। स्मृत्यन्तरात् कृष्णाजिनप्रतिग्राहिस्पर्शे स्नानम्।

अस्पृश्योऽसौ द्विजो राजन् चितियूपसमो हि सः।

(इति) यूपसाम्येन निन्दनात्। ग्रामयाजकस्पर्शे स्नानं स्मृत्यन्तराच्चिताधूमस्पर्शे च। [2]पुत्रजन्म स्नाननिमित्तं बन्धुमरणञ्च।

ग्रहणे शावमाशौचं विमुक्तौ सूतकं स्मृतम्।

इति ग्रहणमुक्तेरपि स्नाननिमित्तत्वम्। यत्तु "चाण्डालादिस्पर्शे] पुनर्मनो(?) जपेत् महाव्याहृतिभिः [3]समाव्याहुतिभिर्जुहुया"दिति तत्कामतोऽभ्यासे। स्मृत्यन्तरे,—अस्थिसञ्चयनात् पूर्व्वमबान्धवस्य रोदने स्नात्वोपोष्य शुद्धिः। शूद्रे त्रिरात्रेण। पराशरः,—

अस्तं गते यदा सूर्य्ये चाण्डालं पतितं स्त्रियम्।

सूतिकां स्पृशतश्चैव कथं शुद्धिर्भविष्यति।

स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन च॥

दिवोद्धृतजलाभावे त्वाह,—

जातवेदाः सुवर्णञ्च सोममार्गस्तथैव च।

ब्राह्मणानुमतेनैव स्पृष्ट्वा स्नात्वा च शुद्ध्यति॥

अग्निसुवर्णाकाशानामेकं स्पृष्ट्वा ब्राह्मणानुज्ञया जलमुद्धृत्य रात्रौ स्नायादित्यर्थः। अत्र हेतुमाह,—

---

(१) A. D. Omit the portion bracketed.

(२) C. पुत्रजन्म स्नानेन शुद्ध्यति।

(३) A. समाव्याहृतीर्जुहुयादिति ०।

आचान्तमनुचान्तञ्च निशि स्नानं न विद्यते।

अनुचान्तं भूमिष्ठजले स्नानमाचान्तञ्च निशि न विद्यते यत इत्यर्थः।

---

## [1]अथापवादः।

अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे।
मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे।
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत्॥

शिष्टाः पठन्ति,—

विष्णालयसमीपस्थान् विष्णुसेवार्थमागतान्।
[2]चाण्डालपुक्कशादींश्च स्पृष्ट्वा न स्नानमाचरेत्॥

इदञ्चोत्सवादौ बहुजनसङ्कुले। तथा,—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टं न दुष्यति॥

स्पृष्टास्पृष्टमीषत्स्पृष्टमित्याहुः। आचारपल्लवे,—

कुण्डे मञ्चे शिलापृष्ठे नौकायां गजवृक्षयोः।
संग्रामे सङ्क्रमे चैव स्पर्शदोषो न विद्यते॥

स्मृतिः,—

वाक्प्रशस्तं चिरातीतमनेकान्तरितं लघु।

---

(१) A. C. अत्रापवादः।
(२) A. D. चाण्डालपुक्कशान् वापि स्पृष्ट्वा ०।

शुद्धमित्यर्थः । चिरातीतं उच्छिष्टभाण्डखर्परादिकं क्षुद्रमार्गादिस्थं न स्पर्शे स्नाननिमित्तम् । अनेकपरम्परया चाण्डालादिस्पर्शनं न स्नाननिमित्तम् । एकान्तरिते स्नानमित्युक्तमेव । नचु [1]उच्छिष्टान्नवाष्पं तत्स्पृष्टमारुताम्पृश्याग्निधूमादि नाशुद्धम् । तथा मक्षिका सन्ततिर्धारा । सन्ततिः सन्तन्यमानं तृणादि । धारा जलचोरहतादेः पात्रादधः पतन्तीति तलेऽमेध्यसंस्पृष्टापि पात्रं नरं वा न दूषयति । तथा,—

पादुके वापि स्त्रीया[2]दस्पृश्यस्पर्शवारणे ।

तथा,—

सप्तरात्रोषितां विष्ठां वशिष्ठः प्राह मृत्तिकाम् ।

इदञ्चाप्रत्यभिज्ञायमाने गन्धाद्यभावे च[3]बोध्यम् । तथा,—

रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकाचितानि च ॥

तथा,—

पादौ शुचिर्ब्राह्मणानां पदास्पृष्टश्च कामतः ।

[4]इति पादशुद्धिस्तस्या अपवादः । इत्यादिवाक्यानामाचारोपदृष्टाम्महाजनपरिग्रहेणाप्रामाण्यकारणाभावाच्च प्रामाण्यम् । इति नैमित्तिकस्नानानि ।

---

(१) D. उच्छिष्टान्नवातस्पृष्टमारुताम्पृश्याग्निधूमादिकं नाशुभम् । तथा ० ।
(२) D. ० दस्पर्शस्पर्श ० ।
(३) D. बोद्धव्यम् ।
(४) A. C. इति वाशुद्धि ० ।

## अथ प्रातःस्नानप्रयोगः।

वह्निरेव जलेन देहक्षालनम्। [[1]मृदा त्रिः पादक्षालनम्।] आचमनम्। वस्त्रद्वयधारणम्। [[2]पवित्रोपग्रहधारणम्।] शिखायज्ञोपवीतानुसन्धानम्। जले प्रवेशः। उद्धृतोदकपक्षे प्राङ्मुखतयोदङ्मुखतया वोपवेशनम्। त्रिमात्रप्रणवोच्चारणम्। अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दः [3]भाववृत्तं दैवतं स्नाने विनियोगः।

ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥
समुद्रादर्णवादधिसंवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥
सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥

[इति[4]] वारत्रयमुक्त्वा [5]गङ्गे इहागच्छेत्येवं तीर्थावाहनम्। कृत्रिमादिषु गङ्गादिशब्देनावाहनम्। पुनस्त्रिवारमुच्चार्य्य जलावर्त्तनरूपं जलाभिमन्त्रणम्। पुनस्त्रिवारमुच्चार्य्य जलचुलुकपानम्।

---

(१) D. Omits the portion bracketed.

(२) D. Omits the portion bracketed.

(३) D. भाहृतं ०।

(४) D. Omits the portion bracketed.

(५) D. तीर्थनाम कृत्वा गङ्गे चत्रागच्छेत्येवं तीर्थावाहनम् ०।

[1]पुनस्त्रिवारपाठेन मार्जनम् जले निमज्ज्य त्रिवारमघमर्षणजपः। उद्धृतस्नानेऽन्तर्जपकाले जलकुम्भेनाभिषेचनं यावत्-पाठम्। ततोऽघमर्षणं त्रिः पठित्वा मज्जनम्। विष्णुस्मरणम्। उद्धृतोदकस्नाने न मन्त्रः। स्नानं प्रवाहाभिमुखस्य प्रवाहाभावे सूर्य्याभिमुखस्य।

---

## [2]अथ वारुणमन्त्रैः स्नानम्।

तत्र प्रयोगः। पूर्व्ववद्देहक्षालनादि। जले प्रविश्य त्रिमात्र-प्रणवजपः। प्रजापतिर्ऋषिर्गायत्रीच्छन्दो वरुणो देवता तीर्था-वाहने विनियोगः। "इमम्मे वरुणश्रुधी हवमद्या च मृलय। त्वामवस्युरा चके।" अनेन तीर्थावाहनम्। प्रजापतिः। त्रिष्टुप्। वरुणः। जलाभिमन्त्रणे।

तत्त्वायामि ब्रह्मणा वंदमान-
स्तदाशास्ते यजमानो हविर्भिः।
अहेलमानो वरुणेह बोध्यु-
रुशंसमा न आयुः प्रमोषीः॥

अनेन जलाभिमन्त्रणम्। शुनःशेपः। त्रिष्टुप्। वरुणः। जलपाने।

उरुं हि राजा वरुणश्चकार
सूर्य्याय पन्थामन्वेतवा उ।
अपदे पादा प्रतिधातवेऽक-
रुतापवक्ता हृदयाविधश्चित्॥

---

(१) E. F. Add before it द्विराचमनम्।

(२) D. अथ वारुणस्नानम्।

अनेन जलपानम्। द्विराचमनम्। प्रजापतिः। गायत्री। वरुणः। मार्ज्जने। "योवन्तं जिघांसति तमभ्यमीति वरुणः परोमभिः परस्त"(?) अनेन मार्ज्जनम्। धाम्न इत्यस्य प्रजापतिः। मुच्चेत्यन्तं यजुः(?)। यदाहु(?)रिति गायत्री। वरुणः। अन्तर्ज्जलजपे। "धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च।" जले निमज्य जपः। शुनःशेपः। त्रिष्टुप्। वरुणः। स्नाने। "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥" इति मज्जनम्। विष्णुस्मरणम्।

कृष्ण कृष्ण महावाहो भक्तानामार्त्तिनाशन।
सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे॥

इति पादोदकग्रहणम्। तत्र जल एव स्थित्वा माध्याह्निकवक्ष्यमाणविधिना तर्पणं वस्त्रनिष्पीड़नान्तम्। सन्ध्याहोमकालसङ्कोचशङ्कायां संक्षेपतर्पणम्। तत्र [1]नरसिंहपुराणोक्तविधिः। देवांस्तर्पयामीति सव्यतया त्रिवारमञ्जलिं देवतीर्थेन। देवगणांस्तर्पयामीति पुनरञ्जलित्रयदानम्। एवं कण्ठलम्बयज्ञोपवीतः ऋषींस्तर्पयामीत्यञ्जलित्रयं दद्यात्। पुनः ऋषिगणांस्तर्पयामीत्यञ्जलित्रयम्। ततः प्राचीनावीतिनो दक्षिणामुखस्य पितृंस्तर्पयामीति पितृतीर्थेनाञ्जलित्रयम्। [[2]एवं] पितृगणांस्तर्पयामीत्यञ्जलित्रयम्। अथवा भूर्देवांस्तर्पयामि भुवर्देवां-

(1) D. नारसिंहोक्त०।

(2) D. Omits the portion bracketed.

स्तर्पयामि स्वर्देवांस्तर्पयामि भूर्भुवःस्वर्देवांस्तर्पयामीतिदेवतर्पणम्। भूऋषींस्तर्पयामि भुव ऋषींस्तर्पयामि भूर्भुवःस्वऋषींस्तर्पयामीति ऋषितर्पणम्। भूः पितॄंस्तर्पयामि भुवः पितॄंस्तर्पयामि स्वः पितॄंस्तर्पयामि भूर्भुवःस्वःपितॄंस्तर्पयामीति पितृतर्पणम्। अथवा—

आब्रह्मस्तम्बपर्य्यन्तं जगदेतच्चराचरम्।
मया दत्तेन तोयेन तृप्यत्वेतच्चतुर्विधम्॥

इति जलाञ्जलित्रयदानं देवधर्म्मेण।

मार्जनक्रमः,—"सूर्य्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहमापोऽमृतयोनौ सूर्य्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा" इति जलचुलुकपानम्। वैकल्पिकं द्विराचमनम्। "शन्न" इत्यस्य,—प्रजापतिः। अनुष्टुप्। आपः। मार्जने। "शन्न आपो धन्वन्याः शमनः सन्तु नूप्याः शन्नः समुद्रिया आपः शमनः सन्तु कूप्याः।" इति कुशत्रयेण शिरसि जलप्रक्षेपः। कोकिलो राजपुत्रः। अनुष्टुप्। आपः। मार्जने। "द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः।" इत्यनेन मार्जनम्। आपो हि ष्ठा। सिन्धुद्वीपः। गायत्री। आपः। मार्जने। "आपो हि ष्ठा मयो भुव स्ता न ऊर्जे दधातन महे रणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ

आपो जनयथा च नः।" अनेन मार्जनम्। [1]पुनरघमर्षणसूक्तस्य ऋष्यादिस्मरणम्। "ऋतञ्चे"त्यादि "दिवञ्च पृथिवीञ्चान्तरिक्ष-मथोस्व"रित्यन्तेन मार्जनम्। तत्रापि पूर्व्ववद्देहचालनं आचमनं जलप्रवेशश्च। ततो मार्जनम्। अथवा "शन्न आप" इत्यादिमन्त्र-त्रयेण मार्जनं कृत्वा अघमर्षणसूक्तेन प्राणायामः कार्य्यः। ईदृशं वा मन्त्रस्नानम्। तत्रापि पूर्व्ववद्देहचालनम्। समन्त्रकजलभक्षणञ्च पूर्व्वतः कार्य्यम्। अप्रायत्ये तु लालादिसङ्करनिमित्ते [2]सशिरस्क-स्नानं कृत्वा [3]यथोक्तमार्जनम्। [4]तत्राप्यसामर्थ्ये नाभेरधः प्रविश्याप्सु अङ्गप्रोञ्छनम्। [5]तत्राप्यसामर्थ्ये आर्द्रवस्त्रेण सर्व्वाङ्गप्रोञ्छनं [6]वस्त्र-चालनम्। चाण्डालादिस्पर्शनिमित्ताप्रायत्ये तु दशकृत्वः अन्येन स्नात्वा स्पर्शनम्। ततो मार्जनं कृत्वा सन्ध्यारम्भः।

---

## अथ भौमस्नानम्।

तत्र अङ्गप्रोञ्छनादिकं कृत्वा गङ्गामृत्तिकादिना सर्व्वाङ्ग-लेपनम्। तत्र मन्त्रः,—

अनेनैव वराहेण उद्धृतासि वरप्रदे।
कृष्णेनाक्लिष्टकार्य्येण चक्रहस्तेन विष्णुना॥

(१) D. अघमर्षणसूक्तस्य ०।
(२) A. C. सशिरस्क ०।
(३) C. तथोक्त ०।
(४) D. अत्राप्य ०।
(५) D. अत्रा ०।
(६) C. कृत्वा मार्जनम्।

धरणि त्वं महाभागे भूमि त्वं धेनुरव्यये ।
लोकानां धरणि त्वं हि मृत्तिके हन पातकम् ॥
मनसा कर्म्मणा वाचा वरदे वारिजेक्षणे ।
त्वया हतेन पापेन जीवामस्त्वत्प्रसादतः ॥

अयं मन्त्रो यद्यपि वराहदंष्ट्रोद्धृतमृदालम्भे श्रुतस्ततोऽतिदेशेनेह प्रवर्त्तते । वराहदंष्ट्रोद्धृतमृदालम्भस्तु काम्यत्वात् सन्ध्यानन्तरमेव कार्य्यः ।

वराहदंष्ट्राभिन्नाया धराया मृत्तिकां द्विजः ।
मन्त्रेणानेन यो बिभ्रन्मूर्द्ध्नि पापात् प्रमुच्यते ॥
आयुष्मान् बलवान् धन्यः पुत्रपौत्रप्रतिष्ठितः ।
क्रमाद् भुवि दिवं प्राप्य कर्म्मान्ते मोदते सुरैः ॥

इतिवचनात् ।

---

## अथाग्नेयस्नानम् ।

तच्च [1]भस्मना कार्य्यम् । तत्र मुख्यं गार्हपत्यभस्म । [[2]तदभावे स्मार्त्तभस्म ] तदभावे पञ्चब्रह्मसाधितं भस्म न तु लौकिकम् ।

एवं संस्काररहितं न तु ग्राह्यं कथञ्चन ।

इति निषेधात् । मन्त्रस्तु,—

(१) C. भस्मना स्नानं कार्य्यम् ।
(२) C. Omits the portion bracketed.

आग्नेयमग्निलिङ्गेन मन्त्रेण स्नानमाचरेत्।
वायव्यं वायुलिङ्गेन दिव्यं सौरेण सर्व्वदा॥

इति वाक्याद् भस्मस्नाने आग्नेयमन्त्रः। "अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वति।" इत्यनेन सर्व्वाङ्गे भस्मसंयोगः कार्य्यः।

---

## अथ वायव्यस्नानम्।

[1]गोखुरोद्धूतरजसा वायुप्रचलितेन सर्व्वाङ्गसंयोगः। तत्र मन्त्रः,—

वायुर्वा त्वा मनुर्वा त्वा गन्धर्व्वाः सप्तविंशतिः।
ते अग्रे अश्वमायुञ्जन्ते अस्मिन् जवमादधुः॥

---

## अथ दिव्यस्नानम्।

सस्नानभ्रवृष्टौ निरावरणस्यावस्थानम्। तत्र कृत्तिकादि-विषमपर्य्यायायुग्मर्क्षेषु दिग्गजोज्झितं गङ्गाजलमिति बुद्धिः कार्य्या। रोहिण्यादियुग्मनक्षत्रेषु सूर्य्यरश्मिभिरानीतमिदं गङ्गाजलमिति बुद्धिः कार्य्या। तत्कथनस्य फलान्तराभावात्। "उदुत्यं जातवेदस"मिति मन्त्रमुच्चार्य्यानभ्रवृष्टिमध्ये निरावरणोऽवतिष्ठेत।

---

(१) D. गोक्षुरोद्भूत०।

## अथ मानसस्नानम् ।

"विष्णु"पदं यद्यपि शुद्धचैतन्ये लाक्षणिकमेव तथाप्यविद्यो-पहितव्यापकत्वगुणपुरस्कारेण ब्रह्मण्येव मुख्यं साकारेऽपि गौण-मेवेति साकारनिराकारयो र्गौणत्वा[1]विशेषेऽपि

आत्मतीर्थप्रशंसायां व्यासेन गदितं यथा ।

इति वाक्यशेषादत्र निराकारस्यैव व्यासवाक्ये कीर्त्तनाद् ब्रह्माकारान्तःकरणवृत्तिरेव मुख्यं [2]मानसस्नानं तदसम्भवे चतु-र्भुजाद्याकारविशिष्टस्य स्मरणं तस्यैव स्वरूपमिति । यद्वा अविद्या-कल्पितव्यापकत्वगुणविशिष्टचैतन्यमेव मुख्यार्थत्वाद् ध्येयमिति । यत्तु,—आकाशस्थमन्त्रमूर्त्तिंविष्णुध्यानपूर्व्वकं तत्पादगलितामृत-धारां ब्रह्मरन्ध्रेणान्तःप्रविष्टां विचिन्त्य तेन सर्व्वदेहचालनचिन्तनं तन्मन्त्रोपासकानां मानसस्नानम् ।

एवं स्नात्वा स्नाननिमित्तं द्विराचमनम् । तत्र जले पादमेकं स्थले पादमेकं दत्वा कार्य्यम् । तदनन्तरं द्रुपदामन्त्रत्रिवारपाठेन अघमर्षणत्रिवारपाठेन वा [ गायत्रीत्रिवारपाठेन वा[3] ] महा-व्याहृतिभिः प्रणवेन वा जलचुलुकपानम् । पुनर्द्विराचमनमिति । पैठीनसिः,—"अन्तरुदक आचान्तोऽन्तरेव शुद्धो भवति । बहि-रुदक आचान्तो वहिरेव शुद्धो भवति । तस्मादन्तरेकं वहिरेकं कृत्वा पादमाचामेत् ।" योगियाज्ञवल्क्यः,—

---

(१) D. ० विशेषेण ० ।

(२) A. C. मानसं स्नानम् ।

(३) D. Omits the portion bracketed.

उदके चोदकस्थस्य स्थलस्थस्य स्थले शुचिः।
पादौ प्रक्षाप्योभयत्राप्याचान्त उभयतः शुचिः।
यदा शुचिस्थले वा स्यादुदके देवतापितॄन्।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम्॥
आचान्तः पुनराचामेन्मन्त्रवत्स्नानभोजने।
द्रुपदां वा त्रिरावृत्य तथा चैवाघमर्षणम्॥
गायत्रीं वा त्रिरावृत्य महाव्याहृतिभिस्तथा।
सोपांशुप्रणवेनापि आपः पीता अघापहाः॥

अत्र च "पादौ प्रक्षाप्योभयत्राचान्त" उभयत्र जले स्थले च शुचिरिति स्नानान्त्या[1]चमनं विधाय स्थलस्याशुद्धत्वे जलमध्य एव तर्पणं कृत्वा स्नानान्त्याचमनं कार्य्यमित्युक्ता "आचान्तः पुनराचामे"दित्यादिना "मन्त्रवत्स्नानभोजन" इति स्नानशब्देन स्नानान्त्याचमनमनूद्य तदनन्तरं [द्रुपदादिमन्त्रविकल्पविशिष्टं जलचुलुकपानं विधीयते। एषा चात्र योजना स्नाने भोजने निमित्ते यत् "आचान्तः पुनराचामेत्" तदनन्तरं मन्त्रवत् "आपः पीता अघापहाः" इत्युत्तरेण सम्बन्धः। मन्त्रविशेषापेक्षायां[2]] द्रुपदादिविशेषविधिरिति द्रुपदादिवैकल्पिकमन्त्रविशिष्टं यथा स्यात् तथा स्नानभोजनानन्तरं द्विराचमनानन्तरं (द्विराचमनान्तरं) जलचुलुकं पिबेदिति विशिष्टविधिः। न च योगियाज्ञवल्क्यो,—

(१) A. ० चमनमभिधाय ०।
(२) C. Omits the portion bracketed.

उपस्थानादिर्यस्तावान् मन्त्रवत्कीर्त्तितो विधिः।
निवेदनान्तं तत् स्नानमित्याहुर्ब्रह्मवादिनः॥

इति। "उद्वयं"ति तोयोपस्थानप्रभृति"देवा गातुविद" इति जप्यनिवेदनमित्यन्त(निवेदनेत्यन्त)कर्म्मकलापस्य स्नानशब्दपरिभाषणात् तन्मध्ये माध्याह्निकसन्ध्यायाः प्रवेशात् स्नानशब्देन मध्याह्नसन्ध्यातर्पणाघमर्षणमन्त्रकप्राथमिकजलपानमनूद्य तत्र मन्त्रविकल्पविधि[1]र्भोजनोत्तरं मन्त्रविशिष्टं जलपानं विधीयत इति [[2]न। एतद्द्वयमेकशब्दस्य शक्यम्।] तदुक्तं "भिन्नस्थानर्थसम्बन्धः"।

वैश्वदेवमुपादाय देवता नोपदिश्यते।
सकृद् विध्यनुवादौ हि नैकः शब्दः समश्नुते॥

इति(वाच्यम्)। किञ्च सन्ध्यान्तर्गतजलपानं "ऋतमित्यभिमन्त्र चे"त्यघमर्षणमन्त्रविशिष्टमुत्पन्नम्। तत्र मन्त्रान्तरमुत्पत्तिविशिष्टमन्त्रावरुद्धे विधातुमशक्यमिति बलादुदकपानानन्तरं (पानान्तरं) समन्त्रकं विधेय[3]मापद्येत। नचैतदिष्टम्। यत्तु,—

(१) C. Here adds भोजनानन्तरं द्विराचमनानन्तरञ्च समन्त्रकजलभक्षणं विधीयत इति [द्रुपदादिमन्त्रविशिष्टं जलचुलुकपानं विधीयते। एषा चात्र योजना। स्नाने भोजने निमित्ते यदाचान्तः पुनराचामेत् तदनन्तरं मन्त्रवदापः पीता अपापहा इत्युत्तरेण सम्बन्धः। मन्त्रविशेषापेक्षायाम्।] अतएव अनन्तरमाचम्य शाट्यायनशाखानमिति सन्ध्याकर्म्मानुमन्त्रणं तस्माच्च स्नानान्ताचमनानन्तरसमन्त्रकमुदकभक्षणमस्तीतिवाच्यम्। एवञ्च सति वैरस्यं स्यात्। आपः पीता इति पदेनैकेन जलपानं सन्ध्यान्तर्गतमनूद्यते।

Except the portion bracketed A. reads as C. after the mark of 1.

(२) D. Omits the portion bracketed.

(३) D. ॰मापद्यते।

माध्याह्निककर्म्मकलापस्य "निवेदनान्तन्तु ( न्तत् ) स्नान"मिति स्नानशब्दवाच्यत्वकीर्त्तनं तदर्थवादमात्रम्।

अगम्यागमनात् स्तेयात् पापिभ्यश्च प्रतिग्रहात्।
रहस्याचरितात् पापान्मुच्यते स्नानमाचरन्॥

इति वक्ष्यमाणविधिप्ररोचनार्थम्। तेन यथाप्राप्तानुवादत्वात् तीर्थविसर्जनस्य [1]जप्यनिवेदनपूर्व्वकालीनस्य स्नानाङ्गत्वात् सन्ध्यादेः [2]स्नानानङ्गत्वेऽपि बहुमन्त्रत्वेन स्नानस्य प्राशस्त्यमुच्यते। तथा च मत्स्यकच्छपमण्डूकास्तोये मग्नाः स्नानफलं न लभन्त इतिवचनान्मन्त्रबहुत्वेनैव स्नानस्य फलजनकत्वमिति व्यक्तमर्थवादत्वम्। तेन स्नानपदस्य सन्ध्याकर्म्म न वाच्यम्। यत्तु पूर्व्वं वस्त्रपरिवर्त्तनविधानात् स्नानान्त्याचमनप्रत्यभिज्ञा नास्तीति तन्न "पादौ प्रक्षाल्योभयत्राचान्त" इत्यनेन सन्निधिसम्पादनात्। न च "द्रुपदां त्रिरावृत्त्ये"ति द्रुपदादेरावृत्ति[3]कर्म्मत्वेन निर्द्देशात् "महाव्याहृतिभिस्तथे"ति "सोपांशुप्रणवेनापो"ति व्याहृतिप्रणवयोर्भिन्न[4]कार्य्यसमुच्चयः। "तथा" शब्दो"ऽपि" शब्दश्च समुच्चयार्थः। तेन द्रुपदां त्रिरावृत्त्यनन्तरं भूर्भुवःस्वरोमित्युच्चार्य्य [5]जलपानं, एवमघमर्षणान्ते भूर्भुवः स्वरोमित्युच्चार्य्य जलपानं गायत्र्यनन्तरञ्चेतिवाच्यम्। द्रुपदामितिकर्म्मत्वस्य कर्त्तृव्यापारव्याप्यत्वघटितत्वेन करणत्वान्तर्गते

(१) D. जपे निवेदन ०।

(२) A. D. स्नानाङ्गत्वेऽपि ०।

(३) D. कर्म्मत्वेन च ०।

(४) A. C. ० कार्य्यात् समुच्चयः।

(५) A. C. वा जलपानं गायत्र्यनन्तरं चेतिवाच्यम्।

व्याहृतिभिरित्यत्रापि व्याहृतिभिराहृत्येत्याहृत्तिकर्म्मत्वं व्याहृतीनां तृतीयोपात्तमस्त्येवेत्येकार्थत्वाद्विकल्पः। सोमेन यजेतेति सोमस्य तृतीयया करणत्वेऽपि (क)न्यग्रोधस्तिराहृत्य भक्षं प्रयच्छेदिति फलचमसस्य कर्म्मत्वेऽपि यागसम्बन्धं विना भक्षकर्म्मत्वानुपपत्तेरर्थात् यागकरणत्वेऽनेकार्थत्वात् सोमबाधकत्वं यथेति। "तथा" शब्दोऽपि यथा गायत्री विकल्प्येत तथा व्याहृतयोऽपि। एवं प्रणवोऽपीति विकल्पातिदेशार्थ एवेति सर्व्वं समञ्जसम्। मनुः,—

अनेन विधिना स्नातः अमेध्ये स्नानवाससी।
परिवर्त्तितवासाश्चेत्तीर्थतीर उपस्पृशेत्॥

तेन जलमध्ये तर्पणादिकरणे जल एव स्नानान्त्याचमनम्। तत्रैव समन्त्रकजलभक्षणम्। जलमध्य एव सर्व्वकर्म्मकरणाद्बहिःशुद्ध्यनपेक्षणादन्तरेकं वहिरेकमित्यस्य जलमध्ये न प्रसङ्गः। वस्त्रपरिवर्त्तनानन्तरं तीरे स्थितः अन्तरेकं वहिरेकं पादं कृत्वाचामेदित्यर्थः। तेन याज्ञवल्कीये वस्त्रपरिवर्त्तनानन्तरं समन्त्रकजलभक्षणविधानं (१)नानुपपन्नम्। विष्णुः,—"स्नातः शीर्षोष्णे धौते वाससी बिभृयात्। नाङ्गेभ्यस्तोयमुद्धरेत्। नाप्रक्षालितं पूर्व्वधृतं वासो बिभृयात्।" उष्णीषधारणं शिरोजलनिर्णेजनार्थम्। तथा च द्रोणपर्व्वणि युधिष्ठिरस्नाने,—

राजहंसनिभं प्राच्यमुष्णीषं शिथिलार्पितम्।
जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि॥

---

(क) Should be न्यग्रोधस्तिभिनीराहृत्य भक्षं O See जैमिनीयन्यायमालाविस्तरस्य अध्यायस्तृतीयः पादः पञ्चमः अधिकरणमेकोनविंशमम्।

(१) A. चानुपपन्नम्।

तेन "नाङ्गेभ्यस्तोयमुद्धरेदि"ति शिरोव्यतिरिक्तेभ्यः। हारीतः,— स्नात्वा न गात्रमवमृज्यात्। एतच्च स्नानाङ्गं तदपचारे स्नानवैगुण्यं नाधर्म्मः। तेन स्नातोऽङ्गानि वस्त्रेण पाणिना वा न मार्जयेदिति। वस्त्रपाण्योरुद्देश्यविशेषणत्वादविवक्षा। यत्तु,—

वस्त्रेण मार्जिते गात्रे स्नानवस्त्रेण मार्जिते।
शुनोच्छिष्टं भवेद्गात्रं पुनः स्नानेन शुद्ध्यति॥

तद्रोगादिनासहिष्णोरर्थप्राप्ते मार्जने स्नानवस्त्रहस्तनिषेधपरम्। तेन वस्त्रान्तरेण प्रकारान्तरेण वा मार्जने स्नानवैगुण्यं नाधर्म्मः।

---

## अथ वस्त्रपरिधानम्।

याज्ञवल्क्यः,—

स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च।
अभावे धौतवस्त्रस्य शाणक्षौमादिकानि च॥
कुतपं योगपट्टं वा द्विवासा येन जायते।

धौतं कार्पासम्। शणसूत्रभवं शाणम्। अतसीभवं क्षौमम्। ब्रह्मचारिवस्त्राधिकारे गोतमः,—वासांसि शाणक्षौमचीरकुतपाः सर्व्वेषाम्। कार्पासं वा विकृतम्। काषायमप्येके धार्य्यं ब्राह्मणस्य। चीरं कुशादिनिर्म्मितम्। कुतपः पर्व्वतीयच्छागरोमनिर्म्मितः। काषायस्य गृहस्थे निषेधो वक्ष्यते। आपस्तम्बः,—आविकं सार्व्ववर्णिकम्। नरसिंहपुराणे,—

न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते।

उल्वणमधो नाभ्या उपरि जान्वाम्छादयेदिति। एतत्-परिमाणादधिकं नाप्रक्षालितं पूर्व्वधृतं वासो बिभृयादिति। एतद् गृहस्थधर्म्मप्रकरणाम्नानात् कर्म्माङ्गवस्त्रपरम्। अन्यथा फलकल्पनापत्तेः। तेन [1]शीतत्राणाद्यर्थं नायं नियमः। पूर्व्वपरिहितं वासः प्रक्षाल्यैव बिभृयादिति तु परिहितपदादधो[2]वस्त्रपरमेव। [3]एतत्समानार्थत्वार्थाय पूर्व्वधृतमित्यप्यधोवस्त्रपरमित्येके। तेनोत्तरीयस्य न प्रत्यहं क्षालनमिति। तथा नोत्तराधोवाससोर्विपर्य्यासं कुर्य्यात्। न रात्रिवासो दिवा परिदध्यात्। रात्रिवासःपदं शयनकालीनवस्त्रपरम्।

अन्यदेव भवेद्वस्त्रं शयनीये सदैव हि।

इति स्मृत्यन्तरात्। तथा सर्व्वरागान् वाससि वर्जयेत् कृष्णञ्च स्वाभाविकम्। तथा,—

कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति।
स्त्रीणां क्रीड़ार्थसम्भोगे शयनीये न दुष्यति॥
क्षौधृता शयने नीली ब्राह्मणस्य न दुष्यति।
[[4]नृपस्य वृद्धौ वैश्यस्य पर्व्ववर्जं न दुष्यति॥]

अन्यच्च तु,—

नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥

---

(१) D. शीतत्राणाद्यर्थवस्त्रस्य नायं ०।
(२) D. वस्त्रमेव।
(३) D. एतत्समानाय पूर्व्व ०।
(४) D. Omits the portion bracketed.

इति परिधाने दोषः। परिधाय भोजने चाण्डालादिस्पर्शे वाऽधिकदोषः।

नीलीरक्तं परीधाय भुक्त्वा स्नानार्हकस्तथा।

त्रिरात्रन्तु व्रतं कुर्य्यात् छित्वा गुल्मलता अपि॥

मनुः,—

न जीर्णमलवद्‌वासा भवेच्च विभवे सति।

जावालिः,—

नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन।

तथा परधृतं वर्जयेत्। असम्भवे तदपि धौतं ग्राह्यम्।

---

## वस्त्रपरिधानम्।

नूतनपरिधाने मन्त्रः,—"परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्मि शतञ्च जीवामि शरदः सुवर्चा रायस्पोषमभिसंव्ययिष्ये॥" पूर्व्वधृते मन्त्राभावः। "अधोनाभ्युपरि जान्वाच्छादयीत नातो न्यून"मिति किञ्चिदाधिक्ये न दोषः।

वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम्।

त्रिभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः॥

तेन वेष्टितवस्त्रस्य प्रत्यक्प्रान्तं पृष्ठे मध्यं वामकट्यां प्राक्प्रान्तं नाभौ वस्त्रदेहान्तराले प्रवेशयेत्। एतदेवोक्तम्,—

परिधानाद् वहिः कच्छा निवद्धा ह्यासुरी भवेत्।

एकदेशवहिर्भावेऽपि दोषः। उत्तरीयवस्त्रञ्च समाख्ययोत्तराङ्गाच्छादकम्। तदेकदेशाच्छादनेऽप्यविरुद्धमेव। आपस्तम्बः,—"नाधोवस्त्रैकदेशेनोत्तराङ्गं छादयेत्।" प्रतिनिधित्वेन प्राप्तस्य निषेधः। यत्तु गृह्यम्,—"एकश्चेत् पूर्व्वस्यैवोत्तरवस्त्रं छादयीत" इति तत्समावर्त्तनाङ्गमेव। तेन वस्त्रासम्भवे प्रतिनिधिरूपेण क्षौमाजिनवल्कलादिग्रहणम्। अत्र च,—देवागारश्राद्धगोष्ठयज्ञसन्ध्यासाधुसङ्गमगुरुसन्निध्यग्न्यागारविवाहस्वाध्यायभोजनेषु दक्षिणपाणेर्वस्त्राद्बहिःकरणं तत्तत्कर्म्माङ्गपाणिसंस्कार इत्यर्थादुत्तरीयवस्त्रस्य यज्ञोपवीतवद्धारणम्। "श्राद्धे चापसव्यं वासोयज्ञोपवीतिकल्वे"ति पित्र्ये नियम्यते। दैवेऽर्थादेव सव्ये धारणम्। '(१)अन्यकर्म्मस्वनियम इति।

सव्यादंसात् परिभ्रष्टं कटिदेशे धृताम्बरम्।
एकं वस्त्रं विजानीयात्

इति लिङ्गात् सर्व्वदा सव्यांसे चोत्तरीयधारणमित्याहुः। "नित्यमुत्तरीयं वासः कार्य्यमपिवा सूत्रमेवोत्तरीयार्थं" इति यद्यपि सूत्रमात्रमुत्तरीयार्थे विहितं तथापि,—

यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्म्मसु।
तृतीयञ्चोत्तरीयार्थे वस्त्राभावे तदिष्यते॥

इतिवाक्यदर्शनादविरोधाच्च यज्ञोपवीतलक्षणोपेतं सूत्रमुत्तरीयप्रत्याम्नातत्वेन विज्ञेयात्। तस्य च यज्ञोपवीतत्वव्यागेनैव

(१) C. अन्यकर्म्मसु नियम इति०।

वस्त्रकार्य्यकारित्वात्। यूपकार्य्यकारिणि परिधौ परिधिमन्त्रवत् यज्ञोपवीतमन्त्र एव [1]भवति मन्त्रः। अत्रोत्तरीयार्थे इति "अर्थे" पदेनोत्तरीयप्रयोजनमुद्दिश्य यज्ञोपवीतं विधीयते। उत्तरीयप्रयोजनञ्च नित्यधारणफलं पापक्षयः कर्म्मोपकारश्च। तेन—

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा।
नैकवस्त्रः प्रवर्त्तेत द्विजो वाचनिके जपे॥

इति यत्र एकवस्त्रनिन्दाकल्पितविधिना द्वितीयवस्त्रमुत्तरीयकर्म्माङ्गत्वेन विधीयते [2]तत्कार्य्येऽपि यज्ञोपवीतं विधीयते। यथा "शमीमय्यः स्रुचो भवन्ती"ति स्रुक्पदोपस्थितपालाशादिकार्य्ये शमीविधि[3]रङ्गप्रधानसाधारणपालाशादिकार्य्ये विधीयते। एवम्,—

न भार्य्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः।

इत्यत्रापि भोजनकाले निन्दाकल्पितविधिनोत्तरीयमेव विधीयते। तस्य च फलं नित्यकर्म्मान्तरवत् पापक्षयः। तेन तत्कार्य्येऽपि विहितं भवति विनिगमनाऽविरहात्। यत्तु,—

नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि न।

इति जपकाले बहुवस्त्रत्वनिषेधः "न वासोभिः सहाजस्र-"मिति स्नानाङ्गनिषेधश्च [4]तत्र जपकाले स्नानकाले च वस्त्रान्तरसत्त्वेऽपि यज्ञोपवीतस्य वस्त्रत्वाभावाद् बहुवस्त्रत्वाभावः। स्नाने च

(१) A. C. भवति। न वस्त्रमन्त्रः।
(२) C. तत्कार्य्येऽपि विहितं भवति यज्ञोपवीतं विधीयते।
(३) D. ॰ रनङ्गप्रधान ॰।
(४) A. C. तेन जपकाले च वस्त्रान्तर ॰।

यद्यपि कात्यायनेन "कुशोपग्रही बद्धशिखो यज्ञोपवीती"त्येवोक्तं नोत्तरीयं, तथा "निष्पीड्य स्नानवस्त्र"मित्येकत्वं स्नानवस्त्रस्यानूद्यते तथापि कात्यायनीयस्य नोत्तरीयपरिसंख्यात्वं परिसंख्यादोषादेव। "निष्पीड्य स्नानवस्त्र"मित्येकत्वं संस्कारगतमविवक्षितम्। तेन होमदेवार्चनाद्याखिल्याद्युपपदेन (इति "आदि" इत्युप०) स्नानेऽप्युत्तरीयं विहितमेव। तेन न [1]कश्चिद्दोषः। उत्तरीयमन्त्रः,— "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च माऽविदद् यशो मा प्रतिपद्यताम्।" नूतनवस्त्रे। पुरातने मन्त्राभावः। नवोत्क्षेपे मन्त्रः,—

युवा सुवासाः परिवीत आगात्
स उ श्रेयान् भवति जायमानः।
तं धीरासः कवय उन्नयन्ति
स्वाध्यो मनसा देवयन्तः॥

इति।

वस्त्रपरिधानानन्तरं योगियाज्ञवल्क्यः,—

प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथा।

तथा,—

स्नात्वा संमृज्य वासोऽन्यज्जङ्घे संशोधयेन्मृदा।

ऊरुजङ्घाचालनं वारुणस्नाने गुदजलसंसर्गशोधनार्थम्। [2]तथा च पराशरः,—

---

(१) D. कश्चिद्दोष इत्यर्थः।

(२) A. तदाह पराशरः।

अपवित्रीकृते ते तु कौपीनच्युतवारिणा।

इति कौपीनतोऽपानच्युतेन जलेनेति लक्ष्मीधरेण व्याख्यातम्।

[ [1]गुदजलसंसर्गाभावे सति

ततः प्रक्षालयेत् पादौ मृत्तोयेन विचक्षणः।

इति नरसिंहपुराणोक्तं पादप्रक्षालनमात्रम्।

तत्र (ततः) यथोक्तरूपेण परिभाषानुसारेण तिलकग्रहणम्। शङ्खचक्रादिधारणञ्च पूर्व्वोक्तरीत्या। यथोक्तरूपेण यज्ञोपवीतधारणम्। ]

नवयज्ञोपवीतधारणे ब्रह्मोपनिषदुक्तो मन्त्रः,—

यज्ञोपवीतं परमं पवित्रं
बृहस्पतेर्यत् सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः॥

अथवा "यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि।" अग्रार्के (?) लिखितो मन्त्रः।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥

तथा,—मेखलादण्डाजिनयज्ञोपवीतावपाते त्रय्या हुत्वा यथार्थमुपेयात्। अवपातः पादमार्गेण निःसरणम्। त्रयी च ऋक्-

(१) A. C. Omit the portion bracketed.

त्रयम्। "तुभ्यन्तामङ्गिरः।" "पुनर्मनः।" "अग्ने व्रतपा" इति। तेन होमः। रुद्राक्षधारणम्। पद्माक्षधारणम्। तुलसीकाष्ठमालाधारणम्। विष्णुनिर्म्माल्यधारणम्। "अलङ्करणमसि भूयोऽलङ्करणं मे भूयाः।" इति स्वर्णमुद्रिकाधारणमनामिकायाम्। तेनैव मन्त्रेण तर्ज्जन्यां रजतमुद्रिकाधारणम्। कर्णयोः कुण्डलधारणम्। हिरण्यमालाधारणञ्च। शिखाबन्धनम्। पवित्रोपग्रहकुशधारणञ्च परिभाषोक्तरीत्या।

---

## [1]अथ सन्ध्या।

योगियाज्ञवल्क्यः,—

अतः परं प्रवक्ष्यामि सन्ध्योपासननिर्णयम्।
अहोरात्रकृतात् पापाद् यामुपास्य प्रमुच्यते॥

दक्षः,—

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।
यदन्यत् कुरुते कर्म्म [2]न तस्याप्नोति तत्फलम्॥

छन्दोगपरिशिष्टे,—

अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः।
पूर्व्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि॥
गायत्रीमभ्यसेद् विद्वान् यावदादित्यदर्शनम्।

---

(१) D. अथ सन्ध्यानिर्णयः।
(२) D. ० न तस्य फलभाग्भवेत्।

याज्ञवल्क्यः,—

यावन्तोऽस्यां विकर्म्मस्थाः पृथिव्यां वालिशा द्विजाः ।
तेषां हि पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥
सन्ध्या येन न विज्ञाता सन्ध्या[1]नैवाप्युपासिता ।
जीवन्नेव स शूद्रत्वं मृतः श्वा चाभिजायते ॥
[2]नोपतिष्ठति यः पूर्व्वामुपास्ते न च पश्चिमाम् ।
स शूद्रवद् वहिष्कार्य्यः सर्व्वस्माद् द्विजकर्म्मणः ॥
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः ।
कामं तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत् ॥

याज्ञवल्क्यशातातपौ,—

गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता ।
नदीषु शतसाहस्री अनन्ता शिवसन्निधौ ॥
अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं वह्निः सन्ध्याभ्युपासिता ॥

योगियाज्ञवल्क्यः,—

ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।
सन्ध्या[3]मुहूर्त्तमात्रञ्च ह्रासवृद्धौ तु सा स्मृता ॥ (क)

---

(१) D. C. ० नैवाभ्युपासिता ।

(२) D. उत्तिष्ठति तु यः ० A. C. न तिष्ठति तु यः ०

(३) D. ० मुहूर्त्तमाकर्ण्यां ह्रास ० ।

(क) रघुनन्दनोऽत्र पठति,—ह्रासवृद्धी तु सततं दिनरात्र्योर्यथाक्रमम् । सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा स्मृता । See तिथितत्त्वम् ।.

मुहूर्त्तं नाड़ीद्वयम्। तथा,—

सन्धौ सन्ध्यामुपासीत नास्तगे [1]नोद्गते रवौ।

सम्वर्त्तः,—

पूर्व्वां सन्ध्यां सनक्षत्रामुपासीत यथाविधि।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम्॥

बौधायनः,—"सुपूर्व्वामपि पूर्व्वामुपक्रम्य उदित आदित्ये समाप्नुयात्। अस्तमितमुपक्रम्य सुपश्चादपि पश्चिमाम्। सन्ध्ययोश्च सन्तत्या अहोरात्रयोश्च सन्तत्यै।" सुपूर्व्वां बहुषु नक्षत्रेषु दृश्यमानेषु समारभ्येत्यर्थः। अपिशब्दादल्पनक्षत्रदर्शनेऽप्यारम्भः। सायञ्च सुपश्चादपि बहुनक्षत्रदर्शनेऽपि समापनम्। बौधायनः,—

अनागतान्तु ये पूर्व्वां नातिक्रान्तान्तु पश्चिमाम्।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः॥
सायं प्रातः सदा सन्ध्यां ये न विप्रा उपासते।
कामं तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत्॥

योगियाज्ञवल्क्यः,—

सन्ध्या उपासिता येन विष्णुस्तेन उपासितः।

तथा,—

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
प्राद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने॥

---

(१) A. C. नोद्यते०।

अहन्यहनि ते नित्यं सूर्य्यमिच्छन्ति खादितुम्।
(१)अथ सूर्य्यस्य तेषाञ्च युद्धमासीत् सुदारुणम्॥
ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः।
सन्ध्येति तमुपासीनाः प्रक्षिपन्ति महज्जलम्॥
ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
तेन (२)दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा॥

तं सूर्य्यं सन्ध्येत्युपासीना जलं प्रक्षिपन्ति।

त्रयाणाञ्चैव देवानां ब्रह्मादीनाञ्च सङ्गमः।
सन्धिः सर्व्वसुराणाञ्च सन्ध्या तेन उदाहृता॥
गरीयसी तु भूतानां तस्मात् पैत्री तनुर्हि सा।

पैत्री पितृजननार्या ब्रह्मणः सूनुः सन्ध्या।

सन्धित्ते तु परे सूक्ष्मे निर्गुणे गुणबोधिनि।
प्रधानपुरुषातीते सन्धित्ते सन्धिरुच्यते॥ (१)

सन्ध्येति तमुपासीना इति यदुक्तं तस्यायं शेषः। परे सूक्ष्मे अविद्याजीवभिन्ने निर्गुणे प्रपञ्चहीने गुणबोधिनि जनवर्गस्य साक्षिणि परमात्मनि ब्रह्मबुद्ध्या सन्धित्ते। पुनश्च प्रस्तुतत्वादादित्य-मण्डले एवंविधपरमात्मबुद्ध्या सन्धित्ते। सन्धिः सन्ध्याशब्दः। स्वात्मानं सर्व्वसाक्षिणं निष्प्रपञ्चब्रह्माहमिति ज्ञात्वा तदेवं सूर्य्य-मण्डलात्मकमिति बुद्धिः कार्य्या। एवं सन्ध्याशब्दार्थः।

---

(१) C. तथा सूर्य्यस्य ०।

(२) C. दहन्ति ०।

अतएवोक्तम्,—

सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा।

आत्मविदा 'ब्रह्मात्मैक्यज्ञानवतेति। एवञ्चाञ्जलिप्रक्षेपकाले तथा ध्यानं कार्य्यम्। एवञ्च सन्ध्याशब्दार्थः। तादृशध्यानसहितोऽञ्जलिप्रक्षेपः गायत्रीजपश्चेति द्वयं प्रधानम्। "पूर्व्वां सन्ध्यां जपंस्तिष्ठे"दित्यादिना जपेऽपि सन्ध्याशब्दप्रयोगात्।

तथा अघमर्षणसूक्तस्य ऋष्यादिकमभिधाय,—

यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदकः।
तथाघमर्षणं सूक्तं सर्व्वपापापनोदकम्॥
सिन्धुद्वीपं भवेदार्षं गायत्रीच्छन्द एव च।
आपस्तु देवतं प्रोक्तं विनियोगस्तु मार्जने॥
सर्व्वत्र पावनं कर्म्म अब्लिङ्गानामुदाहृतम्।
कोकिलो राजपुत्रस्तु द्रुपदा आर्षमुच्यते॥
आनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम्।
सौत्रामण्यामवभृथस्नाने[2]तु विनियुज्यते॥
द्रुपदा नाम सा देवी[3]यजुर्वेदे प्रतिष्ठिता।
अन्तर्जले त्रिरावृत्य मुच्यते ब्रह्महत्यया॥
अपः पाण्योः समादाय त्रिः पठेद् द्रुपदा ऋचम्।
तज्जलं मूर्द्ध्नि विन्यस्य सर्व्वपापैः प्रमुच्यते॥

---

(१) D. आत्मैक्यज्ञानवतेति।
(२) D. ० तद्वुर्विनियुज्यते।
(३) A. D. यजुर्वेदप्रतिष्ठिता।

एवं ज्ञात्वा तु मन्त्राणां प्रयोगं वै द्विजोत्तमाः।
सन्ध्यामुपासते [1]यद् यद् यथावर्णं निबोधत।

अघमर्षणस्य मार्जने आपोहिष्ठेत्यस्य मार्जने द्रुपदायाश्च मूर्द्धि जलसेके प्रयोगं ज्ञात्वामीषामृष्यादिकञ्च ज्ञात्वेत्यर्थः। तेन द्रुपदामन्त्रचिरावृत्तमन्त्राभिमन्त्रितजलसेकः शिरसि सन्ध्याङ्गमुक्तं भवति।

ईशानाभिमुखो भूत्वा शुचिः प्रयतमानसः।
आचान्तः पुनराचामेदृतमित्यभिमन्त्र्य च॥

द्विराचम्य "ऋतञ्च सत्य"मित्यघमर्षणेनाभिमन्त्र्याचामेज्जलं पिबेदित्यर्थः।

त्रिरावृत्य तु सावित्रीं प्रणवं व्याहृतीस्तथा।
प्रणवानन्तरं व्याहृतित्रयं ततो गायत्रीति क्रमः।
प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयका।
इति छन्दोगपरिशिष्टात्। मार्जनं च [2]कुशाग्रोदकसेकः।
शिरसो मार्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः।
इति छन्दोगपरिशिष्टात्। तथा,—
मार्जनञ्च तथा कृत्वा आपोहिष्ठेति मार्जयेत्।
सार्द्धामृचन्तु प्रक्षिप्य ऊर्द्धं सार्द्धान्तु निक्षिपेत्॥

---

(१) A. ० यावद् यथा ०। Halāyudha's ब्राह्मणसर्व्वस्व reads ० यद्वद् यथावर्त्तान्निबोधत।

(२) D. कुशाग्रस्योदकैः।

अधोभागविसृष्टाभिरसुरा यान्ति संचयम् ।
सर्व्वतीर्थाभिषेकच ऊर्द्ध्वं सम्मार्जनाद् भवेत् ॥
अघमर्षणसूक्तेन मार्जनं कारयेत् ततः ।
शन्न आपस्तु द्रुपदा कामतः सम्प्रयोजयेत् ॥

कामत इच्छया मन्त्रोक्तफलकामनायामित्यन्ये। "शन्न आप" इत्यादि काम्यविषयमिति लक्ष्मीधरः। छन्दोगपरिशिष्टे तु,—

अतःपरं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम् ।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥
सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम् ।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः ॥
कर्म्मान्ते वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्जनं कुर्य्यात्

इत्याचमनद्वयाघमर्षणमन्त्रितजलपानकर्म्मान्ते मार्जनात् पूर्व्वं वारिणात्मानं सर्व्वतो वेष्टयित्वा रक्षां कुर्य्यादित्यर्थः। मार्जनानन्तरं शङ्खः,—

व्याहृतीः कीर्त्तयेच्चैवं तथैवाक्षरमव्ययम् ।

व्याहृतीरिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वपरम्। अव्ययं प्रणवः। इदञ्च पूर्व्वनिबन्धकारैरलिखितत्वात् "स्मृतिशास्त्र-विकल्पः स्या"दितिन्यायेन वैकल्पिकम्। व्याहृतिप्रणवकीर्त्तनं प्राणायामाङ्गजपरूपस्यानुवाद इत्यन्ये। तथाच,—

उपस्पृशेत् ततः पश्चान्मन्त्रेणानेन मन्त्रवित् ।

(१) A. C. °दैवं°।

इति।

[1]अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्॥

इति। तेन व्याहृतिप्रणवकीर्त्तनपदेन प्राणायाममनूद्य तद्द्वारा तदङ्गाचमनानुवादेनान्त [2]श्चरसीति मन्त्रविधिः। नरसिंहपुराणे,—

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः।
[ [3]प्राणायामांस्तु कुर्व्वीत ]

वशिष्ठाङ्गिरोबृहस्पतिवौधायनाः,—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥

छन्दोग [4]परिशिष्टे कात्यायनः,—

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः।
महर्ज्जन स्तपः सत्यं गायत्री च शिरस्तथा॥

आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरिति शिरः। प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः। प्रतिप्रतीकं प्रति व्याहृतीत्यर्थः।

---

(१) A. अन्तश्चरति ०।

(२) A. ० श्चरतीति ०।

(३) D. Omits the portion bracketed.

C. प्राणायामांस्तु कुर्व्वीत प्राङ्मुखः सुसमाहितः।

(४) D. परिशिष्टन्तु कात्यायनः ०।

एष एतां सव्याहृतिं तथैभिर्दशभिः सह। (?)
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते॥

आयतप्राणस्त्रिर्जपेत् स प्राणायाम इत्युक्ते एकैकप्राणायामे पूरके कुम्भके रेचके च त्रिवारजपः। न च प्रत्येकस्य [1][ प्राणायामजपत्वं किन्तु त्रितयं मिलित्वा ] प्राणायामत्वमिति वाच्यम्। प्रत्येकस्यैव प्राणायाम[2]लक्षणलक्षितत्वात्। तथा पतञ्जलिः,—"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः।" श्वासस्य प्रश्वासस्य च गतिविच्छेदस्त्रिष्वनुगतः। तथा "बाह्याभ्यन्तर[3]स्तम्भवृत्ति"रिति त्रितयलक्षणमुक्त्वा "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थं" इति बाह्यवृत्तिश्वासो रेचकोऽन्तरवृत्तिः श्वासः पूरकः स्तम्भवृत्तिः कुम्भकः। मनसा स्थानविशेषध्यानपूर्व्वकश्चतुर्थं इति। योगियाज्ञवल्क्योऽपि,—

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च।
प्रत्योङ्कारसमायुक्तं तत्सवितुर्वरेण्यम् (० ण्यपि)॥
ॐ आपो ज्योतिरित्येतत् शिरः पश्चात् प्रयोजयेत्।
एष मन्त्रप्रयोगस्तु प्राणायामनिरोधने॥
(क)त्रिरावर्त्तनयोगोऽयं प्राणायामस्तु शब्दितः।

---

(१) D. Omits the portion bracketed.
A. प्राणायामत्वं किन्तु त्रितयं मिलित्वा प्राणायामत्वमिति वाच्यम्। प्रत्येकस्यैव ०

(२) C. लक्षणा लक्षितत्वात्।

(३) D. ० स्तम्भ इति ०।

(क) त्रिरावर्त्तनयोगेन प्राणा ० See Halāyudha's ब्राह्मणसर्व्वस्वे प्राणायामप्रकरणम्।

त्रिवृत्तमन्त्रकस्य प्राणायामत्वमुक्त्वा तस्यैव त्रैविध्यमाह,—

रेचकः पूरकः कुम्भः प्राणायाम(मः)त्रिलक्षणः।

यत्तु,—

आसने सम्यगासीनो वायुनाऽपूर्य्य चोदरम्।
कुम्भकेन त्रिरावृत्ति र्दक्षिणेन च रेचयेत्॥

इति। अत्रापि त्रिरावृत्त्येति पूरकरेचकयोरपि सम्बध्यते। आसनञ्च पद्मस्वस्तिकभद्रादिवक्ष्यमाणलक्षणम्। तथा,—

वाह्यस्थितं नासपुटेन वायु-
माकृष्य तेनैव शनैः समन्तात्।
नाडीश्च सर्व्वाः परिपूरयेद् यः
स पूरको नाम महानिरोधः॥
न रेचको नैव च पूरयोगो
नासाग्रवर्त्ती स्थित एव वायुः।
सुनिश्चलं धारयते क्रमेण
कुम्भाख्यमेतत् (०मेतं) प्रवदन्ति तज्ज्ञाः॥
निष्कृष्य नासाविवरेऽ विशेषं
प्राणं वहिः शून्यमिवानिलेन।
निरुध्य सन्तिष्ठति चोर्द्धवायुः
स रेचको नाम महानिरोधः॥(ख)

(ख) निष्क्रम्य नासाविवरादशेषं प्राणं वहिः शून्यमिवानिलेन।
निरुच्छ्वसन् तिष्ठति चोर्द्धवायुः स रेचकोनाम महान् निरोधः॥
See Halāyudha's ब्राह्मणसर्व्वस्वे प्राणायामप्रकरणम्।

नासिकान्तस्य उच्छ्वासो ध्मातः पूरक उच्यते।
कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः॥

विष्णुपुराणे,—

प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते च यः।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च॥

तथा,—

परस्परेणाभि[1]भवं प्राणापानौ यदानिलौ।
[2]कुरुतः स द्विधा तेन तृतीयः [3]संक्रमात् तयोः॥

कुम्भकस्यैवं प्रकारत्रयम्। गुदमूलस्याकुञ्चनेनापानमाकृष्य प्राणस्य कुम्भकेन स्तम्भने प्राणेनापानाभिभवः। कुम्भकेन प्राणस्तम्भनानन्तरमपानस्योर्द्धमाकर्षणेऽपानेन प्राणस्याभिभवः। तदूर्द्धमाकुञ्चनस्तम्भनयोरनुवृत्तौ द्वयोः साम्यम्। तदुक्तं भगवद्गीतायाम्,—

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥

इति। पूरके च वामनासया पूरणम्। "इडया पूरयेद् वायु"-मिति स्मृतिः। "दक्षिणेन विरेचये"दिति पिङ्गलया कुम्भकानन्तरं विरेचनम्। तथा,—

(१) D. ० भवौ ०।
(२) A. C. कुरुते ०।
(३) D. संश्रमात् ०।

अङ्गुष्ठानामिकाभ्याञ्च कनिष्ठाङ्गुलिनापि च।
प्राणायामजपं कुर्य्यान्मध्यमां तर्ज्जनीं विना॥

इति वामनासापीड़नमनामिकाकनिष्ठाभ्यां रेचनकाले। [1]दक्षिणनासापीड़नमङ्गुष्ठेन पूरके। व्यासः,—

आदानं रोधमुत्सर्गं वायो[2]स्त्रिस्त्रिः समभ्यसेत्।

पूरकादित्रयं त्रिवारमभ्यसेदित्यर्थः। योगियाज्ञवल्क्यः,—

त्रिविधं केचिदिच्छन्ति तथैव नवधा परे।

नवधा पूरकादित्रयत्रिवाराभ्यासेन। एवञ्च [3][ सन्ध्याप्राणायामे पूरकादित्रिकत्रिरभ्यासः। अत्र ] प्राणायामो द्विविधः। सबीजो निर्बीजः। जपध्यानोपेतः सबीजः। तद्रहितोऽबीजः। सन्ध्यायां सबीज एव प्राणायामः। जपो मन्त्रस्य प्रणवसप्तव्याहृतिगायत्रीशिरःप्रत्येकप्रणवात्मकस्य। ध्यानं साकारब्रह्मचिन्तनपूर्व्वकं मन्त्रार्थनिराकारध्यानम्। योगियाज्ञवल्क्यः,—

नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम्।
चतुर्भुजं महात्मानं पूरकेण विचिन्तयेत्॥
कुम्भकेन हृदिस्थाने ध्यायेच्च कमलासनम्।
ब्रह्माणं रक्तगौराङ्गं चतुर्व्वक्त्रं पितामहम्॥
रेचकेनेश्वरं ध्यायेल्ललाटस्थं महेश्वरम्।
शुद्धस्फटिकसङ्काशं निर्म्मलं पापनाशनम्॥

---

(१) A. D. दक्षनासा॰।
(२) A. D. ॰स्त्रिस्त्रः समभ्यसेत।
(३) C. Omits the portion bracketed.

[1]मन्त्रजपस्य च प्राणायामे वाचिकजपे प्राणरोधभङ्गस्य (भङ्गस्य) प्रसङ्गात्। (प्रसङ्गात्) मानसत्वेन।

शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः।

इति। अर्थचिन्तनं प्रणवव्याहृतिगायत्रीशिरसां ब्रह्मात्मानुसन्धानमेव। योगियाज्ञवल्क्यः,—

सावित्र्याश्चैव मन्त्रार्थं ज्ञात्वा चैव यथार्थतः।
तस्यां यदुक्तञ्चोपास्य ब्रह्मभूयाय कल्पते॥
तच्छब्देन तु यच्छब्दो वोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥
देवस्य सवितुर्यच्च भर्गमन्तर्गतं विभुः (विभु)।
ब्रह्मवादिन एवाहुर्वरेण्यं सोऽस्मि धीमहि॥
चिन्तयामो वयं भर्गो धियो यो नः प्रचोदयात्।
धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तिः (०वृत्तिं) पुनः पुनः॥
बुद्धेर्बोधयिता यत्र नित्यात्मा पुरुषो विराट्।
सवितुस्तं वरेण्यन्तु सत्यधर्म्माणमीश्वरम्।
[2]हिरण्यवर्णवपुषं ध्यायेत् तं विष्णुसञ्ज्ञितम्॥
भ्राजते दीप्यते यस्माज्जगदन्ते हरत्यपि।
भ्राजते स्वेन रूपेण तस्माद् भर्ग इति स्मृतः॥

---

(१) D. मन्त्रजपस्य प्राणा०।
(२) D. हिरण्यवर्णपुरुषम् ०।

(क)दीप्यते द्योतते यस्मात् क्रीड़ते द्योतते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयसे (०ते) सर्व्वदैवतैः॥
स वेत्ता सर्व्वभावानां सर्व्वभावांश्च सूयते।
शयनात् पालनाच्चैव सविता तेन चोच्यते॥
वरेण्यं वरणीयं तज्जन्मसंसारभीरुभिः।
आदित्यान्तर्गतं भर्गः स्तूयते वै मुमुक्षुभिः॥
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च।
ध्यानेन पुरुषो यश्च द्रष्टव्यः सूर्य्यमण्डले॥

योगियाज्ञवल्क्यः,—

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्।

मैत्रायणीयगृह्यपरिशिष्टम्,—

प्रातः सूर्य्यश्च मेत्युक्त्वा सायमग्निश्च मेति च।
आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनं ततः॥

शङ्खः,—

उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्म्मवित्।
अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्॥

यद्यप्येवं मन्त्रविकल्पस्तथापि वाजसनेयिभिः प्रायेण शङ्खोक्तपरिग्रहात् तदुक्तो मन्त्रः। याज्ञवल्क्यः,—

---

(क) दीप्यते क्रीड़ते यस्माद् रुच्यते शोभते दिवि।
See Halāyudha's ब्राह्मणसर्व्वस्वे प्राणायामप्रकरणम्।

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु।

प्राणायामानन्तरमब्दैवतेनापोहिष्ठेत्यादिना देहप्रोक्षणं कुर्य्यादेव। अन्यत्र दृष्टत्वात्। योगियाज्ञवल्क्यः,—

अपः पाण्योः समादाय त्रिः पठेद् द्रुपदामृचम्।
तज्जलं मूर्द्ध्नि विन्यस्य सर्व्वपापैः प्रमुच्यते॥
एवं ज्ञात्वा तु मन्त्राणां प्रयोगञ्च यथाविधि।
सन्ध्यामुपासते यद्वद् यथावर्ण्णं निबोधत॥

[1]इत्येवं वाक्येन सन्ध्याङ्गत्वावगमात् फलश्रुतेरर्थवादत्वं

समुद्धृत्योदकं पाण्योर्जप्त्वा त्रिर्द्रुपदां क्षिपेत्।

इति व्यासवाक्याच्च। छन्दोगपरिशिष्टे,—

करेणोद्धृत्य सलिलं [2]प्राणमासज्य तत्र च।
जपेदनायतासुर्वा त्रिः सकृद् वाघमर्षणम्॥
उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिनाम्भसः।

त्रिकेण प्रणवव्याहृतिगायत्र्यात्मकेन। तैत्तिरीयश्रुतिः,—"उत्तिष्ठन्तं हवा तानि रक्षांस्यादित्यं योधयन्ति यावदस्तमन्वगात् तानि हवा एतानि रक्षांसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति।" "तदु हवा एते ब्रह्मवादिनः पूर्व्वाभिमुखाः सन्ध्यायां गायत्रियाऽभिमन्त्रिता आप ऊर्द्ध्वं विक्षिपन्ति ता एता

---

(१) D. इत्येव वाक्ये सन्ध्या०।
(२) A. ० प्राणमासज्य ०।

आपो वज्रीभूत्वा तानि रक्षांसि [1]मन्देहारुणे द्वीपे प्रक्षिपन्ति।"

योगियाज्ञवल्क्यः,—

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
प्राद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने॥

तथा,—

सन्ध्येति तमुपासीनाः प्रक्षिपन्ति महज्जलम्।
तेन ते विप्रणश्यन्ति वज्रीभूतेन वारिणा॥

व्यासः,—

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्र्य च।
आदित्याभिमुखस्तिष्ठन् त्रिः क्षिपेत् सन्ध्ययोर्द्वयोः॥

त्रिरित्येतस्य क्रियाविशेषणत्वात् करद्वयकरणकगायत्र्यभिमन्त्रितजलप्रक्षेपत्रयं शब्दार्थः। "तिस्र आहुतीर्जुहोती"तिवत् संख्याया भेदकत्वात्। तेन न सकृद् गायत्रीप्रक्षेपः किन्तु वारत्रयं जलग्रहणमभिमन्त्रणं प्रक्षेपश्च। इदञ्च सायं प्रातर्वैकल्पिकं छन्दोगपरिशिष्टोक्तैकाञ्जलिविधिना। मध्याह्ने त्वेक एवाञ्जलिः।

जलप्रक्षेपकाले सन्ध्यास्वरूपध्यानम्। योगियाज्ञवल्क्यः,—

पूर्व्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता।
या भवेत् पश्चिमा सन्ध्या सा विज्ञेया सरस्वती॥

(१) D. मन्देहाद्वीपे प्रक्षिपन्तीति।

तथा,—

श्वेता भवति [1]सावित्री गायत्री रक्तवर्णिका।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम्॥

तस्याः सम्प्रदायसिद्धं स्वरूपम्।

तां विद्यात्तु गायत्रीं वीक्षणां चतुराननाम्।
रक्ताम्बरद्वयोपेतामक्षसूत्रधरां तथा॥
कमण्डलुधरां देवीं हंसवाहनसंस्थिताम्।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम्॥
मन्त्रेणावाहयेद् विद्वानायान्तीं सूर्य्यमण्डलात्।

तत्र (अत्र) ब्रह्मलोकनिवासिनीं आसूर्य्यमण्डलादायान्तीमित्यन्तं द्वयं श्लिष्टम्। तेन ब्रह्मलोकादासूर्य्यमण्डलादायान्तीमित्यभिविध्यर्थमात्रम्। सूर्य्यमण्डलस्य सन्ध्यात्वात्।
योगियाज्ञवल्कीये तु,—

ओङ्कारं पूर्व्वमुच्चार्य्य भूर्भुवःस्व स्तथैव च।
[2]गायत्री प्रणवश्चान्ते जप्ये चैवमुदाहृतम्॥

इति सन्ध्याजपेतरजपमुपक्रम्य ध्यानमुक्तम्। सन्ध्याजपे [3]प्रणवान्तराहित्यस्य तेनैव वक्ष्यमाणत्वात्।

श्वेतवर्णा समुद्दिष्टा कौषेयवसना तथा।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता॥

---

(१) D. ॰ गायत्री सावित्री रक्त॰।
(२) A. गायत्री प्रणवश्चान्ते॰ C. गायत्रीं प्रणवश्चान्ते॰।
(३) A. C. प्रणवान्तताराहित्यस्य॰।

आदित्यमण्डलान्तःस्था ब्रह्मलोकस्थिताऽथवा।
अक्षसूत्रधरा देवी पद्मासनगता शुभा॥

केचित्तु इदं [1]गायत्रीध्यानं जपकाले [2]कार्य्यम्। "रक्ता,भवति गायत्री"त्यादि तु सन्ध्याध्यानं जलप्रक्षेप इत्याहुः। वस्तुतो गायत्रीसन्ध्ययोरैक्येन ध्यानमिति व्यवस्थैव। "अत्र मन्त्रेणावाहये"दिति यद्यपि जलप्रक्षेपकालीनध्यानानन्तरमुक्तं तथापि योगियाज्ञवल्क्येन,—

[3]तत्रावाह्य जपित्वा तु नमस्कृत्य [4]विसर्जयेत्।

इति श्रुतिक्रमदर्शनात् [5]पाठक्रमबाधेन जपारम्भएव गायत्र्यावाहनम्।

यद्यपि याज्ञवल्क्येन,—

आवाह्य यजुषानेन तेजोऽसीति विधानतः।

इति "तेजोऽसी"ति यजुरुक्तं तस्य वाजसनेयिपरिगृहीतत्वेऽपि तैत्तिरीयश्रुतिप्रत्यक्षदृष्ट एवावाहनमन्त्रः सपरिकरो ग्राह्यः। स प्रयोगो वक्ष्यते। ततश्च "यत् प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति, "असावादित्यो ब्रह्मे"ति तैत्तिरीयश्रुतेरनेन

(१) D. सावित्रीध्यानं ०।
(२) D. कार्य्यञ्च।
(३) D. तत्रावाह्य ०।
(४) C. विवर्जयेत्।
(५) D. पीठक्रम ०।

प्रदक्षिणावर्त्तनम् । तत्र“उद्यन्तमस्तं यन्त”मिति वाक्यशेषा-न्मध्याह्ने तदभावः ।

छन्दोगपरिशिष्टे जलप्रक्षेपानन्तरम्,—

तच्चित्रमुदयेनाथ उपतिष्ठेदनन्तरम् ।
सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः ॥
मध्याह्ने उदये वापि विभ्राड़ादीच्छया जपेत् ।
तदसंसक्तपार्ष्णिर्वा एकपादर्द्धपादपि ॥
कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्धबाहुरथापि वा ।

[१][अत्र] “तच्चित्रमुदये”न” इति सर्व्वैष्टीकाकारैर्व्याख्यातम् । कल्पतरौच,—”उद्वयं तमसस्परी”ति व्याख्यातमिति पाठ-सन्देहः ।

कात्यायनेन च

उदु त्यं चित्रं तच्चक्षुरुपस्थाय दिवाकरम् ।
वाङ्मनःकर्म्मजं पापं सर्व्वमेव व्यपोहति ॥

[२][ इति । ] “उद्वयं” मन्त्रस्थाने “तच्चक्षु”रिति निःसन्दिग्ध-पाठात् “सन्दिग्धमसन्दिग्धेन बाध्यत” इति बलाबलाधिकरणन्या-यात् कात्यायनस्य च वाजसनेयिपरिग्रहात् “तच्चक्षु”रित्युपस्थाने तृतीयो मन्त्रः । नचास्य गुणफलार्थत्वं पर्णमयोन्यायेनार्थवाद-त्वात् । [३][ नरसिंहपुराणेऽपि,— ]

(१) C. Omits the portion bracketed.

(२) A. C. ॰ नाथ सर्व्वै ॰ ।

(२ ३) D. Omits the portions bracketed.

उदु त्यञ्च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि।

अत्र च "उपतिष्ठेत्" इति परस्मैपदात् "जपेत्" इति नारसिंह-पाठाच्चादित्याभिमुखमवस्थाय जपमात्रम्। अर्थप्रकाशनमङ्गमेव। "इच्छया विभ्राड़ादी"त्यनुवाकपुरुषसूक्तशिवसङ्कल्पानां जपः। मध्येऽपि गायत्रीजपात्संध्यातः पूर्व्वमिच्छया विभ्राड़ादीनां जपः। गायत्रीजपादूर्द्ध्वं याज्ञवल्क्योक्तो नित्यं जपः। "कृताञ्जलि-रूर्द्ध्वबाहुर्वे"ति समविकल्पोक्तोऽपि

सायं प्रातरुपस्थानं कुर्य्यात्[1]प्राञ्जलिरानतः।

ऊर्द्ध्वबाहुस्तु मध्याह्ने

इति वाक्याद् वार्त्तिप्रोक्तव्यन्वितयोः [2]पौर्णमास्यमावास्या-व्यवस्थावत्। याज्ञवल्क्यः,—

सन्ध्यां प्राक् प्रातरेवेह तिष्ठेदासूर्य्यदर्शनात्।

जपन्नित्यनुषज्यते। तेन [3]सूर्य्योदयावधित्वापरित्यागेनैव जपः पूर्व्वसन्ध्या। तेन सूर्य्योदयात् पूर्व्वं जपसमाप्तौ प्रधानैक-(प्रधानैक)देशलोपात् प्रत्यवायएव। तत्काले कर्म्मान्तरेऽप्यनधि-कारः "सन्ध्याहीनोऽशुचि"रित्यु[4]क्तत्वात्। यत्तु,—

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत्।

(१) D. पा (प्रा) ञ्जलिरानतम्। A. प्राञ्जलिरानतः।

(२) D. पौर्णमासस्याव्यवस्थावत्।

(३) A. सूर्य्योदयावधिजपः पूर्व्वसन्ध्या।

(४) D. ॰ क्तन्यायात्।

वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥

इति तदपि सूर्य्योदयावधित्वापरित्यागेनैव।

यथा सूर्य्योदयपर्य्यन्ते शतसमाप्तिस्तथारब्धव्यम्। असमाप्तौ सूर्य्योदये शतमुदयोत्तरमपि समापनीयम्। आश्विनेऽसमाप्ते सूर्य्योदयेऽप्याश्विनसमाप्तिवत्। दैवाच्छतसमाप्तौ सूर्य्यानुदये शतस्यावृत्तिः कार्य्या। सूर्य्योदयात् पूर्व्वमाश्विनसमाप्तौ सूक्तावृत्तिवत्। प्रातरनुवाके अरुणोदयात् पूर्व्वमभ्युदितेत्यतः प्राचीनसूक्तसमाप्तौ तदावृत्तिवत्। नहि [1]कालविशेषेणावच्छिन्नानां न संख्यासम्बन्धः येन विकल्पः स्यात्। असंख्यातजपनिष्फलत्वेन श्रुतसंख्यासम्बन्धस्योदयावधित्वेऽप्यावश्यकत्वात्। आश्विनप्रातरनुवाकादौ ऋक् संख्यासत्त्वेऽपि कालावधिदर्शनात्। शुक्लप्रतिपदमारभ्यैकादशीपर्य्यन्ते द्वादशसहस्रयोस्सूक्तजपस्य विधिदर्शनाच्च। यत्तु बौधायनः,—"अथाप्युदाहरन्ति दर्भेष्वासीनो दर्भान् धारयमाणः सोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्त्तयेत् अपरिमितकृत्वो वा। प्राणायामः प्राणायामस्यैव (प्राणानायम्यैव) शतकृत्वः। उभयतः सप्रणवां ससव्याहृतिकां मनसा वा द्वादशकृत्वः। त्रिभिश्च प्राणायामैः प्रातः सावित्रीं ब्रह्महृदयेन, वारुणभ्यां रात्रिमुपतिष्ठते "इमम्मे वरुण, तत्त्वा यामी"ति द्वाभ्याम्।" एवमेव "प्रातः प्राङ्मुखस्तिष्ठन् मैत्राभ्यामहरुपतिष्ठते "मित्रस्य चर्षणी धृतो" मित्रोदयात् "पतिः

(1) C. कालविशेषावच्छिन्ना०।

प्रजाना”मितिदाभ्याम्।” अपरिमितकल्पः दशभ्य ऊर्द्धं शतादर्व्वा-गिति लक्ष्मीधरः। प्राणायामः शतकल्पः। यावद्भिः [1]प्राणनिरोधैर्वा शतं भवति। ब्रह्महृदयेन प्रणवेन प्राणायामत्रयम्। अत्र सप्तव्याहृति (का) आद्यन्तप्रणवयुक्तगायत्रीजपः सहस्रमितः शतमितो दशमितोवा सन्ध्याशब्दार्थः। [2][एतदपि सूर्य्योदयावधित्वापरित्यागेनैव “उदित आदित्ये समाप्नुयात्” इति तेनैवोक्तत्वात्। अन्येतु बौधायनमते सूर्य्योदयावधिजपः सहस्रादिसंख्यजपश्च विकल्पेन सन्ध्याशब्दार्थः]। तेन तन्मते सूर्य्योदयात् पूर्व्वमपि शतसमाप्तौ सन्ध्या कृता भवति। [3]वाजसनेयिनान्तु,—

ओङ्कारं पूर्व्वमुच्चार्य्य भूर्भुवः स्व स्तथैव च।
गायत्रीञ्च ततः पश्चात् सन्ध्याकाले जपेत् त्रिकम्॥

इति नान्ते प्रणवः। [4][“गायत्रीञ्च तत” इति क्रमप्राप्तौ पश्चादिति वचनादन्ते प्रणवाभावः।] योगियाज्ञवल्क्यः,—

एतदक्षर[5]मेताञ्च जपन् व्याहृतिपूर्व्वकम्।
सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते॥

इति नान्ते प्रणवः। साग्नेस्तु सूर्य्योदयात् पूर्व्वं होमविधानस्य निरवकाशत्वेन सन्ध्यायाश्चाधिकारसम्पादकत्वेन पूर्व्वं करण-

(१) C. प्राणनिरोधैः शतं ०।
(२) C. Omits the portion bracketed.
(३) A. C. वाजसनेयिनामपि।
(४) C. Omits the portion bracketed.
(५) D. मेतोञ्च ०।

ऽपि सूर्य्योदयात् पूर्व्वं सन्ध्यां समाप्य होमारम्भः। "शयाने(?) श्रीकाम" इति श्रीकामाग्निहोत्रस्यारुणोदयात् पूर्व्वं करणेऽपि प्रातःस्नानसन्ध्ययोरधिकारसम्पादकत्वेनाग्निहोत्रात् पूर्व्वं करणम्। अधिकारसम्पादकस्य स्वाधिकाराभावेऽप्यधिकार्य्यनुरोधेनाधिकारः। [ [1]यथा रथकारस्याधानाधिकारसम्पादकविद्याधिकारः।] [2]अथवा महापातकिनः [3]सन्ध्याधिकारेऽपि निरवकाशप्रायश्चित्तविध्यधिकाराधीनः सन्ध्यास्नानाधिकारः। न चैवमकाले कृतायाः सन्ध्यायाः काले पुनः करणम्। नहि सोमान्ते कृतायाः सायमाहुतेः पुनः स्वकाले करणम्। दुर्व्वलस्य सायमाहुत्यनन्तरं प्रातर्होमे कृते वा पुनः प्रातःकाले करणम्। तदुक्तं "सोमान्ते काल उक्त एव प्रातर्होम इति, [4]जीवेचेत् स्वः (श्वः) पुन र्न वा कृतत्वादिति च।" स्वविधिप्रयुक्ताया एव सन्ध्याया अधिकारसम्पादकत्वेन परनिमित्तमपकर्षणमात्रं नानुष्ठानं पराधीनम्। स्वविध्यधीनञ्चानुष्ठानं ज्ञातमेवातो न पुनः क्रिया। एवञ्च होमसमाप्त्यनन्तरं गायत्रीजप एवोदयपर्य्यन्तं कार्य्यं इत्यपि नास्ति। सन्ध्याह्यधिकारसम्पादिका न सन्ध्यैकदेशः। सा चेत् होमात् पूर्व्वं समाप्ता [5]कस्या एकदेशो [6]होमोर्द्धं कर्त्तव्यः। न च साङ्ग-

(१) D. Omits the portion bracketed.

(२) A. D यथा वा ०।

(३) A. C सन्ध्यानधिकारेऽपि ०।

(४) D. जीवे चेत्स्वः ०।

(५) A. C. एकस्या ०।

(६) D. होमः कर्त्तव्यम्।

सन्ध्याकर्म्म अनिष्पत्तौ होमाधिकारसम्पादकसन्ध्यापूर्व्वमुत्पन्नं(?) येन होमाधिकारः स्यादिति 'यद्यपि योगियाज्ञवल्क्येन,—

प्रणवो भूर्भुवः स्वरित्यङ्गानि हृदयादयः।
त्रिराहृत्य ततः पश्चादार्षं छन्दश्च दैवतम्॥

इति व्यस्तेन प्रणवव्याहृतित्रयेण चत्वार्य्यङ्गानि समस्तेन पञ्चममिति सकलगायत्रीजपसाधारण्येनोत्पन्नम्। तथापि सन्ध्याकालेऽङ्गान्तरविधानात् तदेव ग्राह्यम्। तथाच स्मृतिः,—

ओँ भूर्विन्यस्य हृदये ओँ भुवः शिरसि विन्यसेत्।
ओँ स्वः शिखायां विन्यस्य गायत्र्याः प्रथमं पदम्॥
विन्यसेत् कवचे विद्वान् द्वितीयं नेत्रयोर्न्यसेत्।
तृतीयेनास्त्रविन्यासश्चतुर्थं सर्व्वतो न्यसेत्॥
विन्यस्यैवं क्रमेणैव सन्ध्याकाले जपेद् द्विजः।
शिरोमन्त्रन्तु सर्व्वाङ्गे प्राणायामपरं (०परो)न्यसेत्॥
उपस्थाय तुरीयेण गायत्रीन्तु समाहितः।

चतुर्थपादो गायत्रीवाच्यो हिरण्यगर्भाख्यः तत्कृत्वा सर्व्वदेहे न्यसेदित्यर्थः। प्राणसंयमं कृत्वा सर्व्वाङ्गे शिरोमन्त्रन्यासः। "उपस्थाय तुरीयेणे"ति "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो माप्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति

(१) D. तदपि योगियाज्ञवल्क्यः।

वा।" इति तुरीयवाचकपरोरजःशब्दयुक्तः सकलो "गायत्र्यसी"ति मन्त्रो विवक्षितः। तेनोपस्थानं सन्ध्याङ्गम्। तथाच बौधायनः,— "उपतिष्ठेत वा एतां देवीं तुरीयपदेन। अथाप्युदाहरन्ति गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजस इत्यखिलां जपतीति।" उपस्थाय जपतीत्यर्थः। असावसौ पदस्थाने द्वेष्यनामग्रहणं द्वेष्यस्याभिलषितं माप्रापत्। द्वेष्याभावे पाप्मा मदीयजपफलप्रतिबन्धकत्वं मा प्रापदिति। अथवाहं पापक्षयं प्राप इत्येवं मन्त्रः। अत्र तस्या उपस्थानमित्यविशेषोक्तेः प्रकाशनपर्य्यन्तमुपस्थानशब्दार्थोऽवस्थानमात्रमिति सन्देहे "यस्मा एवमुपतिष्ठत" इति वाक्यशेषे आत्मनेपदप्रयोगान्मन्त्रकरणकप्रकाशनं लभ्यते तेन मन्त्रार्थस्य गायत्र्यां त्रैलोक्यत्रैविद्यत्रित्व-प्राणादिसम्पादनस्य ज्ञानं विना प्रकाशनशक्यमिति गायत्र्युपासना प्रथमं बुद्धिस्था कर्त्तव्या। अन्यथा प्रकाशनासम्भवेन"उपस्थाय तुरीयेण"इत्यसङ्गतेः। तेनार्थाद् गायत्र्युपासनमपि सन्ध्याङ्गम्। यस्तु प्रतिग्रहदोषनिवृत्त्यर्थमेव गायत्र्युपासनं काम्यं करोति तस्य कर्म्मकाले तदुपासनस्य फलातिशयत्वात् सुतरां सन्ध्यायाः पुरुषार्थमेव गायत्र्युपस्थानं संयोगपृथक्त्वात् कर्म्माङ्गञ्च। तथाच "भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं ह वा (क)गायत्र्या एकपदम्।" एवं "ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा गायत्र्या एकपदम्।" "प्राणो-

(क) बृहदारण्यकोपनिषद् reads "एकं गायत्र्यै पदम्" in the places of "गायत्र्या एकपदं" mentioned here in the text. See, 5. 14. 1, 2, 3.

ऽपानोदान(ख)व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह्वा गायत्र्यै एक-पदम्।" 'अथास्यान्तरिक्षं पदं परोरजा य एष तपतीत्युपास-नास्वरूपमुक्त्वाह,—(ग)"स य एवं विद्वद्ब्रह्विव प्रतिगृह्णाति न हैव तद् गायत्र्या एकञ्चन पदं प्रति।" इत्युक्त्वाह,—"स य इमांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत् 'प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा [³य एष तपति] नैव केन च नाप्यं कुत उ एतावत् प्रतिगृह्णीयात्।" इति।

योगियाज्ञवल्कीये च,—

सायं प्रातश्च ये सन्ध्यां मध्याह्ने पर्य्युपासते।
जपन् वै तामिमां देवीं गायत्रीं लोकमातरम्॥
स तया प्रार्थितो देव्या ब्राह्मणो वीतकल्मषः।
न सीदेत् प्रतिगृह्णानः पृथ्वीमपि ससागराम्॥

इति सन्ध्यात्रयकालीनजपकाले शतपथोक्तगायत्र्युपासना-फलं प्रतिग्रहदोषाभावरूपमेव श्रुत्यनुसारिणोक्तं लक्ष्यते। तेन

---

(ख) "उदान" is not seen in the बृहदारण्यकोपनिषद् See 5. 14. 3.

(१) D. ऋचास्या भूरियं पदं ०।

(ग) बृहदारण्यकोपनिषद् reads :—यदि ह्वा अप्येवं विद् ० See, 5.14. 5.

(२) C. द्वितीयं ०।

(३) C. Omits the portion bracketed.

प्रथमं गायत्र्युपासनां कृत्वोपस्थाय जपारम्भः कार्य्यः। जप-धर्म्माश्च परिभाषायामुक्ताः।

अक्षमालालाभे हस्तेन गणनम्।

प्रातरुत्तानपाणिस्तु मध्याह्ने समपाणिकः।
[1]अधोमुखकरः सायं वस्त्रावृतकरो जपेत्॥

इति विशेषः। मन्त्रार्थज्ञानस्य जपाङ्गत्वेऽपीह सन्ध्याशब्दार्थस्यादित्यमण्डले जीवब्रह्माभेदध्यानपूर्व्वकशुद्धचैतन्यात्मतासम्पादनस्यावश्यानुष्ठेयत्वेन गायत्र्यर्थतया तद्ध्यानमावश्यकम्। असमर्थस्य [2]सवितृमण्डलमध्यस्थनारायणध्यानम्।

वाचिकोपांशुमानसभेदेन जपत्रैविध्येऽपि,—

नोच्चैर्जपं बुधः कुर्य्याद् गायत्र्यास्तु विशेषतः।

इति गायत्रीव्यतिरिक्ते वाचिको जपोऽल्पफलः। गायत्र्यास्तु वाचिको जपो नास्त्येव। तेन यत् "उच्चनीचस्वरितै"रित्यादिवाचिकजपलक्षणे स्वरनियमाभिधानस्यासाधारणधर्म्मत्वेन मानसान्यव्यावृत्तत्वादुपांशुमानसयोः स्वराभावः। नचैवं गायत्र्या वर्णविशेषे स्वरविशेषविधानं व्यर्थम्। "वाचिको मारणे चैव प्रशस्त" इत्यादि गुणफलार्थस्य वाचिकस्य गायत्र्या (०त्र्यां) सम्भवेन तत्र स्वरापेक्षायां (या) विधानसम्भवात्। किञ्च पाणिनीये,—एकश्रुति दूरात् सम्बुद्धौ यज्ञकर्म्मणि जपन्युङ्खसामसु उच्चैस्तरां वषट्कारः उच्चैरुदात्तः नीचै-

---

(१) D. अधोमुखं करः ०।

(२) A. D. सवितृमंडल ०।

रनुदात्तः। समाहारः स्वरित" इत्युक्ता "विभाषाच्छन्दसी"त्युक्तम्। तत्र विभाषायामेव श्रुतिरित्यनुवर्त्तते "[1]यज्ञकर्म्मव्यतिरिक्ते छन्दसि उदात्तादिस्वरनियमो नैकश्रुत्यं वे"ति। तत्र यदि "जपन्यूङ्खसामसु" विभाषाप्रवेशस्तदा पर्य्युदासवैयर्थ्यमिति नित्यमेव तत्रो[2]दात्तस्वरः। तथाच त्रिविधजपे नानास्वरनियम[3]प्राप्तौ वाचिके नानास्वरनियमकथनमप्राप्तनियमविध्योरसम्भवात् परिसंख्यार्थमुपांशुमानसयोर्नोदात्तादिनानास्वर इति। अन्यथा "स्पष्टशब्दवदक्षरैर्व्यक्तं मन्त्रोच्चारणं वाचिक"मित्येतावता लक्षणसिद्धौ उच्चनीचस्वरितकीर्त्तनं व्यर्थमेव स्यात्। [4]जपसमाप्तौ "गायत्र्यसी"त्युपस्थाय महाव्याहृतिभिर्जलं

गायत्र्या प्रणवेनैव दद्यादेतत् विसर्ज्जनम्।

इति वचनात्। पुनस्तुरीयेणोपस्थाय प्रणवव्याहृतिगायत्रीभिर्जलचुलुकप्रक्षेपः। याज्ञवल्क्यः,—

इत्यावाह्य जपित्वा च नमस्कृत्य विसर्जयेत्।

नम इति पठित्वा गायत्रि स्वस्थानं गच्छेति विसर्ज्जनम्।

अन्यत्र तु,—

आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि।

गायत्रि च्छन्दसां मातः स्वयं ब्रह्माप्यवाप्यतु॥

---

(१) D. यदि कर्म्म०।

(२) A. C. ०दात्तादिस्वरः।

(३) D. ०समाप्तौ०।

(४) D Adds जपधर्म्मपरिभाषायामेवोक्तः। जपसमाप्तौ०।

इत्याह्वानं विसर्गोऽपि नमोऽस्त्वितिच तत्शृणु ।

उत्तरे शिखरे [1]जाते भूम्यां पर्व्वतवासिनि ।

ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम् ॥

इत्यावाहनविसर्गमन्त्रावुक्तौ । मनुः,—

ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः ।

दीर्घसन्ध्यत्वमुदया[2]नन्तरं जपस्य दीर्घकालव्याप्तता । शङ्खः सन्ध्याजपानन्तरम्,—

ततो जपेत् पवित्राणि पावमानीश्च शक्तितः ।

ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः ॥

पवित्राणि अघमर्षणादीनि शङ्खोक्तानि । तेन दीर्घसन्ध्यत्वमुदयानन्तरमघमर्षणादिजपेन । नृसिंहोपासकस्य,—

दशमात्रं जपेन्मन्त्रं न(ना)रसिंहन्तु सन्ध्ययोः ।

सर्व्वरोगविनिर्म्मुक्तः शतं वर्षाणि जीवति ॥

तस्मादष्टाक्षरं मन्त्रं [3]मद्भक्तैर्वीतकल्मषैः ।

सन्ध्याकाले तु जप्तव्यं शतञ्चात्मविशुद्धये ॥

[4]इत्येतच्च सूर्य्योदयानन्तरं कार्य्यम् । [5][ अथवा ] "काम्यं नित्यस्य बाधक"मिति सूर्य्योदयात् पूर्व्वं कार्य्यम् ।

---

(१) D. ० वासे भूम्यां ० ।

(२) D. ० नन्तरजपस्य ० ।

(३) A. चायमक्तैर्वीत ० ।

(४) A. C. इति च । एतञ्च ।

(५) D Omits the portion bracketed.

अत्र,—

कर्म्मणा मनसा वाचा यद्रात्र्या कृतमेनसः।

उत्तिष्ठन् पूर्व्वसन्ध्यायां प्राणायामैर्व्यपोहति॥

इति (उत्) तिष्ठतः [1]प्राणायामत्रयं सन्ध्याप्रकरणाद्बहिः पाठात् फलार्थं पृथक्कार्य्यमिति केचित्। वस्तुतो बलवत्प्रत्यभिज्ञानात् सन्ध्याकर्म्मण एवानेन फलान्तरसम्बन्धः। यथा याज्ञवल्क्यो [2]रहस्य-पापक्षयप्रायश्चित्तप्रकरणे,—

त्रिकालसन्ध्याकरणात् तत्सर्व्वं विप्रणश्यति।

इति। अन्यथा "फलञ्च कर्म्मसन्निधा"विति [3]तत्र सन्ध्याभेदा-पत्तेः। तेन "यज्ञेन दानेन विविदिषन्ती"तिवत् रूपाज्ञानादेवा[4]-प्रकरणेन कर्म्मभेदः। (?) नह्यत्रापि प्राणायामस्य मन्त्र(:) कालो वा ज्ञायत इति।

नारसिंहे,—

[5][ प्रदक्षिणं समावर्त्त्य नमस्कृत्य च तं प्रभुम्।

इति। तथा,— ]

प्रदक्षिणं समावर्त्त्य नमस्कृत्योपविश्य च।

मण्डलस्थं ततो ध्यायेत् पुरुषन्तु हिरण्मयम्॥

---

(१) D. प्रातरुत्थाय सन्ध्याप्रकरणाद् ०।

(२) D. रहस्यप्रायश्चित्त ०।

(३) D. तत् सन्ध्या ०।

(४) D. ० प्रकरणेऽपि न कर्म्म ०।

(५) D. Omits the portion bracketed.

त्वं ब्रह्मा त्वं तथा विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः।
त्वमेव चात्मा भगवान् स्थावरस्य चरस्य च॥
इत्युक्त्वापः समादाय प्रदद्यादञ्जलित्रयम्।
ब्राह्मवैष्णवरौद्रैर्वा मन्त्रैर्वा प्रणवेन वा॥

एतत्[1]सन्ध्याकर्म्म कालातिक्रमशङ्कायां जलमध्ये कर्त्तव्यम्। जले चार्द्रवासोनियमः। सावित्रीजपस्तु स्थले कर्त्तव्यः।

नोदकस्थो जपेद् विद्वान् सावित्रीं[2]वेदमातरम्।

इति वचनात्। स्थले चार्द्रवस्त्रनिषेधः सामान्यशास्त्रं गायत्री-जपस्य जले निषेधो विशेष इति तदेव परिहार्य्यम्।

न प्रातर्न प्रदोषे वा सन्ध्याकालो विपद्यते।
मुख्यः कालोऽनुकल्पश्च सर्व्वस्मिन् कर्म्मणि स्मृतः॥

तेन त्रिमुहूर्त्तात्मकः प्रातःकालोऽनुकल्पः। सायञ्च त्रिमुहूर्त्तम्। मण्डनादिभिः सजातीयकर्म्मान्तरकालपर्य्यन्तं गौणकालस्योक्तत्वात् मध्याह्नसन्ध्यापर्य्यन्तं गौणकालत्वेऽपि

सामान्येनाभ्यनुज्ञानाद् विशेषो हि विशिष्यते।

इतिन्यायेन त्रिमुहूर्त्तपर्य्यन्तं निर्द्दोषत्वं तदूर्द्धं फलाल्पत्वम्। मध्याह्नसन्ध्याकालादूर्द्धं लोप एव। [3]अयं विशेषः।

उदिते तु जलं पीत्वा गायत्र्या दशमन्त्रितम्।

---

(१) A. सन्ध्याकाला०।
(२) A लोकमातरं।
(३) A. C अयञ्च विशेषः।

इति नैमित्तिकमङ्गम्। तथा,—

यामार्द्धमागते सूर्य्ये तथाचास्तमुपागते।

विप्रः पतितसन्ध्यस्तु स्नात्वा सन्ध्यां समाचरेत्॥

यामार्द्धमागते,—दिवा अस्तमनादूर्द्ध्वञ्च यामार्द्धमागत इति सम्बन्धः। अत्र स्नानमधिकम्। सायंसन्ध्यायाः [1]प्रातःसन्ध्यापर्य्यन्तं गौणकालत्वेऽपि त्रिमुहूर्त्तादूर्द्ध्वं वैगुण्याधिक्यात् फलाल्पत्वम्। मध्याह्नसन्ध्यायास्तु,—

अध्यर्द्धयामादासायं सन्ध्या माध्याह्निकी स्मृता।

इति दक्षवचनाद् विशेषाभ्यनुज्ञानाद् दोषाभावः।

[2]शतकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः।

ततः सन्ध्यामुपासीत शुद्ध्यति तदनन्तरम्॥

इति श्राद्धभोजनप्रायश्चित्तं नतु सन्ध्याङ्गम्। तदभावे न सन्ध्यावैगुण्यम्।

सन्ध्योपासनहानौ च नित्यश्राद्धं विलोप्य च।

होमं नैमित्तिकं कुर्य्याद् गायत्र्यास्तु सहस्रकृत्॥

एतद् गौणकालेऽप्यकरणे प्रायश्चित्तम्। [3]सायमतिक्रमे रात्र्युपवासः प्रातरतिक्रमे दिवोपवास इति वा प्रायश्चित्तम्। न चैतत् कालातिक्रममात्रविषयमिति वाच्यम्। सन्ध्याप्रकरणाम्नातत्वेन

(१) D. प्रातःसन्ध्या गौणकाल०।

(२) A. D. दशकृत्वः०।

(३) A. C. रात्र्यतिक्रमे सायमुपवास इति प्रायश्चित्तम्।

¹तदनङ्गत्वे पृथक् फलकल्पनापत्तेः। प्रायश्चित्ते तु तन्नोपजन्य-पापचय एव फलमिति। विष्णुपुराणे,—

सर्व्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः॥

अन्यत्र ²सूतकाशौचेतु पर्य्युदासः। विभ्रमातुरभयेषु यदर्थ-प्राप्तमकरणं तत्र दोषाभाव उच्यते। तत्र विभ्रमादावपि सम्भवे कर्त्तव्यम्। व्यासः,—

ॐ सूर्य्याय नमः प्रातः सायञ्चैवाग्नये नमः।
अनग्निमान् ब्रह्मचारी प्रदद्यादुदकाञ्जलिम्॥

इति जलाञ्जलिदानम्। समाचारात् प्रजापतये द्वितीयाञ्जलिः। स्वाहाशब्दो नमःशब्दस्थाने च समाचारादेव। "अनग्निमान्" इत्यविशेषोपादानादुक्तत्राग्नेरपि।

---

(१) A. D. तदङ्गत्वे०।
(२) D सूतकाशौचपर्य्युदासः। A. सूतकाशौचे पर्य्यु०।

## अथ सन्ध्याक्रमः ।

ईशानाभिमुखोपविष्टस्य दक्षिणहस्ते पवित्रधारणम् । वामहस्ते कुशमुष्टिधारणम् । द्विराचमनम् । त्रिमात्रप्रणवोच्चारणम् । नारायणस्मरणम् । [1]दक्षहस्ते जलचुलुकमादाय ऋष्यादिस्मरणपूर्व्वकमघमर्षणसूक्तेनाभिमन्त्र्य तज्जलपानम् । द्विराचमनम् । वारिणा देहवेष्टनम् । ततः कराग्रस्थितजलविन्दुभिः कुशैः शिरसि जलविन्दुप्रक्षेपरूपं मार्ज्जनम् । प्रथमं प्रणवव्याहृतित्रयगायत्रीभिस्त्रिरावृत्ताभिरेकम् । "आपोहिष्ठे"ति सार्द्धर्चेन "भाजयतेह न" इत्यन्त्येन भूमौ जलविन्दुसेकः । कुशाग्रै"रुशती"रित्यादि "[2]च न" इत्यन्त्येन सार्द्धर्चेन शिरसि मार्ज्जनम् । अघमर्षणसूक्तेन मार्ज्जनम् । मन्त्रवर्णिकफलकामनायां "शन्न आप" "द्रुपदा" इत्याभ्यां मार्ज्जनद्वयम् ।

आसनं [3]स्थिरीकृत्य कुशत्रयेणास्तीर्य्य स्वस्तिकपद्माद्यन्यतमेनोप वेशनम् । ॐकारस्य,—[4][ ब्रह्म ] गायत्री [5]अग्निव(म)त् परमात्मा देवता प्राणायामे विनियोगः । [6]सप्तव्याहृतीनां,—प्रजापतिर्ऋषिर्गायत्र्यनुष्टुप्-व्याहृति पंक्तित्रिष्टुप् जगत्य-

(१) D. दक्षिणहस्ते ० ।

(२) D. जनयथाचन इत्य ० ।

(३) D. स्थिरीकृत्यास्तीर्य्य ० ।

(४) D. Omits the portion bracketed.

(५) D. अग्निर(म)त्प्रकाशात्मा देवताः ० ।

(६) D. समस्तव्याहृतीनां ० ।

च्छन्दांसि । अग्निवायुसूर्य्यबृहस्पतिवरुणेन्द्रविश्वेदेवाः (देवताः ।) गायत्र्याः,—विश्वामित्रः । गायत्री । सविता । शिरसः,—¹[प्रजापतिः ।] ²[यजुः ।] ब्रह्माग्निवायुसूर्य्याः ।

चक्षुर्निमीलनम् । वाग्यमः । दक्षनासापुटे दक्षाङ्गुष्ठदानेन नीरन्ध्रतां कृत्वा वामनासापुटे वाह्यवायुपूरणकाले "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्" इति मन्त्रं त्रिर्जपतः आकुञ्चनेनापानमूर्द्धमाकृष्य मन्त्रार्थ-चिन्तनम् । तटस्थस्वरूपलक्षणाभ्यां ब्रह्म लक्षयित्वा स्वात्मनस्तेना-भेदो वाक्यार्थः । "सवितु"र्जगत्कारणस्य "देवस्य" दीप्तात्मकस्य जड़व्यावृत्तचैतन्यात्मकस्य स्वरूपं यद् "भर्गः" भ्राजत इति स्वप्रकाश-मित्यर्थः । पुनः कीर्त्तनात् "वरेण्यं" प्रार्थनीयमानन्दस्वरूपमित्यर्थः । "यः" सविता "नो"ऽस्माकं "धियः" बुद्धिवृत्तीः "प्रचोदयात्" प्रेरयेत् धर्म्मार्थकाममोक्षेषु तं "धीमहि" स्वाभेदेन चिन्तयामः । कीदृशं तद् भर्गः ॐकारवाच्यपूर्णचित्स्वरूपं भूरादिसप्तलोकात्मकम् । भूरादिसप्तलोकानां तत्राध्यस्तत्वेन तत्सत्त्वयैव सत्त्वादिति सद्रूपत्व-मुक्तम् । ³["आपः" सलिलम् । "ज्योति"स्तेजोऽग्न्यादि । "रसः" पृथिवी । "अमृतं" ⁴वाय्वाकाशः । अमृतभूतद्वयञ्च ब्रह्मैव । तथा

(१) D. Omits the portion bracketed. A. प्रजापतिर्ऋषिः ।

(२) A. Omits the portion bracketed.

(३) A. Omits the portion bracketed.

(४) D. वाय्वाकाशरूपम् ।

ब्रह्म बृहत् । यद्व्यतिरिक्तं किमपि नास्तीत्यर्थः । "भूर्भुवः स्वः" सत्त्वरजस्तमोमयविष्णुब्रह्मशिवात्मकमिति । "ॐ" मित्यखण्डरूप-वाक्यार्थपरामर्शाय । अत्र भर्गदेववरेण्यपदभूरादिपदैः स्वप्रकाश-चिदानन्दसद्रूपत्वं स्वरूपलक्षणमुक्तम् । ] सवितुःपदशिरोमन्त्रै-स्तटस्थलक्षणं जगत्कारणत्वं प्रपञ्चाधिष्ठानत्वञ्चोक्तम् । धीमहीति पदेन ब्रह्मजीवयोरैक्यमुक्तमन्तिमोङ्कारेणाखण्डरूपवाक्यार्थ उक्तः । ततो नाभिमध्यस्थनीलोत्पलश्यामचतुर्भुजविष्णुध्यानम् । एवं पूरकं कृत्वा कनिष्ठानामिकाभ्यां वामनासापुटं नीरन्ध्रं कृत्वा [1][अङ्गुष्ठेन दक्षनासापुटं नीरन्ध्रं कृत्वा] गुदमूलाकुञ्चनेनापान-वायुमुत्तोल्य [2][पूर्ववद् दशप्रणवसप्तव्याहृतिगायत्रीशिरसां त्रिवार-जपेन सम्पूर्णकुम्भवदवस्थानम् । शक्तौ सत्यां त्रिवारजपादूर्द्ध्वमपि । मन्त्रार्थजीवब्रह्मैक्यचिन्तनं पूर्ववत् । हृदये रक्तगौराङ्गचतुर्मुख-ब्रह्मध्यानञ्च । एवं कुम्भकं स्थिरीकृत्य दक्षिणाङ्गुष्ठत्यागेन [3]दक्षनासापुटेन वायुविरेचनं शनैः शनैः । ] पूर्ववद्दशप्रणवसप्त-व्याहृतिगायत्रीशिरसां त्रिवारजपो मन्त्रार्थजीवब्रह्मैक्यानुसन्धा-नम् । ललाटे शुद्धस्फटिकसङ्काशवृषारूढमहेश्वरध्यानञ्च । एष रेचकः । एवमपरं वारद्वयं रेचकादित्रयम् ।

---

(१) D. Omits the portion bracketed.

(२) A. Omits the portion bracketed.

(३) D. दक्षिणनासा ० ।

ततः,—

[1]अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।

त्वं यज्ञ स्त्वं वषट्कार आपोज्योतीरसोऽमृतम्॥

इति सकृदाचमनम्। "आपोहिष्ठे"ति तृचेन सशिरस्कदेह-प्रोक्षणं समाचारादविरोधाच्च कुशैरेव। पाण्योर्जलमादाय द्रुपदां त्रिरावर्त्त्य तज्जलस्य शिरसि [2]क्षेपः। दक्षिणहस्ते जलचुलुकं गृहीत्वा वामनासायां संयोज्याघमर्षणसूक्तस्य त्रिः सकृद् वा जपः। जपकाले प्राणनिरोधः पाक्षिकः। प्राणनिरोधपक्षेऽप्या-चमनाभावः। प्रमाणाभावात्।

गायत्री बाला त्रीक्षणा चतुरानना रक्ताम्बरद्वयोपेता ब्रह्माणी हंसवाहनाक्षसूत्रकमण्डलु[3]हस्ता ब्रह्मलोकादागत्य सूर्य्यमण्डल-प्रविष्टा एवैव पूर्व्वसन्ध्येतिध्यानम्। प्रणवव्याहृतिगायत्रीभिरुत्थाय सूर्य्याभिमुखं [4]जलाञ्जलित्रयप्रक्षेपः। प्रत्यञ्जलिमन्त्रपाठः। "असावादित्यो ब्रह्मे"ति प्रदक्षिणावर्त्तनम्।

उपस्थानम्,—उदुत्यम्। प्रस्कण्वः। गायत्री। सूर्य्यः। चित्रम्। कौत्सः। त्रिष्टुप्। सूर्य्यः। तच्चक्षुः। दध्यङ्। आथर्व्वणः। उष्णिक्। सूर्य्यः। त्रयाणामुपस्थाने,—सूर्य्याभि-मुखस्य भूम्यलग्नगुल्फतया भूमिलग्नैकपादतया भूमिलग्नार्द्ध-

(१) A. C. अन्तश्चरति ०।

(२) D. प्रक्षेपः।

(३) D. ० धरा ०।

(४) D. जलाञ्जलिप्रक्षेपः।

पादतया वा स्थितस्य प्राञ्जलेर्मन्त्रत्रयपाठः। "उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यम्", "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च", "तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृणवाम शरदः शतम्।"

---

## अथ जपः।

प्रथमं सन्ध्यादेवतया [(२)गायत्र्या] कृतसन्धानं सूर्य्यं ध्यात्वा सच्चिदानन्दब्रह्माहमिति जीवब्रह्मणोरैक्यं ध्यात्वा तदेवादित्यमण्डलात्मकमिति ब्रह्माभिन्नत्वेनादित्यमण्डलध्यानम्। ॐकारस्य,—ब्रह्म। गायत्री। अग्निः। व्याहृतीनाम्,—प्रजापतिः। अग्निवायुसूर्य्याः। जपे (।) [(३)विश्वामित्रः। (?) गायत्र्या(ः),—] विश्वामित्रः। गायत्री। सविता। जपे। तेजोऽसीति,—परमेष्ठी (४)प्रजापतिः। यजुः। आज्यम्। गायत्र्यावाहने। "तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनम्।" गायत्रि

---

(१) C. मन्त्रपाठः।

(२) C. Omits the portion bracketed.

(३) D. Omits the portion bracketed.

(४) C. प्रजापतिपुरुषः। यजुः। आज्यं दे। गायत्र्यावाहने वि।

अत्रागच्छ। अथवा [1]प्रत्यक्षश्रुतविश्वामाधिक्यात् तैत्तिरीयरीत्यावाहनम्। प्रणवव्याहृतित्रय-ऋष्यादिस्मरणम्।

आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम्।
[2]गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे॥
यदह्नात् कुरुते पापं तदह्नात् प्रतिमुच्यते[3]।
सर्व्ववर्णे महादेवी सन्ध्याविद्ये सरस्वति॥

"ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्व्वमसि सर्व्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि। [[4]श्रियमावाहयामि।] [5]गायत्रिया गायत्री(च्छन्दो) विश्वामित्र(ऋषिः) सविता देवता। अग्नि(ः)मुखम्। ब्रह्मा शिरः। रुद्र(ः) शिखा विष्णु(ः) हृदयं पृथिवी योनिः प्राणापानव्यानोदानसमानाः [6]सप्राणाः। श्वेतवर्णा। साङ्ख्यायनसगोत्रा। गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयन(ने)विनियोगः।" गायत्र्यादीनां त्रयाणामाम्नानेऽपि सूक्तवाक्ये देवताषट्काम्नानेऽपि पर्व्वभेदेन व्यवस्था पूर्व्ववत्। गायत्रीमावाहयामीति प्रातः न[7]

(१) D. प्रत्यक्षद्वयो विश्वामा०।

(२) D. गायत्रीं छन्दसां मात इदं ब्रह्म जुषस्वरोम्।

(३) A. D. Adds here यद् रात्रौ कुरुते पापं तद् रात्र्या प्रतिमुच्यते।

(४) C. Omits the portion bracketed.

(५) C. गायत्र्या विश्वामित्रः। गायत्री। सविता। अग्निमुखम्०

(६) C. सुप्राणाः।

(७) D. नेतरयोः। मध्याह्ने०।

सावित्रीसरस्वत्योः। मध्याह्ने सावित्रीमावाहयामीति नेतरयोः। सायं सरस्वतीमावाहयामीति नेतरयोः। ॐ भूः हृदयाय नमः। ॐ भुवः शिरसे स्वाहा। ॐ स्वः शिखायै वषट्। ॐ तत्सवितुर्वरेण्यं कवचाय हुम्। ॐ भर्गो देवस्य धीमहि नेत्राभ्यां वौषट्। ॐ धियोयोनः प्रचोदयात् [¹करतलपृष्ठाभ्यां] अस्त्राय फट्। गायत्र्यै हिरण्यगर्भमादित्यमण्डलस्थं ध्यात्वा हिरण्यगर्भाय नम इति सर्व्वदेहे न्यासः। ²ॐ ब्रह्मभूर्भुवः स्वरोमिति संयतप्राणो देहे न्यसेत्।

---

## ततो गायत्र्युपासना।

"तत्सवितुर्वरेण्यं", "भूमिरन्तरिक्षं द्यौ"रित्यनयोः शब्दयोरैक्यचिन्तनम्। भूमिरन्तरिक्षमित्यस्यार्थं ³त्रैलोक्यरूपात्मकब्रह्मविकारः। गायत्रीप्रथमपादः। "भर्गो देवस्य धीमहि", "ऋचो यजूंषि सामानो"ति शब्दयोरभेदचिन्तनम्। ऋचो यजूंषि सामानीत्यस्यार्थंस्त्रैविद्यात्मकं नामात्मक(?)ब्रह्मविवर्त्तभूतं गायत्रीद्वितीयपादः। "धियो यो नः प्रचोदयात्", "प्राणी-

---

(१) A. C. Omit the portion bracketed.

(२) D. ओँ भूर्भुवः स्वरोम् संयतप्राणो ०।

(३) D. ० त्रिवृद्वृत्तिमायाख्यं परिस्पन्दाख्यं ब्रह्म।

ऽपानोव्यान" इति शब्दयोरभेदचिन्तनम्। प्राणोऽपानोव्यान इत्यस्यार्थं[1]स्त्रिवृत् प्राणाख्यं परिस्पन्दाख्यब्रह्मविवर्त्तरूपं गायत्री-तृतीयः पादः। सर्व्वान्तःकरणसमष्ट्यवच्छिन्नचैतन्यं सूर्य्य-मण्डलान्तःस्थं हिरण्यगर्भाख्यं गायत्रीचतुर्थः पादः। सा गायत्री गाय(?)शब्दवाच्यप्राणत्राणकरी गायत्रीच्छान्दस्का। अग्नि(:) मुखम्,—अग्निर्हि देवयानः पन्था इत्यर्थः। अग्निरहः शुक्लपक्ष उत्तरायण-संवत्सर-देवलोकवायुलोकादित्यलोकामानवपुरुषवैद्युत-वारुणेन्द्रप्रजापतिलोकपुरुषा देवयानमार्गरूपा गायत्रीमुखमिति-ध्यानम्। क्षणं शुद्धचिन्मात्ररूपमात्मानं ध्यात्वा "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे" पाप्मा मदभिभावकत्वं मा प्रापत् इति गायत्र्युपस्थानम्। [2][अथवा "परोरजसे" इत्यन्तमुक्त्वा अहं पापक्षयं प्राप(म्) इति वोपस्थानम्।] गायत्र्याः पादद्वयं ब्रह्मपरम्। [3]तृतीय-पादो जीवपरः। धोमहीत्यनेनाभेदः। तदेवाखण्डरूपेणोङ्कार-वाच्यम्। भूरित्यधस्तलसप्तलोकोपहितभूर्लोकः [4]भुवर्लोकमन्त-रीक्षं स्वरिति स्वर्गादिसत्यान्तसप्तलोकाः तज्जननोपलक्षितं चैतन्यं स्वप्रकाशरूपमानन्दात्मकत्वेन वरणीयम्। नोऽस्माकमन्तःकरणा-वच्छिन्नानां धियः बुद्धिवृत्तीः प्रचोदयात् जीवत्वेन प्रमातृतया

---

(१) A. D. ॰ स्त्रिद्वत्ति ॰

(२) C. Omits the portion bracketed.

(३) D. तृतीयः पादो ॰

(४) A. भुव इत्यन्तरीक्षम् ॰

धर्म्मार्थकाममोक्षेषु यः प्रेरयेत् तद् ब्रह्म धीमहि स्वाभिन्नत्वेन चिन्तयामः। ॐ मित्यखण्डपरिपूर्णचिदात्मकस्तिष्ठेत्। इत्येवं गायत्र्यर्थध्यानम्। एवं ध्यानासमर्थस्तु,—

[1][ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥]

(इति ध्यायेत्।)

[2]अत्र गदापद्मयोरुपलक्षणं तेन शङ्खचक्रगदापद्मयुक्तभुजचतुष्टय इत्याहुः। उत्तानपाणिनाक्षमालागणनया सूर्य्योदयावधिप्रणव-व्याहृतित्रयगायत्र्योणामष्टोत्तरशतजपः। [3][साग्निस्तु होमकालानु-रोधेनाष्टशतमष्टाविंशतिरष्टादश वा जपः।] जपसमाप्तौ पूर्व्ववद् गायत्र्युपस्थानं "गायत्र्यसी"ति। जलचुलुकं गृहीत्वा प्रणवव्याहृति-त्रयगायत्रीजपान्ते,—

उत्तरे शिखरे जाते भूम्यां पर्व्वतमूर्द्धनि।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्॥

---

(१) D. Omits the portion bracketed.
(२) D. ध्येयः सदेतिध्यानम्। अत्र०।
(३) A. Omits the portion bracketed.

स्तुता मया वरदा वेदमाता
प्रचोदयन्ती पवनेन्दुजाता।
आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं
मह्यं दत्वा प्रयातु ब्रह्मलोकम्॥

"नमो ब्रह्मण्यदेवाये"त्यादि "आकाशात् '[1]पतित' मित्यादि च "केशवं प्रतिगच्छत्यों नमोनम" इत्युक्त्वा "गायत्रै नमोऽस्तु गायत्रि स्वस्थानं गच्छे"ति विसर्जनम्। आयुष्कामस्य तु गृहीत्वाघमर्षण-द्रुपदा हंसः शुचिषदित्यादिपावनमन्त्राणामुदयादूर्द्धमपि जपः सन्ध्यान्तर्गतः। ततो [2]मन्त्रर्ष्यादिस्मरणपूर्व्वकं दशवारजपः। [3][एव-मष्टाक्षरशतवारजपः।] [4]जपधर्म्माः परिभाषायामुक्ताः। प्रयत-मनस्त्वं चंक्रमणहसनपार्श्वावलोकनकुड्याद्याश्रयणशिरोग्रीवकम्पन-ब्राह्मणेतरपुरुषान्त(तु)रसम्भाषण-चाण्डाल-पतितरासभरजस्वला-दर्शनपदापदाक्रमणहस्तेनहस्ताक्रमणवर्जनम्। कषायार्द्रवस्त्रपरि-त्यागः। पतितचाण्डालसम्भाषणे स्नानम्। स्त्रीशूद्रसम्भाषणे-ऽव्ययस्य विष्णोः स्मरणम्। वैष्णवमन्त्रजपोवा। चाण्डालादि-दर्शने चोदकस्पर्शनम्। सुराविष्ठादिदर्शने आचम्य सौरमन्त्र-जपः। शक्तौ पावमानीजपश्च। क्षुत [5]प्रस्खलितादिषु सप्तवारं

(१) D. A. पतितं तोयमित्यादि केशवं०

(२) A. C. मन्त्रराजर्ष्यादि ०।

(३) D. Omits the portion bracketed.

(४) D. जपधर्म्मैपरिभाषायामुक्ताः।

(५) D. स्खलितादिषु सप्तवारं कृष्णकीर्त्तनम्।

कृष्णनामकीर्त्तनम्। पाषण्डविकर्म्मस्थसंभाषणेऽच्युतस्मरणम्। जपसमाप्तौ वैकल्पिकमिदं कार्य्यम्। प्रदक्षिणावर्त्तननमस्कारौ कृत्वा उपविश्य सूर्य्यमण्डले हिरण्मयपुरुषध्यानम्।

त्वं ब्रह्मा त्वं वषट्कारस्त्वं रुद्रस्त्वं प्रजापतिः।
त्वमेव कर्त्ता भगवान् स्थावरस्य चरस्य च॥

इति कीर्त्तनम्। ब्राह्मवैष्णवरौद्रमन्त्रैरञ्जलित्रयदानम्। सूर्य्याय नमः प्रजापतये नम इत्यञ्जलिद्वयदानम्। समाचारस्तु स्वाहाशब्देन। हंसः शुचिषदिति [1]सूर्य्यार्घ्यदानं समाचरेत्। परमेष्ठी प्रजापतिः। अनुष्टुप्। वरुणः। धाम्नो धाम्न इति यजुः। प्रजापतिः। यदाहुरघ्न्या (यदापो अघ्निया) इति गायत्री। वरुणः। द्वयोस्तीर्थविसर्ज्जने। "इदमापः प्र वहत यत्किञ्च दुरितं मयि। यद्वाहमभि दुद्रोह यद्वा शेप उतानृतम्।" "धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च। यदापो अघ्निया वरुणेति शपामहे ततो वरुण नोमुञ्च।" गङ्गे स्वस्थानं गच्छेति तीर्थविसर्ज्जनम्।

## इत्यग्निचिद्-वाजपेयिनरसिंहविरचिते नित्याचार-प्रदीपे सन्ध्याकर्म्म समाप्तम्॥ श्री॥

(१) A. सूर्य्यार्घ्यदानं समाचारात्।

[1]दानधर्म्मे,—

वरुणं वायुमादित्यं पर्ज्जन्यं जातवेदसम् ।
स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च ॥
वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीम् ।
सततं ये नमस्यन्ति तान् नमस्याम्यहं प्रभो ॥

इति नारद [2]वचनात् तान् नमस्कुर्य्यात् । विष्णुः,—कृत-सन्ध्योपासनश्च पूर्व्वं गुर्व्वभिवादनं कुर्य्यात् । मनुः,—

भोशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि [3]भोभाव ऋषिभिः स्मृतः ॥

भोभावो भो शब्दः । देवदत्तशर्म्माहं भो अभिवादयामीति वाच्यम् ।

व्यायस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन [4]सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

तथा पुरस्तिष्ठन् दक्षिणं वाहुं श्रोत्रं [5]प्रसार्य्याञ्जलिं वद्धा प्लुतान्त्याक्षरं स्वनामोच्चार्य्याहं भो अभिवादयामीति वदन् ब्राह्मणोऽभिवादयेत् । अञ्जलौ विशेषः । आपस्तम्बः,—दक्षिणं वाहुं

(१) A. Here adds :—वराहपुराणे,—

उदयाद्रिः स्तुतं सूर्य्यं यस्तु भक्तिपरो द्विजः ।
दध्यक्षताञ्जलिभिस्तु तिसृभिः पूजयेत् शुचिः ॥

(२) A. D. वचनादेतान् नमस्कुर्य्यात् ।

(३) C. भोःशब्द ० ।

(४) D. सव्यसंस्पर्श (र्शो) ० ।

(५) D. धार्य्याञ्जलिं ० ।

श्रोत्रसमं प्रसार्य्य ब्राह्मणोऽभिवादयेत्। उरः समं राजन्यो मध्यसमं वैश्यः। नीचैः शूद्रः प्राञ्जलिरिति। तथा,—अभिवादयेत् सर्व्वं(:)नाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना मातरमाचार्य्यांश्चैके। बौधायनः,—असावहं भो इति श्रोत्रे संस्पृश्य मनः समाधानार्थमधस्ताज्जान्वोः पद्भ्याम्। (१) गोतमः,—"पादोपसंग्रहणं *समवायेऽन्वहम्। अभिगम्य तु विप्रोष्य"

जन्मप्रभृति यत् किञ्चिच्चेतसा पुण्यमर्ज्जितम्।
तत्सर्व्वं [२]विलयं याति एकहस्ताभिवादनात्॥
अजाकर्णेन विद्वांसं यतिं सम्पुटपाणिना।
मूर्खं चैकेन हस्तेन कनिष्ठं नाभिवादयेत्॥

तेन,—

ज्यायानपि कनीयांसं सन्ध्याकालेऽभिवादयेत्।
विना शिष्यञ्च पुत्रञ्च दौहित्रं दुहितुः पतिम्॥
ज्येष्ठो यदि नमस्कुर्य्यात् कनिष्ठाय तयोः पुनः।
जन्मप्रभृति यत्पुण्यमायुश्चैव प्रणश्यति॥

इति सन्ध्याकालेतरविषयम्। विष्णुः,—

यो भावयति या सूते येन विद्योपदिश्यते।
ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः॥

---

(१) D. गौतमः।

* गुरुसमवाये ० see गौतमस्मृतिः।

(२) C. D. निष्फलम् ०।

अन्ये च पितामहपितृव्य[1]मातुलश्वशुरज्येष्ठशालर्त्विक्पुराणादिवाचकज्ञानतपोवृद्धबन्धुज्येष्ठप्रव्रजिता दीक्षितश्च सोमविक्रयोत्तरकालम् । पितामहपितामहीमातामहमातामहीश्वश्रूश्वशुरज्येष्ठभगिन्य उपाध्यायश्च धात्री च ।

[2]भ्रातुर्भार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥
नाभिवाद्याः स्त्रियः सर्व्वा मुक्त्वा मातरमेव च ।
[3]गुरुपत्नी च युवती नाभिवाद्येह पादयोः ॥

तथा,—

मातुलांश्च पितृव्यांश्च श्वशुरान् ऋत्विजो गुरून् ।
असावहमिति ब्रूयात् प्रत्युत्थाय [4]यवीयसः ॥

तेन ज्येष्ठेभ्योऽभिवादनम् । कनिष्ठेभ्यो मान्येभ्यः प्रत्युत्थानम् ।

मान्याश्च,—

वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ।
पञ्चानां त्रिषु वर्णेषु [5]भूयांसि गुणवन्ति च ॥
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ।

---

(१) A. मातुलपितृमस्वश्वशुर० ।
(२) C. D. भ्रातृभार्य्यो० ।
(३) D. गुरुपत्नीत० ।
(४) C. ० यवीयसम् ।
(५) A. वयांसि० ।

दशमीं नवत्यधिकवयोऽवस्थाम्। प्रत्यभिवादने मनुः,—

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः॥

शर्म्मान्तस्य नामत्वाच्छर्म्मपदस्याकारस्य प्लुतत्वम्। स हि नकारान्तशर्म्मपदस्य नकारात् पूर्व्वः। पाणिनिः[2]"वाक्यस्य टेः प्लुत उदात्त" इत्युपक्रम्य[3]प्रत्यभिवादनेऽशूद्रविषयेऽन्त्यस्वरस्य प्लुतत्वमुदात्तत्वञ्चोक्तवान्। वशिष्ठः,—"सन्ध्यक्षरमप्रगृह्यमायाव् भावञ्च प्रतिपद्यते" इति शेषः। चकारात् प्लुतः। "प्लुतप्रगृह्या अचः" इति प्रगृह्यसंज्ञा। प्लुतो नाम्नोऽन्ते परे नान्यत्र। तेनाप्रगृह्यसन्ध्यक्षरस्य नामान्ते आय् आव् इति स्यात्। "एकारैकारयोराय् ओकारौकारयोराव्" इति। आयुष्मान् भव सौम्य हरा ३ य् आयुष्मान् भव सौम्य विष्णा ३ व् प्लुतत्वमुदात्तञ्च। अस्य मते शर्म्मपदं विहाय नामान्त्यस्वरप्लुतत्वम्।

पुनर्व्वशिष्ठः,—

स्वस्तीति ब्राह्मणे ब्रूयादायुष्मानिति राजनि।
वर्द्धतामिति वैश्ये तु शूद्रेत्वारोग्यमेव च॥

यमः,—

यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम्।
यस्मिन् सर्व्वे स्थिताः कामाः सा स्वस्तीत्यभिशब्दिता॥

---

(२) A. वाक्यस्य उच्चैः ०।

(३) D. प्रत्यभिवादेऽशूद्रस्य प्रत्यभिवादने ० A प्रत्यभिवादेऽशूद्र इति प्रत्यभिवादने शूद्रविषये ०।

स्वस्तीति प्रत्यभिवादनं ब्राह्मणे वैकल्पिकम्। गुरोस्तु विशेषः। आपस्तम्बः,—"तत्रास्य पाणी संस्पृह्य आशिष आशास्ते।" पाणिग्रहणपूर्व्वकं प्रत्यभिवादनम्। अन्येषां नामोच्चारणमात्रम्। प्रत्यभिवादनानन्तरं मनुयमौ,—

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥

शूद्रं प्रत्यारोग्यवचनस्य विहितत्वान्न "प्रागाहाराद्दृषलमभिभाषि-ते"ति हारीतोक्तनिषेधस्याप्रवृत्तिः। आपस्तम्बः,—"नासम्भाष्य श्रोत्रियं पथि व्रजेदरण्ये [1]च स्त्रियम्।" यमः—

क्षत्रियस्त्रियुगं हन्ति वैश्यो हन्ति चतुर्युगम्।
हव्यकविंशतियुगं शूद्रो ब्राह्मणमब्रुवन्॥

त्रियुगं त्रिपुरुषं हन्ति नरके पातयति। अब्रुवन् सम्भाषणमकुर्व्वन्। यत्तु अङ्गिराः,—

प्रणाममगते शूद्रे स्वस्ति कुर्व्वन्ति ये द्विजाः।
[2]शूद्रोऽग्रे नरकं याति ब्राह्मणस्तदनन्तरम्॥

तदाशीर्व्वादमात्रोपलक्षणम्। [3]यमः,—

अभिवादे तु यः पूर्व्वमाशिषं न प्रयच्छति।
यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते॥

---

(१) D. ०म०।
(२) C. D. शूद्रोऽपि ०।
(३) D. आपस्तम्ब(म्बो) यमश्च।

तस्मात् पूर्व्वाभिभाषी स्याचाण्डालस्यापि धर्म्मवित्।
सुरां पिबेति वक्तव्यमेवं धर्म्मो न लुप्यते॥

अत्र "पूर्व्वाभिभाषी"तिकार्य्यान्तरात् पूर्व्वमवश्यं कर्त्तव्यमित्यर्थः। नत्वभिवादनात् पूर्व्वमिति भ्रमः। हारीतः,—

जपयज्ञजलस्थञ्च [1]समित्पुष्पकुशानलान्।
उदकुम्भञ्च भैक्ष्यञ्च वहन्तं नाभिवादयेत्॥

मनुः,—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥

आपस्तम्बः,—"विषमगताय गुरवे नाभिवाद्यम्। अन्वारुह्य(?) वा अभिवादयेत्।" तथा,—"प्रयतायाप्रयतो न प्रत्यभिवादयेत्। [2]न च सोपानत्को न वेष्टितशिरा अवहितपाणिर्वा अभिवादयेत्।" अवहितपाणिर्वस्त्वन्तरासक्तपाणिः। शङ्खलिखितौ,—"नोदकुम्भोऽभिवादयेत्।" उदकुम्भयुक्त इत्यर्थः। तथा,—"न भैक्ष्यं चरन् पुष्पाज्यपाणिर्वाऽशुचिर्न जपन् न दैवपितृकार्य्यं कुर्व्वन्।" जपकाले गुर्व्वादिनमस्कारस्य विहितत्वान्निषेधस्तदन्यविषयः।

सभायां यज्ञशालायां देवतायतनेष्वपि।
प्रत्येकं हि नमस्कारो हन्ति पुण्यं पुराकृतम्॥

इतिवचनात् पर्षन्मध्ये प्रत्येकनमस्कारो निषिद्धः। समुदायेन

---

(१) C. ० समित्पुष्पकुशान् तिलान्।

(२) C. D. नच तत् सोपा ०।

स्यादेव। हारीतः,—"नान्येन कृतप्रणामोऽन्यमभिवादयेत्।" अत्र च गुर्व्वादिभ्यः पादोपसंहारादिरूपमभिवादनम्। अन्येभ्यो मान्येभ्यो नमस्कारमात्रम्। नमस्कारश्च बद्धाञ्जलिः प्रह्वीभावो नमःशब्दोच्चारणञ्च। "नमः प्रह्वत्वे शब्दे" इति स्मरणात्।

अभिवादो नमस्कार्थ्यं पादयोर्वन्द एव च।

इति शातातपेन पृथक् व्यपदेशात्। पादयोर्वन्दनं दण्डवत् प्रणामः। नमस्कारेऽपि सोपानत्कादिपर्य्युदासोऽभिवाद्यविशेष-पर्य्युदासश्च। अयञ्च विशेषः,—उत्तमवर्णेन नाधमवर्णस्य नमस्कर्त्तव्यम्। भविष्यपुराणे,—

ब्राह्मणं दशवर्षञ्च शतवर्षन्तु भूमिपम्।
पितापुत्त्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता॥
ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति श्रुतिः।
यदि विप्रः प्रमादेन शूद्रमप्यभिवादयेत्।
अभिवाद्य दश विप्रांस्ततः [1]पापात् प्रमुच्यते॥
ज्येष्ठं कनिष्ठो यो मोहात् स्वस्तिवाचं करोति वै।
ज्येष्ठस्य हरते सर्व्वं दुष्कृतं शतधा कृतम्॥

[2]आपस्तम्बः,—"त्रिवर्षपूर्व्वः श्रोत्रियोऽभिवादनमर्हति।" त्रिवर्षज्येष्ठ इत्यर्थः। [3]अतोऽल्पकालेन ज्येष्ठत्वे नमस्कारे न दोषो

(१) A. D. ० शुद्धिमवाप्नुयात्।
(२) D. Here adds इति नमस्कारविधिः।
(३) A. D. अतो न्यूनकालेन ज्येष्ठत्वेन नम ०।

न फलम्। [1]कनिष्ठाभिवादेच दोषः। गुर्व्वादीनां ज्ञातिसम्बन्धिबान्धवानां मुहूर्त्तेनापि ज्येष्ठत्वेऽभिवाद्यत्वं नमस्कार्य्यत्वञ्च।

## [2]इति नमस्कारविधिः।

---

[3]तत्रेमं म इति द्वाभ्यामुदपात्रं प्रपूर्य्य च।
सोपानत्को गृहं गच्छेन्न स्पृशन् न वहन् क्वचित्॥
[4]ततश्च पादौ प्रक्षाल्य द्विराचम्य गृहागतः।
त्रिसन्ध्यं वाग्यतो वारि गुप्तमाहृत्य शोधयेत्॥
भाण्डोपचारभूगेहद्रव्यान् सपरिचारकान्।
बह्वपघातसम्भूतो दोष उत्पद्यते गृहे॥
शुद्ध्यते तद् वहिस्तोयैः शान्त्यर्थञ्च तदिष्यते।
इति वचनात् तेनोदकेन सर्व्वद्रव्यप्रोक्षणम्।

---

## अग्निहोत्रहोमः।

होमं वैतानिके कृत्वा स्मार्त्तं कुर्य्याद्विचक्षणः।
स्मृतीनां श्रुतिमूलत्वात् स्मार्त्तं केचित् पुरा विदुः॥

---

(१) C. D. कनिष्ठेऽभिवादने दोषः।

(२) C. इति नमस्कार्य्यादिविधिः।

(३) A. शौनकः। ततः इमं०।

(४) D. तत्र च पादौ०।

यत्तु,—

सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते ।

इत्यस्य स्मार्त्तविषयत्वेऽप्युक्तश्रौताधानपरत्वम् । किञ्च

सूर्य्येऽस्तशैलमप्राप्ते षट्‌त्रिंशत् त्रिभिरङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शने ॥

प्रकाशमात्रे श्रौतहोमविधिः स्मार्त्तस्य पश्चादेवानुष्ठानम् । [1][यत्तु]

आवसथ्यमनाहृत्य त्रेतायां यः प्रवर्त्तते ।
अनाहिताग्निर्भवति परिवित्तिश्च जायते ॥

[1][इति] तदाधानविषयमेव । अथ यत् पुरोदये जुहोतीति शतपथश्रुतौ यद्यप्युदयात् पूर्व्वं होम उक्तस्तथापि स्मार्त्तहोमस्याप्यनुदिते विधानात् श्रौतस्य पूर्व्वत्वेऽप्यविरोधः । यत्तु,— "उदिते जुहोती"ति श्रुत्यन्तरमपि वैकल्पिकं तथापि वाजसनेयिनां स्मार्त्तहोमस्यानुदिते विधानात् कांस्यभोजिन्यायेनानुदिते होम एव नियतः । अतएव सन्ध्योपासनमपि स्मार्त्तहोमानन्तरमेव । "अनशित्वा प्रात"रिति भोजनात् पूर्व्वं तस्य विधानात् ।

[3][मनुः,—

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥

---

(१) C. Omits the portion bracketed.

(२) D. Omits the portion bracketed.

(३) A. Omits the portion bracketed.

अत्रेयं व्यवस्था छन्दोगपरिशिष्टे,—

रात्रेः षोड़शमे भागे ग्रहनक्षत्रभूषिते।
[1]कालं त्वनुदिते जानन् होमं कुर्य्याद् विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्य्यावन्न दृश्येत समयाध्युषितञ्च यत् (तत्) ॥]
रेखामात्रञ्च दृश्येत रश्मिभिश्च समन्वितम्।
उदितं तं [2]विजानीयात् तत्र होमं प्रकल्पयेत्॥
हस्तादूर्द्ध्वं रविर्य्यावद् भुवं भित्वा न गच्छति।
तावद्धोमविधिः पुण्यो नान्यो ह्युदितहोमिनाम्॥
यावत् सम्यक् न भाव्यन्ते नभस्यृक्षाणि सर्व्वतः।
न च लौहित्यमत्येति तावत्सायञ्च हूयते॥

अत्र स्मृतिः,—

नाग्निहोत्रात् परो धर्म्मो नाग्निहोत्रात् परं तपः।
नाग्निहोत्रात् परं श्रेयो नाग्निहोत्रात् परा गतिः॥
निर्द्वन्द्वा निर्नमस्कारा यमुपास्य मनीषिणः।
सोऽयं सूक्ष्मोऽग्निहोत्रेषु गूढोऽग्निरिव दारुषु॥
विवाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।
[3]प्रार्थ्यन्ते यमात्मानं सोऽग्निहोत्रे प्रकाशते॥

---

(१) C. कालं त्वनुदितं जानन्॰।
(२) D. ॰ समानीयाद्धोमं तत्र प्रकल्पयेत्।
(३) A. D. अधीयन्ते॰।

त्राह्ने,—

सर्व्वाणि तीर्थान्यपि चाग्निहोत्र-

तुल्यानि नैवेति वयं वदामः।

कात्यायनः,—"स्वयं वा जुहुयात्।" "अध्वर्य्युर्वे"ति विकल्पः। "उपवसथे नियमः"। दर्शपूर्णमासपूर्व्वदिने स्वयमेव होमः। एवमध्वर्य्युकर्त्तृकहोमे उद्धरणप्रैषोन्नयनप्रैषाद्यङ्गाधिक्यात् स एव मुख्यः पक्षस्तदसम्भवे स्वयं होम इति वदन्ति।

स्वयं होमे फलं यत् तदन्यहोमे न विद्यते।

इति स्मार्त्तहोमविषयम्। कात्यायनः,—"उद्धरेति यजमानो ब्रूयात् सायं प्रातरग्निहोत्रे।" "गार्हपत्याहवनीययोरुद्धरणमनस्तमितानुदितयोः।" "नित्यो दक्षिणाग्निः।" "सदा वाहरणम्।" "एकेषामुपवसथे।" "न वावसिते वा।" [१]दक्षिणाग्नेर्नित्यत्वं [२]यदाधानपूर्व्वदिने "गार्हपत्यागारे निर्मथ्याभ्यादधाती"ति विहितं [३]तस्य "दक्षिणा वा संहरे"दिति पक्षे नित्यमुद्धरणं नवगृहे वा पुनरुद्धरणम्। ततः पूर्व्वमुद्धृतस्य नित्यमवस्थानम्। भूमिं परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निस्थापनम्। उल्लेखनं [४]"स्फेरनोद्धति(?) इति श्रुतेः स्फेरन। भूसंस्कारयाग्निस्थापनादित्वादाहवनीय-

---

(१) C. दक्षिणाग्नौ०।

(२) D. यदाधानात् पूर्व्व०।

(३) A. C. तस्य०।

(४) A. स्फेरनोद्धयनीति(?)०। Most probably 'स्फेरनोद्धयन्ति' see शतपथब्राह्मणे १.२.३.१०.

स्थानं संस्कृत्याहवनीयं स्थापयित्वा दक्षिणाग्निस्थानं संस्कृत्य तत्स्थापनम्। आधाने तु स्थानद्वयसंस्कारानन्तरमग्निद्वयस्थापनं तन्मात्रविषयम्। कर्म्ममध्ये चाग्निनाशे संस्कारस्य पुनः करणं नास्ति तत्कर्म्मगताग्निस्थापनं प्रति स्थानस्य संस्कृतत्वात्। सपात्राग्निस्थापनेऽपि स्थापनाङ्गत्वादेव भवति। "अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः।" इति सायं प्रातः प्रदक्षिणं गार्हपत्यं परीत्योपविशति। अप आचामति "वृष्टिरसी"ति। पत्नी च प्रत्यग्दक्षिणतः गार्हपत्यस्योपविशति।

---

## अथाध्वर्य्युकर्म्म।

"अपरेणाहवनीयं कूर्चं निदधाति कुशान् वा।" "परिस्तरणं वा सर्व्वेषां प्रागुदगग्रकुशैः" आहवनीयगार्हपत्यदक्षिणाग्नीनां प्राक्पश्चिमयोरुद(ग)ग्रैर्दक्षिणोत्तरयोः प्रागग्रैस्त्रिभिरित्यर्थः। तथा "आहवनीयं पर्य्युक्ष्योदधारां निनयत्यागार्हपत्यात्।" "तच्च" "ततो दक्षिणाग्निम्।" तं गार्हपत्यं दक्षिणाग्निञ्च ततः पर्य्युक्षति।

इति सायम्।

प्रातस्तु "प्राक्संस्थं समिद्धारापर्य्युक्षणञ्च" (समित्पर्य्युक्षणं धाराच) इति विधानात् गार्हपत्यं पर्य्युक्ष्य ततो दक्षिणाग्निं ततो

गार्हपत्यादाहवनीयं यावदुदकधारां नीत्वाहवनीयपर्य्युक्षणञ्च। सर्व्वत्र परिसमूहनपूर्व्वकम्। अग्नेस्तृणान्यपचिनोतीति (१) श्रुतावग्नेरित्यस्यैकत्वा[१]विवक्षणात्।

---

पयोहोमपक्षमाह।

[२]अग्निहोत्रीं दोहयति स्थाल्यामार्य्यकृत्यामूर्द्ध्वकपालायामशूद्रेण। ऋजूर्द्ध्वकपालम्।

कुलालचक्रघटितमासुरं मृन्मयं भवेत्।

इति वचनाद्धस्तघटिता दोहनस्थाली तस्यां शूद्रव्यतिरिक्तद्वारा दोहनम्। क्षीरहोता चाध्वर्य्युर्दोहनप्रभृतिहोमपर्य्यन्तं वाग्यतः। यजमानश्चाव्भक्षणप्रभृतिप्राणभक्षणपर्य्यन्तं सर्व्वपक्षेषु वाग्यतः। तथा "पूर्व्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयति *दक्षिणतो निरूह्याङ्गारान्।" "एवमन्यत्रापि होमार्थस्याहरणम्।" "दक्षिणेन वौषधम्।" अवज्योत्यासिच्यापः पुनरवज्योत्य निदधाति त्रिरुद्वासयति। तण्डुलादौ पाकाभावान्नाधिश्रयणादि। "वैकङ्कतं स्रुक्स्रुवं प्रतप्य पाणिना सम्मार्ष्टि।" स्रुक् वैकङ्कत्येव। स्रुवस्याप्यग्निहोत्रे वैकङ्कतत्वम्। प्रतपनानन्तर-

---

(१) A. ॰विशेषणात्।

(२) C. D. अग्निहोत्रं ॰।

* उत्तरतः ४०० कातीयश्रौतसूत्रे ४.१४.२.

मुदकालश्च:। "पुनः प्रतप्योन्नेष्यामीत्याह।" "ॐमुन्नयेति यजमानस्तिष्ठन्।" प्रातस्तु उन्नयामीति प्रश्नः। "चतुरःस्रुवानुन्नयति।" "उपरि समिधं धारयन् वार्च्चीमध्यधि गार्हपत्यादाहवनीयं हरति मुखमात्रे धारयन्।" "मध्ये निग्टह्य पुनरुद्-ग्टह्योपविश्य समिधमादधात्यग्निर्ज्योतिष'मिति। "प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति।" "कूर्चे निधाय गार्हपत्यमवेचते" "तूष्णीं द्वितीयां भूयसीम्।" प्रातस्तु सूर्य्यज्योतिषमिति समिदाधानम्। सूर्य्योज्योतिरिति होमः। द्वितीयाहुतिहोमानन्तरं "भूयिष्ठं स्रुचि।" परिशिनष्टि। "द्विः प्रकम्प्य निदधाति।" "उपमृज्य स्रुचं कूर्चे निमार्ष्टि नमो देवेभ्यः" "स्वधा पितृभ्य इति दक्षिणत उत्तानम्।" "अप उपस्पृश्य" ¹["स्थाल्याः स्रुवेण] इह पुष्टिं" "इति गार्हपत्ये" "तूष्णीं द्वितीयाम्।" "अग्नयेऽन्नादायान्नपतये *इति दक्षिणाग्नौ तूष्णीं द्वितीयाम्।" दक्षिणं जान्वाच्य। एवं सर्व्वत्रोपविष्टहोमेषु। "अनामिकया द्विः प्राश्नाति।" प्रतिप्राशनं द्विराचमनम्। उत्सृप्य भक्षणपात्रां(:) निर्लेढ़ीत्यर्थः। ततो द्विराचमनम्। "आचम्योत्सिञ्चति देवान् जिन्व पितॄन् जिन्व तृतीयामुदुक्षति सप्तर्षीन् जिन्वेति।" "चतुर्थीं कूर्चस्थाने (त्रिः) निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा पृथिव्या अमृतं जुहोमि स्वाहा अमृते अमृतं जुहोमि स्वाहेति" "स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति।" सर्व्वेषु यथापर्य्युक्षितं

(१) D. Omits the portion bracketed. A. स्थालीस्रुवेण॰।

* स्वाहेति ९०० कातीयश्रौतसूत्रे ४.१४ २५.

समिध आदधाति समिदसीति। सायमाहवनीयक्रमात्। प्रातर्गार्हपत्यक्रमात्।

---

## अथ यजमानकर्म्माह।

"सायमाहुत्यां हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण।" "न वा।" "उपप्रयन्त" इत्यादिना "पारमेष्ठीये"त्यन्तेनाहवनीयोपस्थानम्। आहवनीय(समीपे) एवोपविश्य "संत्वमग्न"-इत्यादि "भिषीये"त्यन्तेनोपस्थानम्। "अन्ध स्थान्धो वो भक्षीये-"त्यादिना "इहैवस्त मापगाते"त्यन्तेनाग्निहोत्रगां प्रतिगमनम्। "संहितासि विश्वरूप्यूर्जा माविश गौपत्येने"ति गोस्पर्शनम्। "उपत्वाग्न" इत्यादिना "अघायतः समस्मा"दित्यन्तेन गार्हपत्योपस्थानम्। "इड़ एह्यदित एह्री"ति गां प्रति गमनम्। "काम्य एति" (इत्यादिना) "भूया"दित्यन्तेन गोस्पर्शनम्। "सोमानं स्वरणमित्यादि(ना) "प्रजया धनेनच"(?)इत्यन्तेनान्तरेण गार्हपत्यदक्षिणाग्न्योर्गत्वा आहवनीयस्य पश्चात् स्थित्वोपस्थानम्। नोदकस्पर्शनम्। इदं मे कर्म्मेदं वीर्य्यं पुत्रोऽमुकदेवशर्म्मानुसन्तनोत्विति पुत्रनाम ग्रहणम्। आत्मनो वाऽविद्यमाने। इदमुपस्थानं पयोहोमपक्षे वैकल्पिकम्। "भूर्भुवःस्वरिति वोभौ।" इदमपि गोपक्ष एव वात्सप्रेण सह विकल्पितत्वादिति सम्प्रदायः। गोलिङ्गाभावादौषधादिहोमेऽपीति कर्काचार्य्यः। सायं प्रातराहवनीयस्यासनोपस्थाने

तूष्णीमुपस्थायाहवनीयपश्चादुपवेशनम्। एवं "शय्यासनं वा गार्हपत्ये।" गार्हपत्यं तूष्णीमुपस्थाय तत्पश्चात् शयनमुपवेशनं वेति विकल्पः। "समिदसी"ति उपविश्याहवनीयगार्हपत्यान्वाहार्य्यपचनेषु समिदाधानं सायं प्रातर्गार्हपत्याहवनीयान्वाहार्य्यपचनाहवनीयेषु क्रमेण। एवं पर्य्युक्षणं नोदकधारा। "विद्युदसि विध्य पाप्मान"मिति जलपानम्। वाग्विसर्जनम्। सायमाहवनीयं प्रदक्षिणीकृत्यापराञ्चो[1]'रुत्तरेण निष्क्रमणम्। प्रातर्गार्हपत्यम्। प्रातर्मुहूर्त्तं सभ्योपस्थानम् "अनश्नित्वा" इति वचनात् भोजनात् पूर्व्वं यथाकालम्। "भस्मोद्धृतमुपेयात्।" यत्राग्निभ्यो भस्म उद्धृत्य स्थापितं तत्र गच्छेत्। इदं भस्मधारणार्थमिति केचित्।

[2]अथाध्वर्य्युकर्त्तव्यपक्षे देवतोद्देशेन द्रव्यत्यागः प्रक्षेपसमकालं यजमानेनैव कर्त्तव्यः। यद्यपि प्रक्षेपोऽपि प्रधानरूपहोमान्तर्गतस्तथापि प्रक्षेपे ऋत्विक्द्वारा यजमानस्य प्रयोजककर्त्तृत्वम्। त्यागस्य स्वत्वनिवृत्तिसङ्कल्पस्य स्वद्रव्ये परस्य कर्त्तुमशक्यत्वादुत्सर्गे तु प्रधानत्वादित्युक्तदिशा स्वयमेव कर्त्तव्यत्वम्। देवतोद्देशो यद्यपि परेण कर्त्तुं शक्यते तथापि त्यागस्य किञ्चिदुद्दिश्य त्याग इत्येव सप्रतियोगित्वाद् यागकर्त्रैवोद्देशः कार्य्यः। कात्यायनो होमद्रव्याण्याह,—"पयसा स्वर्गकामः पशुकामो वा। यवाग्वा ग्रामकामः। तण्डुलैर्बलकामः। दध्नेन्द्रियकामः। घृतेन तेजस्कामः।" एतानि संयोगपृथक्त्वेन नित्यानि च। शाखान्तरे च,—

(१) A. ०रुत्तरेण ०।

(२) D. अत्राध्वर्य्युकर्त्तृकपक्षे ०।

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः।

सोमो मांसं तथा तैलमापश्चैते दशैव तु॥

पयोहोमप्राशस्त्यं श्रुतेः "पयसि ह्रीदं सर्व्वं प्रतिष्ठितं * * * सर्व्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति।" स्मृतिश्च,—

पयस्यन्तर्हितं विश्वं पश्यन्नेवं पयो नरः।

एकयैव तदाहुत्य जगदाप्यानमश्नुते॥

इति। काम्यप्रयोगे च "संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे" इति पूर्व्वपक्षः। "यदहरेव जुहोति तदहः पुनर्मृत्युमपजयती"ति श्रुते [रेकाहेनापि सायं प्रातः प्रयोगेण फलसिद्धिः। "स वै सायञ्च प्रातश्च जुहोती"ति श्रुतेः[१] ]

सायमादि प्रातरन्तमेकं कर्म्म प्रचक्षते।

इति स्मृतेश्च। सायं प्रातरभ्यस्तमेकं कर्म्म। यश्च सायं होमे कर्त्ता यच्च द्रव्यं प्रातरपि तत्। स्मरन्ति च,—

द्रव्यं देशश्च मन्त्राश्च कर्त्ता कालश्च शासनम्।

सायं यत् स्वीकृतं सर्व्वं प्रातस्तदनुवर्त्तते॥

मनुः,—

नैव कन्या न युवती नाल्पविद्यो न वालिशः।

होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा॥

यद्यप्यविद्यत्वेन स्त्रिया अनधिकारस्तथापि विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् कर्त्त्रन्तरासम्भवे कन्यायुवतीभिन्न-

---

(१) D. Omits the portion bracketed.

स्त्रीकर्तृकत्वम्। वैरूप्यभयेन कन्यायुवतीनिषेधस्य नित्यानुवादत्वकल्पनानुपपत्तेः।

यच्च छान्दोग्ये,—

अन्यैः शतहुताद्धोमादेकः शिष्यहुतो वरम्।

शिष्यैः शतहुताद्धोमादेकः पुत्रहुतो वरम्।

पुत्रैः शतहुताद्धोमादेको ह्यात्महुतिर्वरम्॥

[1][ इति तद् ] यद्यपि ज्ञानकाण्डे "य एतदेवं विद्वानग्निहोत्रं जुहोती"त्युपासकपरं तथापि स्वयं होमाशक्तौ सर्पणं सर्पणाशक्तौ "उपासीताध्वं" इति "उपवसथे नियम" इति च कात्यायनवचनात् तत्रोपयुज्यते। कात्यायनः,—"प्रथमास्तमिते पर्य्युदयं च स्वर्गकामस्य। तमोऽभ्यये सायं जुहुयाद्दियति प्रातरायुःकामस्य। अन्तः पशौ पशुकामस्य (सायम्प्रातः।) शयाने श्रीकामस्य प्रातः। प्रदीप्ततमे श्रीयशःकामस्य। अर्चिः प्रत्यवाये मैत्रेणान्नमत्स्यतः। अङ्गारेषु ब्रह्मवर्चसकामस्य। तमोऽभ्यये सायं तमस्यनागते। (?) प्रातस्तमसि द्यति अप्रक्रान्ते। अग्निविशेषे फलं प्रदीप्ततम इत्यादि। अत्र च

रजोनीहारधूमाभ्रशाखाद्यन्तरिते रवौ।

सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते।

होमकालापरिज्ञानपरमितिकालनिर्णयेऽप्यधिकारसद्भावदर्शनार्थम्। पश्चात्त्वन्यथा काल[2]ज्ञाने न पुनः क्रियेत्येतत्परं वा।

(१) D. Omits the portion bracketed.

(२) A. ज्ञाने पुनः ०।

दानधर्म्मे,--

करीषाग्नौ स जुहुयाद्दिपस्तैन्यं(?)करोति यः ।

इति होमकाले यत्राहवनीये समिदाधानं [1]तत्रेन्धनकाष्ठापेक्षा । गार्हपत्यदक्षिणाग्न्योः काष्ठान्तरेणाङ्गारसम्पादनम् । अन्यत्रापि यत्र समिदाधानं नास्ति तत्र काष्ठान्तरेणाग्नीन्धनम् ।

---

## स्मार्त्तहोमविधिः ।

दक्षः,—

सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमे फलं [2]यत् तदन्यहोमे न विद्यते ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
[3]एभिरेव हुतं यत्तु तद्धुतं स्वयमेव तु ॥

एवञ्च स्मार्त्तहोमे स्वयं करणं मुख्यं तदभावेऽन्येन करणम् । “कामं गृह्येऽग्नौ पत्नी जुहुयात् सायं प्रातर्होमौ” इति गोभिलवचनाद् [4]यजमानाभावे पत्न्यधिकारः । शौनकः,— “पाणिग्रहणादिगृह्यं परिचरेत् स्वयं पत्न्यपि वा कुमार्य्यन्तेवासी-वे”ति कर्त्त्रन्तराभावे कुमार्य्या अधिकारः । अनुपनीतस्यार्त्विज्यानधिकारेऽपि वैदिकमन्त्रशून्यत्वादगत्या भवेदधिकारः । पत्न्यसामर्थ्ये चेदम् ।

---

(१) A. C. तत्रनेन्धनकाष्ठा० ।

(२) A. यत्तु अन्य० ।

(३) A. एतैरेव० ।

(४) A. यजमानभावे पत्न्याः कोऽप्यधिकार ।

असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना ।

इति पत्न्यसमक्षे होमासम्भवात्। यजमानप्रवासे पत्न्यां रजस्वलायां अगत्या होमकरणे कुमार्य्यनुपनीतयोरपि प्रसङ्गः। गोभिलः,—"पुरास्तमयात् (अग्निं)प्रादुःकृत्वास्तमिते सायमाहुतिं जुहुयात्।" "पुरोदयात् (प्रातः) प्रादुःकृत्योदितेऽनुदिते वा प्रातराहुतिं" "पुरा प्रादुःकरणवेलाया (सायंप्रातः) अनुगुप्ता अप आहरेत्" "मणिकाद् वा" अप आहरेत्। '[1]हविषाग्नौ जुहुयात् कृतस्याकृतस्य वा।" "अकृतञ्चेत् प्रक्षाल्य प्रोदकं कृत्वा जुहुयात्।" "दधि पयो यवागूं वा।" पारस्करः,—"दध्ना तण्डुलैरक्षतैर्वा।" तथा,—"उपयमनप्रभृत्यौपासनस्य परिचरणम्। "उपयमनान् कुशानादाय समिधोऽभ्याधाय पर्य्युक्ष्य जुहुया"'दिति प्रथमकण्डिकोक्तरीत्या।

सप्तपत्राः शुभा दर्भा ब्रह्मग्रन्थिसमन्विताः ।

उपयमनकुशाः प्रोक्ता अग्निकार्य्यादिकर्म्मसु ॥

पारस्करः,—"अग्नये स्वाहा प्रजापतये स्वाहेति सायम्।" जुहोति। "सूर्य्याय स्वाहा प्रजापतये स्वाहेति प्रातः।

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ।

पुमानिन्द्रश्च [2]सूर्य्यश्च पुमां संवर्त्ततां मयि ॥

पुनः स्वाहेति पूर्व्वां गर्भकामा। पत्नी जुहुयात्। द्वितीयां यजमान एव।" यत्तु,—

---

(१) गोभिलगृह्यसूत्रे पाठः,—हविष्यस्याचस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा। अकृतञ्चेत् प्रक्षाल्य जुहुयात् प्रोदकं कृत्वा। १. प्र. ३. ख. ६, ७ सू॰।

(२) In all Mss. वायुश्च॰

होमं करोति यो विप्रस्तुलसीकाष्ठवह्निषु।
शतक्रतुसमं पुण्यं होता तत्-फलमाप्नुयात्॥

(तत्)[1]गुणफलार्थम्।

समिद्धर्माः परिभाषायामुक्ताः। नाप्रोक्षितं [2]नास्नानं न क्लिन्नं काष्ठं समिधं वाग्न्यादध्यात्। आपस्तम्बगृह्यम्,—अनुगतो मन्थ्यः श्रोत्रियागाराद् वाहार्य्यः उपवासश्चान्यतर(?)भार्य्यायाः पत्युर्वा। अपिवोत्तरया जुहुयान्नोपवसेत्। उत्तरा ऋक्। "अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि। अया नोयज्ञं वहास्ययानो धेहि भेषजम्।" सर्व्वहोमेषु देवतामुद्दिश्य द्रव्यत्यागो यजमानेनैव कार्य्यः। उद्दिश्यमानत्वप्रतिग्रहीतृत्वरूपसमुदायवाचिन्या चतुर्थ्या देवतायाः प्रतिग्रहीतृत्वाभावेऽप्युद्दिश्यमानत्वमेव देवतात्वं चतुर्थीवाच्यम्। तेन यदाग्नेयोऽष्टाकपाल–इत्यादावग्निरस्यदेवतेतिविधिस्तत्रायमर्थः— अग्निश्चतुर्थ्यन्तपदेनैतत् [3][ पुरोडाशसम्बन्धित्वेन निर्द्दिश्य ] पुरोडाशं यजेदिति। तथा च द्रव्यमिदमिति निर्द्दिश्य चतुर्थ्यन्तदेवतापद[4]मुच्चार्य्य स्वत्वनिवृत्तिसंकल्पः कार्य्य इति विध्यर्थ इतीदमग्नये इत्युच्चार्य्य न ममेत्येवं ज्ञानविशेषरूपः संकल्पः कार्य्यः। न ममेतिशब्दोच्चारणमापस्तम्बानां ज्ञानविशेषोत्पादाय। न

---

(१) A. D. गुणफलार्थम्।
(२) A. D. नास्नानं क्लिन्नं ०।
(३) D. Omits the portion bracketed.
(४) A. मुद्दीर्य्य स्वत्वनिवृत्तिः संकल्प ०।

ममेति शब्दोच्चारणं विना ज्ञानविशेषस्योत्पत्तौ न तत्रादरः। न चैवमपि चतुर्थ्या ददात्युच्चारणं विना साधुत्वाभावात् त्यागप्रतिपादकत्वेन ददातिप्रयोगापत्तिः। स्यादेवं यदि ज्ञानोत्पादाय चतुर्थ्युच्चारणं किन्त्वदृष्टार्थम्। अतएव स्वयं क्रियमाणे [1]होमे मन्त्रगतदेवतापदस्य चतुर्थ्यन्तत्वाभावे सुतरां न तेन देवतोद्देशसिद्धिः। मन्त्रगतदेवतापदस्य चतुर्थ्यन्तत्वेऽपि [2]मन्त्रस्य लिङ्गेन श्रुत्या वा होमाङ्गत्वज्ञानाद्धोमस्वरूपान्तर्गतदेवतोद्देशं प्रति [3]करणत्वाददृष्टार्थत्वानुरोधेन पृथगेव देवतोद्देशः प्रधानान्तर्गतः। नहीह पुष्टिमित्यादिपदानां अग्नये गृहपतये [4]इत्यादि चतुर्थ्यन्तपदोच्चारणे करणत्वं न वा समुदायस्य स्वयं क्रियमाणेऽपि होमे भ्रान्त्यान्यदैवत्यमन्त्रोच्चारणे यथार्थं देवतामुद्दिश्य त्यागकरणे मन्त्रभ्रंशप्रायश्चित्तं न प्रधानावृत्तिः। परक्रियमाणे सुतराम्। याज्यानुवाक्याविपर्य्यासे तु यथानुपूर्व्वकरणं वचनान्नतु प्रधानानुष्ठानात्। अयञ्च त्यागः पत्न्यापि कर्त्तव्यः। [[5]तथाहि] "फलोत्साहविशेषात्तु।" अनेन पत्न्यधिकारे साधिते "धर्म्मे[6]चार्थे च कामे च नातिचरितव्ये"ति स्मृत्यनुरोधेन "स्ववतोस्तु वचनादैक-

---

(१) A. होमे प्रतिपद्योत्थलक्षणसमुदायवाचिन्याश्चतुर्थ्या देवतायां प्रतिपन्नमन्त्रगत०।

(२) C. मन्त्रलिङ्गेन०।

(३) C. करणत्वानुरोधेन०।

(४) A. इति चतुर्थ्यं०।

(५) A. C. Omit the portion bracketed.

(६) A. शब्दे च०।

कर्म्मं स्यात्” इति द्वयोरधिकारेऽपि सहैव कर्म्माचरणमिति[१] विज्ञितेऽपि स एव। द्वयोर्यागकर्त्तृत्वं फलभागित्वं पृथगेवेति देवतोद्देशद्रव्यत्यागरूपं प्रधानं द्वाभ्यां कार्य्यम्। [२]क्रत्वर्थानुष्ठानं वचनाद् यस्य यावद्। यथा सत्रेऽध्वर्य्य्वादीनां पत्नी आज्यमवेक्षत इति यजमानस्य क्रतुसिद्धौ पत्नीकर्त्तृकाज्यावेक्षणस्याङ्गत्वं सहाधिकारम्। पृथक् कर्त्तृत्वं पृथक् फलभागित्वं च द्योतयति “पत्युर्नो यज्ञसंयोग” इति यज्ञसम्बन्धेन स्वामित्वे पतिशब्दानागमविधानात्। अकर्त्तुः फलभागित्वरूपस्वाम्यभावाद-स्वामिकर्त्तृकस्यानङ्गत्वात्। अङ्गत्वविधानमेव तस्याः स्वामित्वे कर्त्तृत्वे च प्रमाणम्। एवं यजमानोऽन्वारभत इति यजमानकर्त्तृकमङ्गं पत्न्या[३]यागफलसिद्धौ व्याप्रियत इति सहप्रयोगः पृथक् कर्त्तृत्वञ्च। सत्रे यथाध्वर्य्युकर्त्तृकेष्वङ्गेषु [४]होतुरकर्त्तृकत्वेऽपि प्रधानानुष्ठानं परकृताङ्गानुष्ठानसहितं फलाय। [५][एवं] पत्नीकर्त्तृके यजमानकर्त्तृकाङ्गं पत्न्या अकृतमपि फलाय। [६]यदा पत्नीकर्त्तृके यजमानस्य तत्कृते पत्न्यनुज्ञाद्वारा प्रयोजककर्त्तृत्वम्। सत्रेऽपि [७]परस्परकर्म्मसु प्रयोजनत्वमितरस्य। एवञ्च सति यजमानपत्नीकर्त्तृके

(१) A. चरितेऽपि ०।

(२) D. क्रत्वर्थानुष्ठानात्तु वचनाद्।

(३) D. त्यागफल ०।

(४) A. होत्रकर्त्तृकत्वेऽपि ०।

(५) D. Omits the portion bracketed.

(६) A. यथा पत्न्या अकृते यज ०।

(७) D. परस्परप्रयोजकमितरस्य।

यदेकवचनं तत् पुमेककर्त्तृकत्वाभिप्रायेण सत्रे पुम्बहुत्वाद्बहुवचनम्। "स्वर्गकामो यजेते"त्यत्राख्यातोपात्तसंख्याया भावनाचिप्तकर्त्तर्य्यन्वये स्वर्गकामपदगतलिङ्गसंख्ययोस्तद्गतत्वेनाविवक्षितत्वेऽपि भावनान्वयोत्तरकालमर्थाचिप्तकर्त्तरि पाक्षिकान्वये एकं पुंकर्त्तृकत्वं सर्व्वाङ्गोपेते प्रधाने पर्य्यवस्यति। एवञ्च स्त्रीकर्त्तृकत्वं प्रमाणान्तरावगतं न प्रतिषिद्धम्। एकत्वं हि पुंस्त्वावरुद्धम्। पुंसः सद्वितीयत्वं वारयति न स्त्रियाः।

अतएव स्त्रियामेकत्वान्वयाभावेनानेकस्त्रीकर्त्तृकत्वमप्येकस्मिन् प्रयोगे। यथा "वसन्ते ब्राह्मणोऽग्नीनादधीते"त्यत्र ब्राह्मणपदे पुंस्त्वस्याविवक्षा[1]कारणाभावात् एकपुंब्राह्मणकर्त्तृकत्वमाधाने ज्ञातं स्त्रीकर्त्तृत्वं न वारयति। "पूर्व्वेण प्रविशत्युत्तरेण पत्नी"त्यादिलिङ्गात् "क्षौमे वसानावग्नी आदधीयाता"मित्यादिलिङ्गाच्च। न च कर्त्राकाङ्क्षायामेकपुं[2]कर्त्रन्वये निराकांक्षत्वान्न कर्त्रन्तरान्वयः। "पशुना यजेते"त्यत्र पुंपशुकरणत्वे स्त्रीपशुनिवृत्ति[3]रिति वाच्यं स्वर्गकाममुद्दिश्य यागविधौ स्वर्गकामपदे पुंस्त्वविवक्षाभावात् यः स्वर्गकामः या स्वर्गकामा स च [[4]सा च यागं] साङ्गं कृत्वा फलं प्राप्नुयादित्युक्ते [5]पुरुषस्यार्थाचिप्तकर्त्तृत्वांशे पुंस्त्वैकत्व-

(१) A. करणाभावात्।
(२) D. कर्त्तृक (का) न्वये ०।
(३) D. वर्द्दित ०।
(४) A. Omits the portion bracketed.
(५) A. पुरुष (:) स्यादित्युक्तत्वेऽर्थां ०।

विवक्षा न क्रिया इति यागव्यक्तिभेदे द्वयोः कर्त्तृत्वमिति वैयर्थ्यं पत्नीरेकस्यां यागव्यक्तौ करणत्वात्। "राजा स्वाराज्यकामो यजेते" [1]त्यत्र स्वाराज्यकामपदेनाविशेषाद् ब्राह्मणादिस्वाराज्यकामोपस्थितौ राजपदानर्थक्यभयेन न ब्राह्मणादिकर्त्तृकान्वयः। न चेह कस्यचिद् वैयर्थ्यं येन स्त्रीकर्त्तृकत्वं नान्वीयेत अतएवाह जैमिनिः,— "स्ववतोस्तु वचनादैककर्म्यं स्यात्"इति पृथक्यागकर्त्तृत्वेऽपि वचनात् [2]सङ्कल्पाद्यनुरूपं प्रयोगैक्यमित्यर्थः। तेन पत्न्यापि पृथगेव देवतामुद्दिश्य तदेव द्रव्यं त्यक्तव्यम्। यत्तु कर्काचार्य्यैः,—"पत्नी च ददाती"ति सूत्रं दीयमानमनुजानातीति व्याख्यातं तस्यापि त्याग एवार्थः त्यक्तस्य ह्यनुज्ञा सत्यपि(?) त्यक्तमित्येवं रूपैव। अतएव यजमाने प्रोषिते नित्यकर्म्मसु प्रायश्चित्ताहुतीनां त्यागः पत्न्यैव क्रियते यजमानस्यानुज्ञादानेन [3]तत्त्यागे कर्त्तृत्वेन कर्म्मसादृगुण्यम्।

निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्त्विजं तथा।
प्रवसेत्कार्य्यवान् विप्रो हृथैव न चिरं क्वचित्॥

इति छन्दोगपरिशिष्टे अग्निनिक्षेपपदेनाग्निकार्य्यानुज्ञाविधानात्। यत्तु [4]तत्र,—

मनसा नैत्यिकं कर्म्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः सर्व्वं यथाकालमुपाचरेत्॥

(१) A. ० त्यतः ०।
(२) D. सङ्कल्पाद्य ०।
(३) D. तत्त्यागेन ०।
(४) D. तत्र च ०।

इति प्रवासे कर्म्मानुसन्धानमेव यजमानस्याग्निहोत्रादिकार्य्यं विधीयते न तु गृहे पत्न्या कृतमग्निहोत्रं यजमानस्य फलायेति तस्यार्थः। अन्यथा प्रोषिते यजमाने पत्न्यां रजस्वलायामकृतमेव स्यादिति तस्यार्थ इति। तन्न। तथा सति गृहे [1]पत्न्या ऋत्विगादिभिरकरणे यजमानस्य कर्म्मानुसन्धानमात्रेण कृतकृत्यता स्यात्। न चैतदिष्टम्। तथा च हारीतः,—"नाग्निवेलयोः प्रवसेत पर्व्वसु च। आपत्सु प्रोषितेऽग्निवेलायां वाग्यतः प्रतिदिनमग्नीन् मनसा ध्यात्वोपस्थाय मन्त्रतो हुतं ज्ञात्वा व्रतये"दिति गृहे होमं [2]दर्शयति। कात्यायनोऽपि प्रवसन् याजमानं कुर्य्यात् इति। अर्थः—नहि यागानुसन्धानं कुर्व्वन् यजमानः किन्तु यागं कुर्व्वन्। तेन गृहकृतकर्म्मणामिह त्यागकरणे यजमानः तस्य कर्म्म याजमानम्। प्रोषिते यजमाने पत्न्यां रजस्वलायां ऋत्विक्कृतैरेव हविःप्रक्षेपादिभिर्यजमानक्रतुसिद्धिः। न च

द्वयोरप्यसमक्षन्तु हुतमप्यहुतं भवेत्।

इति कर्म्मासिद्धिः परिकल्प्यर्त्विजं [3]यागविधानादेवासमक्षहोमस्यानुज्ञानात्। यथा "तामवरुध्य यजेते"ति रजस्वलां विहाय कर्म्माचरणे पत्न्याऽप्यवेक्षणाभावे कर्म्मसादगुण्यम्। न च प्रवास-

---

(१) A. C. पत्न्या करणे०।

(२) D. दर्शयेदिति।

(३) A. C. प्रत्यागविधानादेव समक्षहोमस्या०।

विधेर्बहुपत्नीकविषयत्वे [1]नीरजस्कापत्नीविषयत्वे वा प्रमाणमस्ति न चासमञ्जपदं (द्वि)पत्नीकहोमनिषेध एव मानं द्वयोर्युगपद्रजस्वलयो स्तत्रापि दोषात्। [2]समञ्जहोमस्य यजमानपदार्थानुष्ठानसौकर्य्यार्थत्वात् तदतिक्रमे नियमादिष्टलोपप्रमाचम्। यत्तु यजमानकर्त्तृके त्यागे (यागे) पत्न्या अनुमतिमात्रेण प्रयोजककर्त्तृत्वानुपपन्नं कर्त्तृत्वमन्यथा तस्याः स्वतन्त्रकर्त्तृत्वे एकवचनविरोधः स्यादिति तन्न प्रयोजककर्त्तुः फलभागित्वेऽतिप्रसङ्गात्। आर्त्विज्ये दक्षिणाम्नानवदिह प्रमाणाभावात्। स्वतन्त्रकर्त्तृत्वेऽपि यजेतेत्येकवचनं यथा तथोक्तमेव। यद्वा यागकर्त्तृत्वं यद्यपि प्रत्येकविश्रान्तं साङ्गं प्रधानकर्त्तृत्वं द्वयोर्व्यासज्य। नह्याज्यावेक्षणे यजमानस्य कर्त्तृत्वं न वा विष्णुक्रमादौ पत्न्याः। तेन साङ्गप्रधानरूपविष्णुक्रमादौ तत्र प्रयोग[3]कर्त्तृत्वं द्वयोर्व्यासज्येत तदभिप्रायमेकवचनं सत्रे तु प्रधानकर्त्तृबहुत्वापेक्षं बहुवचनम्। यदि यागरूपप्रधानकर्त्तृत्वं व्यासज्य वृत्तिः स्यात्। [ [4]फलमपि व्यासज्य वृत्तिः स्यात् ] फलस्य कर्त्तृगामित्वात् द्वयोः समग्रफल[5]भागित्वाभ्युपगमादध्वर्य्वादीनां प्रधानकर्त्तृत्वाभावादेव न प्रसङ्गः।

---

(१) D. नीरजस्त्वाग्न्यौ ०।

(२) D. समिद्धोमस्य ०।

(३) A. रूपकर्त्तृत्वं ०।

(४) A. C. Omits the portion bracketed.

(५) A. ० गामित्वाभ्युप ०।

तेन पत्न्या अपि पृथक् त्याग(याग)करणमुचितम्। समाचारस्तु श्रुतिविरोधिन प्रमाणम्। अतएव प्रोषितो यजमानश्चेदशौचं शृणोति पत्नी गृहे श्राद्धादिकं करोति तदा श्राद्धं सगुणमेव। पत्न्यास्तु गृहे अशौचश्रवणे तत्सम्बन्धेन पाकस्य दुष्टत्वात् श्राद्धाद्य-करणम्। यजमानस्तु प्रवसन् न श्रुत्वा यदि करोति तदा न दोषः। गृहे करिष्यन्तीत्यनुसन्धानेनाकरणे वैश्वदेवलोपप्राय-श्चित्तं कुर्य्यात् श्राद्धस्याशौचान्ते। बहुभार्य्यस्य त्वेकयाज्यविचक्षणा-दिना क्रतुसाद्गुण्यं स्वफल[1]लोभेनान्यासां प्रवृत्तिः। एतदेवा-भिप्रेत्य छन्दोगपरिशिष्टे—

अग्निशिष्टान्तु शुश्रूषां बहुभार्य्यः सवर्णया।
कारयेत् तद्बहुत्वे तु ज्येष्ठया गर्हिता न चेत्॥
या वा स्याद् वीरसू रामा आज्ञासम्पादनी च या।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत्॥
दिनक्रमेण वा कर्म्म यथाज्येष्ठमशक्तयः।
विभज्य सह वा कुर्य्युर्यथाक्रममशाठ्यवत्॥

[2]तथा,—

स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्ययैव द्विजन्मनाम्।
नहि स्वल्पेन तपसा भर्त्ता तुष्यति योषिताम्॥

इदं ज्येष्ठानियोगपक्षे। एवञ्च बहुपत्नीकस्यैकस्याग्निहोत्र-

---

(१) A. ॰लाभेनान्येषां प्रवृत्तिः। अतएवाह छन्दोगपरिशिष्टे।
(२) A. C. यथा।

सन्निधानेऽन्यस्याः प्रवासोऽपि न दोषाय। पत्न्याः प्रवासे पुनराधानविधानमेकपत्नीकपरम्। केवलं प्रवासस्याविहितत्वात् “प्रवसन् प्रवत्स्यन्वा वैश्वानर्य्या यजेते”ति प्रवासादागत्य प्रवासपूर्व्वं वा वैश्वानरी। पर्व्वातिक्रमे कृच्छ्रार्द्धञ्च। एवं यजमानस्य “इहैव न चिरं क्वचित्” इति तथा चिरप्रवासयो[1]रिष्टिः। पर्व्वातिक्रमे कृच्छ्रार्द्धम्। प्रत्येकप्रायश्चित्ते इतरस्यानुमत्या स्वत्यागः। [2][एवमुत्तरक्रत्वनुष्ठानार्थम्।] तत्रेतरस्य फलभागित्वाभावेऽपीतरस्य तत् क्रतुसिद्ध्यर्थं प्रवृत्तिः। यथा सत्रे मृते यजमाने संख्यापूरणार्थमानीतस्य कर्त्तुः। अतएवाहिताग्नेर्भार्य्यान्तरपरिग्रहे तदर्थं पुनरारम्भणीयानुष्ठानम्। यजमानस्य [3]तत्वाङ्गनिर्व्वाहकत्वेन प्रवेशः। एवमुत्तरक्रत्वनुष्ठानार्थमग्निष्टोमस्य भार्य्यार्थं पुनः प्रयोगः। न च “धर्म्मप्रजासम्पन्ने दारे नान्यां कुर्व्वीत। अन्यतराभावे कुर्व्वीत प्रागग्न्याधेयात्” ऊर्द्धं विवाहनिषेधः। प्रागग्न्याधेयादित्यस्योर्द्धं विवाहनिषेधपरत्वे परिसंख्यापत्तेरग्न्याधेयं कुर्य्यादित्येव तस्यार्थः। तथाच छन्दोगपरिशिष्टे,—

सदारोऽपि पुनर्दारान् कथञ्चित् कारणान्तरात्।
य इच्छेदग्निमान् कर्त्तुं क्व होमोऽस्य विधीयते॥

इत्याशङ्क्य—

स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन।

---

(१) A. C. रिति।

(२) A. Omits the portion bracketed.

(३) D. तत्रेदं निर्व्वाह०।

इत्युक्तम्। न च पत्नार्थान्वारम्भणी(या)यां यजमानस्याफल[1]भागित्वेनायजमानत्वान्न यजमानकर्तृकविष्णुक्रमणादिसम्भवः। सत्रे यथा "ये न यजमाना[2]स्तएव ऋत्विज" इत्यार्त्विज्ये यजमानविधानेऽपि मृते कस्मिंश्चित् संख्यापूरणार्थमानीतस्य यजमानत्वेऽप्यगत्या तत्कृताङ्गानां क्रत्वर्थत्वमेवमिह। तन्नारब्धत्वेनावश्यसमापनीयत्वादङ्गवैगुण्यं ययासह्यं इहापि "धर्मे चार्थे च कामे च नातिचरितव्ये"ति सहधर्मचरणनियमाद् वैगुण्यं सह्यम्। अतएव पत्नीनाशेनोत्सन्नाग्नेर्न पुनराधानप्रसङ्गः सह धर्म[3]चरणनियमात्। यत्तु भरद्वाजसूत्रम्,—"दारकर्म्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्य्यात्" इति तदारब्धाधानस्य मध्ये पत्न्याः पतितत्वे पलायने वारब्धाधानसमापन [पर ][4]मेव। अन्यथा ब्रह्मचर्य्यानन्तरमेव दारकर्म्मण्यशक्त आत्मार्थमाधानं कुर्य्यादिति प्रथमाधानपरं किं [5]न स्यात्। अतएवापत्नीकोऽप्यग्निहोत्रमाहरेत् यदि नाहरेदनध्वा पुरुषः स्यादिति ऋग्वेदब्राह्मणव्याख्यातम्। भार्य्यायाः पातित्ये पलायने वा साग्निरेवापत्नीकोऽप्यग्निहोत्रहोमं कुर्य्यादित्यर्थः। न तु मृतभार्य्यस्याधानविधिपरमग्निहोत्रपदस्याधानवाचित्वाभावात्। छन्दोगपरिशिष्टे,—

---

(१) C. भागित्वे यजमानत्वा ०।

(२) D. स्ते ऋत्विज ०।

(३) D. प्रचरण ०।

(४) C. Omits the portion bracketed.

(५) D. न स्यादिति।

मृतायामपि भार्य्यायां वैदिकाग्निं न सन्त्यजेत्।
उपाधिनापि तत्कर्म्म यावज्जीवं समाचरेत्॥
रामोऽपि कृत्वा सौवर्णीं सीतां भार्य्यां यशस्विनीम्।

इत्यादि। तज्जातारणिपरमिति पूर्व्वैर्व्याख्यातमेव। वैजवापः,—"जाते कुमारे अरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति तस्मिंश्चूड़ाकरणोपनयनव्रतादेशगोदानक्रिया तस्मिन्नेन-मुद्वाहयेद् सः शालाग्निः।" येषां जातारणिपक्षः तेषां सोऽग्निः पत्नीदाहे [1]न नियुज्यते।

यो दहेदग्निहोत्रेण स्वेन भार्य्यां कथञ्चन।
स स्त्री तेन भवेत् पूर्व्वं पुमांस्त्री चापि जायते॥

इति तत्रैवोक्तेः। आहवनीयादिपरत्वे पत्नीदाहनिषेधानुपपत्ते-रिति। तेन जातारणिर्मृतायामपि भार्य्यायां तमग्निं न त्यजेत्। रामोऽपि कृत्वा सौवर्णीमिति दृष्टान्तः सीतात्यागे यज्ञकरणांशेन। अन्यथा रामस्य यागार्थं द्वितीया पत्नी विद्यतएव इतिवार्त्तिकविरो-धात्। एवञ्च द्वितीयाश्रुत्याधानस्याग्निसंस्कारत्वं संस्कार्य्याग्नि-नाशेऽपि तज्जनकारणिनिष्ठः। गौतमादिस्मृत्याष्टाचत्वारिंशत्संस्कार मध्यपाठात् संयोगपृथक्त्वेन यद्याप्यात्मसंस्कारस्तथापि नाहि-ताग्निसंस्कारवत्वेन कर्म्माधिकारः किन्त्वाहवनीयादिमत्वेनाधि-

(१) A. C. न नियुज्यते।

कारः। अधिकारे सत्येव नित्याकरणे दोषः। न चोभयाग्नेरधिकारः। अतएवोक्तम्,—

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।
आहरेद्विधिवद् दारानग्नींश्चैवाविलम्बयन्॥

इति दारकर्म्मानन्तरमग्न्याधानं दर्शयति। अन्यथा हिताहिताग्नित्वाविशेषाद् दारकर्म्मस्वशक्त इत्यत्र पुंस्त्वस्याविवक्षितत्वाच्च यजमानमरणे '(१)पत्न्यापि केवलया आधानकरणेन नित्याग्निहोत्रादिकरणप्रसङ्गः।

ब्राह्मे,—

महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि।
पुत्रादिः पालयेदग्निं युक्त आदोषसंक्षयात्॥
प्रायश्चित्तं न कुर्व्वीत कुर्व्वन् वा म्रियते यदि।
गृह्यं निर्वापयेत् शौतमुदस्येत् स्रोतसां पते॥

इति लिङ्गाद् यजमाननाशे पत्न्या नाधानमिति पत्नीनाशे कथं यजमानस्याधानम्। तस्माद् द्वयोरधिकारेऽपि न पृथक् प्रयोगादधिकारः।

(१) C. पत्न्या अपि केवलाया ०।

## अग्निहोत्रप्रातःप्रयोगः।

आचमनम्। [1]त्रिमात्रप्रणवमुच्चार्य्य "उद्धर" इति प्रैषः। अध्वर्य्योराहवनीयस्थाने पञ्चभूसंस्कारः। उद्धृत्य आहवनीयस्थापनम्। [2][दक्षिणाग्निस्थानं] पञ्चधा संस्कृत्य दक्षिणाग्निस्थापनम्। यजमानस्य गार्हपत्यदक्षिणाग्न्योरन्तरा गत्वा गार्हपत्यं प्रदक्षिणीकृत्य आहवनीयदक्षिणत उपवेशनम्। गार्हपत्यनैर्ऋते पत्न्या उपवेशनम्। "वृष्टिरसि वृश्च मे पाप्मानं सत्येन व्रतमुपैम्यापः सत्यं मयि व्रत" मिति यजमानस्य जलपानम्। द्विराचमनम्।

---

## अथाध्वर्य्युकर्म्म।

वाग्यमनम्। पात्रासादनम्। कूर्चं। कुशाः। आपः। स्थाली। [3]अवज्योतनतृणद्वयम्। स्रुवः वैकङ्कतः। स्रुक् वैकङ्कती। एका समित्। भक्षणपात्री। तिस्रः समिधः। [4]अपरेणाहवनीयं कूर्चनिधानम्। तदुपरि [5]कुशनिधानम्। आहवनीयस्य त्रिभिस्त्रिभिः

---

(१) D. त्रिप्रभीतप्रणव ०।

(२) D. Omits the portion bracketed.

(३) C. अवज्योततृण ०।

(४) C. अपरे आहवनीयम्।

(५) C. कुशानां निधानम्।

कुशैः प्रागुदगग्रैः पूर्व्वार्द्धपरिस्तरणम्। ततो गार्हपत्यदक्षिणाग्न्योः क्रमेण परिस्तरणम्। [[1]गार्हपत्यं परिसमुह्य] गार्हपत्यपर्य्युक्षणम्। ततो दक्षिणाग्नेः। गार्हपत्यादाहवनीयं यावदुदकधारानिनयनम्। आहवनीयपर्य्युक्षणम्। [2]दोहनपात्रीमादाय गोसमीपं गत्वा [3]शूद्रभिन्नेन दोहनम्। गोदोहनप्रभृतिहोमपर्य्यन्तं वाग्यमः। पूर्व्वेणाहवनीयमानीय [4]दक्षिणत(?) उत्तरतोऽङ्गारान् निरुह्य गार्हपत्येऽधिश्रयणम्। तण्डुलस्य होमीयत्वे आहवनीयदक्षिणेनानयनम्। घृतादेः पूर्व्वेणैव। तृणेन दुग्धस्यावज्योतनम्। जलसेकः। [[5]पुनरवज्योतनम्।] उत्तरतस्त्रिरुद्वासनम्। तण्डुलादेरधिश्रयणाद्यभावः। स्रुक्स्रुवप्रतपनम्। उदकस्पर्शनम्। पाणिना द्वयोर्मार्ज्जनम्। पुनः प्रतप्योदकस्पर्शनम्। "उन्नयामि" इति प्रश्नः। यजमानस्तिष्ठन् "ओमुन्नय" इति वदेत्। स्रुवेण स्रुचि वारचतुष्टयग्रहणम्। स्रुग्दण्डोपरि समिधं दत्वा स्रुचं गृहीत्वा गार्हपत्यादाहवनीयं प्रतिगमनम्। मुखमात्रे धृत्वा मध्ये नाभिपर्य्यन्तं नीत्वा पुनर्मुखमात्रे धृत्वोपवेशनम्। उपविश्य दक्षिणं जान्वाच्य *"सूर्य्यज्योतिषं त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वती"मिति समिदाधानम्। इध्मे

(१) D. Omits the portion bracketed.

(२) C. दोहनपात्रमा०।

(३) D. शूद्रव्यतिरिक्तेन ०।

(४) D. दक्षिणतोऽङ्गारान् ०।

(५) D. Omits the portion bracketed.

* कात्यायनसूत्रे — अग्निज्योतिषम् ०। Sec. 4, 14. 23.

प्रदीप्ते होमः। "सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा" [1]इति होमः। इदं सूर्य्याय इति त्यागः। [2]कूर्चे निधाय गार्हपत्यावेक्षणम्। तूष्णीमुत्तराहुतिः। पूर्व्वापेक्षया भूयसी। इदं प्रजापतय इति। [3]याजमानं स्रुचि भूयिष्ठं शेषयित्वा स्रुचं द्विः प्रकम्प्य कूर्चे निधानम्। स्रुगग्रोपमार्जनं नमो देवेभ्य इति। स्रुगग्रे न्युब्जपाणिना निमार्जनमुत्तरे स्वधा पितृभ्य इति दक्षिणत उत्तानपाणिना निमार्जनम्। उदकस्पर्शनम्। स्थाल्याः स्रुवेण गार्हपत्यहोमः। "इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजापतिः अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा" इति [4][होमः।] इदमग्नये [गृहपतये][5] रयिमते पुष्टिपतये। "तूष्णीं द्वितीयाम्।" इदं प्रजापतये [इति याजनम्।][6] "अग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ" स्रुवेण [7][होमः]। इदमग्नयेऽन्नादायान्नपतये। "तूष्णीं द्वितीयाम्।" इदं प्रजापतये। स्रुच आदायानामिकया प्राशनं द्विराचमनम्।

---

(१) D. इति स्रुवा चरुहोमः।

(२) D. शेषस्य कूर्चे०।

(३) D. त्यागः। द्वितीयाहुतितः भूयिष्ठस्य स्रुचि परिशेषणम्। स्रुचि भूयिष्टं रक्षित्वा (?) द्विः प्रकम्प्य कूर्चे निधानम्। दक्षिणहस्तेन स्रुगग्रोपमार्जनं कूर्चस्योत्तरदेशे न्युब्जेनैव नमोदेवेभ्य इति। पुनरुत्ताने दक्षिणतः स्रुगग्रोपमार्जनं स्वधा पितृभ्य इति। उदकस्पर्शनम्। स्थाल्याः स्रुवेण०।

(४) C. Omits the portion bracketed.

(५) D. Omits the portion bracketed.

(६) D. Omits the portion bracketed.

(७) C. Omits the portion bracketed.

पुनः स्रुवो गृहीत्वानामिकया [1]प्राश्य द्विराचमनम्। शेषं भक्षणपात्रां कृत्वा तत्रस्थस्य लेहनम्। द्विराचमनम्। स्रुचि जलं [2]गृहीत्वा “देवान् जिन्व” इति स्रुगग्रेण जलसेकः। “पितॄन् जिन्व” इति दक्षिणतः। “सप्तर्षीन् जिन्व” इति ऊर्द्ध्वमुत्क्षेपणम्। चतुर्थीं कूर्चस्थाने निषिञ्चति[3]। “अग्नये [4]पृथिवीक्षिते स्वाहा पृथिव्याऽअमृतं जुहोमि स्वाहा अमृते अमृतं जुहोमि स्वाहेति” कूर्चमाहवनीयस्य पश्चात् कृत्वा स्रुक्स्रुवयोः प्रतप्य कूर्चे निधानम्। “समिदसि समिधो मे अग्ने दीदिहि समेद्धा ते अग्ने दीद्यासमिति” गार्हपत्ये समिदाधानम्। ततो दक्षिणाग्नौ। तत आहवनीये। यजमानस्य पयोहोमपक्षे वात्सप्रेणोपस्थानं यथोक्तं वैकल्पिकम्। “भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषै”रिति आहवनीयोपस्थानम्। ततोऽनेन गार्हपत्योपस्थानम्। तूष्णीमाहवनीयमुपस्थाय तदभिमुखं तत्समीप उपवेशनम्। गार्हपत्यसमीपे शयनमासनं [5]वा। अध्वर्य्योर्गार्हपत्यं पर्य्युक्ष्य ततो दक्षिणाग्निं तत आहवनीयपर्य्युक्षणम्। नात्रोदकधारा। यजमानस्य “विद्युदसि वि मे पाप्मानं जह्यपोऽवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रतमिति” जलभक्षणम्। द्विराचमनम्। वाग्विसर्गः। [6]गार्हपत्यं दक्षिणीकृत्याग्न्योरुत्तरा

(१) D. प्राशनं द्वि ०।
(२) C. कृत्वा।
(३) D. Adds here उदकस्पर्शनम्।
(४) D. पृथ्वीक्षिते।
(५) D. कृत्वा।
(६) D. आहवनीयं प्रदक्षिणीकृत्य अग्न्यो ०।

निष्क्रमणम्। मुहूर्त्तं सभ्यसमीपे उपवेशनम्। माध्यन्दिनश्रुत्या इन्द्रायाहवनीयाग्नये नमः यमाय गार्हपत्याग्नये नमः नलायान्वाहार्य्यपचनाग्नये नमः धनयक्षाङ्गमनाय सभ्याग्नये नमः असत्पांसवाय नमः इति पञ्चमन्त्रैराहवनीयगार्हपत्यदक्षिणाग्निसभ्याग्नीनामुद्धृतभस्मनश्चोपस्थानम्। भस्मसमीपे उपवेशनम्। "हुत्वाग्नीन् सूर्य्यदैवत्यान् जपेन्मन्त्रान्" इति वचनात् सौर्य्यमन्त्रत्रयजपो होमाङ्गम्। "न सायमनुपस्थायापरीत्यानमस्कृत्योपविशेत् आप्रात"रिति हारीतवचनात् त्रयाणामग्नीनामुपस्थानं प्रदक्षिणनमस्कारौ च।

---

## अथ स्मार्त्तहोमः।

उदयात् पूर्व्वं यजमानः स्वयमेव आवसथ्यसमीपे उपविश्य उपयमनकुशास्तिस्रः समिधः मणिकोदकं तण्डुलाः इत्यासाद्य उपयमनकुशानादाय समिधोऽभ्याधाय मणिकाद्भिः पर्य्युक्ष्य द्वादशपर्व्व[1]पूरं तण्डुलानादाय सूर्य्याय स्वाहा इदं सूर्य्याय [2]प्रजापतये स्वाहा इदं प्रजापतये इति। [3][पत्नी पुत्रकाम्यात् पूर्व्वामाहुतिं जुहोति।] मन्त्रः,—

(१) D. पूरिततण्डुला०।

(२) D. औं प्रजा०।

(३) C. Omits the portion bracketed.

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमानिन्द्रश्च *सूर्य्यश्च पुमां संवर्त्ततां मयि ॥

पुनः स्वाहा । [१]द्वितीयां यजमान एव । इदं मित्रावरुणाभ्यामश्विभ्यामिन्द्राय वायवे इदं प्रजापतये । समाचारात् ऋचं वाच (?) मित्यध्यायपाठेन शान्तिकरणम् ।

---

## अग्निहोत्रप्रायश्चित्तानि ।

तत्र ब्रह्मप्रायश्चित्तानि । जुहुयादनादिष्टानीति सूत्रितेऽपि नैमित्तिकस्य ब्रह्मावरणाप्रयोजकत्वादग्निहोत्रादावध्वर्य्युरेवानादेश्यकर्त्ता । सब्रह्मके पूर्व्वं प्रायश्चित्तार्थं ब्रह्म[२]वरणाप्रकर्षः । तदा च वाचस्पतिप्रैषः स्वकाल एव । यदि ब्रह्मा न विद्यादपि य एव कश्चिद्विद्यात् [३]स एव जुहुयादिति श्रुतेर्यजमानोऽपि जुहुयात् । पूर्णाहुतिर्होमे एवं सर्व्वत्रेति सूत्रादव्यक्तं जुहोति । चोदनासु पूर्णाहुतिवदाज्यसंस्कारः । आज्यस्थाली । कुशाः । स्रुवाः । स्रुक् । एका समित् । आज्यम् । आज्यस्थाल्यामाज्यनिर्वापः । आज्याधिश्रयणम् । [४]स्रुवस्रुक्कुशैः सम्मार्गः । आज्योद्वास-

---

* In all Mss. वायुश्च ।

(१) C. द्वितीयो ०

(२) C. वरणाप्रकर्षः ।

(३) D. स जुहुया ०

(४) C. स्रुवस्रुचोः कुशैः ०

नम्। कुशैरुत्पवनम्। आज्यावेक्षणम्। स्रुवेण स्रुचि चतुर्गृहीत-ग्रहणम्। उत्थाय समित्प्रक्षेपः। ततो होमः।

तत्र ऋग्वेदीयकर्म्मभ्रंशे,—गार्हपत्ये। प्रजापतिः। गायत्री। अग्निः। [1]भूः स्वाहा इति [2]चतुर्गृहीतहोमः। इदमग्नये। ततः सर्व्वप्रायश्चित्तपश्चाहुतयोऽपि गार्हपत्य एव सकृद्गृहीतेन। वामदेवः। त्रिष्टुप्। अग्नीवरुणौ। "त्वंनो अग्ने वरुणस्य विद्वान् देवस्य हेलोऽव यासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्।" स्वाहा। इदमग्नीवरुणाभ्याम्। पूर्व्ववद्दृष्यादिः। "सत्वंनो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणं रराणो वोहि मृलीकं सुहवो न एधि" स्वाहा। इदमग्नीवरुणाभ्याम्। कल्पजः। त्रिष्टुप्। अग्निः। "अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि। अयानो यज्ञं वहास्ययानो धेहि भेषजं स्वाहा।" इदमग्नये। कल्पजः। त्रिष्टुप्। लिङ्गोक्ताः। "ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा।" इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो (देवेभ्यो)मरुद्भ्यः स्वर्केभ्यः। शुनः शेपः। त्रिष्टुप्। वरुणः। "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा।" इदं वरुणाय।

---

(१) D. ओँ भूः स्वाहा।

(२) C. चतुर्गृहीतेहोमः।

याजुर्व्वैदिककर्म्मभ्रंशे,—गार्हपत्ये चाज्यं संस्कृत्य समित्पूर्व्वं चतुर्गृहीतेनाहुतिं दक्षिणाग्नौ। प्रजापतिः। उष्णिक्। वायुः। ॐ भुवः स्वाहा। इदं वायवे। "त्वन्न" इत्यादिसर्व्वप्रायश्चित्ताहुतयश्च दक्षिणाग्नावेव। सोमे वाग्नीध्रीये। प्रागाग्नीध्रीयोत्पत्ते र्दक्षिणाग्नौ।

सामवेदोक्ते कर्म्मण्युद्गात्रादिसम्बन्धे नष्टे गार्हपत्ये संस्कृत्याज्यं चतुर्गृहीतेन। प्रजापतिः। अनुष्टुप्। आदित्यः। स्वः स्वाहा [1]इदं सूर्य्यायेति। आहवनीये होमः। सकृदुपगृहीतेन सर्व्वप्रायश्चित्ताहुतयश्च। श्रुतिबोधितानादिष्टप्रायश्चित्ताङ्गकर्म्मभ्रंशे,—गार्हपत्ये आज्यं संस्कृत्याहवनीये समित्पूर्व्वं होमः। ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये। इति चतुर्गृहीताहुतिचतुष्टयम्। सकृदुपगृहीतेन सर्व्वप्रायश्चित्ताहुतयश्च।

अग्निहोत्रार्थदोहनकाले गौरुपविष्टा चेत् सायं होमकाले च "उदस्थाद्देव्यदिति"रिति यजुषोपस्थाप्य दोहनम्। ब्राह्मणाय गौर्देया यं प्रति स्वयं गन्तव्यं नास्ति। प्रातर्होमो गवान्तरपयसा। अथवा "दण्डेन वानुपिष्योत्थाप्य दोहनम्।" अस्मिन् पक्षे न दानम्। अग्निहोत्रगौर्दुग्धं न ददाति तदान्यगोदोहनम्। [2]नात्रानादिष्टप्रायश्चित्तम्। हंभाशब्दकरणे तृणान्यादाय तां

(१) D. इदं सूर्य्याय।

(२) D. अत्र अनादिष्ट०

भोजयेत्। दीर्घतमा (०तपाः)। त्रिष्टुप्। धेनुः। "सूयवसाद्भगवति हि भूया अथो वयं भगवन्तः स्याम अद्धितृणमघ्न्ये विश्वदानीं पिव शुद्धमुदकमाचरन्तीति" मन्त्रेण। तामेव दुग्धहोमः।

यजमानो यदि ध्यायेद् गौरियं धेनुरूपिणी।
वत्सो वायुः चितिः स्थाली तस्य किञ्चिन्न नश्यति॥
परश्रिया स युक्तः स्यात् श्रेयसा वा ऋषिश्रुतिः।

रक्तं रक्तविमिश्रितं वा यदि दुह्यते [1]कटादिना दक्षिणाग्नि-वेष्टनम्। व्युत्क्रामतेति प्रैषः। गृहात् सर्व्वजनानां निष्क्रान्तिः। [2]दक्षिणाग्नेरुष्णे भस्मनि रुद्राय स्वाहेति प्रक्षेपः। शतपथे तु,—रक्तदोहे। दक्षिणाग्निं "परिश्रयित वै।" इति प्रैषः। मेक्षणेना-लोड़नम्। दक्षिणाग्नौ तूर्ष्णीं प्रक्षेपः। द्वयोर्विकल्पः। गवान्तर-पयसा होमः। गविश्रितं पयोऽमेध्यभक्षणादिना दुष्टमिति ज्ञातं चेत् तदा इदं वरुणायेति निर्द्देशः। वत्ससंसर्गकाले गोस्थदुग्धदोष-[3]ज्ञाने इदं वायव [4]इति निर्द्देशः। दोहनकालेऽमेध्यादिसंसर्गदोषे इदमश्विभ्यामिति सकलदुग्धविनाशे इदं सोमाय। शतपथेतु,—अधिश्रयणार्थानङ्गारान् गार्हपत्ये समस्य उष्णे भस्मनि तदीय-दुग्धप्रक्षेपस्तूष्णीमद्भिरभिषेकश्च। एवं दुह्यमाननाशे। अधिश्रित-नाशे इदं वरुणाय। उत्तरकृताङ्गारेषु प्रक्षेपमात्रं वा। एतेषु

(१) D. कटाग्निना यदि वेष्टनम्।
(२) D. दक्षाग्नेरुष्णभस्मानि रुद्राय ०।
(३) C. काले ०।
(४) C. इत्युद्देशः।

सर्व्वत्रान्येन पयसाग्निहोत्रहोमः। यवाग्वादिद्रव्यहोमपक्षे-ऽप्येवम्। अधिश्रितस्योत्फेनत्वे इदं पूष्णे। उत्फेनताशान्तौ नाग्ने इदं मरुद्भ्यः। अन्येन होमः। उत्फेनं भूत्वोपशान्त-मुपरि वुद्बुदाच्छादितं यदि नश्येत् तदा इदं सरस्वत्यै। होमोऽन्येन। उत्फेनताशान्तौ वुद्बुदशान्तौ (च)नाग्ने इदं मित्राय। उद्वासनकाले नाग्ने इदं सवित्रे। अन्येन होमः। उन्नीय-माननाशे इदं विश्वेभ्यो देवेभ्यः। एवं दध्यादावपि। स्रुचि गृहीतस्य नाशे इदं बृहस्पतये। अन्येन होमः। शतपथे तु,—समिधमाहवनीये दत्वा तत उष्णं भस्मोद्धृत्य तस्मिंस्तूष्णीं तस्य पयसः क्षेपः। अथवा तेनैवाग्निहोत्रहोमः। "नवै देवाः कस्माच्चन वीभत्सन्ते" इति श्रुतेः। अथवाहवनीयं प्रति नेतुमिष्टं पयो विनष्टञ्चेत् इदं धात्र इति निर्द्देशः। [[1]आहवनीयार्थं नयनो-पक्रमे इदं विश्वकर्म्मणे। नयंशस्यान्तराले विनाशे इदमग्नये वैश्वानराय। अन्येन होमः। आहवनीयसमीपे नाशे इदं द्यावा-पृथिवीभ्याम्। अन्येन होमः। समित्प्रक्षेपनाशे इदमिन्द्राग्नि-भ्याम्। अन्येन होमः। पूर्व्वाहुतिहोमानन्तरं उत्तराहुतौ दुष्टि-स्थायां नाशे इदं प्रजापतये इति निर्द्देशः।] सकृद्गृहीतेनो-त्तराहुतिः। होमशेषपर्य्यानाशे इदमिन्द्राय। अत्र सर्व्वत्र देवतानिर्द्देशमात्रम्। "रौद्र"मित्यादिश्रुतेः। रुद्रैतत्ते पयः वायो एतत्ते पय इति सम्बोधनेन निर्द्देश इति सम्प्रदायः। दुष्टस्य

---

(1) C. Omits the portion bracketed.

पयसो रुद्राय स्वाहेत्येवमाहवनीये होमः। एवं सर्व्वत्र इति केचित्। अन्येन पयसा सर्व्वत्राग्निहोत्रहोमः। यवाग्वादि-होमद्रव्यपक्षेऽप्येतानि प्रायश्चित्तानि। अथ यदि तण्डुलपयः प्रभृति होमद्रव्यं स्कन्देत अधः पतति "अस्कान्नधितप्राजनो"ति-मन्त्रेणाभिमर्शनम्। पतितस्य शेषेण होमः। आज्ये स्कन्नेऽल्पां निनयनं तूष्णीम्। यदि स्थाली स्रुग् वा सह हविषा भिद्येत अधोमुखो वा पतति सर्व्वं हविर्भूमौ पतेत् भूमिगतं द्रव्यं "अस्कान्नधीत प्राजनो"ति मन्त्रेणाभिमृश्य भूर्भुवः स्वरिति जलेन पर्य्यासिञ्चनम्। स्थालीभेदपक्षे यत्राग्निभ्यो भस्मोद्धृत्य कुटीकृत्य स्थाप्यते तत्र स्थालीकपालानां प्रक्षेपः। भुवपतय इति हाविर्य्यज्ञीय-स्कन्दस्याभिमर्शः। देवान् दिवमगन्निति सोमे हविषः स्कन्दे-ऽभिमर्शः। यदि स्रुचुन्नीतं द्रव्यं संस्कन्देत स्रुग् वा भिद्येत स्रुचान्तरं संमृज्य प्रतप्य द्रव्यान्तरमुन्नीयान्यस्मै दद्यात् तेन कर्त्ता जुहुयात्। एकदेशस्कन्दने तु शेषेण होम उक्तः। एकदेशस्या-त्यल्पेऽपि तेनैव होमः। द्रव्यान्तरोपादानं स्थाल्यामसम्भवे। पुनर्दोहनम्।

प्रथमाहुतौ हुतायामाहवनीयानुगमने प्रथमाहुतिहोमात् पूर्व्वं वानुगमनेऽनादिष्टप्रायश्चित्तमाध्वर्य्यवं दक्षिणाग्नौ हुत्वाहव-नीयमुद्धृत्य द्वितीयाहुतिः। द्वे वा आहुती।

अथाग्निसमेधनाय पूर्व्वं प्रक्षिप्ते काष्ठेऽनादिष्टमकृत्वैव द्वितीया-हुतिः। काष्ठे होमे शंकशूकत्वे हिरण्यं निधाय द्वितीयाहुति

[र्होतव्या¹] आहवनीयस्य विरहृतस्य नाशे विहारस्योत्तरतो गार्हपत्याहवनीयदक्षिणाग्नीनां स्थानसंस्कारः। देवश्रवा देवरातश्च। अनुष्टुप्। अग्निः। "अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आ रोहाथा नो वर्द्धया गिरः।" इति गार्हपत्ये अरणी प्रतप्य गार्हपत्यमुपशमय्य निर्मथ्य गार्हपत्यमुत्पाद्य स्थाने स्थापयित्वाहवनीयदक्षिणाग्नी उद्धृत्य सायं होमं कृत्वा तत्रैव विहारे प्रातर्होमः। अन्ये तु प्रातर्होमार्थं पृथगुद्धरणम्। प्रातर्होमकाले विरहृताहवनीयानुगमने प्रातराहुतिर्निर्मथ्य उदग्विहारे कार्य्या न सायं होमार्थमग्नि²रक्षणम्। अन्ये तु शतकृत्वोऽप्युद्धरन्ति। नैतत् प्रायश्चित्तम्। आहवनीयहोमे कृतेऽकृते वा गार्हपत्यानुगमने आहवनीयहोमं कृत्वा गार्हपत्यभस्मनारणी संसृज्य मथित्वा संस्कृते गार्हपत्यस्थाने निधाय गार्हपत्यहोमादि कर्त्तव्यम्। कर्म्मान्तरकालेऽपि गार्हपत्यनाशे भस्मनारणी संसृज्य मन्थनम्। अथवाग्निहोत्रकाले गार्हपत्यानुगमने आहवनीयादुद्धृत्य पूर्व्वतो नीत्वा तमाहवनीयं प्रकल्प्य पूर्व्वाहवनीयं गार्हपत्यं कृत्वा होमः। अथवा गार्हपत्यानुगमने आहवनीयं ³गार्हपत्यस्थानं नीत्वा तत आहवनीयमुद्धृत्य होमः। अथवाहवनीयात् पश्चिमतो गार्हपत्यं यावत् घणद्वय⁴पंक्तिं प्रस्तार्य्य

---

(१) D. Omits the portion bracketed.

(२) C. ० करणम्।

(३) C. गार्हपत्यं नीत्वान्ते आहवनीय ०।

(४) C. फलैः प्रस्तीर्य्य।

तां दहन् गार्हपत्यस्थानं प्राप्त आहवनीय एव गार्हपत्यः। ततः पुनराहवनीयोद्धरणम्। अथवाहवनीये स्थिते गार्हपत्यं निर्मथ्योत्पाद्याभ्यर्थ्यैवं कृत्वाग्निहोत्रहोमः। अथवा गार्हपत्यनाशे आहवनीयमरण्यां समारोप्य उत्तरे स्थानद्वयं संस्कृत्य निर्मथ्य गार्हपत्यं स्थापयित्वाहवनीयमुद्धृत्य होमः। अथवाहवनीयमुपशमय्य निर्मथ्याहवनीयमुद्धृत्य होमः। पक्षद्वयेऽपि स एव दक्षिणाग्निः। दक्षिणाग्न्यनुगमने दक्षिणाग्निमुद्धृत्यानादेशं कृत्वा [1]पुनराहृत्य होमः। त्रिरुद्धृतदक्षिणाग्निनाशे तदहस्तद्धोमलोप इति कर्कः। [2]अन्ये तु शतकृत्वोऽप्युद्धरन्ति। अरणिसम्भवदक्षिणाग्निपक्षे शतकृत्वो मन्थनम्। विमथितनाशेऽमन्थनं वा। नित्यधारित्वपक्षेऽप्यग्निशमनेऽनादिष्टं कृत्वा स्वयोनेराहरणम्। आहवनीये स्थिते नाशमुद्रा पुनराहवनीयोद्धरणे सम्प्रत्युद्धृतो गार्हपत्य एव भवति। गार्हपत्यायतने निधेयः। अनादेशश्च। अथवा समिदुपरि खातं कृत्वाहवनीयद्वये अन्यस्य तत्र तथा होतव्यं यथा होमद्रव्यमग्निद्वये पतति। द्वयोर्मिश्रयणेऽग्नये ऽग्निमते पुरोडाशः। अग्निहोत्राङ्गत्वात् तद्विहार एवाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः। पृथगारम्भाभावान्नान्वारम्भणीया। इष्टिकरणाशक्तौ "समित"मित्याद्याभ्यामुपस्थानम्। प्रजापतिः। उष्णिक्। अग्निः। "संवा"मित्युपरिष्टाद् बृहती। "समितं संकल्पेथां सम्प्रिया रोचिष्णू

---

(१) C. पुनरुद्धृत्य होमः।

(२) D. अन्येऽपि०।

सुमनस्यमानो दृषमूर्जमभि संवसानो।" "संवा मनांसि सं व्रता समु चित्तान्याकरं अग्ने पुरीष्याधिपा भव त्वन्न दृषमूर्जं यजमानाय धेहि। अनुदृतास्तमये होमकर्त्ता कश्चिद् ब्राह्मणं प्रेष्यति। "हिरण्यं दर्भे [1]प्रबध्य पश्चाद्धर्त्तवै(ब्रूयात्) स च ब्राह्मणः कुशबद्धं हिरण्यं पश्चाद् हारयति। पुनर्मन्त्राणामविज्ञातारं ब्राह्मणं प्रेष्यति। इध्ममादीप्य पुरस्ताद्धर्त्तवै (ब्रूयात्।) सद्योऽवसितेध्मकाष्ठानि त्रिःसन्नद्धान्यग्रे सार्द्रमृत्पिण्डत्रयरूपोपयमनीसंलग्नानि गार्हपत्ये मूलदानेनादीप्याहवनीयाय खरे निदधाति। तत्र नवें संस्कृत्य समित् पूर्व्वं चतुर्गृहीतेन विष्णवे स्वाहेति होमः। ततो दक्षिणाग्निमुद्धृत्याग्नये सूर्य्यवते पुरोडाशः। इष्टिमकृत्वा वाऽऽज्यं संस्कृत्य चतुर्गृहीतेन विश्वेभ्यो देवेभ्यः स्वाहेति होमः। अनुदृताभ्युदये रजतं दर्भे [2]प्रबध्य पुरस्ताद्धर्त्तवै इति प्रैषः। ब्राह्मणेन पुरस्ताद्धारणम्। पूर्व्ववद्विधेनोद्धृत्य वैश्वदेव्याहुतिः। दक्षिणाग्निमुद्धृत्य "सूर्य्याय ज्योतिष्मते पुरोडाशः।" इष्टिमकृत्वा वा वैश्वदेव्याहुतिः। वक्ष्यमाणमहुताभ्युदयप्रायश्चित्तञ्चात्र। अग्निहोत्रे पात्रासादनानन्तरं कूर्चनिधानानन्तरमाहवनीयनाशे "प्राण उदानमप्यगात् स्वाहे"ति गार्हपत्ये होमः।[3] तस्मिन्नेव काले गार्हपत्यनाशे निर्मथ्य स्थापयित्वाज्यं संस्कृत्याहवनीये होमः।

---

(१) D. प्रपद्य।

(२) D. प्रपद्य।

(३) C. Adds here, उद्धृत्याग्निहोत्रहोमः।

"उदानः प्राणमभ्यगात् स्वाहे"ति। तस्मिन्नेव काले दक्षिणाग्नि-नाशे "व्यान उदानमभ्यगा"दिति गार्हपत्ये हुत्वा दक्षिणाग्न्यु-द्धरणम्। तस्मिन्नेव काले युगपत् सर्व्वे चेदनुगच्छेयुः शीघ्रं मथित्वा प्रतिवातमुद्धृत्य यथा पुरोवाते प्रतीच्यां तत्रोद्धृत्य वायवे स्वाहेति हुत्वा तमेवाहवनीयं स्वस्थाने न्यस्याग्निहोत्रहोमः। अतिमान्द्याद्(?) वाताभिमुखादिस्थाने तु त्रयाणां पात्रासा-दनोर्द्धं नाशस्थाने तूर्णं तु मथित्वाहवनीयदक्षिणाग्न्युद्धृत्य नयें घृतं संस्कृत्य सकृदुद्गृहीत्वा आहवनीयस्य पश्चादुपविश्य स्वयं पीत्वाचम्याग्निहोत्रहोमः। नात्र पूर्व्वप्रायश्चित्तं पात्रासादनरूप-निमित्तभेदात्। नवा विकल्पो [1]निमित्तभेदेन भिन्नार्थत्वात्। पात्रासादनात् पूर्व्वन्तु त्रयानुगमने सूर्य्योदयास्तमनस्थाने उभ-यानुगमननिमित्तं पुनराधेयम्। [पात्रासादनात् पूर्व्वं तदूर्द्ध्वं वाहवनीयगार्हपत्यद्वयनाशे सूर्य्योदयास्तमनस्थाने पुनराधेयम्।][2] सूर्य्योदयास्तमनस्थानानन्तरन्तूभय[3]नाशस्थाने न पुनराधेयं किन्तु मथित्वोद्धृत्यानादेशः। विहरणकाले मथ्यमानश्चेन्न जायेत निक-टस्थलौकिकाग्निमाहृत्य विहृत्य होमः। अथवा अग्नित्रयस्थाने ब्राह्मणदक्षिणहस्तत्रयं च स्थापयित्वा होमः। तस्मिन् पक्षे व्रतम्। यावज्जीवं "वसत्वर्य्य"मागतस्य ब्राह्मणस्यानिराक्रिया। जीववदज-

---

(१) C. रूपभेदेन भिन्नार्थत्वात्।

(२) D Omits the portion bracketed.

(३) D स्थाननाशस्थाने०।

कर्णत्रयं वाग्निस्थाने निधाय होमः। तत्र यावज्जीवमाजमांसवर्जनं कुशस्तम्बे वा होमः। यावज्जीवं तत्रानासनम्। पावस्थासु वा होमः। यावज्जीवजलनिन्दावर्जनं तत्र व्रतम्। दर्भजलपक्षयोर्गार्हपत्यायतने कृत्वोद्धरणम्। ब्राह्मणहस्तादिसर्व्वपक्षेषु दृष्टार्थत्वात् प्रथमा समिन्नास्ति। लौकिकेऽग्नौ पयोऽधिश्रयणम्। "समिदसि समिद्धो मे ब्राह्मणहस्त दीदिहि समिद्धा ते" ब्राह्मणहस्तवद्वा समिति द्वितीया समित्। एवमाजकर्णं दीदिहि। कुशस्तम्ब दीदिहि। अहुताभ्युदये उत्नीय निःश्वासधारणम्।

प्रथमाहुतिं हुत्वा भूरित्यनुमन्त्रणम्। यजमानस्य होत्रे वरदानम्। गार्हपत्यदक्षिणाग्निहोमात् प्राक् उदयेऽप्येवम्। वरः श्रेष्ठद्रव्यम्। सर्व्वहविर्नाशे दोषे वाऽध्वर्य्यवं कृत्वा साङ्गावृत्तिः। आज्येन वा देवतेज्या। मार्जारमूषिकादीनां गार्हपत्याहवनीयदक्षिणाग्नीनान्तरागमने (दक्षिणाग्नीनामन्तरागमने) न दोषः। खड्गवराहेषूदकधारा प्राङ्मुखी कर्त्तव्या। भस्मधारा वा। गर्द्दभगमने अग्नये पथिकृते पुरोडाशः। [1]नित्येष्ट्यतिपत्तौ चेयमिष्टिः। गौणकालातिक्रमे। गौणकालेत्वाध्वर्य्यवं कृत्वा क्रिया। स्रोतमोहे शास्त्रमोहे चेयमिष्टिः। [[2]स्वजनमरणेऽन्वारम्भणीयापूर्व्विका चेयमिष्टिः।] व्रत्येऽहनि मांसमैथुनभोजने अग्नये व्रतपतये अष्टाकपालः। कर्म्ममध्ये धार्त्त्र्यमुकरणश्चेदग्नये व्रतभृते।

(१) D. नित्येष्ट्यापत्तौ चेय०।

(२) D. Omits the portion bracketed.

नात्येतीत्येतत् स्मार्त्तविषयमिति भट्टाचार्य्याः । याज्ञिकास्तु श्रौत-स्मार्त्तोभयविषयं मन्यन्ते गौणकालपरत्वात् ।

---

## अथ परिशिष्टभरद्वाजसूत्रादिनिष्ठो मण्डनव्याहृतः पञ्चहोमविधिः ।

यदापदुपस्थिता तदा सायं होमकालेऽग्नीनुद्धृत्य कूर्च्चमासाद्य परिस्तीर्य्य पर्य्युक्ष्य [1]दोहाद्योद्वासनान्तं कृत्वा पर्व्वण्यग्न्यन्वाधान-मावश्यकमिति पर्व्वपूर्व्वसायंहोमान् गणयित्वा तावन्ति चतु-रुन्नीतानि पृथक् पात्रेणोन्नीय समिधमुपरि धृत्वाहवनीयं यथोक्तरूपेणेति "अग्निर्ज्योतिर"मिति समिधं दत्वा तावद्धो-मोचितद्रव्येण पूर्व्वाहुतिः सायंहोममन्त्रेण द्वितीयाहुतिद्रव्यं पात्रान्तरे कृत्वा पुनर्गार्हपत्यमेत्य पर्व्वपूर्व्वदिने प्रात[2]र्होमान् गणयित्वा तावन्ति चतुरुन्नीतान्युन्नीय समिधमुपरि [3]कृत्वा-हवनीयमेत्य "सूर्य्यो ज्योतिर"मिति समिधं दत्वा तावद्धो-मोचितद्रव्येण प्रातर्मन्त्रेण पूर्व्वाहुतिः । प्रथमस्थापितद्रव्येण संमेल्य कूर्च्चे निधाय गार्हपत्यमवेक्ष्य तन्त्रेण द्वितीयाहुतिः । सकृत् कूर्च्चमुखे मार्जनम् । गार्हपत्यदक्षिणाग्न्योर सायं-होम-

---

(१) D. दोहोद्वासनान्तम् ।

(२) C. र्होमान्तान् ।

(३) D. दत्वाहवनीयं यथोक्तरूपमेत्य सूर्य्य० ।

पूर्व्वाहुतिं गणयित्वा तावतः स्रुवान् पात्रान्तरे कृत्वा तावद्द्वितीयाहुतिद्रव्यञ्च पात्रान्तरे कृत्वा पुनः प्रातर्होमान् गणयित्वा पात्रान्तरस्थसायंकालिकपूर्व्वाहुतिद्रव्येण संमेल्य तन्त्रेण सायं प्रातःपूर्व्वाहुतिः। पात्रान्तरस्थसायंकालिकपूर्व्वाहुति[१]द्रव्येण प्रातर्द्वितीयाहुतिद्रव्येण प्रातर्द्वितीयाहुतिसंख्यकान् स्रुवान् संमेल्य तन्त्रेण द्वितीयाहुतिः। भक्षणादितन्त्रसमाप्ति(:)तन्त्रेण। समित्पर्य्युक्षणोपस्थानानि सायं धर्म्मेण। यदातु प्रातर्होमकाले आपत्सम्भावना तदा पर्व्वप्रातःपर्य्यन्तप्रातर्होमसंख्यकप्रातर्धर्म्मेण समिधं दत्वा प्रातराहुतिः। शेषं संरक्ष्य पर्व्वपूर्व्वदिनपर्य्यन्तसायंहोमसंख्यकचतुरुन्नीतानि गृहीत्वा सायंधर्म्मेण समिधं दत्वा सायमाहुतिः। शेषद्वयं समस्य कूर्चे निधाय गार्हपत्यमवेक्ष्य द्वितीयाहुतिस्तन्त्रेण। प्रातर्धर्म्मेण पर्य्युक्षणोपस्थाने। आपल्लाघवे तु सायंहोमसम्बन्धिनः सायंहोमा एव समस्य कार्य्याः प्रात र्होमकाले तु प्रातर्होमाः।

पञ्चहोमे कृते पश्चान्निर्वाहस्तु यदा भवेत्।
[३]तत्र ऊर्द्ध्वन्तु कर्त्तव्या शेषाहे तु यथाविधि॥
अकाले चेत् कृतं कर्म्म काले तस्य पुनः क्रिया।

इति न्यायमूलमेतत्।

उभयानुगमने पुनराधेयमुक्तं तत्प्रसङ्गेन पुनराधेयनिमित्ता-

---

(१) D. ० कृतोः।

(२) D. ० द्रव्ये प्रातर्द्वितीयाहुतिसंख्यकान् ०।

(३) D. तत्र ०।

न्युच्यन्ते। तत्र येषु निमित्तेषु शृङ्गग्राहिकया पुनराधेयविधिस्तत्रैव पुनराधेयविधिरन्यत्राधानम्।

पुनराधेयमाधानादूर्द्ध्वं प्रज्ञाविनाशने।
तथा सर्व्वस्वनाशे च तदर्थे च [1]महापदि॥
मृते पुत्रेऽङ्गनाशे च पुनराधेयमिष्यते।
ऋत्विक्पुरोहितभ्रातृमृतौ बौधायने मते॥
[2]बहुशः पुनराधेयमाधानाद् व्यसनोद्यमे।
उद्वातेऽग्नौ विहारात् प्राक् मथ्यमानेऽप्यजन्मनि॥
लौकिकाग्न्याद्यनाहारेऽभ्युदयेऽस्तमयेऽपि वा।
विशिष्टहेतुनानेनाधानं स्यादग्निदोषतः॥
मन्थनारम्भमात्रेण नाग्निदोष इतीतरे।
हुतेऽपि लौकिकाग्न्यादौ मथ्यमानोऽप्यनन्तरम्॥
द्वितीयाद् वा तृतीयाद् वा होमकालात् पुरा यदि।
अग्निर्न जायते तत्र पुनराधेयमिष्यते॥
होमाष्टकाधिके लुप्ते हुतोऽप्यग्निर्विनश्यति।
ततोऽल्पहोमलोपेऽपि यदाग्निरुपशाम्यति॥
लौगाक्षिः पुनराधेयाधाने वैकल्पिके जगौ।
कौषीतकिश्रुतिर्येवं मासार्द्धं चेत्त हूयते॥
ज्वलत्स्वग्निष्वतिक्रान्तान् पक्षान्ते पक्षहोमवत्।
समस्य जुहुयात् पश्चादिष्टिस्तन्तुमती भवेत्॥

---

(१) D. यदापदि।

(२) C. विसृज्य (?) ०।

न तत्र पुनराधेयमापद्येवं प्रकीर्त्तितम्।
वत्सरं वत्सरार्द्धं वा होमलोपे मतान्तरम्॥
आपत्काले न नश्यन्ति दीप्यन्ते चेद्धुताशना।
पञ्च कार्य्याः पुरोडाशा होमे लुप्तेऽर्द्धवत्सरम्॥
पथिकृत् प्रथमो ज्ञेयः पावकः शुचिरेव च।
व्रतपतिस्तनुमांश्चाग्ने र्दैवताया गुणाः क्रमात्॥
सप्त कार्य्याः पुरोडाशाः होमे लुप्ते च वत्सरम्।
पवमानः पावकश्च शुचिः पथिकृदित्यपि॥
वैश्वानरो व्रतपतिस्तनुमानिति सप्तभिः।
विशेषितोऽग्निरेव स्याद् देवतात्र यथाक्रमम्॥
नाशदाहावरण्योश्चेदग्निं यत्नेन पालयेत्।
अन्यारण्योर्यावदेव नारोप्य मथितः पुनः॥
उद्दामे पुनराधानं छन्दोगपरिशिष्टतः।
अयन्ते योनिरनया समारोपो विधीयते॥
मन्यन्तूपावरोहेत्यनया स्याच्च वा सदा।

"उपावरोह जातवेदः प्रजानन्। आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुतरणे।"(१)

यज्ञपार्श्वे तु,—

अरण्योर्दग्धयोश्चैव दुष्टयोः क्षीणयोस्तथा।
आहृत्यान्ये समारोप्य पुनस्तत्रैव निर्मथेत्॥

तत्र चायं समारोपमन्त्रः,—"उद्बुध्यस्वाग्ने प्रविशस्व योनिमन्यां

देवयज्यायै वोढवे जातवेदः । अरण्योररणिमनुसङ्क्रमस्व जीर्णा-न्तनुमजीर्णया निर्णुदस्व ।"

विहायाग्निं सभार्य्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
[1][होमकालात्यये तस्य पुनराधानमिष्यते ॥]
भार्य्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेति वा ।
तत्र स्यात् पुनराधेयमन्ये त्वाहुरिहान्यथा ॥
ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्वन्या यथारुचि ।
यजमानेन सहिता यद्वा ता एव केवलाः ॥
एकस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ।
पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे जगुः ॥
सन्ध्यावदन्यदाप्यग्नीन् हित्वा चेद् दम्पती गतौ ।
[2]ग्रामान्तं वाथ सीमान्तं तत्रैकेऽग्निगमं विदुः ॥
अन्ये ग्रामान्तरगमाद्व्यतिक्रमं भावतः ।
यदोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ॥
उदयास्तमयात् पूर्व्वं न नाशोऽस्तीति केचन ।
विनाग्निभिर्यदा पत्नी नदीमब्धिगामिनीम् ॥
अतिक्रामेत् तदाग्नीनां विनाशः स्यादिति स्मृतिः ।
आपद्यपि हि कष्टायां विना पत्नीं नरान्तरैः ॥

(१) D. Omits the portion bracketed.

(२) D. ग्रामान्तरं वा सीमान्तम् ० ।

सीमातिक्रमणेऽग्नीनां न कथञ्चिदनुग्रहः।
प्रत्यक्षेण नयन्नग्निमुच्छ्वसेच्चेद् [2]विनश्यति॥

तत्राधानमित्यर्थः।

तस्मादनुच्छ्वसन् हुत्वा निधायोच्छ्वसनं चरेत्॥
पुरस्तादुच्छ्वसन् हुत्वा नयेदेवं [1]न नश्यति।
शकटेनापि दूरं वा प्रत्यक्षं मननं नयेत्॥
स्वाङ्गेनैवाथवा शम्या परासात् प्राङ् नयेत् श्वसन्।
अन्यथाग्निविनाशः स्यात् तत्राधानं विधीयते॥
पितृयज्ञे च दीक्षायां यायावरश्रुतिषु च।
एतेष्वेव दहेदग्निं प्रत्यक्षं मनसा विना॥

अनोविना शम्या ग्रामादूर्द्धं नयनेऽग्निनाश इत्याहुः।

कर्म्मार्थंहरणेऽग्नीनां नानुच्छ्वासादिचोदिते।
नदीसन्तरणेऽग्नीनां सीमातिक्रमणे तथा॥
सर्व्वत्राग्न्यन्तसीम्नोर्वा स्वामिस्पृष्टाः स्युरग्नयः।
प्रत्यक्षमरणिद्वारञ्चान्यथाग्निविनाशनम्॥
ग्रामारण्यगपक्षे तु नत्वारम्भो विधीयते।
न क्वाप्यारम्भणं किञ्चिल्लौगाक्ष्यादिनिबन्धनात्॥
दृष्टोऽग्निर्यदि नश्येत मथ्यमानः पुनः पुनः।
ग्रामाद् ग्रामान्तरं गच्छेत् प्रत्यक्षो हव्यवाहनः॥

(१) D. ० मागतः।
(२) D. ० विनश्यति।

अहुतो यत्सरं तिष्ठेदुदकेन भ्रमङ्गतः।
चतुर्भिः कारणैरेभि र्नष्टेऽग्नौ पुनराह्वयेत् ॥

उदकेन भ्रमितः नष्टः। उदकेन सह नीत इत्यन्ये।

नष्टे मथितमात्रे वा समारोपयजुर्जपेत्।
पुनर्निर्मंथ्य जप्तव्यं यजुस्तूपावरोहणम् ॥

तथा,—

विप्रोषिते स्वामिनि वैदिकाग्नि-
र्ग्रामस्य सीमामतिलङ्घ्य गच्छेत्।
पत्न्याः प्रवासेऽपि तथैव नाशः
पत्नीबहुत्वेऽपि समानमेतत् ॥

"प्रवा व्रजति प्रवा धापयती"ति काण्वश्रुत्या प्रोषितस्वाम्नि-नयनमनुज्ञातमित्यन्ये।

नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम्।
अमावस्यात्रयादूर्द्ध्वं पुनराधानमिष्यते ॥
[1]मासद्वयं प्रवासोऽस्ति परतो नाहिताग्निवत्।
स्वर्गेऽग्न्योर्गृहदाहे च उदक्यायां तथैव च ॥
उदक्यायाः प्रवासाच्च पुनराधानमर्हति।
[[2]सूतके सूतके चैके प्रवासे पुनराहितम् ॥]
धूपाङ्गारे स्वयं दीप्तः पावकः प्रशमेद् यदि।
उत्सन्नाग्निः स विज्ञेयः पुनराधानमर्हति ॥

---

(१) D. मासद्वयप्रवासो०।

(२) C. Omits the portion bracketed.

[1]अचोदितेन पाकेन कर्त्तनोद्धरणेन च।
उत्सन्नाग्निः स विज्ञेयः पुनराधानमर्हति॥
पुनर्विवाहे त्वाधानं पुनराधेयमेव वा।
लौगाक्ष्यादानुवन्धत्वा [2]दुभयञ्चेति केचन॥
पक्षत्रयं पञ्चहोमे पुनराधिनिरन्तरे।
अग्नावनुगते स्वामी सीमामुल्लङ्घ्य चेद्गतः॥
असमाधाय तत्रापि पुनराधेयमिष्यते।
श्वशूकरखरोष्ट्राद्यैः काककुक्कुटमर्कटैः॥
शृगालकुणपोदक्यासूतकोपतितान्त्यजैः।
रेतोमूत्रपुरीषैर्वा पूयाश्रुश्लेष्मशोणितैः॥
वसास्थिमांसमज्जाद्यैः शूद्रैरन्यैर्जुगुप्सितैः।
आरोपितारणिस्पर्शे कृतेऽग्नौ स्पर्शनेऽपि वा॥
आक्रोशिजते पुंसंसर्गे वासे वा पतितादिभिः।
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम्॥
तत्रारणिगते वह्नौ दुष्टे स्यात् पुनराहितिः।
इतरेषु निमित्तेषु त्वग्न्याधेयं प्रचक्षते॥
बौधायनमते वह्नावल्पन्तोपहते सति।
समारोप्य मथित्वा च पवमानेष्टयो मताः॥
यदा सर्व्वोपघातेषु स्यादापस्तम्बवाक्यतः।
"पुनस्त्वादित्यारुद्रा" इत्यादिमन्त्रेण समिदाहुतिः॥

---

(१) D. अव्योदितेन ०
(२) C. ० दुभयं नेति ०

अन्ये चतुर्गृहीताम्याहुतिमेतेन वा जगुः ॥

प्रजापतिः । त्रिष्टुप् । अग्निः । "पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्मणो वसुनीथ यज्ञैः । घृतेन त्वन्तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥" स्वाहा ।

आरोपितारणीनाशे पुनराधेयमेव वा ।

छन्दोगपरिशिष्टे,—

अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्व्वयोः ।
न तावत् पुनराधानमन्यारण्योर्व्विधीयते ॥
उत्तरा तु यदि क्षीणा नष्टा वा दैवकारणात् ।
अवपाद्य ततो मन्थेत् प्रादेशं परिशेषयेत् ॥
एकारण्यां विनष्टायामस्ति चेदपरारणिः ।
तां छित्वा मन्थनं प्रोक्तं भाष्ये बौधायनीयके ॥
अरणीमथनाग्रन्ते तन्तुभिर्म्मथनेन वा ।
स्यातां चेदरणी नूत्ने ग्राह्ये शास्त्रोक्तलक्षणे ॥
श्वोभूतेऽनुदिते दर्शे तस्मिन् पूर्व्वारणिद्वयम् ।
शकलीकृत्य पाचाल्ये वह्नौ निक्षिप्य दाहयेत् ॥
ततो दक्षिणहस्तेन नूतनामुत्तरारणिम् ।
गृहीत्वा सव्यहस्तेन गृह्णीयादधरारणिम् ॥
ते उभे अरणी तत्र दीप्तेऽग्नौ धारयन् जपेत् ।
उद्‌बुद्धस्वाग्न इत्येतदयन्ते योनिरित्यपि ॥
मन्थनस्याहृता सम्यङ् मथित्वाग्निं विहृत्य च ।
विलाप्योत्पूय दर्भाभ्यां स्रुच्यादाय चतुर्घृतम् ॥

जुहोत्याहवनीयेऽग्नौ मनस्वत्या घृतं तथा।
इष्टिं तन्तुमतीं कुर्य्यात् शरावं दक्षिणां ददेत्॥
इत्यनारोपितारण्योः क्षये प्राप्ते नवे पुनः।
तदलाभादग्निनाशे पुनराधानमिष्यते॥
शूद्रोदक्यान्त्यकाकश्वपतितामेध्यरासभैः।
अनारूढारणिस्पर्शे ते विहायान्ययोर्मुहः॥
भवतन्नः समेत्यप्सु मज्जयेद्दूषितारणी।

प्रजापतिः। पंक्तिः। अग्निः। "भवतन्नः समनसौ सचेतसा वरेपसौ। मा यज्ञं हिंसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्यनः।"

एकारण्येव दुष्टा चेत् तामेवाप्सु विनिक्षिपेत्।
तत्रान्यारणिलाभात् प्रागुदाते पुनराहितिः॥
प्रागादित्योदयाद्धोमं संकल्प्य न जुहोति चेत्।
अग्न्याधिः पुनराधिर्वा नोभयं स्वाम्यसन्निधौ॥

[1][ छन्दोगपरिशिष्टे,— ]

वैताने पुनराधानं यस्याग्नीनां विधीयते।
अकुर्व्वंस्तदवाप्नोति प्रायश्चित्तमृताहृतौ॥

[2]प्रायश्चित्तमनादेशप्रायश्चित्तम्।

अत्र येषु निमित्तेषु वह्नेर्नाशो मतान्तरे।
मतान्तरे विनाशो न तत्र किं प्रतिपद्यताम्॥

---

(१) C. Omits the portion bracketed.

(२) D. प्रायश्चित्तमनादेशः। अत्र०

स्थितानग्नीन् समुत्सृज्य नाधानस्यात्र सम्भवः।
दैवादग्निर्विनाशे स्यादाधानमिति याज्ञिकाः॥
अनेकाचार्य्यसिद्धान्ताः सौकर्य्याय प्रदर्शिताः।
देशकालवयोऽवस्थाशक्तिभेदाद् व्यवस्थिताः॥

---

## अत्र प्रायश्चित्तोपयुक्ताधानप्रसङ्गेन प्रथमाधानं लिख्यते।

तत्र—

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते।
अनाहिताग्निर्भवति परिवित्तिश्च जायते॥

इति छन्दोगपरिशिष्टवचनात् प्रथमं स्मार्त्ताधानम्। छन्दोगपरिशिष्टे,—

दाराधिगमनाधाने यः कुर्य्यादग्रजेऽनुजः।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः॥
देशान्तरस्थक्लीवैकवृषणानसहोदरान्।
वेश्यानिष्ठांश्च पतितान् शूद्रतुल्यातिरोगिणः॥
जड़मूकान्धवधिरकुब्जवामनकुण्ठकान्।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा।
कुलटोन्मत्तचौरांश्च परिविन्दन् न दुष्यति॥

एकवृषणान् एकस्यां स्त्रियां प्रसक्तान्। अभार्य्या यतिवनवासि-

नैष्ठिकाः। कुलटः परकुलाटनशीलः। कुण्ठकः कुष्ठी। सर्व्वक्रिया-स्खलन इत्यपरे। नृपस्य सक्तान् नृपसेवकान्। तथा धनवार्द्धुषिकं राजसेवकं कर्षकं तथा।

प्रोषितश्च प्रतीक्षेत वर्षत्रयमपि त्वरन्।

तेन—

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च।

इति जातिमात्रे यस्याग्निस्तत्परम्। तथा,—

योगशास्त्राभियुक्ते च न दोषः परिविदने।

पारस्करः,—("आवसथ्याधानं) दारकाले"। "दायाद्यकाल एकेषाम्।" अभ्रातृकस्य दारकाले सभ्रातृकस्य दायाद्यकाल इति व्यवस्था। ज्येष्ठेऽनाहिताग्नौ कनिष्ठस्य दायाद्यकाल आगतेऽपि नाधानाधिकार इति। तदूर्द्ध्वमेव प्रायश्चित्तम्। यदा ज्येष्ठं [1]बोधयित्वा तदाधानं कारयित्वा स्वस्याधानकरणं शक्यमिति स्यादेव ततः प्रभृति प्रायश्चित्तम्। यथा निर्द्धनोऽपि धनमर्जयित्वा क्रतुसमर्थ इति तस्याधिकारः। प्रायश्चित्तञ्च,—

यावन्त्यब्दान्यतीतानि निरग्नेर्विप्रजन्मनः।

तावन्ति कृच्छ्राणि चरेत् हौम्यं दद्याद् यथाविधि॥

[2]हौम्यं द्रव्यं ब्राह्मणेभ्यो दद्यात्। अनाहिताग्निताया उपपातक-मध्ये गणनात् तत्प्रायश्चित्तम्।

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा।

---

(१) C. भोजयित्वा।

(२) C. हौम्यद्रव्यं ०।

इति। ज्येष्ठस्य तु विशेषः,—

कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम्।
कृच्छ्रायणं चरेद् वर्षं प्रतिमासमहोऽपि वा॥

अत्र विवाहात् पूर्व्वं यदाधानविधानं ब्रह्मचर्य्यस्थस्य कन्यादानस्वीकारानन्तरं समावर्त्तनात् पूर्व्वमाधानम्। तत्कन्या[1]नाशे तेनैवाग्निना कन्यान्तरविवाहः। कन्याऽलाभे तस्यैवाग्नेरात्मारोपणं कृत्वा सन्न्यास इति कल्पः। सूत्रे,—"वैश्यस्य बहुपशो गृहादग्नि[2]माहृत्य" इति मुख्ययोनिमुक्त्वा "अरणिप्रदानमेके" इत्युक्तम्। तेन वाजसनेयिनां वैश्यगृहादानयनमेव [3]मुख्यकल्पः। छन्दोगपरिशिष्टोक्तम्—

पुण्यमेवादधीताग्निं स हि सर्व्वैः प्रशस्यते।
अनर्द्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमम्॥

इत्यारणेयस्य पुण्यत्वं गोभिलीयानामेव। तत्र अनर्द्धुकत्वं असमृद्धिकरत्वम्। [[4]तस्य अरणिभवस्याग्नेः काम्ये र्धनकामप्रयोगैः शमं नीयत इत्यर्थः।] गोभिलसूत्रे,—वैश्यकुलादाम्बरीषाद् वा" इत्यादिना अग्नियोनिकल्पानुक्त्वा "अपि वा (अन्यं) मथित्वाभ्यादध्यात् पुण्यस्त्वेवानर्द्धुको भवति" इति आरणेयस्य [5]पुण्यत्वमेव वचनात्। तेन मुख्यवैश्यालाभेऽपि "व्यत्यये कर्म्मणां

(१) C. ० ऽलाभे ०।
(२) C. ० मानयेति।
(३) D. मुख्यः कल्पः।
(४) D. Omits the portion bracketed.
(५) D. पुण्यवचनात्।

साम्य" मिति वैश्यवृत्त्या जीवतां ब्राह्मणानां पञ्चमे सप्तमे वा पुरुषे वैश्यत्वप्राप्तेस्तत एवाहरणम्। छन्दोगपरिशिष्टे,—

अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा या चोदीच्यूर्द्ध्वगापि वा॥
अरणिस्तन्मयी प्रोक्ता तन्मयी चोत्तरारणिः।
संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते॥
अलाभे त्वशमीगर्भादा [1]हरेदविलम्बितः।
चतुर्विंशतिरङ्गुष्ठं दैर्घ्यं षड़पि विस्तरे॥
चत्वारि चोच्छ्रये मानमरण्योः परिकीर्त्तितम्॥
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्यात् द्वादशाङ्गुलम्।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम्॥
खादिरं चात्रमुद्दिष्टमोविली खादिरो स्मृता।
गोवालैः शणसंमिश्रैस्त्रिवृत्तदृत्तमनंशुकम्।
व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः॥
प्रथमस्तु प्रमन्थः स्यादेशान्यामुत्तरारणिः।
[2]चात्रबुध्ने प्रमन्थाग्रं गाढ़ं कृत्वा विचक्षणः।
कृत्वोदगग्रामरणिं तदूर्द्ध्वमुपरि न्यसेत्॥
चात्रोर्द्ध्वकीलकाग्रस्थामोविलीमुदगग्रगाम्।
विष्टभ्य धारयेद् यत्नं निष्कम्पः प्रयतः शुचिः॥

(१) C. ० हरेति विचक्षणः।
(२) D. चात्रमध्ये ०। C. चात्रवेधे ०

अचारणे [1]कृत्तराग्रत्वमुक्तम् । यज्ञपार्श्वे तु,—

उत्ताना प्राक्शिरा वेदि यथा वेदि स्तथारणिः ।

इति द्वयोर्विकल्पः । प्राक्शिरस्त्वं श्रौतविषयं वा ।

[2]मूलादष्टाङ्गुलं त्यक्त्वा अग्राच द्वादशाङ्गुलम् ।

अन्तरं देवयोनिः स्यात् तत्र मथ्यो हुताशनः ॥

प्रथमे मन्थने ह्येष नियमो नेतरेषु च ।

परिधायाहतं वासः प्रावृत्य च यथाविधि ॥

विधयात् प्राङ्मुखो यन्त्रं यजमानः समाहितः ।

त्रिवृद्वेष्टयाथ नेत्रेण चात्रं पत्न्यहतांशुका ॥

पूर्वं मथेदरण्यन्ते प्राच्यग्नेः स्याद् यथा च्युतिः ।

तथा—

हव्यवाड् वरुणं दृष्ट्वा भीतः [3]प्रत्यङ्मुखोऽभवत् ।

तमिच्छन् पुनरादातुं तस्मात् प्रत्यङ्मुखो मथेत् ॥

सर्व्वाः पत्नी रज्जुमालभन्ते समर्था चाग्निजन्मपर्य्यन्तं मथेदिति ।

---

(१) D. ॰ कृत्तरापवक्रम् ।

(२) D. अग्रादष्टाङ्गुलं त्यक्त्वा मूलाद्वन्तु दशाङ्गुलम् ।

(३) D प्रत्यङ्खो भवेत् ।

# स्मार्त्ताधानप्रयोगः ।

गणपत्यादिपूजा । स्वस्तिवाचनम् । सङ्कल्पः,—मम नित्यनैमित्तिककर्म्मानुष्ठान[1]साधनमावसथ्याधानं करिष्ये । मातृपूजा । [[2]वसोर्द्धारा । ] आभ्युदयिकम् । दम्पत्योरहतवस्त्रपरिधानम् । क्रियमाणेऽस्मिन्नावसथ्याधानकर्म्मणि यावन्तो वैकल्पिकाः पदार्थास्ते मया ऋत्विक्प्रत्ययेनानुष्ठेयाः । ब्रह्मवरणम् । गृह्याग्नये सार्द्धत्रयोदशाङ्गुष्ठमितरज्ज्वा मण्डलं कृत्वा तन्मध्ये खरकरणम् । चतुरङ्गुलचतुरङ्गुल[3] मेखलात्रयं त्र्यङ्गुलविस्तारम् । दम्पत्योरुपविष्टयोर्हस्ते [4]ब्रह्मणोऽरणिद्वयसमर्पणम् । दक्षिणे ब्रह्मण्युपविष्टे यथोक्तस्थानेऽरणिमुत्तराग्रां निवेश्य उत्तरारणेरीशानात् प्रमन्थमुद्धृत्य चात्रवुघ्ने प्रमन्थाग्रं प्रवेश्य चात्रमूलमरणिं देवयोनौ निवेश्य चात्रोर्द्धकीलके ओविलीमुदगग्रां विन्यस्य यजमानस्य प्राङ्मुखस्य हस्ताभ्यां विष्टभ्य धारणम् । पत्न्याः प्रत्यङ्मुखायाः गोवालरज्जुं चात्रे त्रिधा वेष्टयित्वा मन्थनम् । अन्यासामालम्भनम् । [5]समर्थायावीत्पत्तिपर्य्यन्तं रज्जुकर्षणम् । जातेऽग्नौ खरमध्ये पञ्चभूसंस्कारः । खरे अग्निनिधानम् । वैश्यकुलादग्न्याहरणपक्षे

---

(१) D. साधनीभूत (ं) आवसथ्याधानमहं करिष्ये ।

(२) D. Omits the portion bracketed.

(३) C. ॰ रङ्गुलम् ।

(४) C. ब्रह्मणोररणिद्वय ॰

(५) D. समर्थायां अग्न्युत्पत्ति (अग्न्युत्पत्ति) पर्य्यन्तम् ॰

अग्निमाहृत्य खरमध्ये पञ्चभूसंस्कारं कृत्वाऽग्निस्थापनम् । दक्षिणतो ब्रह्मोपवेशनम् । प्रणीताप्रणयनम् । परिस्तरणम् । पवित्रच्छेदनानि । पवित्रे । प्रोक्षणीपात्रम् । आज्यस्थाली । [(1)चरुस्थाली] सम्मार्जनकुशाः । उपयमनकुशाः । तिस्रः समिधः । स्रुवः । आज्यचरुतण्डुलाः । पूर्णपात्रो दक्षिणा वरो वा । पवित्रकरणम् । प्रोक्षणीसंस्कारः । क्रमेण पात्रप्रोक्षणम् । असञ्चरे प्रोक्षणीनिधानम् । आज्यस्थाल्यामाज्यनिर्वापः । (2)सप्रणीतोदकस्थाल्यां चरुतण्डुलप्रक्षेपः । आज्यस्य ब्रह्मणा चरोर्यजमानेन युगपदधिश्रयणम् । द्वयोः पर्य्यग्निकरणम् । अर्द्धश्रुतेः स्रुवं(3)तपनम् । सम्मार्जनकुशैः स्रुवं(4)सम्मार्गः । पुनः प्रतपनमुदकस्पर्शनम् । प्रणीतो(5)दकेन प्रोक्षणम् । आज्योद्वासनं [(6)चरोरुद्वासनम् ।] आज्योत्पवनम् । (7)आज्यावेक्षणम् । उपयमनकुशानादाय समिधोऽभ्याधाय पर्य्युक्ष्य होमः । ब्रह्मान्वारब्धे प्रजापतये स्वाहा इन्द्राय स्वाहा अग्नये स्वाहा सोमाय स्वाहा इत्याघारावाज्यभागौ ।

---

(१) C. Omits the portion bracketed.

(२) D. प्रणीतोदकयुक्तचरुस्थाल्यां चरु० ।

(३) D. ० प्रतपनम् ।

(४) D. ० सम्मार्जनम् ।

(५) D. ० दकेनाभ्युक्ष्य निधानम् । आज्योद्० ।

(६) D. Omits the portion bracketed.

(७) D. प्रोक्षण्युत्पवनम् । आज्यावेक्षणम् ।

## अथाष्टचरुहोमः ।

[1]"त्वन्नो अग्ने" (इत्यादि) "प्रमुमुग्ध्यस्मत् स्वाहा ।" इत्यन्तेन होमः । "सत्वन्नो अग्न" इत्यादि "सुहवो न एधि स्वाहा ।" इति होमः । "इमम्मे वरुण" इत्यादि "सुराचके स्वाहा ।" इति होमः । इदं वरुणाय । "तत्वायामि" इत्यादि "आयुः प्रमोषीः स्वाहा" । इदं वरुणाय । "येते शत"मित्यादि "स्वर्काः स्वाहा[2] । इदं वरुणाय । इत्यादि । "अयाश्चाग्न" इत्यादि "भेषजं स्वाहा" इत्यन्तेन होमः । [[3]इदमग्नये । ] "उदुत्तम"मित्यादि "स्याम [4]स्वाहा ।" [[5]इदं वरुणाय । ] "भवतन्नः" इत्यादि "शिवौ भव तमयनः [6]स्वाहा ।" [[7]इदं जातवेदोभ्याम् । ] अथ स्थालीपाकात् । अग्नये [8]पावकाय स्वाहा । अग्नये शुचये स्वाहा । अदित्यै स्वाहा । पुनरष्टर्चंहोमः । "त्वन्नो अग्न" इत्यादि "भवतन्नः" इत्यन्तेन । स्विष्टकृते च । "अयास्यग्नेर्वषट्कृतं यत्कर्म्मणात्यरी-

---

(१) D. त्वन्नो अग्न इत्यादि सत्वं नो अग्न इत्यादि । इमम्मेवरुण इत्यादि । होमः । तत्वायामीत्यादि । येते शत मित्यादि ०

(२) D. स्वाहेत्यन्तेन होमः । अयाश्चाग्न ०

(३) D. Omits the portion bracketed.

(४) D. स्वाहेत्यन्तेन होमः ।

(५) D. Omits the portion bracketed.

(६) D. स्वाहेति च होमः ।

(७) D. Omits the portion bracketed.

(८) D. पवमानाय ।

रिचं देवागातुविदः स्वाहा।" इदं देवेभ्यो गातुविद्भ्यः। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। त्वन्नो अग्ने। (सत्वन्नो अग्ने) अयाश्चाग्ने। येति शतम्। उदुत्तमम्। प्रजापतये स्वाहा। परिस्तरणवर्हिर्होमः। प्राशनम्। मार्जनम्। ब्रह्मणे पूर्णपात्रः। दक्षिणा वरो वा। छन्दोगपरिशिष्टोक्तं गोदानं वस्त्रद्वयदानञ्च वैकल्पिकम्। दम्पत्योरहतवस्त्राणि यानि तानि ब्रह्मणे देयानि। त्रयोविंशतिब्राह्मणभोजनम्। शान्तिकरणमच्छिद्रावधारणम्। पुराधाने मातृपूजाद्यभावः। पूर्व्वेव योनिः पूर्व्वावृद्विरिति छन्दोगपरिशिष्टवाक्यात् सैवारणिः नारण्यन्तरम्। अरणिदोष-नाशेत्वरण्यन्तरमर्थसिद्धम्। वैश्यकुलादाहरणमपि न निषिद्धम्। पूर्व्वेव योनिरित्यस्यारणिव्यक्तिनियमपरत्वात्। [1]यथा श्रौते यजमानदाहे ऽरणिप्रतिपत्तिदर्शनात् पुनराधाने सैवारणिः। अतएव

पुण्यमेवादधीताग्निं सद्धि सर्व्वैः प्रशस्यते।

इति। पूर्व्वेव योनिरित्यत्रारणेयनिर्देश आरणेयस्य पुण्यत्वे-नोक्तः। अन्यथा योनिमात्रनियमपरत्वे तदसङ्गतिः। अत्र श्रौतो-क्तानि पुनराधाननिमित्तानि प्रायेण। [2][अन्यत्र] वैश्यकुला-दाहरणपक्षेऽग्निनाशे पुनर्वैश्यकुलादानीय स्वरे स्थापनम्। केवलं

---

(१) D. Reads here :—एवं प्रथमाधाने वैश्यकुलादाहरणे पुनराधानेऽरणि-प्रदानपक्षो न वार्य्यते। पूर्व्वेव योनिरित्यस्यारणिव्यक्तिनियमपरत्वात्। श्रौते यजमान०

(२) D. Omits the portion bracketed.

ग्रामान्तरनयने प्रत्यक्षमेवाग्निर्नीयते। अनोऽभावे त्वतिसङ्कटे चात्मारोपणम्। स्थानान्तरे पुनर्वैश्यकुलादाहरणम्। अन्यथा तु पुनराधानमेव। होमद्वयलोपे दर्शपौर्णमासलोपे पुनराधानम्। इदञ्च मध्ये भोजने सति। यदा तु होमकाले होमाशक्तौ न भुंक्ते तदा यावद्दिनं होमपातस्तावद्दिनमभुक्त्वा न स्थित्वा तन्त्रेण सर्व्वहोमान् पक्षहोमवत् कुर्य्यात् न पुनराधानम्। इति। छन्दोगपरिशिष्टे। मथ्यमानस्याजन्मनि प्रातर्होमपर्य्यन्तं प्रतीक्षा तदूर्द्ध्वं पुनराधानम्। अरणिनाशदोषे अग्नेररण्यन्तरे "अयन्ते योनि"रिति समारोपः। "उपावरोह" इति मन्थनम्। समारोपात् पूर्व्वं नाशे पुनराधानम्। अग्निं विहाय सभार्य्यस्य सीमातिक्रमे होमकालात्यये पुनराधानम्। अग्निं विना पत्न्याः समुद्रगानदीतरणे पुनराधानम्। पत्नीं विना अग्नीनां सीमान्तरनयनं शकटं विना प्रत्यक्षाग्निनयनं [1]स्वाम्यन्वारोहणं विना नदीतरणं सीमालङ्घनम्। मन्थनकाले [2]अरण्यामग्निनाशः। अहुतस्य प्रत्यक्षवह्नेर्वत्सरावस्थानम्। यजमानप्रवासे [3]अग्निः (अग्नेः) सीमान्तरनयनम्। अग्निं विहाय पत्न्याः प्रवासः। पक्षत्रयं निरन्तरं पक्षहोमः। [4]उदक्यायाः प्रवासः। उदक्यास्पर्शः। धूपाङ्गारादिभिरग्निनाशः। अवैधपावकः। विधिं विनाम्यु-

(१) D. स्वाम्यनारम्भणं।

(२) C. अरण्यामग्निनाशः।

(३) D. अग्ने (:)।

(४) D. उदक्यायां ०

हरणम्। पुनर्विवाहः। [1]अग्न्यनुगमे मन्यनमकृत्वा यजमानस्य सोमातिक्रमणम्। श्वशूकरोष्ट्रादिस्पर्शः। रेतोमूत्रपुरीषादिस्पर्शः। प्रत्यक्षे [2]समारोपिति (॰तौ) चरणौ वा। एतानि पुनराधान निमित्तानि। छन्दोगपरिशिष्टे,—

यद्यग्निरग्निनान्येन संसृज्येताहितः क्वचित्।
अग्नये विविचय इति जुहुयाद् वा घृताहुतिम्॥
अग्नयेऽप्सुमत इति जुहुयाद् वैद्युतेन चेत्।
अग्नये शुचये चैव जुहुयाच्चेन्धनाग्निना॥
गृहदाहाग्निना यस्तु यष्टव्यः क्षामवान् द्विजैः।
आहृतो यदि संसृज्यं त् संसृष्टमुपशामयेत्॥
असंसृष्टं जागरयेद् गिरिशर्म्मैवमुक्तवान्।

आहृतः पाकार्थं पृथक्कृत्य नीतः।

यस्याग्नावन्यहोमः स्यात् स वैश्वानरदैवतम्।
चरुं निर्वर्त्य जुहुयात् सैव तत्र विनिष्कृतिः॥

अत्र श्रौते यत्रेष्टिर्विहिता तत्र स्मार्त्ते चरुः। यथाग्निदाहे नवयज्ञे नवान्नाशने पतितप्रतिग्रहेऽभोज्यभोजने वैश्वानरीति। स्वजन-मरणे पथिकृत्। तथाच गृह्यपरिशिष्टम्,—"य एवाहिताग्नेः पुरोडाशास्तएव नाहिताग्नेश्चरवः" इति।

---

(१) D. अग्न्यनुगमने॰

(२) D. समारोपितरणौ वा।

## अथ श्रौताधानम्।

जातपुत्रः कृष्णकेशोऽग्नीनादधीत इति पुत्रजन्म यद्यप्याधाननिमित्तत्वेन श्रुतं तथापि पूर्व्वेण धर्म्ममन्विच्छेदिति श्रुत्यन्तराज्जातपुत्रपदेन पुत्रजननयोग्ययुवावस्था लक्ष्यते। कृष्णकेशपदेन वार्द्धक्यव्यावृत्तिः। अथवा गृह्यशालिनो जातपुत्राधानं कुर्य्युः। सम्वत्सराद्वा शुश्रूषावानीति पुत्रजन्मानन्तरं वा गृह्याधानानन्तरं वर्षान्ते वा कार्य्यम्। दारकाले विहितगृह्याधानानन्तरं पुत्रजननयोग्ययौवनावस्थालाभात्। गृह्याधानानन्तरं वर्षान्ते वेत्युक्तम्।

प्राक्सौमिकीः क्रियाः कुर्य्याद् यस्यान्नं वार्षिकं भवेत्।

इति काम्येष्टिपशुबन्धपरम्।

वर्त्तयंच शिलोञ्छाभ्यामग्निहोत्रपरायणः।
इष्टीः पार्व्वायनान्तीयाः केवला निर्वपेत् सदा॥

इति शिलोञ्छवृत्तेर्मनुना नित्येष्टिपशुहोमादि (०होमादयो)-दर्शिताः। यथा "वसन्ते वसन्ते ज्योतिषा यजेत" इति श्रुतेः।

त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेत् द्विजः।

इति काम्यसोमपरम्। एवं यथोक्तकाले श्रौताधानासम्भवे नाहिता(ग्नो)ना(म्) उपपातकप्रायश्चित्तिः। बहुकालातिक्रमे

कालेत्वाधाय कर्म्माणि कुर्य्याद् विप्रो ह्यनापदि।
तदकुर्व्वंस्त्रिरात्रेण मासि मासि विशुद्ध्यति॥

त्त्वाधानप्रायश्चित्तविशेषानाम्नानादनादिष्टप्रायश्चित्तस्याहवनीयादि-साध्यतदुत्पत्तेः पूर्व्वमशक्यत्वात्

यद्येतदन्यथा जातं तदारभ्य समापयेत्।

इति नित्यावैगुण्ये पदार्थावृत्तिः। पदार्थाश्च अन्वागारकरणं क्षौमपरिधानं इत्यादिरूपम्। यस्मिन् पदार्थे भ्रंशस्तारभ्यावृत्तिः। तेन "ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेष्वपूर्व्वार्धान्वारम्भणसार्पराज्ञीर्नवा कुर्य्यात्।" इति येषां विकल्पस्तत्परिहारेणानुष्ठानन्यायः। तथा वपनहविष्यविकल्पश्रुतेस्तत्परिहारः। अमावास्याकालोवा वैकल्पिक इति कर्कादयः। एतत्पदार्थापरिहारेणानुष्ठानेऽपि यदा वैगुण्यं विष्णुस्मरणमेव प्रायश्चित्तम्।

अत्र क्षौम अतसीप्रभवस्तस्य श्रौतत्वेऽपि कार्य्यांशेनानुष्ठानं याज्ञिकानाम्। नित्यकर्म्मसु यथाशक्तीत्युपबन्धात्। मनुः,—

प्राजापत्यमदत्वाश्वमग्न्याधेयस्य दक्षिणाम्।
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति॥

इत्यश्वदक्षिणा ऋत्विग्भ्यः। यद्यपि मानवे,—

रथं हरेदथाध्वर्य्युर्ब्रह्माधाने च वर्जनम्।

इति वाजिनो ब्रह्मदक्षिणासम्बन्ध उक्तस्तथापि केषाञ्चित् शाखिनामिति तट्टीकाकृद्भिर्व्याख्यानात् प्राजापत्याश्वमृत्विग्भ्यो दद्यादितियाज्ञिकसम्प्रदायः। अरणिस्वरूपं मन्थनयन्त्रं मन्थनप्रकारश्च छन्दोगपरिशिष्टोक्त एव स्मार्त्तवत् श्रौतेऽपि।

अत्र,—

अरत्निश्चतुरस्रश्च पूर्व्वस्याग्नेः खरो भवेत्।
रथचक्राकृतिः पश्चाच्चन्द्रार्द्ध इव दक्षिणः॥
सभ्यावसथ्ययोः स्थानं नैर्ऋतेनैव प्रकीर्त्तितम्।
अग्नीनान्तु खरः कार्य्यो मेखलात्रयसंयुतः॥
वितस्तिमात्रमुच्छ्रायो विस्तारेण तु त्र्यङ्गुलः।
सार्द्धत्रयोदशाङ्गुष्टरज्ज्वा नैर्ऋते च मण्डलम्॥
गार्हपत्यायतनादष्टदिक्षु प्रक्रमेषु च।
एकादशद्वादशसु मत्वावाहवनीयकः॥

अथ तत्स्थानं मध्यं कृत्वा तत्परितः शंस्यखरकरणम्।

चतुर्विंशाङ्गुलमानरज्जुः पाशैकसंयुता।
तावानेवागमस्तस्याः परान्ते (?) पाशसंयुतः॥
आगमार्द्धे च तन्मूले तयोर्मध्ये च लक्षणम्।
धृत्वागमचतुर्भागं लक्षणं दक्षिणानयेत्॥
एवमुत्तरतः पश्चात् पूर्व्ववत् परिकल्पयेत्।
तदन्तान्तरतो भित्तीर्निदध्यात् पूर्व्ववत् समाः॥
इत्थमाहवनीयस्य चतुरस्रः खरो भवेत्।
नैर्ऋतांस्यान्तरालन्तु षोढ़ा वा सप्तधा त्रिधा॥
चतुर्द्धा पञ्चधा वापि विभज्य गन्तुना समम्।
त्रेधा विभज्योभयतः पाशरज्जुं विधाय च॥
नैर्ऋतांस्यस्थानमङ्कत्र रज्जुपाशौ प्रमुच्य तु।
धृत्वापरविहृतीयलक्षणं दक्षिणा नयेत्॥

लक्षणो वितृतीयान्त्यमध्यमुत्तरतो भवेत् ।
सयवैः षड्भी रज्जुश्च मण्डले त्र्यङ्गुलाधिका ॥
चतुर्भिः सयवै स्त्रिंशत् हरिन्मण्डलमध्यतः ।
द्वात्रिंशदङ्गुला ज्येष्ठा विस्तारस्त्वेकविंशतिः ॥

गणपत्यादिपूजा । स्वस्तिवाचनम् । श्रीमद्यारभ्यार्च्चं आवाभ्यां (?) अग्न्याधेयं करिष्ये इति संकल्पः । मातृपूजा । वसोर्द्धारा । आभ्युदयिकं कृत्वा अग्न्याधेये कर्म्मणि यावन्तो वैकल्पिकाः पदार्थास्ते मया ऋत्विक्प्रत्ययेनानुष्ठेयाः । अग्न्याधेये कर्म्मणि त्वं ब्रह्मा भवेति ब्रह्मवरणम् । होत्रध्वर्य्योरग्नीनाञ्च दक्षिणे ब्रह्मण्युपविष्टे त्रिभिर्ऋत्विग्भिरग्न्यागारकरणम् । प्राग्वंशं पूर्व्वगृहम् । उदग्वंशं पश्चिमगृहम् । दक्षिणे पूर्व्वे परे पश्चिमगृहमध्ये यथोक्तरूपेण नयखरकरणम् । यथोक्ताधाने पूर्व्वगृहे शंसखरकरणम् । पश्चिमगृह एव दक्षिणाग्निखरः । व्याख्यानाध्यापनोपस्थाने सभ्यखरः । दम्पत्योरतसोप्रभवाहतवस्त्रद्वयद्वयपरिधानम् । विशुद्धरणम् । गार्हपत्यागारे पञ्चधा संस्कृत्यारणिभ्यां निर्म्मथ्याग्निस्थापनम् । दम्पत्योर्दिवाशनम् । उपास्तमयं गृहाद्वहिरुपलिप्ते दक्षिणतो ब्रह्मण्युपविष्टे यजमानस्य पत्न्या सहोपविष्टस्य जपः । "देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि स्वं म इष्टं स्वं श्रान्तं स्वं हुतमस्त्विति ।" दम्पत्योरग्न्यागारे प्रवेशः । पूर्व्वेण द्वारेण यजमानस्य दक्षिणेन पत्न्याः । अग्नेः पश्चाद् द्वयोरुपवेशनम् । दक्षिणतः पत्नी । ब्रह्मणि दक्षिणत उपविष्टे दम्पत्योर्हस्ते आध्वर्य्योः सम्पूज्य अरणिद्वयदानम् ।

अस्तमिते गृहे चेद्रजो नास्ति परस्मादानीय अग्न्यागारे बन्धनम्। शकलैर्वा सकलगोमयपिण्डैर्वा प्रयतेनाग्निरक्षणम्। उपासितस्याग्नेः शमनम्। "वाचं यच्छ पूर्णाहुति"रिति शेषः। नयंखरेऽध्वर्य्योः पञ्च भूसंस्काराः। अश्वमानयेति प्रैषोऽग्नीधोऽश्वनयनम्। अश्वाभावे प्रैषं विनानभिधानात्। आनयनम्। पुरस्तात् स्थितेऽश्वेऽनुडुहि वा पुरस्तात्स्थिते। नयंखरस्य पश्चादनुदिते सूर्य्येऽग्निमन्थनम्। उदिते वा। यजमानस्य दण्डधारणम्। अध्वर्य्योर्मन्थनं प्रत्यङ्मुखस्य। अग्नौ जाते वरदानमध्वर्य्यवे। मनसा सङ्कल्प्य पश्चाद्दानम्। "प्राणमस्ते दधे" इति यजमानस्य मुखवायुनाग्निसंधुक्षणम्। "अमृतं प्राण आदधे" इति यजमानमुखेनाग्निसंसृष्टवायुपानम्। दारुभिरग्निज्वालनम्। येषां प्रवरे गोत्रे वा अङ्गिरा ऋषिस्तेषां "भूर्भुवरङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधे।" इति मन्त्रेण ज्वलतोऽग्नेर्गार्हपत्यस्य खरे स्थापनम्। येषां भृगू ऋषिः प्रवरे गोत्रे वा तेषां "भूर्भुवः भृगूणां त्वा देवानां व्रतपते व्रतेनादधे।" इति मन्त्रः। भार्गवाङ्गिरव्यतिरिक्तानां "आदित्यानां त्वा देवानां व्रतपते व्रतेनादधे" इति गार्हपत्याधानमन्त्रः। सूर्य्योदये अर्धे कृत्तिकाकलशचये उपयम्य त्रिः सन्नद्धस्य द्वात्रिंशदिध्मकाष्ठस्य परिधिवृक्षसम्बन्धिनो मूलस्य गार्हपत्येऽधिश्रयणम्। अश्वस्यानडुहो वा पुरस्तादग्निकरणम्। ज्वलदिध्मस्याध्वना प्राक् नयनम्। यजमानस्य धूमाभिमुखस्य प्राग्गमनम्। अश्वमनड्वाहं वाध्वर्य्युर्दक्षिणपूर्व्वपादेनाहवनीयस्थानमधिष्ठाप्य अग्निस्थापनस्योत्तरेण प्राचीं नीत्वा

अग्निस्थापनं प्रदक्षिणमावर्त्त्य पूर्व्वस्यां दिशि स्थापयति। इध्माग्निनाऽश्वपदोपलक्षिताग्निस्थापने द्विः त्रिः सकृद्दोपस्पृश्या-नुपस्पृश्य वाग्निस्थापनम्। तत्र मन्त्रः,—"भूर्भुवः अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादध" इत्यङ्गिरसाम्। "भूर्भुवः भृगूणां त्वा देवाना"मित्यादि भृगूणाम्। "भूर्भुवः आदित्यानां त्वा देवाना"मित्याद्यन्येषाम्। गार्हपत्यदक्षिणाग्न्योः स्थापनम्। सभ्यवरे पञ्च भूसंस्काराः। निर्मथ्य व्याख्यानाध्यापनस्थाने सभ्य स्थापनम्। "गां दीव्यध्व"मिति यजमानस्य प्रैषः। ऋत्विजां समीपे देवनम्। आहवनीयदक्षिणाग्निगार्हपत्यानां प्रदक्षिण-करणम्। अश्वस्यानडुहो वा उत्तरस्यामुत्सर्गः।

---

## अथ पूर्णाहुतिः।

आज्यस्थाली। कुशाः। खादिरः स्रुवः। वैकङ्कती स्रुक्। एका समित्। आज्यम्। आज्यस्थाल्यामाज्यनिर्वापः। गार्हपत्ये तस्याधिश्रयणम्। कुशैः स्रुवस्रुक्सम्मार्गः। आज्यमुद्वास्य कुशैरुत्पवनम्। अवेक्षणम्। स्रुक्पूरणग्रहणम्। यजमाने-ऽन्वारब्धे स्वाहेति होमः। इदमग्नये। "अन्नादं एतं जनयत्यात्मनो यदग्निं तस्मा एतदन्नमपिदधाति" इति तस्मै चतुर्थ्यग्नि-

देवताप्रतीतिः । नचाधाराग्निस्तुतिरपेक्षत (?) देवताविधिसम्भवे त्यागायोगात् । शाखान्तरे चाग्नेरेव देवतात्वश्रुतिः । अन्यथानुद्रृतास्तमयाहुतिर्द्धर्म्मस्येत्यतिदेशः । विश्वेदेवा देवतास्तु: प्रजापतिश्च तूष्णीमिति विधौ देवता न चेह तूष्णीमिति विधिः ।

तदेतदग्निमीमांसायामस्मद्वृद्धप्रपितामहनरसिंहवाजपेयिभिरतिप्रपञ्चितम् । पूर्णाहुतौ हुतायामृत्विग्भ्यो वरं ददामीति वरदानं वाग्विसर्जनं तूष्णीमग्निहोत्रहोमः । प्राक् संस्थं धारापर्य्युक्षणं समिदाधानञ्च । चतुर्गृहीतमेकं गृहीत्वा पात्रान्तरे स्थापनम् । इदमग्नये । पुनश्चतुर्गृहीतं गृहीत्वा होमः इदं सूर्य्याय । शेष द्वयं समस्य कूर्चे निधाय गार्हपत्यमवेक्ष्य द्वितीयाहुतिः इदं प्रजापतये । गार्हपत्यदक्षिणाग्न्योर्द्वे द्वे आहुती । यथादैवतं त्यागः । नानाग्न्युपस्थापनम् । ब्रह्मादयो ऋत्विजः । अयं प्राजापत्योऽश्वो मया दत्त दक्षिणात्वेन प्रतिगृह्यताम् । दम्पत्योर्वस्त्राणि यानि तान्यध्वर्य्यवे । अग्न्याधेयकर्म्मणोऽङ्गतया एकोत्तरशतब्राह्मणभोजनं ददानि । शान्तिकरणमच्छिद्रावधारणम् ।

"ब्रह्मचार्य्यग्निनित्यधारी क्षीरहोम्यग्निसुपशायी द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ।" यावज्जीवञ्चाहिताग्निव्रतम् । अनृतवर्जनम् । तदपचारे श्रौतं प्रायश्चित्तम् । स्नातकधर्म्मत्वाच्च स्मार्त्तमपि प्रायश्चित्तम् । अतिथ्यपनोदः । अतिथिनिराकरणम् । तद्वर्जनम् । तस्य गृहस्थधर्म्मत्वेऽपि श्रौतप्रायश्चित्तार्थमाहिताग्निधर्म्मत्वम् । दुर्गन्धिदारुणः । दुर्गन्धिदारुणो वह्नावाधानम् ।

ऋत्वीषपक्कं भूम्यां गर्त्ते पक्कं तिन्दुकफलादि तद्वर्जनम् । अग्नि-होत्रार्थमुद्धृतेऽग्नौवुदकादिदानवर्जनञ्च ।

एवमाहिताग्निमधिकृत्य "यावज्जीवमग्निहोत्रं जुहुयात् ।" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ।" "षट्सु षट्सु पशु-बन्धयाजी ।" "तं वै संवत्सरे नानीजानमतीयात् ।" इति वचनाद् वर्षास्वेको वा पशुबन्धः । "शरद्वसन्तयोराग्रयणम् ।" "वर्षासु सौम्यः श्यामाकचरुः ।" "अनिष्ट्वानवयज्ञेन नवान्नाशने वैश्वानरोष्टिः ।" "चतुर्षु चतुर्षु मासेषु चातुर्म्मास्ययाजी ।" "वसन्ते वसन्ते ज्योतिषा यजेत ।" इत्यादयो नित्ययज्ञाः । याज्ञवल्क्यः,—

प्रति संवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्त्तव्याग्रयणेष्टिश्च चातुर्म्मास्यानि चैव हि ॥
एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः ।

द्वौ वा तत्रापि प्रायश्चित्तम् । मुख्यकाले यथाकथञ्चित्-करणसम्भवेन वैश्वानरीति । सर्व्वथाप्यसम्भवे गौणकालेप्यकरणे वैश्वानरी । अतएव विधिरप्येकदेशे स्यादितिहवनाङ्गमात्र-निर्व्वाहकर्त्तोर्हिलाभेऽपियागानुष्ठानमुक्तम् । तथा बौधायनेन दर्शपौर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने सर्व्व-प्रायश्चित्तं कृत्वा त्रयः प्रचरेयुः । द्वौ तत्रापि प्रायश्चित्तमिति-ऋत्विगभावे मुख्यकाले करणं दर्शितम् । सर्व्वप्रायश्चित्तञ्च बौधायन एवाह यद्येकोऽध्वर्य्युरेव स्यात् पुराप्रयाजेभ्य आज्य-स्थाल्याः स्रुवेणोपहातमेवाध्वर्य्युः प्रायश्चित्तानि जुहोति "जुष्टो वाचे

भूयासं जुष्टो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तमं जुष्टतमं तस्मिन् मा धाः स्वाहा सरस्वत्यैः।"

त्रातारमिन्द्रमवितारमिन्द्रं
हवेहवे सुहवं शूरमिन्द्रम्।
ह्वयामि शक्रं पुरुहूतमिन्द्रं
स्वस्तिनो मघवा धात्विन्द्रः॥ स्वाहा॥

यन्मे मनसि स्थितं यद्वाचो यच्च मे हृदः।
देवास्तत् शमयन्तु सर्वं सोमो बृहस्पतिश्च॥ स्वाहा[२]॥

अग्निर्मातस्मादेनसः [१]अर्द्धां देवा (?) विमुञ्चताम्। स्वाहा॥

"यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जहिंसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि चक्रम (?) करोतु मामनेनसं स्वाहा।" ब्रह्मत्वे हौत्र आध्वर्य्यवे आग्नीध्रे चैक एव यज्ञपर्व्वाणि। तन्मे देवा रक्षन्तां प्राणान्मे मा हिंसिष्ठ स्वाहा। अहं ब्रह्मा त्वं (अहं) होता अहमध्वर्य्यु रहमग्नीदहं यजमान एक एव यज्ञपर्व्वाणि तन्मे देवा रक्षन्तां प्राणान् मे मा हिंसिष्ट स्वाहा। एतान्येव प्रायश्चित्तानि हुत्वान्तर्वेद्यामासीनः सर्व्वा देवता यजतीति विज्ञायते। यजमान एव वा कुर्य्यात् तदा नैमित्तिकमाध्वर्य्यवप्रायश्चित्तानि सर्व्वप्रायश्चित्तं वा कृत्वा स्वयमेवार्त्विज्यं याजमानं कुर्य्यादिति। एवं लाटसूत्रे नित्यसोमयागे ऋत्विगसम्भवे स्वयमौद्गात्रं ब्रह्मत्वञ्च कुर्य्यादित्युक्तमिति। इत्याधानम्।

(१) F. श्रिद्रम्। (२) E. Adds यद्विद्वांसो यदविद्वांसो मुग्धाः कुर्व्वन्त्यृत्विजः।

(३) Y. अर्द्धादेवी॰

## अथ पुनराधेयम्।

त्रिरात्रावरमग्न्युत्सर्गः। शाखान्तरात् संवत्सरपर्य्यन्तमिति। संवत्सरादतिरात्रमध्ये यथेच्छम्। सभ्यस्य नोत्सर्गः। सर्व्वमग्न्याधेयवत्। नाग्न्यागारकरणम्। नारणिप्रदानम्। उच्छ्वासश्च न भवति। कुशैर्ज्वलन आधानम्। कुशैरेवोद्धरणम्। ब्रह्मचर्य्यक्षीरहोमाग्निनित्यधारित्वादिनियमाभावः। आधानमेव पुनः क्रियते चेत् तदा अग्न्यागारकरणारणिप्रदानमुच्छ्वासश्च न भवति। अरण्यभावे तु नूतनारणिमादायाधानेऽरणिप्रदानमपि भवति। अग्न्यागारस्य दैवात्नाशेऽग्न्यागारकरणमपि।

### आहिताग्नेः प्रवासविधिः।

स्वयमुद्धरणम्। "नर्य्य प्रजां मे पाही"ति गार्हपत्योपस्थानम्। "शंस्य पशून् मे पाही"त्याहवनीयस्य। "अथर्व्य पितुं मे पाही"ति दक्षिणाग्नेः। उपस्थाय गमनं वाग्विसर्जनम्। प्रवासे यथाकालं याजमानम्। अग्निहोत्रहोमे अभक्षणम्। देवतोद्देशेन द्रव्यत्यागः। मन्त्रेणाग्न्युपस्थानम्। प्रवसनकाले विहाराभिमुखोऽग्न्युपस्थानमन्वानुचरेदित्यापस्तम्बवचनात्। पुनरभ्युक्षणम्। दर्शपौर्णमासयोः उद्धरणादिसर्व्वपदार्थानुसन्धानम्। व्रतग्रहणं प्राङ्मुखस्य। प्रयाजानुमन्त्रणम्। देवता उद्दिश्य द्रव्यत्यागः। "समिदसो"ति जपः। पूर्णपात्रग्रहणम्। [(१)विष्णुक्रमणम्] प्रागवीक्ष-

(१) D. Omits the portion bracketed.

णम्। ['सूर्य्यावेक्षणम्।] दक्षिणावर्त्तनम्। प्रागगमनम्। पुत्रनाम-ग्रहणम्। व्रतविसर्गः। एवं चातुर्मास्येष्टिदैवादसन्निधाने बोध्यम्। न काम्येषु। दैवात् प्रवासोपस्थानमकृत्वा गमने "इहैव सन् तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्मि। तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठते।" इत्याश्वलायनोक्त-मुपस्थानं कृत्वा याजमानं यथोक्तम्। प्रवेशविधिः। "मत्वा वाग्यमनम्।" समित्पाणिर्गुरुदेवतादिसन्निधिमप्यगत्वाग्न्यागारे प्रविश्य उद्धृत्याहवनीयोपस्थानम्। "आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्। अग्ने सम्राड़भिद्युम्नमभिसह आयच्छस्व।" गार्हपत्योपस्थापनम्। "अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व।" दक्षिणाग्न्युपस्थापनम्। शाखान्तरीयमन्त्रेण "अयमग्निः पुरिष्यो रयिमान् पुष्टिवर्द्धनः। अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व।" तत्र उपविश्याहवनीये समिधमाधाय तृणं प्रज्वाल्य तत्रैव प्रक्षेपः। एवं गार्हपत्ये दक्षिणाग्नौ च। तूष्णीं गार्हपत्यमुपस्थाय शंस्योप-स्थानं ततो दक्षिणाग्न्युपस्थानम्। अग्न्यगाराद्विष्क्राम्य स्वगृहोप-स्थानम्। "गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि। ऊर्जं बिभ्रद् वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः॥ येषामध्येति प्रवसन् येषु सौमनसो बहुः। गृहानुपह्वयामहे ते नो जानन्तु जानतः॥ उपहूता इह गाव उपहूता अजावयः।

(१) Y. Omits the portion bracketed.

अथो अन्नस्य कीलाल उपहूतो गृहेषु नः।” ततो गृहप्रवेशः। अत्र मन्त्रः—“क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयोः।” ततश्च स्वात्तंपुत्रदर्शनजपादि। “अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्।” अथास्य मूर्द्धानमवजिघ्रति। प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रायुषामुकदेवशर्म्मन् जीव शरदः शतम्। गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषामुकदेवशर्म्मन् जीव शरदः शतम्। त्रिः दक्षिणेऽस्य कर्णे जपति। “अस्मे प्रयंधि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः। अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्॥” वामकर्णे,—“इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तं दक्षस्य सुभगत्वमस्मे पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम्॥” तद्दिने क्षुद्राणामहिंसनं कामं स्वः।

अत्र शिष्टः,—

प्रवत्स्यामीत्युपस्थाय वह्निं न प्रवसेद् यदि।
आगत्योपस्थितिं तत्र प्राह कोषातकी श्रुतिः॥

इति प्रसङ्गादुक्तम्। प्रकृतमनुसरामः। होमान्ते,—

कृत्वाग्निकार्य्यं यः कुर्य्याल्ललाटे तिलकं नृप।
सर्व्वपापविनिर्मुक्तः सुरलोके महीयते॥

तथा,—

सितेन भस्मना कार्य्यं ललाटे च त्रिपुण्ड्रकम्।

तथा,—

दिनमेकन्तु यो भस्म समन्त्रं धारयेन्नरः।
सोऽग्निष्टोमफलं [1]देव लभते नात्र संशयः॥
आयुःकामो नरो राजन् भूतिकामश्च वा पुनः।
नित्यं वै धारयेद् भस्म मोक्षकामी च वा पुनः॥
त्रिकालमपि यो नित्यं यावज्जीवन्तु धारयेत्।
भस्म [2]मोक्षो भवेत् तस्य सत्यमेतन्मयोदितम्॥

तथा,—

सितेन भस्मना [3]कुर्य्याल्ललाटे यस्त्रिपुण्ड्रकम्।
तस्मै नारायणो देवः प्रदद्यात् परमं पदम्॥
त्रिपुण्ड्रं न मृदा कार्य्यं भस्मना नोर्द्ध्वपुण्ड्रकम्।
चन्दनेनोभयं कुर्य्यादेवमाह प्रजापतिः॥

एतदूर्द्ध्वपुण्ड्रोपरि कार्य्यम्।

ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा कुर्य्यादुभयमेव वा।
ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं स्यात् त्रिपुण्ड्रे नोर्द्ध्वपुण्ड्रकम्॥

तथा,—

मध्याङ्गुलित्रयेणैव [4]दक्षिणस्य करस्य तु।
षडङ्गुलायतं पुण्ड्रं कुर्य्यात् सजलभस्मना॥

---

(१) Y. देवी (देवि)।
(२) Y. योगे।
(३) Y. कार्य्यं ललाटे च त्रिपुण्ड्रकम्।
(४) Y. • स्वदक्षिणकरस्य तु।

यत्तु,— मध्यमानामिकाङ्गुष्ठैर्ललाटे भस्मना कृतः।
स त्रिपुण्ड्रो भवेत् शस्तो महापातकनाशनः॥

इति ललाटे तर्ज्जन्यङ्गुष्ठयोर्विकल्पः।

यत्तु,— यतिः सार्व्वाङ्गिकं स्नानमापादतलमस्तकम्।
गृहस्थः [1]पुरुषाकारैः स्नानं कुर्य्यात् त्रिपुण्ड्रकैः॥(?)

इति तद् भस्मस्नानविषयम्। तत्र श्रौतं भस्म मुख्यं तदभावे स्मार्त्ताग्निभस्म। तस्याप्यभावे तु भविष्यपुराणे,—

शिवाग्निकार्य्यं यः कृत्वा कुर्य्यात् त्र्यायुषमात्मनि।
मुच्यते सर्व्वपापैस्तु शिवस्पृष्टेन भस्मना॥

एतत् शिवसम्बन्धिहोमानन्तरं बोध्यम्।

पद्मपत्रेण वान्येन शुचिपत्रेण वा पुनः।
सद्येन गोमयं गृह्य वामदेवेन मन्त्रयेत्॥
शुचौ भूमावघोरेण दहेत स्वाग्निना तथा।
ताम्रपात्रे क्षिपेत् शुद्धे भस्म तत्पुरुषेण तु॥
सिकताङ्गारपाषाणानीशानेन विशोधयेत्।
एवं संस्काररहितं नहि धार्य्यं कथञ्चन॥
शूद्रहस्तस्थितं भस्म द्विजातिर्नैव धारयेत्।
ईश्वराग्रे स्थितं यच्च भस्मितं वा तदालये॥
तद्धार्य्यं सुमनोहच्च(?) यथाजातमपि प्रिये।
एकादश त्रिपुण्ड्रस्य स्थानमाहुः शरीरजम्॥

---

(१) Y. त्रिपुण्ड्राकारैः०

शिरो ललाटांशद्वयं ग्रीवा भुजद्वयं वक्षो नाभिः पृष्ठभागः पार्श्वे ककुदित्येकादश।

मूर्द्ध्नि श्रवणयोः पुण्ड्रमङ्गस्पर्शनमाततः।

एतेन तत्र षड़ङ्गुलायतत्वं नास्तीत्युक्तम्।

कालाग्निरुद्रोपनिषदुक्तो विधिः।

आग्नेयं भस्म सद्यादिपञ्चमन्त्रैः परिगृह्य अग्निरिति भस्म वायुरिति भस्म जलमितिभस्म स्थलमितिभस्म व्योममितिभस्म [(१)सर्व्वं वा इदं भस्म] मन एतानि चक्षुषि भस्मानि(? इति जावालोपनिषद्भवैः सप्तभिर्मन्त्रैरभिमन्त्र्य "मानस्तोक" इति समुद्धृत्य शिरोललटावक्षःस्कन्धेषु त्र्यायुषैस्त्र्यम्बकमन्त्रैस्तिर्य्यक् तिस्रो रेखाः कुर्व्वीत। व्रतमेतत् शाम्भवं तत् समाचरेन्मुमुक्षुरपुनर्भवाय। हरः। अनुष्टुप्। भगः।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः।

भवेऽभवे नादिभवे भजस्व मां भवोद्भवाय नमः॥

वामदेवः। पंक्तिः। भगः। (२)वामदेवाय नमो बलाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्व्वभूतदमनाय नमो मनोन्मनाय नमः। अग्निः। अनुष्टुप्। अघोरः। अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्व्वेभ्यः सर्व्वसर्व्वेभ्यो नमोऽस्तेऽस्तु

(१) D. Omits the portion bracketed.

(२) Y. Reads वामदेवाय नमः। ज्येष्ठाय नमः। श्रेष्ठाय नमः। रुद्राय नमः। कालाय नमः। कलविकरणाय नमः। विकरणाय नमः। बलप्रमथनाय नमः ०

रुद्ररूपेभ्यः। तत्पुरुषः। गायत्री। आपः। तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्। ईशानः। अनुष्टुप्। ईशः। ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां ब्रह्माधिपति र्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु महाशिवोम्। त्र्यायुषैरिति "कश्यपस्य त्र्यायुष"मितिमन्त्रः। ततश्चाष्टौ समिध आदध्यादित्येतैरष्टभिर्हुत्वा सर्व्वस्मात् पापान्मुच्यते इति वचनात् स्मार्त्ताग्नौ तदभावे लौकिकाग्नौ वा। "देवकृतस्यैनसोऽवयजनमसि" स्वाहा। "पितृकृतस्यैनसोऽवयजनमसि" स्वाहा। "आत्मकृतस्यैनसोऽवयजनमसि" स्वाहा। यद्दिवा नक्तञ्चैनः कृतं तस्यावयजनमसि स्वाहा। यत् स्वपतश्च जाग्रतश्चैनः कृतं तस्यावयजनमसि स्वाहा। यद्विदुषाचाविदुषाचैनः कृतं तस्यावयजनमसि स्वाहा। "एनस एनसोऽवयजनमसि" स्वाहा। यजुर्व्विधानेन,—"त्वमग्ने प्रथमो" इत्यग्निं स्तुवन् सर्व्वसस्त्वो भवति। चस्यादित्य ऋषिः। जगती। अग्निः। "अस्या जरासो" इत्यनुवाकेनाग्निमुपतिष्ठेत्। अग्निर्वरदोभवति तेजसाग्निसमो भवति। ब्रह्मा। अग्निः। द्वितीयतृतीयचतुर्थ नवम-दशम्यः गायत्र्यः। चतुर्द्दशतमा अनुष्टुप्। पञ्चदशतमा बृहती। शेषास्त्रिष्टुभः। एताः सप्तदश। मणिकाख्योऽग्निगृह्यकार्य्यार्थंजलपात्रे पर्य्युषितं जलं वहिः कृत्य जलान्तरप्रक्षेपः। "आपो रेवती"त्यनेन। "आपोहिष्ठे"ति तिसृभिश्च। तत्राशक्तेपि पुनर्म्मणिकाधानं विधिना तद्विधिश्च। अग्नेरीशानदेशे। "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम्। आददे नार्य्यसि" इत्यभ्यादानम्। "इदमहं रक्षसां ग्रीवा अपि कृन्तामि॥" इत्यवट

खननम्। जलस्पर्शः। प्राक् पांसूद्धरणम्। अवटे पूर्व्वोत्तराग्र-कुशगुच्छद्वयनिधानम्। दूर्व्वाचतहरिद्राविष्टकान् त्रिकोणागारे [1]पूर्व्वादि स्थापनम्।(?) "समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूः" इति तदुपरि मणिकभाण्डस्थापनम्। "आपो रेवतीः चयथा हि वस्वः क्रतुं च भद्रं विभृथामृतञ्च। रायश्च स्थ स्वपत्यस्यपत्नीः सरस्वती तद्गृणते वयो धात्॥" इत्यल्पोदकपूरणम्। "आपोहिष्ठे" तितिसृभिः शेषपूरणम्। ब्राह्मणमेकभोजनाईं तर्पयामीतित्यागः। प्रथमप्रयोगे मातृपूजाभ्युदयिकम्। अच्छिद्रावधारणम्। निरग्ने-रप्येतदितिविद्याकरवाजपेयिनः। शिष्टाः पठन्ति,—

गृहे वसन्नुपस्पृष्टे कृत्वा स्वर्णकुशोदकम्।
उद्धृत्य मणिकात् तोयं तेनाभ्युचणमाचरेत्॥
रचोघ्नांश्च जपेन्मन्त्रान् गायत्रीं वेदमातरम्।
[2]अभ्युचित स्मरेद् विष्णुं पुण्डरीकाक्षमच्युतम्॥

भविष्यपुराणे,—

उभे सन्ध्ये च यो विप्रो मौनमास्ते समाहितः।
दिव्यं वर्षसहस्रन्तु ब्रह्मलोके महीयते॥

अत्र सन्ध्याहोमाङ्गमन्त्रजपव्यतिरिक्तशब्दानुच्चारणं मौन-शब्दार्थः।

(१) Y. दूर्व्वादि०
(२) Y. अभ्युक्षयेत् स्मरन् विष्णुम्०

[1][ अत्र,—]

उदयात् प्राक्तनी सन्ध्या [2]घटिकात्रयमुच्यते।

सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः॥

इति मौनादिविषयम्। सन्ध्यामुहूर्त्तमात्रमितिप्रकरणात् सन्ध्याकर्म्मपरम्।

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे सन्ध्याकालीनकर्म्मनिर्णयः।

---

## अथ प्रथमभागकृत्यम्।

वराहपुराणे—

उदयान्निःसृतं सूर्य्यं यस्तु भक्तिपरो द्विजः।

दध्यक्षताञ्जलीभिस्तु तिसृभिः पूजयेत् शुचिः॥

तस्य भावप्रपन्नस्य अशुभं यत्समर्ज्जितम्।

तत्क्षणादेव निर्दग्धं भस्मीभवति दारुवत्॥

आदित्याभिमुखः सूर्य्याय नम इति लिखितपद्मे भूमौ दध्यक्षताञ्जलित्रयं दद्यात्। पूर्व्वार्ज्जितमशुभं [3]नश्यतु इति चिन्त-

---

(१) Y. Omits the portion bracketed.

(२) Y. E. घटिकाद्वयमुच्यते।

(३) Y. मे नश्यतु।

नम्। यजुर्विधाने,—"विश्वानि देव सवितः" इत्यादित्यमुदयकाले उपतिष्ठेद् विपापी भवति। नारायण ऋषिः। गायत्रीच्छन्दः। सविता देवता। "भद्रोनो अग्निराहुतो" इत्यादित्योदयकाले जपेत् सुभगो भवति।

तथा,—

उदित्योद्यन्तमादित्यमुपतिष्ठेद् दिने दिने।
क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखं व्यपोहति॥

अत्रिः,—

ब्रह्महा गुरुतल्पगोऽगम्यगामी तथैव च।
सुवर्णचोर स्तेनश्च गोघ्नो विश्वासघातकः॥
एवमादिषु चान्येषु पापेषु निरताः सदा।
प्राणायामान् (तु) त्रीन् कुर्य्युः सूर्य्यस्योदयनं प्रति॥

अत्रोदयनं प्रतीति वीप्सार्थप्रतिशब्दादभ्यासयुक्तस्य फलस्य सम्बन्धिफलानुरूपेणाभ्यासकल्पनाद् यावज्जीवाभ्यासस्य फलसम्बन्ध इत्याहुः।

ततः,—

स्वाचान्तश्च ततः कुर्य्याद् गुरुमङ्गलवीक्षणम्।
आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च॥

गुरवः पितृमातृविद्याप्रदज्येष्ठभ्रातरः। मङ्गलान्याह नारदः,—

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौ र्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः॥

एतानि सततं पश्चेन्नमस्येदर्च्चयेच यः।
प्रदक्षिणञ्च कुर्व्वीत तथास्यायुर्न्न हीयते॥

अञ्जनं सौवीराञ्जनम्। माङ्गल्यं दूर्व्वादीनि।

दूर्व्वां दधि (ं) सर्पिरथोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम्।
मृद् गोमयं स्वस्तिकमक्षतानि
लाजा मधु ब्राह्मणकन्यकाश्च॥
श्वेतानि पुष्पाणि तथा शमीं च
हुताशनं चन्दनमर्कबिम्ब-
मश्वत्थवृक्षं च समालभेत।

आदित्यस्यालम्भासम्भवाद् यथासम्भवमिति बोध्यम्। चिर-[1]जीवितार्थी घृते स्वं प्रतिबिम्बमवलोकयेत्।

मनुः,—

मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम्।
जपतां जुह्वताञ्चैव विनिपातो न विद्यते॥

इह चान्येषां स्तोत्राणां त्रिसन्ध्यं पाठः सन्ध्यात्रये वा पाठः। प्रातः पाठो वा सूर्य्योदये वा पाठः। तेषां प्रथमभाग एव पठनम्। यत्तु पञ्चरात्रोक्तं स्तोत्रेषु पूजितमिति तद् यस्य स्तोत्रस्य प्रातिस्विकः कालविशेषो नास्ति तत्परमेव। न चैतन्मन्त्रसिद्ध्यर्थजपपरम्।

---

(१) Y. जीवितार्थं।

अन्यथा कुरुते यस्तु फलं तस्य न सिद्ध्यति।

इति वाक्यशेषात् फलार्थप्रयोगपरत्वावगतेः। किञ्च शारदा-तिलके,—

द्विसहस्राधिका मन्त्राः खण्डशः शतधा कृताः।

ज्ञातव्याः स्तोत्ररूपास्ते मन्त्रा एते यथास्थिताः॥

इति द्विसहस्राधिकाक्षरमन्त्राणां स्तोत्ररूपत्वमुक्तमिति स्तोत्राणामपि यद्यपि मन्त्रत्वमुक्तं तथाच तत्रापि पुरश्चरणा-पेक्षास्ति तथापि

द्विसहस्रमितो मन्त्रः सकृज्जप्तेन सिद्ध्यति।

इति सकृज्जपमात्रमेव स्तोत्राणां पुरश्चरणकार्य्यकरणमिति। नक्तं स्तोत्रेषु पूजितमिति प्रयोगपरमेव। अत्र,—

एकदन्तं महाकायं कपिलं गजकर्णकम्।

लम्बोदरञ्च विकटं विघ्ननाशं विनायकम्॥

धूम्रकेतुं गणाध्यक्षं भालचन्द्रं गजाननम्।

नमामीत्यन्तेऽध्याहार्य्यम्।

नामद्वादशकं चैव यः पठेत् शृणुयान्नरः।

विद्यारम्भे विवाहे च प्रवासे [1]दुर्गमेऽपिवा॥

संग्रामे सङ्कटे चैव विघ्नस्तस्य न विद्यते।

अस्य द्विसहस्राधिकाक्षरत्वाभावेन स्तोत्रपरिभाषाभावान्नक्तं नियमाभावात् पूर्व्वाह्न एव पाठः। एवम्,—

(१) D. ० दुर्गमे सदा।

नमस्कृत्य महादेवं स्तोष्येऽहं तं विनायकम् ।

इत्यादीच्चाकूक्ता विनायकस्तुतिः । यत्तु,—"सूर्य्योऽर्य्यमा भगस्त्वष्टा" इत्यादि सूर्य्यनामाष्टशतं तत्र

नामाष्टशतं (नाम्नयाष्टशतं) प्रोक्तं शक्रेण [1]सुमहात्मना ।

सूर्य्योदये यः सुसमाहितः पठेत्

सुपुत्रलाभं धनसञ्चयानपि ।

इति सूर्य्योदयविधानात् तत्रैव काले पाठः ।

विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः ।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥
गभस्तिहस्तो ब्रह्मा च सर्व्वदेवनमस्कृतः ।
एकविंशतिरित्येष स्तव इष्टः सदा मम ॥
शरीरारोग्यदश्चैव धनवृद्धियशस्करः ।
स्तवराज इतिख्यातस्त्रिषु लोकेषु विश्रुतः ॥
य एतेन महाबाहो द्वे सन्ध्येऽस्तमनोदये ।
स्तौति मां प्रणतो भूत्वा सर्व्वपापैः प्रमुच्यते ॥

इत्यस्य स्फुट एव कालः । तथा,—

प्रथमञ्च महादेवं द्वितीयञ्च महेश्वरम् ।
तृतीयं शङ्करं नाम चतुर्थं वृषभध्वजम् ॥

---

(१) Y. तु महात्मना ।

पञ्चमं कृत्तिवासञ्च षष्ठं कामाङ्गनाशनम्।
सप्तमं देवदेवेशं नीलकण्ठमथाष्टमम्॥
नवमं चेश्वरं नाम दशमं पार्व्वतीप्रियम्।
रुद्रमेकादशं नाम द्वादशं शिवमुच्यते॥
एतानि द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः।
मुच्यते सर्व्वपापेभ्यः शिवलोकं स गच्छति॥

अत्र नामविशेषणत्वेन प्रथमान्तानामेव नपुंसकलिङ्गत्वमिति नमामीत्यध्याहाराभावः। एवम्,—नमस्तुभ्यं विरूपाक्ष इत्यादि नीलकण्ठस्तवः इह काम्यफलप्राप्तिपूर्व्वकशिवसायुज्यफलप्रदः।

---

## अथ विष्णो स्तोत्राणि।

---

### चराचरस्तोत्रम्।

सर्व्वं त्वमिति तुष्टेन विष्णुना संप्रकीर्त्तितम्।
अनुग्रहाद्धि लोकानां स्तोत्रं परमपावनम्॥
[1]ज्ञात्वा ज्ञानमयं विष्णुं श्रद्धया विनयान्वितः।
स्तोत्रमुच्चारयेद् यस्तु स मुक्तो नात्र संशयः॥

---

(१) Y. ज्ञानाज्ज्ञानमयं॰ E. ध्यात्वा ज्ञानमयम्॰

तथा,—

[1]अजितं केशवं विष्णुं हरिं सत्यं जनार्द्दनम्।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम्॥
त्रिसन्ध्यं यः पठेन्नित्यं दारिद्रं तस्य नश्यति।
[2][शत्रुसैन्यं चयं याति दुःस्वप्नश्चापकर्षति॥]
गङ्गायां मरणञ्चैव दृढ़ा भक्तिश्च केशवे।
ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः॥

इति। अत्रापि नामविशेषणत्वादजितादि[3]पदानां नपुंसक-प्रथमान्तत्वं तेन साकाङ्क्षत्वाभावान्नाध्याहारः। हरिमिति छन्दसोऽनुस्वारः।

नरसिंहपुराणीयं मृत्युञ्जयाष्टकं "त्रिकालं नियतः शुचि"रिति-वचनात् पठनीयम्।

वराहपुराणीयं—

नारायणो नरः शौरिश्चक्रपाणिर्जनार्द्दनः।

[4]इति नामाष्टशतं [5]सर्व्वयज्ञफलं पठनीयम्। यजुर्विधाने "युञ्जते मनः।" इत्यनुवाकं सायं प्रातः प्रयुञ्जानो दीर्घायुर्भवत्यरोगी च। उभयमन्यस्मान्न भवति। "युञ्जत" इति जगती।

---

(१) Y. अच्युतं०।
(२) Y. Omits the portion bracketed.
(३) D. शब्दानां।
(४) Y. इत्यादि।
(५) Y. सर्व्वकामसर्व्वयज्ञफलपठनीयम्।

श्यावाश्वः। "इदं विष्णुः।" गायत्री। मेधातिथिः। "इरावती" त्रिष्टुप्। वशिष्ठः। इतरमन्त्राणां प्रजापतिः। "विष्णोर्नुकं" तिस्रस्त्रिष्टुभः। इतरद् यजुः। श्रौतविनियोगानुसारेणान्यदैवतत्वेऽपि वैष्णवानुवाकमितिवचनाद् विष्णुरेव सर्व्वत्र देवता।

शिष्टाः पठन्ति,—

गीता नामसहस्रञ्च स्तवराजो ह्यनुस्मृतः।
गजेन्द्रमोक्षणञ्चैव कृष्णस्यातीव वल्लभम्॥

तत्र,—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः॥

अध्येष्यते पठतीत्यर्थः।

तथा,—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयान्नात्र संशयः॥

अत्र स मुक्तः स्यात् शुभान् लोकान् प्राप्नुयात्। तेन मुक्त्यर्थिनः सत्वशुद्धिद्वारा मुक्तिः फलम्। शुभलोकार्थिनः शुभलोकप्राप्ति(:) फलम्। सोऽपीत्यपिशब्दात् योऽधीते पठति तस्य मुक्तिः शुभलोकप्राप्तिर्यश्च शृणोतीति सम्बन्धः। नामसहस्रञ्च "विश्वं विष्णु"रित्यादि "सर्व्वप्रहरणाय नमोनम" इत्यन्तम्। तत्र सहस्रनामवादारम्भात् पूर्व्वं ॐनमो भगवते वासुदेवाय

(१) Y. ०त्र०।

[1]सर्व्वलोकगुरवे सर्व्वलोकपितामहाय सर्व्वलोकप्रधानाय सर्व्वलोकविशिष्टाय सर्व्वलोकेश्वराय सर्व्वलोकसुखप्रदाय सर्व्वलोककर्त्रे सर्व्वलोकनिधये सर्व्वलोकहिताय सर्व्वलोकोद्भवाय सर्व्वलोकोद्भवकराय विष्णवे प्रभविष्णवे इत्येतत् पठनीयम्। अस्याम्नातस्यान्यत्र विनियोगाभावात् प्रकरणेनैव तदङ्गत्वसिद्धिरिति वदन्ति। वस्तुतः सिद्धरूपाणामेषां पदानां प्रकरणेन ग्रहणासम्भवः। न चैतदुच्चारणक्रिया प्रकरणग्राह्या तदुपस्थित्यभावात् समिदादिपदानां क्रियारूपयोगोपस्थापकत्वात् प्रकरणग्रहणम्। मन्त्राणामध्ययनविधिप्रयोजनाकांक्षावशेन कर्म्माङ्गत्वं न प्रकरणात्। सत्यपि प्रकरणग्राह्यत्वे महाप्रकरणिना भारतश्रवणविधिना ग्रहणं न [2]सहस्रनामविधिना। तदुक्तम्,—"आनन्तर्य्यमचोदना। नहि "केशश्मश्रु वपते" "[3]दतो धावति" (?) इत्यादीनां परस्पराङ्गत्वम्। न तेभ्यः पदेभ्यः पूर्व्वं सहस्रनामाङ्गविधिरस्ति येन सन्दंशेनावान्तरप्रकरणकल्पनम्। न चैषामन्यत्र विनियोगाभावः। [4]ग्रन्थकर्त्तृवैशम्पायनस्य वा मङ्गलत्वेन भगवन्नमस्कारोपपत्तेः। [5]तदुक्तं महाभाष्ये,—भुवादयो धातव इति वरुणवाचकवकारकीर्त्तनं मङ्गलार्थम्। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि

(१) D. ओँ नमः सर्व्वलोकगुरवे ओँ नमः सर्व्वलोक पितामहाय ०

(२) Y. सन्निधितस्य सहस्र ०।

(३) Y. ततो धावती।

(४) Y. ग्रन्थकर्त्तुर्वैशम्पायनस्य वामाङ्गलत्वेन भग ०

(५) Y. यदुक्तं।

च शास्त्राणि वीरपुरुषाणि [1]आयुष्यपुरुषाणि भवन्ति च। स्मरन्ति च,—

आदौ चान्ते च मध्ये च हरिः सर्व्वत्र गीयते।

[2][इति। तेन] भारताङ्गत्वेन भारतश्रवण[3]फलकत्वात् राजसूयान्तर्गतावेष्टिसन्निधिपठितानामवेष्ट्यङ्गत्वं यथा नास्ति तथा सहस्रनामसन्निधिपाठो नैषां तदङ्गतापादकः। "श्रुत्वा धर्म्मानशेषेण" इत्याद्यर्थवादः। नास्य नामपाठेऽन्तर्भावः।

य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत्।

इति विधिः। परिकीर्त्तनं जपः। स च त्रिविधः। मानसवाचिकोपांशुभेदात्। कुत एवं "किं जपन्मुच्यते जन्तुः" [4]इत्युपक्रमेऽभिधानात्। "शूद्रः सुखमवाप्नुयात् श्रवणेन" इति शङ्कराचार्य्याः। वस्तुतः "स्तवैरर्च्चेन्नरः सदा।" "किं जपन्मुच्यते जन्तु"रित्युपक्रमेऽभिधानात् स्तोत्रजपे शूद्रस्याप्यधिकारप्रतीतेः। किञ्च "श्रावयेच्चतुरो वर्णान्" इतिविधेः "शृणुयात्" इतिपर्य्यवसानात्। श्रवणस्य चानुष्ठानार्थत्वात् स्तोत्रपाठानुष्ठानेऽपि शूद्रस्याधिकारः। यत्तु "नमस्कारोऽस्य मन्त्र" इति मन्त्रकार्य्ये नमस्कारविधिरिति तन्न "अहे बुध्न्य मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचो यजूंषि सामानि।" इति [5][श्रुतौ "ऋचो यजूंषि सामानि] निगदा

---

(१) Y. आयष्मत् ( आयुष्मत् ) पुरुषा भवन्ति।

(२) Y. Omits the portion bracketed.

(३) Y. ० फलवत्त्वात्।

(४) Y. इत्यभिधानात्।

(५) D. Omits the portion bracketed.

मन्त्राः” इति [१]कल्पसूत्रे च मन्त्रपदस्य मन्त्रसमाम्नायपठितवेदपरत्वेन तच्चोदकेषु मन्त्राख्या(?) इत्यत्र निर्णीतत्वात् स्मार्त्तमन्त्राणां मन्त्रपदगौणार्थत्वेन [२][तत्कार्य्ये] नमस्कारविधिर्नास्ति। नहि “गौ र्नपदा स्प्रष्टव्या” इत्यनेन वाहकस्य पदस्पर्शनं निषिध्यते। एतेन

अमन्त्रकस्य शूद्रस्य विप्रो मन्त्रेण युज्यते।

इति व्याख्यातम्। वैदिकमन्त्र एव श्राद्धादौ ब्राह्मणेन [३][पठनीयः।] स्मार्त्तमन्त्रस्तु स्वयमेव। अतएव

पूजयेयुर्द्विजाः सर्व्वे स्त्रीशूद्राणाममन्त्रकम्।

इत्यादौ मन्त्रपदं प्रणवपरत्वेन व्याख्यातं जन्माष्टमीविधावभियुक्तैः। अत्र नित्यं शृणुयात् कीर्त्तयेदिति यावज्जीवमितिनार्थः तथा सति

नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः।

इत्यैहिकफलविरोधात्। तथा,—

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः।

इत्यैहिकमेव फलम्। किन्तु फलानुसारेण मासं वर्षं वा प्रत्यहं पाठस्य फलसम्बन्धः। तथा,—“भक्तिमान् यः सदोत्थाय” इति वचनात् प्रातरुत्थाय पठनम्। स्कन्दपुराणे,—

[४]नित्यं नामसहस्रन्तु पठनीयं मया तव।

---

(१) Y. मन्त्रसूत्रे ०।

(२) Y. Omits the portion bracketed.

(३) D. Omits the portion bracketed.

(४) Y. नित्यं नामसहस्रन्तु पठितव्यं मयातव।

इति वैष्णवप्रतिज्ञानाद् यावज्जीवं पाठः। [¹तथा,]

विष्णोर्नामसहस्राख्यं पुराणेषु प्रतिष्ठितम्।
यो नरः पठते नित्यं त्रिकालं केशवालये॥
शिवालये पठेद्द वापि तुलसीवनसन्निधौ।
नरो मुक्तिमवाप्नोति प्रसादाच्चक्रपाणिनः॥
नाम्नां सहस्रं योऽधीते द्वादश्यां जागरे हरेः।
स निर्दहति पापानि जन्मकोट्यर्जितानि च॥
यः पठेत् श्राद्धकाले तु विप्राणां भुञ्जतां पुरः।
आकल्पकालिकी ²तुष्टिः पितॄणां तत्र जायते॥
माङ्गल्येषु च यात्रायां यज्ञोत्सवक्रियासु च।
ग्रहनक्षत्रपीड़ासु राजदैवभयेषु च॥
दुःस्वप्नदर्शने चैव पठेन्नामसहस्रकम्।

स्तवराजश्च राजधर्म्मे भीष्मोक्तः।

आरिराधयिषुं विष्णुं वाचं यद्विसृजाम्यहम्।
तया व्याससमासिन्या प्रीयतां मधुसूदनः॥

इत्यादि। "अव्यक्तं शाश्वतं विष्णु"मित्याद्यनुस्मृतिः। [³गजेन्द्र-मोक्षणम्।] ॐ नमो मूलप्रकृतये इत्यादि विष्णुधर्म्मे। तथा नारदपञ्चरात्रोक्तनरसिंहकवचम्। नरसिंहकवचस्य नारदऋषि-रनुष्टुप् छन्दः नरसिंहो देवता। ॐ

---

(१) D. Omits the portion bracketed.

(२) Y. तृप्तिः।

(३) D. Omits the portion bracketed.

पूर्व्वस्यां दिशि चाग्नेये दक्षिणे नैर्ऋते तथा।
वारुणे चैव वायव्ये कौवेरे रुद्रगोचरे॥
छिद्रस्थानेषु सर्व्वेषु वाह्ये सर्व्वासु दिक्षु च।
पाताले च तथाकाशे पृष्ठतश्चाग्रतोऽपि वा॥
पार्श्वयोः सर्व्वकोणेषु रन्ध्रदेशेषु च क्रमात्।
नखदंष्ट्रायुधो देवः पातु मां नरकेशरी॥
मूर्द्ध्नि देशे ललाटे च लोचने कर्णनासिके।
मुखे कण्ठे च मां पातु भुजयुग्मे तथोरसि॥
हृदये पार्श्वयोः पृष्ठे जठरे सर्व्वसन्धिषु।
पातु मां नरसिंहस्तु सुरशत्रुनिवारणः॥
नाभौ कटिप्रदेशे च गुह्ये चोरुयुगे तथा।
जानुनोः पादयोश्चैव पातु मां (१)दीप्तलोचनः॥
अधमोत्तममध्यानि यानि चाङ्गानि सन्ति मे।
समस्तरोमकूपेषु पातु मां स तु सिंहराट्॥
हृदये चोत्तमाङ्गे च शिखायां कवचे पुनः।
नेत्रयोर्हस्तयोश्चैव पातु मामग्निसप्रभः॥
तप्तहाटककेशान्तज्वलत्पावकलोचनः।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते॥
सर्व्वत्र रक्ष मां नाथ भयेभ्यश्चाग्निलोचनः।
प्रसादात् तव देवेश न मां हिंसन्तु हिंसकाः॥

---

(१) E. Y. दैत्यसूदनः।

अभेद्यं कवचं बद्धा विचरामि महीतले ।
प्रसादान्नरसिंहस्य न भयं [1]मेऽस्तु कुत्रचित् ॥
वाङ्मनःकर्म्मभि र्ये मां क्रूरा हिंसितुमुद्यताः ।
ते सर्व्वे प्रलयं यान्तु नरसिंहरवाहताः ॥
जले स्थले च पाताले दिक्षु कोणेषु सर्व्वदा ।
दिवा रात्रौ च सन्ध्यायां पातु मां दैत्यसूदनः ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
नरसिंहकृता गुप्तिर्वासुदेवमयोऽस्म्यहम् ॥
[2][कृत्वैवं कवचं दिव्यमच्छिद्रं मुनिसत्तम ।
नारसिंहं महाज्वालं दुर्निरीक्ष्यं सुरासुरैः ॥
सर्व्वतेजोमयं रौद्रं सर्व्वोपद्रवनाशनम् ।
साक्षाद् भवत्यसौ विप्रो नरसिंहो न संशयः ॥
नरसिंहस्य कवचमापादतलमस्तकम् ।
कृत्वाप्येवं मुनिश्रेष्ठ सर्व्वपापैः प्रमुच्यते ॥]
ज्वलद्वह्निस्फुलिङ्गोर्म्मिवेष्टितं त्रिशिखं हृदि ।
सञ्चिन्त्यास्त्रं दहेत्सर्व्वम् ।

इति हृदि हृदयावकाशे ज्वलद्वह्निकणान्वितवह्निशिखात्रययुक्तमिव सर्व्ववृजिनं दहतीत्यर्थः । कवचावृतसर्व्वाङ्गमित्यादेरयमर्थः । शाकिनीडाकिनीप्रेतकुष्माण्डपिशाच[3]राक्षसाभिभव-

---

(१) Y. मेऽस्ति ।

(२) D. Omits the portion bracketed.

(३) Y. राक्षसप्रहानभिभव ०

कामः कवचं धारयेत्। भगवन्निति नारदसम्बोधनम्। कार्य्येषु प्रवर्त्तमानः क्वचिन्न प्रतिहन्यते न नश्यति यतो नरसिंहो रक्षति। तेजः सोढुमित्यादेरयमर्थः।* ¹याप्नोति पाठः सुगमः। ममापि हिंसकानभिभवः कवचसाध्यः किं पुनरन्येषामित्यर्थः। न्यासं विना जपमात्रफलमाह सकृज्जप्तमित्यादि। त्रिर्जप्तं कवचं गन्धर्व्वादिभ्यो योजनानां द्वादशाभ्यन्तरे रक्षेदित्यर्थः। अत्रहेतुः

रक्षति भगवान् देवो नरसिंहो महाबलः।

इति। "स्वदेहे परदेहे च इति स्वदेहे करणस्य प्राप्तत्वात् परदेहेऽतिदेशार्थं पुनर्वचनम्। स्वदेहवत् परदेहे कुर्य्यादित्यर्थः। तथाच स्वशब्दस्थाने इदम्शब्दः कर्त्तव्यः। "पातु मां नरकेशरी"त्यत्र पात्विमं नरकेशरीत्यूहः। व्यवहिते च पातु तं नरकेशरीत्यूहः। मुखे कण्ठे चैनं पातु। पात्विमं नरसिंहस्तु।

जानुनोः पादयोश्चैव पात्विमं दीप्तलोचनः।

अधमोत्तममध्यानि [यानि चाङ्गानि²] सन्त्यस्य।

समस्तरोमकूपेषु पात्विमं सतु सिंहराट्।

पात्विममग्निसप्रभः। सर्व्वत्र रक्षेमं नाथ। नेमं हिंसन्तु हिंसकाः। अभेद्यं कवचं बद्ध्वा विचरन्तु। प्रसादान्नरसिंहस्य न

---

* Y.Hear adds दानवसिद्धगन्धर्व्वमानवविद्याधरयक्षगणकिन्नरमहोरगराक्षसादिदुःसहतेजःकामः कवचं धारयेत्। तेजोऽत्र धर्म्मविशेषः। ब्रह्मवर्चसं वा। ये मां हिंसितुमिच्छन्ति इति ब्रह्मण उक्तिः। ब्रह्माणमपि मां ये हिंसितुमिच्छन्ति तस्य कवचस्याग्नितेजसा दग्धास्ते प्रलयं यान्ति। वर्त्तमानार्थे लोट।

(१) D. प्राप्नोति ।

(२) D. Omits the portion bracketed.

भयमस्य। वाङ्मनःकर्म्मभिर्यं इमं क्रूराः। दिवारात्रौ च सन्ध्यायां पालिमम्। वासुदेवमयोह्ययम्। एवं चतुर्द्दशस्थानेषूह्यः। "स्मृत्वा तं पुरुषः सदा" इति संग्रामाद्यात्ययिके कवचस्मरणं रक्षाकरमित्यर्थः। क्वचित्पाठः "दृष्ट्वा तं पुरुषः सदा" इति। तं कवचं दृष्ट्वा ज्ञात्वा विन्यसेदित्यर्थः। "योऽश्वमेधेन यजेत।" "य उ चैनं वेदे"तिवत्। संग्रामादिषु कवचपर्य्यालोचनं न्यासद्वारापद्विमोचणफलम्। अथवा "संग्रामे सङ्कटे दुर्गे" इत्यारभ्य

यं यं काममभिध्याय यजते नरकेशरीम्(?)।

इत्यनेन नृसिंहमाहात्म्यकथनम्।* शेषं स्पष्टम्। पाद्मे,—

ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम्[1]।
[2][जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम्॥
सासितूणधनुर्वाणपाणिं नक्तञ्चरान्तकम्।
स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम्॥
रामरक्षां पठेत् प्राज्ञः पापघ्नीं सर्व्वकामदाम्।
शिरोमे राघवः पातु भालं दशरथात्मजः॥
कौशल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः॥
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः।
स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्म्मुकः।

---

* अत्र कृतव्याख्यानां पदानां न दृश्यते सर्व्वसङ्गृतेषु कवचपाठेषु।

(१) Y. राजीवलोचनमित्यादि।

(२) Y. Omits the portion bracketed.

करौ सीतापतिः पातु हृदयं जामदग्न्यजित्।
मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः॥
सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः।
ऊरू रघूत्तमः पातु गुह्यं पातु गुहाश्रयः॥
जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः॥
एतां रामबलोपेतां रक्षां यस्तु कृती पठेत्।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत्॥
पातालभूतलव्योमचारिणश्छद्मचारिणः।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः॥
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन्।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति॥
जगज्जितैकमन्त्रेण रामनाम्नाभिरक्षितम्।
यः कण्ठे धारयेत् तस्य करस्थाः सर्व्वसिद्धयः॥
भूर्जपत्रे लिखित्वेमां गन्धचन्दनचर्च्चिताम्।
कृत्वा वै धारयेद्‌ यस्तु सोऽभीष्टफलमाप्नुयात्॥
काकवन्ध्या च या नारी मृतवत्सा च या भवेत्।
बहुपत्या जीववत्सा साच स्यान्नात्र संशयः॥
वज्रपञ्जरनामेदं यो रामकवचं पठेत्।
अव्याहताज्ञः सर्व्वत्र लभते जयमङ्गलम्॥]
आदिष्टवान् यथा स्वप्ने रामरक्षामिमां विभुः।
तथा लिखितवान् प्रातर्विबुद्धो बुधकौशिकः॥

[१]इति रामकवचफलम् ।

धन्विनौ बद्धनिस्त्रिंशौ जटामुकुटमण्डितौ ।
[२]वीरौ मामधिरक्षेतां तावुभौ रामलक्ष्मणौ ॥
[३][शरण्यौ सर्व्वसत्वानां श्रेष्ठौ सर्व्वधनुष्मताम् ।
रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ ॥

आत्तसज्यधनुषाविषुस्पृशा-
वक्षयाशुगनिषङ्गसङ्गिनौ ।
रक्षणाय मम रामलक्ष्मणा-
वग्रतः पथि सदैव गच्छताम् ॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन् मनोरथान् चास्मान् रामः पातु सलक्ष्मणः ॥
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥
फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥
रामो दाशरथिः शूरो लक्ष्मणानुचरो बली ।
काकुत्स्थः पुरुषः पूर्णः कौशल्येयो रघूत्तमः ॥
वेदान्तवेद्यो यज्ञेशः पुराणः पुरुषोत्तमः ।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ॥

---

(१) Y. इत्यन्तं रामकवचं फलम् ।
(२) Y. वीरौ मां पथि रक्षेतां तावुभौ रामलक्ष्मणौ इत्यादि फलम् ।
(३) Y. Omits the portion bracketed.

इत्येतानि जपेन्नित्यं सभक्तिः संयतेन्द्रियः ।
अश्वमेधायुतं पुण्यं प्राप्नोति स न संशयः ॥
आपदामपहर्त्तारं दातारं सर्व्वसम्पदाम् ।
गुणाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥
दक्षिणे लक्ष्मणो धन्वी वामे च जानकी शुभा ।
पुरतो मारुतिर्यस्य तं स्मरामि रघूत्तमम् ॥]

विष्णुपुराणे,—

ये त्वामार्य्येति दुर्गेति वेदगर्भेऽम्बिके[१]ति च ।
भद्रेति भद्रकालीति क्षेम्या क्षेमङ्करीति च ॥
प्रातश्चैवापराह्ने च स्तोष्यन्त्यानम्रमूर्त्तयः ।
तेषां हि प्रार्थितं सर्व्वं मत्प्रसादाद् भविष्यति ॥

इति दुर्गां प्रति श्रीकृष्णवाक्यम् । तथा हरिवंशे,—

आर्य्यास्तवं प्रवक्ष्यामि यथोक्तमृषिभिः पुरा ।

इत्याद्यार्य्यास्तवः ।

मार्कण्डेयपुराणे,—

[२]सावर्णिः सूर्य्यतनयो यो मनुः कथ्यतेऽष्टमः ॥
महामायानुभावेन—

इत्यादि

एवं देव्या वरं लब्ध्वा सावर्णिर्भविता मनुः ।

---

(१) Y. ॰ऽम्बिके च ।

(२) Y. सावर्णिः सूर्य्यतनय इत्यादि सावर्णिर्भविता मनुरित्यन्तो देवीमाहात्म्य प्रतिपादकग्रन्थसन्दर्भः ॰

इत्यन्तः देवीमाहात्म्यप्रतिपादको ग्रन्थसन्दर्भः सर्व्वः पठनीयः। देवीमाहात्म्यस्यैव पठनश्रवणरूपकर्म्मविशेषैः फलजनकत्वश्रवणात् तदन्तर्गतफलप्रतिपादकवाक्यानामपि देवीमाहात्म्यरूपत्वात्। "स्वाध्यायोऽध्येतव्यः" इति विधौ स्वस्यापि प्रवेशवत्। यद्यपि "एभिस्तवै"रित्युपक्रमादुपसंहारस्थमाहात्म्यपदं "वेदो वा प्रायदर्शना"दित्यनेन न्यायेन नारायणीस्तवशक्रादिस्तवपरं प्रतिभाति तथापि "एभिः स्तवै"रित्यस्य प्रकृतनारायणीस्तवमात्रपरस्य "मधुकैटभनाश"श्चेत्यत्र चकारेण समुच्चयप्रतीत्या साकाङ्क्षत्वेनापर्य्यवसितत्वाद् वाक्यभेदभयाच्च सर्व्वस्यैव माहात्म्यस्य फलसम्बन्धः। यथोपांशुयाजवाक्ये विष्णुवितिदेवताविधौ वाक्यभेदभयात् "उपांशुयाजमन्तरा यजती"त्येव विधिः। तेन देवीमाहात्म्यस्यैव कीर्त्तनात् नित्यक्रियाणां सकलबाधाशमनं फलम्। सकलपदस्यानेकाशेषपरस्य प्रत्येकोपस्थापकत्वाभावात् सर्व्वेभ्यः कामेभ्यः इत्यत्र हि वैदिकप्रत्येककाममनूद्य ज्योतिष्टोमविधि [2]रित्येकं फलम्। नैवमिह। तेन नित्यं

मङ्गलाचारयुक्तानां विनिपातो न विद्यते।

इत्यादिवत् सन्ततानुष्ठानात् सकलबाधाशान्तिः। अथवा बाधापदस्य प्रतियोगिसापेक्षत्वात् पशुबाधा पुत्रबाधा इत्यादिविशेषः। सर्व्वपदपर्य्यायभूतसकलपदेन प्रत्येकमुपस्थाप्यत इति

---

(१) E. Y. स्वरच०

(२) Y. रिति प्रत्येकं।

प्रत्येकपशुबाधादिनाशमुद्दिश्य फलानुरूपेण नित्यपठोक्तमन्त्ताभ्यासानुष्ठानं विधीयत इति। प्रत्येकपशुबाधाद्यर्थं मासं पक्षं वा देवीमाहात्म्यनित्यपठनं कर्त्तव्यम्। तस्मिंश्च पक्षे यावज्जीवपाठो न विधेयः। पूर्व्वकल्पे सर्व्वबाधाशमफलार्थं यावज्जीवपाठः। फलस्य नित्यापेक्षितत्वेन मुमुक्षुसाधारण्यादङ्गबाधाशमनस्य मुमुक्षोरप्यपेक्षणात्। तत्र प्रत्यहप्रयोगात् फलम्। "अष्टम्यां च चतुर्द्दश्या"मित्यादि विध्यन्तरम्।

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः।
श्रोतव्यञ्च सदा भक्त्या परं स्वस्त्ययनं महत्॥

[1]इत्येतदन्तम्। अतएव "श्रोष्यन्ति चैव"इति चकारेण "कीर्त्तयिष्यन्ति"इत्यपि सम्बध्यते। "अष्टम्याञ्च"इति चकारेण समुच्चितेष्वष्टम्यादिष्वित्यर्थः। "स वै सायञ्च प्रातश्च जुहोति" इति चकारेण सायं प्रातरभ्यस्ताग्निहोत्रस्य फलसाधनत्ववत्। अर्थवादकलापश्च "न तेषां दुष्कृत"मित्यादि "न शस्त्रानलतोयौघात्" इत्यन्तं विशिष्टमेव फलम्। तेन समुच्चितेष्वप्यष्टम्यादिषु देवीमाहात्म्यकीर्त्तनं दुष्कृतदुष्कृतोत्थानापद्दारिद्र्येष्टवियोजनाभावशत्रुदस्युराजशस्त्रानलतोयौघभयाभावकामः कुर्य्यात्। एतत्काम एव समुच्चिताष्टम्यादिषु देवीमाहात्म्यश्रवणं कुर्य्यादित्यर्थः। "उपसर्गान्" इत्यादि। अशेषान् गृहग्रामनगरजनपदविषयानुपसर्गान् महामारीसमुत्थानमरकरूपानित्यर्थः।

---

(१) Y. इति बहुक्तम्।

"त्रिविधं" दिव्यान्तरीक्षभौमरूपमुत्पातञ्च माहात्म्यं कीर्त्तितं श्रुतं वा शमयेदित्यर्थः। "जानताऽजानता वापि" इत्यनेन बलिपूजादिषु साद्गुण्यार्थं माहात्म्यपठनम्। "शरत्काल" इति विध्यन्तरम्। "भविष्यति न संशय" इत्यन्तम्। शरत्कालीनवर्षावधिकपूजा कृष्णाष्टम्यादिमहानवमीपर्य्यन्ततिथिषु क्रियते। तासु तिथिषु देवीमाहात्म्यश्रवणं कीर्त्तनं वा सर्व्वबाधाविनिर्मुक्तिपूर्व्वकधनधान्यसुतान्वितत्वकामः कुर्य्यादित्यर्थः। "श्रुत्वा ममैतन्माहात्म्य"मित्यादीनां देवीमाहात्म्योपलक्षणम्। निर्भयत्वकामः देवीमाहात्म्यं शृणुयादित्यर्थः। "रिपवः संक्षयं यान्ती"त्यादिविधिनयं "माहात्म्यं मम शृण्वता"मित्यनुषङ्गात् रिपुक्षयकामः शृणुयात्। कुलनन्दनकामः शृणुयादिति। "शान्तिकर्म्मणी"ति रोगादिशान्तिकामोऽपि शृणुयादितिविध्यन्तरम्। दुःस्वप्नसूचितानिष्टशान्तिकामः शृणुयादित्यपि विध्यन्तरम्। "ग्रहसूचितो" ग्रहपीड़ाशान्तिकामः शृणुयादितिविध्यन्तरम्। "उपसर्गाः शमं यान्ती"त्यादिषु "पठनादेव" इति वक्ष्यमाणं सम्बध्यते। उपसर्गा महामारीव्यतिरिक्ता रोगवाहुल्यदुर्भिक्षादिरूपा देवीमाहात्म्यपठनात् शमं यान्ति। एवं ग्रहपीड़ाः पठनात् शमं यान्ति। पूर्व्वं श्रवणात् शान्तिरुक्ता। दुस्वप्नं सुस्वप्नं जायते पठनादेव। बालानां शान्तिकारकं माहात्म्यं भवति पठनादेव। [1]तथा संघातभेदे मित्रतानाशे मैत्रीकरणं पठनादेव। दुर्वृत्तानां बलहानिकरं पठना-

(1) Y. तदेव संघातभेदेऽपि तत्र नाशे मैत्रीकरणं ॰

देव। रक्षोभूतपिशाचानां नाशनं पठनादेव। सर्व्वत्र "सर्व्वं ममैतत्। माहात्म्यं"कर्त्तृतया सम्बध्यते। अत्र हेतुः,-यतो मम सन्निधिकारकं अतएव [1]मुक्तिफलजनकत्वमित्यर्थः। "पशुपुष्पार्घ्यधूपै"रित्यादि-विध्यन्तरम्। "सकृत् सुचरिते श्रुते" इत्यन्तम्। पशूपहारादि-महाविभववर्षावच्छिन्नपूजातुल्यफलकामः सकृन्माहात्म्यं शृणुयादि-त्यर्थः। इदानीमिकोद्दिष्टन्यायेनैकदेशस्य फलसम्बन्धं कथयति। जन्मनां प्रादुर्भावानां कीर्त्तनं तत्प्रतिपादको ग्रन्थः। श्रुतं पापं हरति। श्रुतञ्चारोग्यं प्रयच्छति। युद्धचरितश्रवणं वैरकृतभय-नाशकम्। स्तुतयः श्रुताः शुभमतिप्रदाः। पापक्षयकामः प्रादु-र्भावग्रन्थं शृणुयात्। वैरकृतभयाभावकामो युद्धग्रन्थं शृणुयात्। शुभमतिकामः स्तुतिं शृणुयादितिसर्व्वत्र विधिः। "अरण्ये प्रान्तरे" इत्यादिना माहात्म्यश्रवणस्य विधिः। अरण्ये सङ्कटाभावकामः देवीमाहात्म्यं स्मरेत्। एवं प्रान्तरे। दावाग्निपरिवारितसङ्कटा-भावकामः माहात्म्यं स्मरेदित्याद्या विधयः। अत्र देवी-माहात्म्यस्य प्रातः कालाद्यश्रवणात् "नक्तं स्तोत्रेषु पूजित"मिति-रात्रिपाठादेव फलमिति प्रतिभाति। तथापि

देवकार्य्यस्य सर्व्वस्य पूर्व्वाह्णः परिकीर्त्तितः।

इति नरसिंहपुराणात् सर्व्वपदस्य सर्व्वनामत्वेन [2]स्तोत्रेषु विशेषरूपेणैव पूर्व्वाह्णविधानाद् विकल्प एव इति।

---

(१) Y. मुक्तिफलकमित्यर्थः।

(२) D. स्तोत्रेऽपि।

## विष्णुपुराणीयो लक्ष्मीस्तवः पठनीयः।

नमस्ये सर्व्वभूतानां जननीमब्जसम्भवाम्।

श्रियमुन्निद्रपद्माक्षीं विष्णोर्वक्षस्थलाश्रयाम्॥

इत्यादि।

पठ्यते येषु चैवैष गृहेषु श्रीस्तवो मुने।

अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन॥

इत्यादिफलार्थम्।

---

## स्कन्दपुराणीयसरस्वतीस्तवः।

प्रपञ्चसारे च,—

इति मातृका [1]विभेदान् प्रभजन् [2]मनुद्वयं च [3]मन्त्रितमः।

[4][प्रजपेदेनां स्तुतिमपि दिनशो वाग्देव्यनुग्रहाय बुधः॥

अमलकमलाधिवासिनि मनसो वैमल्यदायिनि मनोज्ञे।

सुन्दरगात्रि सुशीले तव चरणाम्भोरुहं नमामि सदा॥

अचलात्मजा च दुर्गा कमला त्रिपुरेति भेदिता जगति।

या सा त्वमेव वाचामीश्वरि सर्व्वात्मना प्रसीद मम॥

---

(१) Y. प्रभेदान्

(२) प्रपञ्चसार reads मन्त्रद्वयं च ।

(३) Y. मन्त्रितम इत्यादि।

(४) Y. Omits the portion bracketed.

[1]तव चरणाम्भोजयोः प्रणामहीनः पुनर्द्विजातिरपि।
भूयादनेडमूकस्त्वद्भक्तो भवति देवि सर्व्वज्ञः॥
मूलाधारमुखोद्गतविसतन्तुनिभप्रभाप्रभावतया।
विस्तृतलिपिव्राताहितमुखकरचरणादिके प्रसीद मम॥
वर्णतनो ऽस्तवर्णे नियतमनिवर्णितेऽपि योगीन्द्रैः।
निर्णीतकरणदूरे वर्णयितुं देहि देवि सामर्थ्यम्॥
ससुरासुरमौलिलसन्मणिप्रभादीपितांघ्रियुगे।
सकलागमस्वरूपे सर्व्वेश्वरि सन्निधिं विधेहि मयि॥
पुस्तकजपपुटहस्ते वरदाभयचिह्नचारुबाहुलते।
कर्पूरामलदेहे वागीश्वरि बोधयाशु मम चेतः॥
क्षौमाम्बरपरिधाने मुक्तामणिभूषणे मुदावासे।
स्मितचन्द्रिकाविकासितमुखेन्दुबिम्बेऽम्बिके प्रसीद मम॥
विद्यारूपेऽविद्याविनाशिनि विद्योतितेऽन्तरात्मविदाम्।
गद्यैः सपद्यजातैराद्यैर्मुनिभिः स्तुते प्रसीद मम॥
त्रिसुखि त्रयीस्वरूपे त्रिपुरे त्रिदशाभिवन्दिताङ्घ्रियुगे।
त्रीक्षणविलसितवक्त्रे त्रिमूर्त्तिमूलात्मिके प्रसीद मम॥
वेदात्मिके निरुक्तज्योतिर्व्याकरणकल्पशिक्षाभिः।
सच्छन्दोभिः सन्ततक्लृप्तषडङ्गेन्द्रिये प्रसीद मम॥
त्वच्चरणसरसिजस्थितिमहितधियां न लिप्यते दोषः।
भगवति भक्तिमतस्त्वयि परमां परेश्वरि प्रसीद मम॥

---

(१) प्रपञ्चसार reads त्वच्चरणाम्भोरुहयोः प्रणाम०

बोधात्मिके बुधानां हृदयाम्बुजचारुरङ्गनटनपरे।
भगवति भवभङ्गकरीं भक्तिं भद्रार्थदे प्रसीद मम॥
वागीश्योस्तवमिति यो जपार्चनाहवनवृत्तिषु प्रजपेत्।
स तु विमलचित्तवृत्तिर्देहापदि नित्यशुद्धमिति पदम्॥]

---

## [1]नवग्रहस्तोत्रम्।

[2]जवाकुसुमसङ्काशं [3][काश्यपेयं महाद्युतिम्।
ध्वान्तारिं सर्व्वपापघ्नं प्रणतोऽस्मि दिवाकरम्॥
दिव्यशङ्खतुषाराभं क्षीरोदार्णवसम्भवम्।
नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम्॥
धरणीगर्भसम्भूतं विद्युत्पुञ्जसमप्रभम्।
कुमारं शक्तिहस्तञ्च लोहिताङ्गं नमाम्यहम्॥
प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम्।
सौम्यं सर्व्वगुणोपेतं नमामि शशिनः सुतम्॥
देवतानामृषीणाञ्च गुरुं कनकसन्निभम्।
वन्द्यभूतं त्रिलोकेशं तं नमामि बृहस्पतिम्॥

---

(१) Y. नवग्रहस्तवः।
(२) Y. जवाकुसुमसङ्काशमित्यादि।
(३) Y. Omits the portion bracketed.

हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्व्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥
नीलाञ्जनचयप्रख्यं रविसूनुं महाग्रहम् ।
छायाया गर्भसम्भूतं वन्दे भक्त्या शनैचरम् ॥
अर्द्धकायं महाघोरं चन्द्रादित्यविमर्द्दकम् ।
सिंहिकायाः सुतं रौद्रं तं राहुं प्रणमाम्यहम् ॥
पलाशधूमसङ्काशं तारादित्यविमर्द्दकम् ।
रौद्रं रुद्रात्मजं घोरं तं केतुं प्रणमाम्यहम् ॥
व्यासेनोक्तमिदं स्तोत्रं यः पठेत् शृणुयादपि ।
दिवा वा यदि वा रात्रौ शान्तिस्तस्य न संशयः ॥
ऐश्वर्य्यमतुलञ्चैव बलपुष्टिविवर्द्धनम् ।
नरनारीहितार्थाय नित्यं चाप्यभिधीयते ॥ (?)
नरनारीहितार्थाय लभते नात्र संशयः ॥ ]

तथा—

[1]मङ्गलो भूमिपुत्रश्च ऋणहर्त्ता धनप्रदः ।
[2][स्थिरासनो महाकायः सर्व्वकर्म्मावबोधकः ॥
लोहितो लोहिताक्षश्च सामगानां कृपाकरः ।
अङ्गारको यमश्चैव सर्व्वरोगापहारकः ॥
वृष्टिकर्त्ता च हर्त्ता च सर्व्वकामफलप्रदः ।
एतानि कुजनामानि नित्यं यः प्रयतः पठेत् ॥

(१) Y. मङ्गलो भूमिपुत्रश्च ऋणहर्त्ता धनप्रद इत्यादि मङ्गलस्तोत्रम् ।
(२) Y. Omits the portion bracketed.

ऋणं न जायते तस्य धनमाप्नोति पुष्कलम्।
रक्तगन्धैश्च पुष्पैश्च धूपगन्धादिभिस्तथा।
मङ्गलं पूरयित्वा तु मङ्गलेऽहनि सर्व्वदा॥
ऋणलेखा प्रकर्त्तव्या अङ्गारेण सदा बुधैः।
प्रोञ्छयेद् वामपादेन ऋणनाशो भवेद् ध्रुवम्॥]

एतच्च "ऋणानाख्यानपक्रिये"त्युपपातकमध्ये गणनात्।

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥

(इति) [1]महादोषात्।

व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।
[2]स्त्रीजितस्य च मूर्खस्य मरणान्तं हि सूतकम्॥

इति [3]प्रतिक्रिया (इत्यपक्रिया) सम्भावनारहित-ऋणवतः कर्म्मानधिकारस्मरणाच्च।

[4][अथाहुः,—]

ऋणे प्रजायमाने तु उत्तमे धनिके सति।
क्रीत्वा द्रव्येण तेनाज्यमिति तत्र विधानतः॥

मध्यमेन पलाशानां पर्णेन [5]तिलानां पर्णेन जुहोति च। [6]यदास्य

(१) D. महादोषाच्च।

(२) D. व्याजितस्य०

(३) Y. प्रक्रिया०

(४) Y. Omits the portion bracketed.

(५) D. तिलान् जुहोति च।

(६) D. E. जध्यासोदिति०

दिति(?) मन्त्रेण व्याहृतिभिः समशतम्। ततः [1]नान्यस्माद्दणमर्दन्तं मयेह येन यमस्य विधिनाचरामि।(?) इदं तदग्ने अनृणो भवामि तावत् तेन प्रतिदत्ते ददानीति निर्धनस्य तूपपातकप्रायश्चित्तम्।

"बृहस्पतिः सुराचार्य्य" इति बृहस्पतिस्तोत्रम्। दशरथकृतं स्कन्दपुराणीयं शनैश्चरस्तोत्रं (च) पठनीयम्।

इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे स्तोत्रपाठव्यवस्था।

---

## अथ देवगृहसम्मार्जनादि देवकार्य्याणि।

"पूर्व्वाह्णे दैविकं कर्म्मे"ति वचनात्

देवकार्य्यस्य सर्व्वस्य पूर्व्वाह्णस्तु विधीयते।

इति वचनात् (च) पूर्व्वाह्णमात्रकर्त्तव्यत्वेऽपि द्वितीयभागे बहुकर्म्मविधानात् तृतीयभागे च प्रासादादिदेवतालयगमनविधानेन [2]तत्र देवपरिचर्य्याविधानाद् [3]गृहदेवकार्य्याणां प्रथमभाग एव कालः। न च पूर्व्वाह्णसामान्यस्य तृतीयभागे [4][विशेषे] उपसंहारः। "देवकार्य्यस्य सर्व्वस्ये"ति गृहदेव(बृहद्देव)कार्य्यस्यापि संग्रहेण तदसङ्गतेः।

---

(१) E. D. यद्यासीदृण ०

(२) Y. तत्रत्यदेवतापरिकर्म्मेत् (?)

(३) D. गृहे देव ०।

(४) D. Omits the portion bracketed.

अत्राच वराहपुराणे,—

कल्यमेव समुत्थाय हन्याद् भेरीं यथोदिताम्।

इति कल्यप्रभृतिदेवकार्य्याणि दर्शितानि। तत्र यद्यपि सन्ध्याकाल एव कपाटोद्घाटनदीपज्वालनदन्तधावनमुखक्षालन-माल्यदानघृततैलाभ्यञ्जन [1]भूमिलेपोद्वर्त्तन [2]स्नानदानगन्धचन्दन-दानपुष्पमाल्यदानवस्त्रालङ्कारदानानि देवकार्य्याणि विहितानि।

एवं कृते च सन्ध्यादि कर्म्म शेषं समाचरेत्।

इति पश्चादेव (च) सन्ध्या विहिता तथा तद् गृहीतभागवत-दीक्षाणामितिप्रतिभातीति सन्ध्यानन्तरमन्येषां देवकार्य्याणि। अतएव भविष्यपुराणे,—

स्नानकाले त्रिसन्ध्यन्तु यः कुर्य्याद् गीतवादितम्।

इतिहासपुराणाभ्यां तथा श्रवणमुत्तमम्॥

इति सन्ध्याकाले स्नानस्यानुवादः। स च सन्ध्याऽव्यवहित-कालविषयः। सन्ध्याया अधिकारसम्पादकत्वात्। तत्र वराह-पुराणीयमन्त्राणां यथोक्तरूपेण ज्ञानासम्भवात् [3]तन्मन्त्राभावेपि तत्तत्कर्म्माणि कार्य्याणि।

तत्र यमः,—देवमाल्यापनयनं देवागारसमूहनम्।

स्नपनं सर्व्वदेवानां गोप्रदानसमं स्मृतम्॥

---

(१) Y. भूमिलेपनोद्॰

(२) Y. स्नानगन्धचन्दनपुष्पमाल्य॰

(३) Y. तन्मन्त्राभावेऽ(पि) तन्मन्त्राणि कार्य्याणि।

## अथ सूर्य्यस्य ।

भविष्यपुराणे,—

सूर्य्यमाल्यापनयनं पूजान्ते च प्रमार्ज्जनम् ।
एकैकं स्यात् सदा तुल्यं चान्द्रायण [1]फलेन तु ॥

तथा,—

पश्यन् परिहरन् जन्तून् मार्ज्जन्या मृदुसूक्ष्मया ।
शनैः सम्मार्ज्जनं कृत्वा चान्द्रायणफलं लभेत् ॥
यावत्यः पांशुकणिका मार्ज्जयन्ते भास्करालये ।
दिनानि दिवि तावन्ति तिष्ठत्यस्तमितो नरः ॥

तथा,—

गृहीत्वा गोमयं स्वस्थं स्थाने वा पतितं शुभे ।
उपर्य्यधश्च सन्त्यज्य प्रत्ययं जन्तुवर्ज्जितम् ॥

तथा,—

नात्यर्थं रोगजीर्णाया वन्ध्यायाश्च विशेषतः ।
रोगार्त्तनवसूताया न गोर्गोमयमाहरेत् ॥
वस्त्रपूतेन तोयेन यः कुर्य्यादुपलेपनम् ।
पश्यन् परिहरन् जन्तून् चान्द्रायणफलं लभेत् ॥
सदा धातुविकारैर्वा वर्णकैर्गोमयेन वा ।
उपलेपनकृद् याति तत्पदं यानमास्थितः ॥

---

(१) D. फलं लभेत् ।

उदकाभ्युक्षणं भानोर्यः करोति तथा गृहे।
सोऽपि गच्छति यत्रास्ते भगवान् यादसांपतिः॥
यः कुर्य्यात् कुट्टिमां भूमिं दर्पणोदरसन्निभाम्।
नानावर्णविचित्राञ्च विचित्रकुसुमाकुलाम्॥
क्वचित् कलशविन्यस्तां पङ्कजैरुपशोभिताम्।
रम्यां मनोरमां सौम्यामर्कायतनमन्दिरे॥
[1]यावद्धस्ता भवेद् भूमिः समन्ताद्धस्तसंख्यया।
तावद्युगसहस्राणि सूर्य्यलोके महीयते॥

तथा,—

एवं स्वस्तिकपद्माद्यै र्भूशोभां सूर्य्यमन्दिरे।
कृत्वा वर्णकपिष्टाद्यैर्लभेत् शतगुणं फलम्॥

एवं स्थानं संस्कृत्य मुखप्रक्षालनम्। दन्तधावनम्। "अभ्यङ्गे पञ्चविंशति"रितिवचनात् पञ्चविंशतिपलघृतेनाभ्यङ्गो वर्षकोटिसहस्रार्जितपापक्षयफलः। यवगोधूम[2]चूर्णैरुद्वर्त्तनम्। ततः [3]स्वच्छोदकस्नानम्। भविष्ये,—

मृत्कुम्भैस्ताम्रकुम्भैस्तु स्नानं दशगुणं स्मृतम्।
रौप्यैर्लक्षोत्तरं पुण्यं [4]हैमैः कोटिगुणोत्तरम्॥

---

(१) D. यावद्वर्षा भवेद्०
(२) Y. चूर्णैरावर्त्तनम्।
(३) D. स्वल्पोदक०
(४) Y. हैमं।

तथा,— स्नानकाले प्रकुर्व्वीत गीतवाद्यादिमङ्गलम् ।
इतिहासपुराणाभ्यां तथा श्रवणमुत्तमम् ॥
घृतेन स्नपनं कृत्वा एकाहमुदये रवेः ।
गवां शतसहस्रस्य दत्तस्य लभते फलम् ॥

सप्तम्यां घृतस्नाने सप्तकुलोद्धरणसूर्य्यलोकमहि(त)त्वम् । शुक्लाष्टम्यां सर्व्वपापक्षयः । ग्रहणविषुवायनदर्शपौर्णमासेषु महापुण्यम् ।

आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चारुरूपताम् ।
[1]सप्तजन्मानि चाप्नोति क्षीरस्नानप्रदो रवेः ॥

दधिस्नानाद् विष्णुलोकः । [[2]मधुस्नानादिन्द्रलोकः ।] श्रीखण्डवारिस्नानेनार्कलोकः । कपिलापञ्चगव्यस्नानं पूर्व्वतो दशगुणफलम् । गङ्गातोयेनापोहिष्ठेति स्नानाद् ब्रह्मलोकप्राप्तिः । कर्पूरागुरुतोयेन सूर्य्यस्नानं सूर्य्यलोकदम् । [[3]मन्त्राष्टशतजपेन निर्म्मलजलस्नानं सूर्य्यलोकदम् । ] पितॄनुद्दिश्य तीर्थवारिणा सूर्य्यस्नाने [4]नरकादुद्धृत्य पितॄणां स्वर्गवासः । सिताम्बुधारोष्णपयोघृतैः क्रमेण सूर्य्यं स्नपयित्वा [5][पूजयित्वाश्वमेधसहस्रफलप्राप्तिः ।

तथा,— आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रक्तानि करवीराणि तथा रक्तञ्च चन्दनम् ॥

---

(१) Y. सप्त जन्म समाप्नोति० ।
(२) Y Omits the portion bracketed.
(३) Y. Omits the portion bracketed.
(४) Y. नरकोद्धारपूर्व्वकं पितॄणां०
(५) D. Omits the portion bracketed.

योऽष्टाङ्गमर्घ्यमापूर्य्य भास्कराय निवेदयेत्।
दशवर्षसहस्राणि स रमेदर्कमन्दिरे॥
सुवर्णरत्नतोययुतार्घ्येण कोटिशतवर्षं सूर्य्यलोकप्राप्तिः।
दशापराधांस्तोयेन क्षीरेण तु शतं क्षमेत्। ]
सहस्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत्॥

हेमपात्रे रौप्ये वा ताम्रे वा गोमयकृतपद्मस्वस्तिकशङ्खध्वजादिभिर्नानावर्णैरक्षततण्डुलादिभिर्भक्षपिष्ट(?)दीपचूताश्वत्थपल्लवसहिते नीराजनं युगसहस्रसूर्य्यलोकप्राप्तये। दारवार्घ्यपात्रात् मृत्पात्रे शतगुणम्। ताम्रपात्रे ततो दशगुणम्। पलाशपद्मपत्राभ्यां ताम्रपात्रसमम्। रौप्यपात्रे लक्षगुणं स्वर्णपात्रे कोटिगुणम्।

एवं स्नानेऽथ नैवेद्ये बलिधूपादिषु क्रमात्।
पात्रान्तरविशेषेण फलं स्यादुत्तरोत्तरम्॥
सूर्य्यस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं परम्।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम्।

इति सूर्य्यस्य। *

---

* Y reads the following after this mark :—

इ(ति) सम्मार्जनादिफलम्। अथ दर्शनादिफलम्।

मेरुमन्दारतुल्योऽपि राशिः पापस्य कर्म्मणः।
आसाद्य भास्करं मर्त्त्यैर्नाशयति तत्क्षणात्॥
यः कुर्य्याद्दर्शनं मासमेकाहारो जितेन्द्रियः।
स यत् फलमवाप्नोति न तत् सर्व्वैर्मखैरपि॥
पौर्णमास्याममावास्यां दर्शनं पुण्यदं स्मृतम्।
सप्तम्यान्तु तथा षष्ठ्यां दिवसे च रवेः सदा॥

तत्तत्प्रदक्षिणप्रणामाद्‌ राजसूयाश्वमेधफलम्।

त्रितत्प्रद क्षिणीकृत्य नमस्कारात्‌ परां गतिम्।

प्रणम्य दण्डवत्‌ भूमौ गतिं पुण्यशतोद्भवाम्।

अत्र "दैवकार्य्यस्य सर्व्वस्ये"ति वचनाद्देवतासम्प्रदानकस्यापि प्रथमभाग एव कालः।

पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम्।

विलेपनस्वाचतश्च केशवाय प्रयच्छति।

तेन पुण्येन निवसेत्‌ विष्णुलोके युगायुतम्॥

इति सामान्यतः। विशेषतो विष्णुधर्म्मे—

पुष्पाणि च सुगन्धीनि मनोज्ञानि च यः पुमान्‌।

प्रयच्छति हृषीकेशं स भागवत उत्तमः॥

इति वाक्यात्‌ तद्वाक्यैश्च पूजाप्रकरणाद्‌ बहिरेव फलार्थत्वेन तत्तद्दिव्य (तत्तद्द्रव्य) विधानाद्‌ (विधान) वाक्येन पूजासम्बन्धे फलसम्बन्धवाक्यभेदोत्पत्तेः पृथग्गन्धादि दानं फलार्थं विधीयते। हिरण्यरत्नयानासनदानं तत्तत्फलार्थमेव। तत्र देवतायाः प्रतिग्राहृभावेन ददात्यर्थस्य गौणत्वात्‌। यत्र दद्यादिति अर्चयेदिति यत्नात्तु कल्पयेदिति तत्र देवताप्रीत्यभावात्‌ प्रीतिहेतुत्वं न पूजास्वरूपं तथापि देवता-मुद्दिश्य कृतप्रीतिजननयोग्यक्रियास्तु पूजेति प्रत्येकमुपादानं गन्धादिलेपनादिकं च पूजैवेति न दोषः। अन्यथा पुष्पस्य देहदानं गन्धस्यानुलेपनञ्च न स्यात्‌। देवता-मुद्दिश्य त्यागमात्रेण दानविध्युपपत्ते(ः) देवप्रतिमासम्बन्धो निष्प्रमाणकः। सुवर्णरजतरत्नक्षेत्रादीनां साक्षात्‌ प्रतिमाशरीरेऽनुपयोगेऽपि तद्ग्रहणविधानाद्‌-पहारे दोषाभिधानाच्च। प्रतिमाशरीरे द्वारान्तरेण तेषामप्युपयोगः। तथाच सोमशिवीये चण्डप्रतिष्ठानन्तरं

ब्रूयादेनं शिवद्रव्यं रक्षितव्यं शिवान्तिके।

वितानच्छत्रचिह्नानि वस्त्रभूषणवाहनम्।

गोभूहिरण्यधान्यादि देवद्रव्यमुदाहृतम्।

भविष्ये—

नाधिकारोऽस्ति विप्राणां भौमानां देवपूजने।

भक्त्या भरतशार्दूल स्वाधिपत्ये विशेषतः॥

इति। स्वाधिपत्ये देवभूमिप्रभुत्वे। भौमानां मखेतरब्राह्मणानाम्। मूल्य-ग्रहणेन नाधिकार इति मूल्यग्रहणं विना देवभृत्यत्वे ऽधिकार इत्युक्तं भवति। मखानान्तु वेतनपूर्व्वकमप्यधिकारः।

देवालयेषु सर्व्वेषु वर्ज्जयित्वा शिवालयम्।
अधिकारः स्मृतो राजन् भोजकानां न संशयः॥

इति भोजकपदवाच्यमस्याधिकारं दर्शयति। एवं शावरभाष्ये देवग्राम इति तदुपजीविनां तत्र व्यवहारादभिधीयत इति। अन्यथा स्वत्वे साधारण्यात् सर्व्वेषां व्यवहारः स्यात्। तदुपजीवव्यवहारस्तु पूजाविनियोगार्थ एव। तेन पुष्पादिदानमपि पूजैव। केवलं दानप्रायपठितानां दाने तु कर्त्तव्यतयानुष्ठान-समाचारः। देवद्रव्यं देवतामुद्दिश्य त्यक्तं द्रव्यमिति यद्यपि लक्ष्मीधरेणोक्तं तथापि त्यागोऽपि पूजैवेति न दोषः। तथापि मन्त्रदेवप्रकाशिकायां पूजा पञ्चविधा× अभिगमनमुपादानमिज्या स्वाध्यायो योग इति श्रीपञ्चरात्रेऽभिहितम्। तत्रापिच (तत्राभिगमनं) नाम सम्मार्जननिर्म्माल्यवहिष्करणादि। उपादानं पूजासाधन-सम्पादनम्। इज्या गन्धपुष्पादिदानम्। स्वाध्यायो मन्त्रजपः। योगो देवता-स्वरूपभावना इति पूजाङ्गमात्रकाव्यासादिकरणप्रसङ्गः।

तेषां सपर्य्यां त्रिविधा प्रोक्तामेकां समाश्रयेत्॥

इति पञ्चोपचारदशोपचारषोड़शोपचाररूपत्रिविधपूजामधिकृत्य विधाने(ऽ) न्यत्र प्रसङ्गाभावात्। अतिथिपूजादौ तदनादरस्यावश्यकत्वात् आर्त्तपूजादौ तेषामनङ्गत्वात्।

अर्च्चितं प्रतिस्थापति अर्च्चिताय प्रयच्छति।

इत्यादौ पुष्पादिदानमात्रेण पूजादर्शनाच्चेत्तत्र दानप्रकरणोक्तानां येषां पूजायां न निषेधस्तेषां पूजायामपि स्याद्देवाङ्गत्वम्। सर्व्वपूजाप्रकृतीभूत) दीक्षापूजायां प्रपञ्चसारे कानिचित् पुष्पाण्युक्त्वा

सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि च।

इति स्वागमोक्तपुष्पाणां विधानात्। नच तत्र देवताशब्दे पूजाङ्गत्वेन यान्युक्तानि तेषामेव ग्रहणम्। स्वागमोक्तानीत्यविशेषेणोपादानात् काम्यानामपि पूजाङ्गत्वाविशेषणाच्च। भविष्यपुराणादेरपि तत्र देवतायाः स्वागमत्वमेव विशेषादागमपदस्य शास्त्रपरत्वादिति। भविष्यपुराणे,—

यथानुलेपनं कृत्वा दिव्यैर्गन्धैः सुगन्धिभिः।
वर्षकोटिशतं दिव्यं सूर्य्यलोके महीयते॥
गन्धानुलेपनं पुण्यं द्विगुणं चन्दनस्य च।
चन्दनादगुरो (ऽदगुरो) र्ज्ञेयं पुण्यमष्टगुणं नृप॥

कृष्णागुरोर्विशेषेण द्विगुणं फलमाप्नुयात्।
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते॥
चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः।
भानोरङ्गं समालिप्य कल्पकोटिं (*) वसेद् दिवि॥
सम्वीता (सम्वीज्य) तालवृन्तेन शुभगन्धैः प्रवेपितम्।
दशवर्षसहस्राणि वीर मित्रपुरे वसेत्॥

तालवृन्तदाने दशसहस्रवर्षं सूर्य्यलोके वासः। मायूरव्यजनदाने वर्षकोटि(*) वायुलोकप्राप्तिः। हेमदण्डरत्नदण्डचामरदाने चामरहस्तसेवितस्य चिरं सूर्य्यपुरावाप्तिः। अथ पुष्पाणि सूर्य्यस्य।
भविष्यपुराणे—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः।
अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद् रविम्।
पुष्पजातिविशेषेण लभेत् पुण्यं ततोऽधिकम्॥
दत्वा दश सुवर्णस्य निष्कस्य लभते फलम्।
करवीरे तथैकस्मिन्नर्काय विनिवेदिते॥

अत्र पुष्पैः सम्पूजयेदिति अष्टविधिना वक्ष्यमाणसर्वपुष्पाणां पूजाङ्गत्वावगमः। पुष्पजातिविशेषेणेत्यादिना योगे फलसम्बन्धः। नचाश्रयालाभः। उपक्रमे पूजामनु यत् पुष्पविधानं उपसंहारे च अयमुत्पाद्य पुष्पाणीति पूजाङ्गविधिमध्येऽपि सकलैरर्घ्येद्देवमित्येवपूजाङ्गविधानात् कथं वाऽनिष्पत्तिरूपप्रकरणप्रधानविध्यभावेऽपि तद्भावापकरणादाश्रयलाभसम्भवात् तत्र यथा "भूयस्त्वेनोभयश्रुती"ति नित्यात् ज्योतिष्टोमयजुर्वेदोत्पन्नत्वेन सामवेदेऽतद्विध्यभावेऽपि प्रकरणात्। तदुक्तं

परप्रकरणस्थानामङ्गैरित्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्देशेन तदिष्यते॥

इति। नचैवं फलश्रुतेरङ्गं जुह्वपर्णमयीन्यायेनार्थवादत्वम्। फलभूतप्रधानायामित्युक्तदिशा फलविधित्वप्रतीतेः। एवं कामपदतत्त्वनिर्देशात्। यथा खादिरं वीर्य्यकामस्येति संयोगपृथक्त्वविधिः। श्रुतिवाक्ये फलं प्राप्नुयादित्यादिशब्दैरेव फलविधिप्रतीतेः। यदा नात्र पूजाप्रकरणमितिपक्षस्तदानुगुणफलासम्भवात् ततत्पुष्पपूजनमेव फलाय विधीयते। तदाच नित्यपूजाकालं विनापि प्रातरप्येतानि पुष्पाणि देयानि। तत्र कर (वीर) पुष्पदाने दशसुवर्णदानफलम्।

जाती-बकुल-पाटल-श्वेतमन्दार-सितपद्म-नागकेशर-चम्पक-पुन्नाग-मुद्गराख्यकुसुमाः । अर्कपुष्पेण सूर्य्यलोकप्राप्तिः । करवीरसहस्रे (भ्यः) बिल्वपत्रमधिकम् । बिल्वपत्र-सहस्रेभ्यः पद्ममेकमधिकम् । पद्मसहस्राद् बकमधिकम् । तत्सहस्रात् शमीपुष्पम् । बृहतीपुष्पं कुङ्कुमपुष्पञ्च शमीपुष्पसमम् । शमीसहस्राद्वीलोत्पलम् । रक्तोत्पल-सहस्रनीलोत्पलशतरक्तकरवीरैश्च पूजने कल्पकोटिशतं कल्पकोटिसहस्रञ्च सूर्य्यलोके वासः । सर्व्वपुष्पेषु मालायां स्वस्वफलं द्विगुणम् । तथा,—

मालती मल्लिका चैव तथा काशोऽतिमुक्तकः ।
पाटली करवीरश्च जया पार्त्तिकेति च ॥
कुब्जकस्तगरश्चैव कर्णिकारः कुरण्टकः ।
चम्पको रैवतः कुन्दो बाणो बर्बरमालिका ॥
अशोकस्तिलको लोध्रस्तथा पैनाटरूषकः ।
शतपत्राणि चान्यानि बकाद्यानि विशेषतः ॥
अगस्त्यकिंशुकौ तद्वत् पूजार्थं भास्करस्य तु ।
बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ॥
तमालपत्रञ्च तथा सर्व्वदा तपनप्रियम् ।
तुलसी कालतुलसी तथा वै रक्तचन्दनम् ।
केतकीपत्रपुष्पञ्च सद्यस्तुष्टिकरं रवेः ॥

अतिमुक्तकोऽत्र माधवी । कुरण्टकोऽत्र पीताम्लानः । केतकीपत्रदानमपि । एतेषां मालत्यादीनां फलश्रवणाभावात् पूजायामेकाङ्गत्वम् । एवं पुष्पाभावे पत्राणि पत्राभावे तृणगुल्मौषधाः । इत्यपि पूजाविषयं न फलार्थः (म्) केश-कीटावपन्नशीर्णपर्य्युषितं (त) स्वयंपतितमुकुलवर्जनं तु पूजायामिव फलार्थ-पुष्पसमर्पणे इति । तत्र,—

मुद्गराणि कदम्बानि रात्रौ देयानि भानवे ।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका ॥
प्रहरस्तिष्ठते जाती करवीरमहर्निशम् ।

न निर्म्माल्यतां यातीत्यर्थः । अन्येषु यावद्गन्धानुवृत्तिः । ततः पूर्व्वमुद्धरणे तु ब्रह्महत्याफलमहारौरवपातः । सूर्य्यस्योपरि पुष्पमण्डपकरणे सूर्य्यलोके सर्व्वौ-परिवासः । नानापुष्पैः सूर्य्यगृहमण्डनेऽप्ययम् । की(कि)ङ्करमते स्वयमत्याद्य पुष्पाणि सूर्य्यपूजने सूर्य्यतुष्टिः । स्वर्णपद्मदाने कल्पान्तः (कल्पान्तं) मित्राश्रमे वासः । वर्ज्यानि पुष्पाणि । देवीपुराणे,—सूर्य्यस्य तगरं तथा वर्ज्जयेदित्यर्थः ।

भविष्ये,—

कुड्मलोन्मत्तकं केरी तथाच गिरिकर्णिका।

गिरिकर्णिका अपराजिता।

नचाभ्यातकजैः पुष्पैरर्च्चनीयो दिवाकरः।

अथ धूपाः। तत्र सूर्य्यस्य।

गन्धश्चापि शुभा ये च धूपाश्च विजयादयः।

दिवाकरस्य धर्म्मज्ञैर्निवेद्याः सर्व्वदाच्युत॥

द्रव्यविशेषेण पूजाङ्गधूपं विधाय धूपविशेषात् फलविशेषमाह। तेन तेषामेव पूजाङ्गत्वम्। कालान्तरे केवलानां फलार्थत्वञ्च। एवं सर्व्वदेवेषु बोध्यम्। तत्र सूर्य्याय सघृतगुग्गुलधूपदाने चतुर्वेदिकुले जन्म।

देवदारुं नमेरुञ्च सिह्लकं कुटकं तथा।

श्रीफलस्याज्यसम्मिश्रं दत्वा श्रियमवाप्नुयात्॥

तस्माद् गन्धधूपं षट्सहस्रगुणम्।

अगुरुं दशसाहस्रं द्विगुणं वा सितागुरुम्।

गुग्गुलं दशसाहस्रं द्विगुणं सघृतञ्च तत्॥

सिह्लकधूपेन सूर्य्यसायुज्यम्। कर्पूरागुरुधूपेन राजसूयफलम्। पक्षं गुग्गुल-धूपदानात् ब्रह्महत्यानाशः। संवत्सरेणाश्वमेधफलम्। कृष्णसप्तम्यां साज्यगुग्गुल धूपदाने(न) वर्षशतं सूर्य्यलोके वासः। द्विसहस्र (द्विसहस्र) फलसाज्यगुग्गुल धूपे दत्वा सूर्य्यतुल्यो भवति। सूर्य्यषष्ठे (षष्ठे) धूपेन सूर्य्यलोकाप्तिः।

अथ दीपाः। सूर्य्यस्य। भविष्ये,—विष्णुमहादेवौ प्रति ब्रह्मवाक्यम्।

घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः।

प्रयाति सूर्य्यलोकञ्च दीपकोटिशतैर्वृतः॥

शिरसा धारयेद् दीपं भास्करस्याग्रतो निशि।

आप्रभातञ्च यो वीर भक्तिश्रद्धासमन्वितः॥

ललाटे चैव हस्ताभ्यां सन्धयुग्मतलयोरपि।

कल्पायुतशतं देवः सूर्य्यलोके महीयते॥

कार्त्तिके सप्तम्यामष्टम्याममावास्यायां वा दीपमालादाने भास्करायुतसङ्काशः कुलोद्योतकरः। भास्करालये दीपवृक्षदानात् सूर्य्यलोकाप्तिः। कार्त्तिके प्रत्यहं सूर्य्यनामजपः। सूर्य्यायतने च दीपदानं जातिस्मरत्व रूपकाश्चाव्याहतेन्द्रियत्व-फलदम्। प्रतिपच्चं पञ्चम्यामष्टम्यां वा सूर्य्याय दीपदाने कर्पूरमणिमुक्तादयदीपमाला-

कुलविमानावरोहः। अत तान् दत्वा नहि तैतन(?) तैलवर्जितान् कुर्व्वीत दीपहर्ता (कर्त्ता) च दरिद्रः स प्रजायते इति वचनात् दीपदानकाले परहिंसावर्ज्जनम्। तैलञ्च स यावत्कालं निधेयम्।

अथ नैवेद्यानि। सूर्य्यस्य। भविष्यपुराणे,—

शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम्।
सूर्य्याय च तदा दत्वा सप्तस्यास्तु विशेषतः॥
संयावं कृशरं सूपं पायसं खावकं तथा।
दध्योदनञ्च शाकञ्च मोदकान् गुड़पूपकान्॥
यावन्तस्तण्डुलास्तस्मिन् नैवेद्ये परिसंख्यया।
तावद्‌ युगसहस्राणि सूर्य्यलोके महीयते॥

रसालशिखरिणी,—

गुड़खण्डशतानां भूक्ष्माणां(?)विनिवेदने।
घृतेन पाचितानाञ्च दत्वा शतगुणं लभेत्॥
रसालपानकाद्यानां भक्ष्याणां फलमोच्यते।
तदर्द्धमचितस्यापि वासितस्य निवेदने॥
घृतपूपशतैः सिक्थैः पुण्यं दशगुणोत्तरम्।
उपदंशगुणैर्द्दैयं पुण्यं शतगुणं खग॥

एवं षष्टिकोदने सहस्रगुणम्। सुगन्धिशाल्यन्नेत्वयुतगुणम्। रक्तशाल्यन्नेन लक्षाधिकम्। चीरभक्तेन दशकोटिगुणोत्तरम्। दधिशर्करायुतान्नेन ततोऽप्यधिकम्। सघनशान (०शार) कर्पूरस्तत्तरशालाया कर्पूरयुक्तरसालायां कोटिकोटिशतपुण्याधिकफलम्। सुगन्धपानानां रसालातुल्यफलम्। नानाविधघृतपायसैः कोटिकोटिगुणम्। घृतौदने मासतुल्यफलम्। शर्कराखण्डयुक्तघृतौदने मासादधिकम्। सर्व्वरत्नसमन्वितपूपदानेऽमरलोकत्वम्।

मधुमांसासवैश्चापि प्रीयते साधु भास्करः।
मातुलुङ्गफलादीनि पक्वानि विनिवेदयेत्॥

एवं पक्वस्य प्राप्तिभावात् अपक्वं न निवेदयेत्।

फलं कोष्मलुं विदन्तु यत्नात् पक्वमपि त्यजेत्।

इति प्रतिनिधित्वेन प्राप्तस्य निषेधार्थम्। अर्कपर्णपुटेन मधुपर्कसमर्पणे अश्वमेधफलम्।

अथ सूर्य्यस्य नानाविधद्रव्यदानानि ।

भविष्ये—

वासोभिः पूजयेद् भानुं यानि वास्य प्रियाणि च ।
तथान्यैश्च शुभैर्द्रव्यैः पूजयेद् वनमालिनम् ॥
वासांसि तु विचित्राणि सारवन्ति मृदूनि च ।
धूपितानि रवौ दद्याद् विकेशानि नवानि च ॥
यावन्तस्तन्तवस्तु ( यावन्तोऽङ्गास्तु ) तन्तूनां परिमाणं प्रचक्षते ।
तावद्वर्षसहस्राणि सूर्य्यलोके महीयते ॥
चित्रत् शुक्लं सपीतं वा पट्टसूत्रादिनिर्म्मितम् ।
दत्वा × × सूर्य्याय भवेत् वेदान्तपारगः ॥

श्वेतं महाध्वजं किङ्किणीमालान्वितं मयूरच्छत्रभूषितं दत्वा दिव्यमन्वन्तरशतं दिवि मोदते । सूर्य्यस्य गृहे ध्वजमालादाने महाध्वजाष्टकदाने दिव्यं कल्पायुतशतं दिवि मोदते । मणिरत्नमयं दण्डं काञ्चनमयदण्डं वा शुभं छत्रं मुक्तामाला(ला)कृतं दत्वा सूर्य्यलोके मोदते । सङ्कुलासमायुक्तकांस्यलोहमयमहासनपर्य्यङ्कदाने सहस्रस्यानुचरः सूर्य्येण सह मोदते । भेरीमृदङ्गपटहडमरुमुरजवैणा (वीणा) कांस्यादिदाने युगायुतशतं सूर्य्यलोके महीयते । महासनशङ्खदाने युगायुतशतं सूर्य्यलोके महीयते । बहुवर्णाभं एकवर्णं नानावर्णाचितं वा मध्ये पद्मभूषितं वितानं सूर्य्यस्योपरि दत्वा तद्वस्त्रतन्तुपरिमाणसंख्ययुगसहस्रं सत्यलोके महीयते ।

तथा,—

भास्करायतनाभ्यासे यत्तोयं पुरतः स्थितम् ।
सूर्य्यगङ्गेति तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥
यः कुर्य्याद् दीर्घिकां वापीं तड़ागं भास्करालये ।
स तारयेत् कुलशतं सूर्य्यलोके महीयते ॥

शङ्खवाद्यगीतनृत्यजयशब्दहस्ततालकरणे भूमिदानकन्यादानफलम् । दासीदासदाने नरमेधफलम् । प्रेक्षणीयकन्यादाने राजसूयफलम् । वेश्या(ः) कदम्बकं दत्वा तत्स्थानं गच्छति यत्र सूर्य्यस्तिष्ठति । गोमहिषीगजाश्वदाने अश्वमेधफलम् । सूर्य्याय गौरीगोदाने स्थावरजङ्गमजगद्दानफलम् । स्नानार्थगोदाने कपिलगोशतदानफलम् । गोवृषं पुष्टं दत्वा तद्गात्ररोमसंख्ययुगसहस्रं सूर्य्यलोके महीयते । उभयतोमुखी ( ? ) दत्वा सप्तद्वीपमहीदानफलम् । सवृषं गोशतं दत्वा एकविंशतिकुलजैः सार्द्धं सूर्य्यलोके क्रीड़ित्वा तत्र भोगान् भुंक्त्वा प्रलये सूर्य्यमण्डले

प्रविशति। सहस्रं गोसहस्रं दत्वा अश्वमेधफलम्। गोयुक्तमश्वयुक्तं काञ्चन(°) रौप्यं वा रत्नचितं रथं दत्वा सूर्य्यलोकं गत्वा पश्चात् शिवलोके क्रीडते। हाटरथ-विमानेनार्कं प्रयाति। षष्ठ्याभूषितगजदाने युगकोटिसहस्राणि युगकोटिशतानि च स्वर्गं भुंक्त्वा पश्चादिन्द्रः स्यात्। सर्व्व(श)स्यशालिभूमिदाने भूमिरेणुसंख्यं सूर्य्यलोके महीयते।

एवं सर्व्वत्र विज्ञेयं फलं भूरेणुमानतः।
ग्रामखेटपुरक्षेत्रविषयादि दिने दिने॥

नानापुष्पफलान्वितारामदाने तत्पत्रफलसंख्यप्रयुगसाहस्रं सूर्य्यलोके महीयते। भानोरायतने यागकरणे परमं स्थानं याति। शीतकाले सूर्य्यायतने वह्निदाने अश्वमेधफलम्। सूर्य्यस्नानार्थं पञ्चामृतदाने स्वर्गाप्तिः। दीपार्थंतैलं दत्वा नरकं न याति। दीपतैलार्थं जलदाने महापापक्षयः। धनं धान्यं हिरण्यञ्च दत्वा परमां गतिमेति। नवं भारतपुस्तकं दत्वा विष्णुलोके महीयते। रामायणपुस्तकं दत्वा वाजपेयफलम्। भविष्यपुराणपुस्तकं दत्वा राजसूयाश्वमेधफलम्। सूर्य्या-यतने वाचके (वाचकाय) वृत्तिं दत्वा इतिहासपुराणपाठप्रवर्त्तने सर्व्वान् कामा-नवाप्येह सूर्य्यलोके महीयते। तथा भास्कराग्रे दत्वा कल्पायुतसहस्रं सूर्य्यलोके महीयते।

सुवर्णमणिरत्नाच रजतञ्च तथोत्तमम्।
वस्त्राणि विविधानीह यच्चान्यदपि दुर्लभम्॥
पुष्पाणि करवीराणि प्रियञ्च रक्तचन्दनम्।
गुग्गुलञ्चैव× ×नैवेद्यं मोदकाः प्रियाः॥
मूलाकारो भोजकश्च (?) एतदीय (:) तथा प्रियः।
दानं प्रियं खरी श्रेष्ठ (?) ये प्रयच्छन्ति मानवा (:)॥
तेषां ददाति विश्वेशो भगवान् सप्तिमीश्वरः।

षण्मासे संवत्सरे वा भानोर्यात्राकरणे न पुनर्भवः। तथा,—

अर्घं विनैव मन्त्रेण पुष्पराशिः प्रकीर्त्तितः।
स्यादयं मन्त्रयुक्तश्चेत् पुण्यं शतगुणोत्तरम्॥
तस्मान्मन्त्रेण सूर्य्याय स्नानं गन्धसमादिकम् (*रसादिकम्।)
गजाश्वरत्नवस्त्रादि हेमाद्यञ्च निवेदयेत्॥
गणोत्कावेति विज्ञेयो मन्त्रः शब्दार्थसाधकः।
सर्व्वमन्त्राधिकश्चायं प्रणवद्वयमध्यगः॥

अथ सौरधर्म्माः ।

भविष्यपुराणे,—

सूर्य्यधर्म्मो कुर्वेवज्ञः + + + सर्व्वपापहः ।
त्रिसन्ध्यमर्चयेद् भानुमग्निकार्य्यञ्च यत्नतः ।
एककालमथापि स्या (त्) पूजां कृत्वैव भोजनम् ॥
सूर्य्यार्च्चाग्निपरे ( ० परो ) नित्यं तद्भक्तातिथिपूजकः ।
सर्व्वमैथुनवर्ज्जी स्यात् धीमान् सूर्य्यस्त्वहाश्रमी ॥
यर्ज्जात् तुरीयभागेन प्रकुर्य्यादर्च्चनं रवेः ।
धर्म्मार्ज्जनं तदर्द्धेन यतोऽनित्यं हि जीवनम् ॥
ब्रह्मार्थे ब्रह्मचारी यः सूर्य्यपूजाग्नितत्परः ।
भवेज्जितेन्द्रियः शान्तो नैष्ठिकः स्नातकोऽपिवा ॥
सर्व्वद्वन्द ( ० द्वन्द ) विनिर्म्मुक्तः कन्दमूलफलाशनः ।
सौरवैखानसो ज्ञेय ( : ) सूर्य्यपूजाग्नितत्परः ॥
निवृत्तः सर्व्वसङ्गेभ्यः पूजादानरतः सदा ।
ज्ञेयः सूर्य्यंमतीन्द्रोऽयं पूजानिष्ठो जितेन्द्रियः ॥
लिङ्गप्रभेद्य यः कुर्य्यात् भस्मना च त्रिपुण्ड्रकम् ।
आश्रय ( : ) सर्व्वसत्वानां सूर्य्यलोकं स गच्छति ॥
सूर्य्यभक्तैः सदा कार्य्या शिखैका भास्करप्रिया ।

कृत्वा ( कृता ) ग्निकार्य्यस्य भस्मना तिलकं प्रिया ( तिलकक्रिया । ) कालिकापुराणे सूर्य्यवाक्यम्,—

मद्भक्तो नहि भुञ्जीत भाजने पद्मखण्डजे ।
उष्णीषं वर्ज्जयेच्चात्र शाकं शौवर्च्चलं तथा ॥
रक्तं माल्यं न सेवेत तथा वक्षं विलेपनम् ।
गोमयं मूषिकोत्खाता तथा कृष्णाच मृत्तिका ॥
वर्ज्जयेदुपलेपार्थे धूपं देयं न पाणिना ।
प्रतिष्ठं मण्डलं कृत्वा नमस्तेवद लङ्घयेत ॥
अदत्त्वा मां न भुञ्जीत त्रिसन्ध्यं नैव दर्शयेत् ।
अहोरात्रोषितो भूत्वा सप्तम्यामर्च्चयेन्नरः ।
केशांश्च दापयेद् भक्त्या रक्तं शुक्लेश्च सेऽभ्यतः ॥
मद्भाक्ता पर्य्यटन्तश्च मद्भक्तं समुपस्थितम् ।

## [1]अथ शिवस्य ।

भविष्यपुराणे,—

शिवमाल्यापनयनं पूजान्ते च प्रमार्जनम् ।
एकैकं तत्र तुल्यं स्यात् चान्द्रायण[2]फलेन तु ॥

[[3]तथा,—शिवायतनसम्मार्गे चान्द्रायणफलम् ।] स्कान्दे [4]संवत्सरं मासमायतनसम्मार्ज्जनात् शिवलोकप्राप्तिः । पूर्व्वोक्तगोमयेन पूर्व्ववदुपलेपनाचान्द्रायणफलम् । पक्षं सम्मार्जनलेपनाद् युगकोटिशतं शिवलोकप्राप्तिः । पूर्व्ववद्दन्तधावनमुखप्रक्षालने ।

---

मनाभोजज (?) मन्त्रं वा सर्व्वं यत्नेन मानयेत् ॥
अच्छार्थं लिखितं किञ्चिद् भक्तै रथ्ये शिवालये ।
मम प्राचोक्त (?) मन्त्रं वा न मार्जेत कदाचन ॥
मदर्चाधृतनिर्म्माल्यं शरीरेण तु धारयेत् ।
दशनानां विशुद्ध्यर्थमर्ककाष्ठं न भक्षयेत् ॥
हिरण्यखड्गकांस्यार्कदार्वाश्वत्थशमीध्रुभिः ।
प्रतिचयं पादपीठं पादुके च न धारयेत् ॥
उदयास्तमयञ्चैवमष्टम्यां प्रणमेत् सदा ।
ईदृग्विधानां भक्तानामहं + + न संशयः ॥

इति श्रीमन्महामहोपाध्यायाग्निचिद् वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे नानाविधकर्म्माराधनम् ।

---

(१) Y. अथ शिवस्य देवकार्य्याणि ।

(२) Y. ॰ फलेन च ।

(३) Y. Omits the portion bracketed.

(४) Y. संवत्सरं शिवायतनसम्मार्गात् शिवलोकप्राप्तिः ।

भविष्ये,—पञ्चविंशतिपलमितघृतेन लिङ्गमभ्यज्य वर्षकोटिशतार्जितपापक्षयः। यवगोधूमचूर्णकषायगन्धैरुद्वर्त्त्य सुखोष्णेनाम्बुना स्नाप्य विल्वपत्रैः पीठं विशोध्य धेनु[1]दशसहस्रदानफलं प्राप्नोति। मन्त्राष्टशतजप्तविमलाम्भःस्नानं शिवलोकदम्। लिङ्गं शीतलाम्बुधारयोष्णपयसा घृतेन च क्रमात् स्नपयित्वा पश्चात् पूजां कृत्वाश्वमेधसहस्रफलम्। [2][गव्येन पयसा स्नानं राजतविमानेन सोमलोकप्रदम्। कृष्णाष्टम्यामुपोष्य दध्ना स्नपनं कुलैकविंशोद्धारपूर्व्वकरुद्रलोकमहि(त)त्वदम्।] इक्षुयन्त्रोद्भवतिलतैलस्नपनाद् वायुलोकप्राप्तिः। फलोदकेन पितृलोकप्राप्तिः। इक्षुरसेन विद्याधरलोकप्राप्तिः। सितभस्मना स्नपनात् सोमलोकप्राप्तिः। रत्नोदकेन रौद्रम्। कौवेरं हेमवारिणा। पाटलामलकपुष्पोदकेन पद्मोदकेन च शिवलोकः। कर्पूरागुरुतोयेन शिवलोकप्राप्तिः। स्कान्दे,—क्षीरेण सन्ततस्नानादपराधसहस्रनाशः। संवत्सरं क्षीरस्नानाद् वरुणत्वम्। भविष्ये,—पूर्व्ववद् गोमयादिकृतश्रीवत्सस्वस्तिकध्वजदधिदूर्व्वाक्षतचूताश्वत्थपल्लवादिभिर्नीराजनं पदसंख्ययुगसहस्रशिवलोकदम्।

दशापराधांस्तोयेन क्षीरेण च शतं क्षमेत्।
सहस्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत्॥

---

(१) Y. शतसहस्र०।

(२) In the place of bracketed portion Y reads:—स्नानकाले गीतनृत्यादिकरणम्। यावत् पदानि गीते नृत्ये च तावद् युगसहस्रं रुद्रलोके महि(त)त्वदम्।

आपः क्षीरं कुशाग्राणि [1]दध्याज्यमधुतण्डुलाः।
तिलाश्च सर्षपाश्चैव अर्घ्योऽष्टाङ्गः प्रकीर्त्तितः॥

लिङ्गमूर्द्धन्यष्टाङ्गार्घ्यदानात् दशवर्षसहस्रं रुद्रलोकमहि(त)त्वम्। पुष्पोदकार्घ्यदाने [2]सर्व्वपूज्यत्वम्। गन्धसंयुक्तार्घ्ये दशगुणम्। पञ्चगव्यसंयुक्ते शतगुणम्। अर्घ्यपात्रविशेषात् फलविशेषः। स्नानकुम्भविशेषात् फलविशेषः पूर्ववत्।

तथा,—

अशून्यमस्तकं लिङ्गमभिषेके विशेषतः।
ताम्रेण पद्मपत्रेण [3]पलाशस्य दलेन च॥
शङ्खेन स्वर्णमयेनाथ शुभेन स्नापयेत् शुभम्।
लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं [4]शिवम्॥
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम्॥*

---

(१) Y. तथा वा मधुतण्डुलाः।
(२) Y. सर्व्वभूपत्वम्।
(३) Y. उत्पलस्य दलेन च।
(४) Y. शुभम्।

---

* Y reads the following after this mark :—

अथ घृतकम्बलविधिः।

भविष्यपुराणे,—

आलिङ्गं पीठपर्य्यन्तं यो दद्यात् घृतकम्बलम्।
घृतेन रूपकं रम्यं कृत्वा शम्भोर्महात्मनः॥
मन्वन्तरशतं साग्रं रुद्रलोके महीयते।
सम्यक् प्रेक्षकं दत्वा रुद्रलोके महीयते॥

सुरूपः सुभगः श्रीमान् परिभ्रष्टोऽपि जायते ।
रूपं पिष्टमयं कृत्वा विचित्रं रत्नभूषितम् ॥
यज्ञोपवीतसंयुक्तं हेमपात्रं विशेषतः ।
दन्तेषु मौक्तिकं न्यस्य प्रवालं मध्यमूर्द्धयोः ॥
दद्यात्तु वज्रश्च नेत्राभ्यां वैदूर्य्यं वाय्यसम्भवे ।
हेमरूप्यश्च हस्ताभ्यां ताम्र ( ˆ ) पादतले तथा ॥
अच्छन्नै रंनडेर्वस्त्रै र्विचित्रैः परिवेष्टयेत् ।
विविधैरथ तोयाद्यै र्लिङ्गपूजां प्रकल्पयेत् ॥
भोजयेत् शिवभक्तांश्च विप्रान् भक्त्या च भोजयेत् ।
प्रीयतां मे महादेवो भक्तांस्तान् श्रावयेद्द्विजान् ॥
तैरेव सार्द्धं विप्रस्तु तद्रूपन्तु शिवालये ।
नीत्वा समर्पयेद्द्वेद्यां शिवलिङ्गसमीपतः ।
सर्व्वयज्ञफलं प्राप्य सर्व्वदानफलानि च ॥
पुरुषो रूपदानेन शिवलोके महीयते ।

अन्यच्च,—

कुर्य्यान्मकरसंक्रान्तौ लिङ्गे तु घृतकम्बलम् ।
चाव।चाप।वेष्टेवमीशानं क्षीरधारं घृतं विभो ॥
शालिपिष्टेन दीपांश्च + + + + + कारयेत् ।
तिलैर्होमं प्रकुर्व्वीत दधिमध्वाज्यसंयुतैः ॥
अष्टोत्तरशतं चाज्यं मूलमन्त्रेण मन्त्रवित् ।

अथ घृतकम्बलाभिषेकः ।

भविष्यपुराणे,—

घृताभिषेकं यः कुर्य्यादहोरात्रं शिवस्य तु ।
तज्जागरेण भाण्डेन पुष्यमासे द्विजोत्तमः ॥
गीतनृत्योपचारेण मङ्गवादित्रनिःस्वनैः ।
कुर्य्याज्जागरणं चात्र प्रदीपाद्युपशोभितम् ॥
समस्तपापनिर्मुक्तः समस्तकुलवर्द्धनः ।
स्वतः शिवपुरं नित्यं मोदते शिववत् सुखी ॥
अयने विषुवे चैव युगाद्येषु दिवसेषु च ।
घृताभिषेकं यः कुर्य्यान्महापुण्यं समश्नुते ॥

अथ घृतधारा।

कालिकापुराणे,—

अथाभ्यर्च्य सुगन्धेन विन्यसेद्धेमपङ्कजम्।
प्रत्यहं वाऽऽज्यधारां वस्तु वै लिङ्गमूर्द्धनि॥
उत्तरायणमासाद्य ज्ञात्वा संक्रमणं रवेः।
तदन्ते विधिवत् पूज्य दद्याद्येन उपस्करम्॥
स्वर्ह्नं प्राप्य ततो भक्त्या ब्राह्मणान् यतिभिः सह।
संभोज्य दक्षिणां दत्वा क्षमाप्य च विसृज्य च॥
दीनार्त्तदुःखितानाथान् कल्पयेदनिवारितम्।
कीर्त्तिं लोकेऽतुलां प्राप्य भुक्त्वा भोग्यान् प्रकल्पकान्॥
प्राप्नुयात् परमं स्थानं रुद्रसायुज्यलक्षणम्॥

अथ महास्नानम्।

कार्त्तिक्यामथ वैशाख्यामयनादिषु पर्वसु।
दत्वा दीपान् समुद्बोध्य देवस्याग्रे बलिं तथा॥
भक्त्या मां देवदेवस्य + + + + खि ( चि ) येत् सुधीः।
+ + + देवमामन्त्र्य स्थापयेद् भुवि हरिं स्मरन्॥
भूयः शार्ङ्गसहस्रेण फलानामैक्षवेण च।
रसेन कारयेत् स्नानं भक्त्या चोष्णाम्बुना ततः॥
शीताम्बुना तथोद्वर्त्य वस्त्रपूतेन मन्त्रवित्।
स्नापयेद् भक्तितो भूयो गन्धमन्त्रान्वितेन तु॥
विधिना स्नाप्य चानेन सह रोचनया लिपेत् (?)।
कुङ्कुमकर्पूरचन्दनागुरुस्तथा।
लेपयित्वा ततो लिङ्गमापीठान्तं घनं शुभम्।
नीलोत्पलसहस्रेण मालां बद्ध्वा प्रपूजयेत्॥
अलाभे तु सहस्राख्यार्द्धेनैव तु पूजयेत्।
उत्पलानामलाभे तु पत्रैश्च शीतरोर्यजेत्॥
पद्मैर्वा चम्पकैर्वापि जात्या + टाजया (?) तथा।
पुन्नागैः कर्णिकारैर्वा श्वेतमन्दारजैरपि॥
दमकै (?) मरु ( कुरु ) वकैर्वापि शमीयुक्तार्कनागरैः।
यथालाभन्तु पत्रैर्वा निर्गन्धसुमनोन्वितैः॥

संपूज्य कारयेद् भक्त्या विमलं पुष्पमण्डपम् ।
गुग्गुल्वाज्यसंयुक्तमगुरुं वासितं दहेत् ॥
सम्पूज्य गौरीभर्त्तारं गीतवादित्रमङ्गलैः ।
शालिपिष्टोद्भवैः शि(सि)द्धैः घृतपूर्णैः समुज्ज्वलैः ॥
ततो नीराजनं दीपैः षड्विंशतिञ्च कारयेत् ।
सर्षपैर्दधियुक्तैश्च दूर्वागोरचनायुतैः ॥
गन्धपुष्पादिकं दद्याद्भूयो विचिन्त्य शङ्करम् ।
शातकुम्भं ततः पद्ममष्टपत्रं सुशोभनम् ॥
मध्ये निवेशयेन्मूर्द्धि लिङ्गस्य कुसुमैः सह ।
सूक्ष्मवस्त्रयुगं श्वेतं पीतं वा पट्टसम्भवम् ॥
चामरं दर्पणञ्चैव दीपवृक्षं प्रदापयेत् ।
धूपं साधारणञ्चैव सघण्टं पूर्वमेव च ॥
वितानकं ध्वजं दद्यात् किङ्किणीरशनान्वितम् ।
तथाष्टाभिः पिण्डिं पीठा अङ्गैर्भक्त्या च दण्डवत् ॥
ततः किञ्चित् पठेत् स्तोत्रं शारङ्गं भवशङ्करम् ।
प्रदक्षिणं ततो गच्छेच्छनैर्निर्माल्यवर्जकः ॥
प्रणम्योच्चैः पुनः पश्चान्नैवेद्यं विनिवेदयेत् ।
दीनान्धकृपणांश्चैव तर्पयेदन्नदानतः ॥
कारयेद् यः शिवे भक्त्या महास्नान(ं) फलं शृणु ।
समुद्धृत्य शतं साग्रं कुलानां पापवर्जितः ॥
भगवन् ब्रह्मलोकान्तं भुक्त्वा भोगानशेषतः
व्रजे क्रीडायने तस्मिन् विमाने सोऽमरैर्युतः ॥
भुक्त्वा यथेप्सितान् भोगान् शिवसायुज्यतां व्रजेत् ।
मायावितानमुत्सृज्य चान्ते मोक्षमवाप्नुयात् ॥
केवलेनाथवाज्येन दध्ना गव्येन वै तथा ।
पयसा पञ्चगव्येन मधुनेक्षुरसेन च ॥
यः कारयेन्महास्नानं विधिनानेन संयुतः
सोऽपि तेनैव मार्गेण गमिष्यत् (ि) परमं पदम् ॥
विधिनानेन निःस्वोऽपि स्नानं तोयेन कारयेत् ।
नराणां विंशतियावत् सोऽपि यास्यति तत्पदम् ॥

एवमेषहि धर्म्मोऽस्य रात्रिरन्नविवर्जितः ।
मन्त्रयुक्तो भवेद् यस्तु तत्तुल्यो नास्ति धर्म्मवान् ॥

मन्त्रः शिवमन्त्रः । लिङ्गपुराणे,—

महास्नानन्तु यः कुर्य्याद् घृतेन दधिना ततः ।
स याति मम सायुज्यं स्नानेष्वेतेषु सुव्रत ॥
स्नाने शतफलं ज्ञेयमभ्यङ्गे पञ्चविंशति ।
द्वे सहस्रे पलानान्तु महास्नानं प्रकीर्त्तितम् ॥
स्नाप्य लिङ्गमपापस्तु गव्येनैव घृतेन च ।
विशोध्य सर्व्वद्रव्यैश्च तोयेनाप्यभिषेचयेत् ॥
महास्नानेन युक्ते तु स्नानमष्टगुणं स्मृतम् ।
जलेन केवलेनैव गन्धतोयेन भक्तितः ॥
अनुलेपस्तु सर्व्वत्र पञ्चविंशपलेन वै ।
शमीपुष्पन्तु विधिना विल्वपत्रन्तु पङ्कजम् ॥
अथान्यानि च पत्राणि विल्वपत्रं न सन्त्यजेत् ।
दशद्रोणैश्च नैवेद्यं सप्तद्रोणैरथापि वा ॥
शतद्रोणसमं पुण्यमाढके तु विधीयते ।
वित्तहीनस्य विप्रस्य नात्र कार्य्या विचारणा ॥
भेरीमृदङ्गमुरजतिमिलापटहादिभिः ।
वादित्रैर्विविधैश्चान्यैरन्योन्यैर्विविधैरपि ॥

महास्नानक्रमः ।

अनादि(?)पूर्व्वदिने कृतोपवासो देवस्याग्रे रात्रौ दीपान् समुद्बोध्य अष्टदिक्षु लोकपालेभ्यो बलिं दत्वा देवं विज्ञाप्य स्वगृहं गत्वा स्वपेत् । अपरदिने कृतनित्यक्रियो देवालयं गत्वा पञ्चोपचारेण लिङ्गं सम्पूज्य पञ्चविंशतिपलमितघृतेन लिङ्गमभ्यङ्गं कारयित्वा यवगोधूमचूर्णैर्विलिप्य शुद्धोदकेन संस्नाप्य मूलमन्त्रेण गन्धादिधूपपात्रैः सम्पूज्य पञ्चविंशतिपलमितं घृतं वीचनादिभिः संस्काप्य तेन मूलमन्त्रेण संस्नाप्य शुद्धोदकेन संस्नाप्य पुनर्धूपपात्रैः सम्पूज्य अष्टोत्तरपञ्चदशशतपरिमितैरिक्षुरसं वीचनादिभिः संस्काप्य मूलमन्त्रेण शतेन स्नपयित्वा अष्टविधस्नानम् । तत्रैवं स्वच्छजलहेमयुक्तजलगुग्गन्धिजलरत्नयुक्तजलसर्व्वौषधियुक्तजलशुद्धजलैरष्टाभिः प्रत्येकमष्टोत्तरसहस्रद्वयपलपरिमितैर्धूपात्रपूजापूर्व्वकं मन्त्रशुद्धोदकस्नानसहितं स्नापयेत् । तत उष्णाम्बुना शीताम्बुना च संस्नाप्य यवगोधूमचूर्णैरुद्वर्त्त्य

वस्त्रपूततोयेन संस्नाप्य पुनर्गन्धतोयेन संस्नाप्य गोरोचनाकुङ्कुमकर्पूरचन्दनागुरुभिर्लेपयित्वा नीलोत्पलसहस्रेण तदर्द्धेन मालां कृत्वा पूजयेत्। तदलाभे तावत्पद्ममालया वा तावत्परिमितजातीचम्पकपाटलकर्णिकारपुन्नागश्वेतमन्दारमदनकुरुवकवकशमीगुञ्जार्कनीमेश्वराणामन्यतमस्य मालया वा ततः सम्पूज्य देवस्योपरि पुष्पमण्डपं कृत्वा आज्यं वा सितागुरुगुग्गुलधूपं दत्वा गीतवाद्यादिभिः सन्तोष्य शालिपिष्टोद्भवषड्विंशतिदीपैः घृतपूर्णैः सर्षपदधिदूर्वागोरोचनाक्षतयुक्तपात्रस्थै र्नीराजनं कृत्वा गन्धपुष्पाभ्यां सम्पूज्य अष्टदलस्वर्णपद्मं लिङ्गस्य मूर्द्ध्नि पुष्पैः सह दत्वा सूक्ष्मवस्त्रयुगं श्वेतं पीतं वा पट्टसम्भवं परिधाप्य चामरदर्पणौ समर्प्य दीपदशं प्रज्वाल्य साधारधूपं दत्वा जलपूर्णघटं वितानकिङ्किणीरसनान्वितं जलं दद्यात्। अष्टाङ्गप्रणामं कृत्वा स्तोत्रैः स्तुत्वा प्रदक्षिणं कृत्वा पुनः प्रणम्य दशद्रोणपरिमितमन्नं शतद्रोणपरिमितं वा नानाविधभक्ष्यभोज्यलेह्यपेययुक्तं निवेद्य आचमनं कृत्वा ताम्बूलं निवेद्य पूजां समापयेत्। दीनानाथांश्च सन्तोष्य स्वगृहं गत्वा शिष्टरिष्टैः (?) सह भुञ्जीत। आचार्यादीनां वरणे पूर्व्वं * * * * * (स्व) स्ति वाच्य वरणम्। अन्ते दक्षिणादानं ब्राह्मणभोजन (*) अच्छिद्रावधारणञ्च। घृताद्येकद्रव्येण महास्नानकरणे घृताभ्यङ्गं कृत्वा गन्धादिभूपान्तैः सम्पूज्य अष्टोत्तरसहस्रद्वयपलमितं घृतं दुग्धं वा संस्कृत्य तेन स्नपयित्वा शुद्धोदकेन संस्नाप्य अष्टविधजलैः * * वत् संस्नाप्य त * स्पुष्पानादि सर्व्वं (*) कार्य्यं (*) इति शिवमहास्नानविधिः।

अथ शिवस्य दर्शनप्रदक्षिणनमस्कारादिफलम्।

भविष्यपुराणे,—

लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम्।
सकृत् प्रसङ्गाद् वा दृष्टा सर्व्वपापैः प्रमुच्यते॥

स्कान्दे,— सुदूरमपि गन्तव्यं यत्र देवो महेश्वरः।
दृष्टा लिङ्गं महेश (स्य) पातकैं र्विप्रमुच्यते॥
सप्तजन्मकृतै र्दोषै र्मनोवाक्कायकर्म्मजैः।
पूजितं वा महेशानं पूज्यमानमथापि वा॥
दृष्टा प्रयाति वै मर्त्त्यो ब्रह्मलोकं न संशयः।
एकः पूजयते भक्त्या भक्त्या चान्यः प्रपश्यति॥
तुल्यमेव फलं ताभ्यां भक्तिरेवात्र कारणम्।
यः प्रातर्देवदेवेशं शिवलिङ्गं (प्र) दक्षिणम्॥

पश्येत् स याति सर्व्वस्मादधिकां गतिमेव हि ।
मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत् ॥
सायाह्ने सर्व्वयज्ञानां फलं प्राप्य विमुच्यते ।
प्रदोषे शङ्करं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ॥

स्कान्दे,—

स्नातो यः पूर्व्वसन्ध्यायां सदा मामभिगच्छति ।
स स्नतो यथारवस्य (?) मन्त्री भवति वीर्य्यवान् ॥

तथा,—

प्रातस्तद्दर्शनं * * वै * * * * व्यपोहति ।
आजन्मनस्तु मध्याह्ने सप्तजन्मकृतं निशि ॥
अर्द्धयामकृतं पापं दृष्ट्वा पर्व्वणि सन्त्यजेत् ।
सोमनाथं जगन्नाथं दृष्ट्वा स्पृष्ट्वा विकल्मषः ॥
जायते नात्र सन्देहः अपि चाण्डालयोनिजः ।

योगशिखीये,—

अङ्गुष्ठमुच्छितं कृत्वा यद्वा स्थण्डिले दक्षिणे ।
पिण्डिकायां न्यसेत् लिङ्गमङ्गुष्ठेन च संस्पृशेत् ॥
* * महेशमन्त्राभ्यां स्पर्शनं भूतिमिच्छताम् ।

भविष्ये,—

कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः ।
अश्वमेधसहस्रस्य सुयष्टस्य फलं लभेत् ॥

अन्यत्र च,—

प्रदक्षिणत्रयं कुर्य्यात् प्रासादस्य समन्ततः ।
सव्यापसव्यन्यायेन मृदुना यात्य * * नरः ॥
पदे पदेऽश्वमेधस्य यज्ञस्य लभते फलम् ।
सव्यं व्रजेत् ततोऽसव्यं प्रथा * * * लङ्घयेत् ॥

अस्यानेकगुणविधानात् प्रकरणान्तराच्च भिन्नत्वेऽपि सधर्म्मकत्वादधर्म्मके भविष्यपुराणीयप्रदक्षिणेऽतिदेशात् सव्यापसव्यादिधर्म्मप्रवृत्तिः शिवप्रदक्षिणत्वावान्तरसादृश्यात् ।

एवम्भूतमना(ः) कुर्य्यात् शिवे प्रदक्षिणत्रयम् ।
छिन्नस्तेन भवग्रन्थिर्न तस्य पुनरुद्भवः ॥

अत्रापि धर्म्मप्रवृत्तिरेव। यद्यपि,—

चण्डस्य हयमस्यापि देवस्य च शुभार्थिभिः।
मध्ये यात्रा प्रकर्त्तव्या मन्त्रलिङ्गक्रियामयम्॥

इति।

बाणेश्वरेऽभूलिङ्गे च सोमसूत्रं न विद्यते।

इति च कृत्रिम एव लिङ्गे सोमसूत्रलङ्घने दोषः। सोमसूत्रप्रणालादिलङ्घने मङ्गन्नय-मित्यपि सामान्यं कृत्रिमपरमेव। तथापि पुरुषार्थदोषो बाणे स्वयम्भे+ (स्वयम्भवि) च मास्तु। सव्यासव्यादियुक्तप्रदक्षिणविधिः स्याद्देवाविशेषात्। भविष्ये,—

नमस्कृत्य महादेवमश्वमेधफलं लभेत्।
प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत्॥
स यां गतिमवाप्नोति न तां क्रतुशतैरपि।

यत्र प्रणामपूर्व्वकाञ्जलिकरणं शिरसि फलाय विधीयते प्रणामनमस्कारयोर्भेदात्।

जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः।
कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात्॥

भविष्ये— अर्घ्यपात्रं तथा पुष्पमन्यद् वा यागसाधनम्।
गृहीत्वा नैव कुर्व्वीत देवतायाः प्रदक्षिणम्॥
दैवशक्तिपरो द्वारवाहनानाञ्च मध्यतः।
प्रदक्षिणं न कुर्व्वीत कुर्य्यात् सर्व्वस्य वाह्यतः॥
प्रासादे मण्डपे गेहे वृक्षमूले वनेऽपि वा।
पूज्यते देवता यत्र तत्रैवं विधिमाचरेत्॥
शिवां स्तुत्वा जगत् कृत्स्नं दृष्टिपातेन धारयेत्।
यत् सम्बार्थ्य जगत् कृत्स्नमग्निकार्य्येण तल्लभे(त्)॥

अग्निकार्य्यन्तु—

तैले होमं प्रकुर्व्वीत दधिमध्वाज्यसंयुतैः।
अष्टोत्तरशतञ्चार्व्वं मूलमन्त्रेण मन्त्रवित्॥

इति वचनादेव (का) र्य्यम्। स्कान्दे,—

इदन्तु परमं गुह्यं सोमे देवि निवेदयेत्।
अर्कपर्णपुटं पूर्णं घृतस्य मधुनस्तथा॥
अर्चयित्वा तु मां देवि यो मे नामानि कीर्त्तयेत्।
चतुर्द्दश्यामथाष्टम्यां पक्षयोरुभयोरपि॥

वामदेव सुदेवेति हरशुभ्रेति वा पुनः।
उमापते नीलकण्ठ शान्त श्रीकण्ठ गोपते॥
सर्व्व भीम पशुपते शङ्कर प्रभवेति च।
महादेवेति चाप्यन्य(तु) नाम गुह्यं प्रकीर्त्तयन्॥
सर्व्वपापैः प्रमुच्येत दिवि देवैश्च पूज्यते।
एतेषामेकमपि यः कथयेद्वा पठेत् सदा॥
स देहबन्धं भित्त्वा तु मामेव प्रतिपद्यते।

तथा,— इमानि तु महाभागे शोभनामानि कीर्त्तयेत्।
समस्त लिलयेद् (?) भर्गो भक्षशायी यतव्रतः॥
वामदेवः प्रशान्तश्च सर्व्वश्चैवाग्निलोचनः।
तपसार्चांप्रियः सौम्यो यवरूपोऽन्नवाक्यरुत्॥
पुराणः पुरुहूतश्च ह्यस्योर्मृत्युर्जितेन्द्रियः।
अतीन्द्रियो निरिन्द्रियः सर्व्वभूतहृदि स्थितः॥
संसारचक्री योगात्मा कपाली दण्डिरेव च।
महादेव महादेव महादेवेति चैवहि॥
पठेदेत + भववान् शृणुयादपि यः सदा।
स देहभेदमासाद्य योगात्मा गणगो भवेत्॥

तथा,—

कीर्त्तयन्ति च ये रुद्रं सकृदप्यत्र मानवाः।
सर्व्वपापैः प्रमुच्येत सप्तजन्मकृतैरपि॥
अश्वमेधसहस्राग्निर्महादेवेति कीर्त्तनात्।
हर इत्युच्चरन् मर्त्त्यः सर्व्वपापैः प्रमुच्यते॥
ओँ नमो नीलकण्ठाय इति पुण्याक्षरात्मकम्।
चन्द्रभाह सकृद् वा यः पातकैः स विमुच्यते॥
त्रिपुरहर त्रिदिवेश शम्भो त्रिनयन शङ्कर रुद्र शूलपाणे।
भवशरणमितीरयन्ति येऽस्मिन् भवजलधौ न भवन्ति ते मनुष्याः॥
यज्ञेश्वर महादेव जय भूतपते हर।
जयाशेषमहापापमोचक त्रिपुरान्तक॥
इति सङ्कीर्त्य दुर्जिनं त्यक्त्वा याति परां गतिम्।
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे॥

अष्टनेशाय शर्व्वाय महादेवाय ते नमः ।
एतानि मम नामानि यः पठेच्छिवसन्निधौ ॥
तस्य स्वल्पभयं नास्ति सत्यं सत्यं वदाम्यहम् ।
सकृदुच्चार्य्य रुद्रेति सर्व्वपापैः प्रमुच्यते ॥
हरेति कीर्त्तयेत् वापि ज्योतिष्टोमफलं लभेत् ।
भवेति कीर्त्तयेद् वापि सर्व्व ( सर्व ) मेधफलं लभेत् ॥
शर्व्वेत्युक्त्वा नमस्कृत्य शिवलोके महीयते ।
वेदैरधीतैः किं तस्य महादेवेति यो वदेत् ॥
शिवेति सकृदुच्चार्य्य मोक्षमाप्नोति मानवः ।
अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ॥
यः स्मरेद्देवमीशानं न स पापेन लिप्यते ।

स्कान्दे,—

निर्म्माल्यं यो हि मे देवि शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्य्यग्योनौ च जायते ।
ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत् ॥
तस्य पापं महत् शीघ्रं नाशयिष्ये महाव्रते ।

अत्र धारणाङ्गतया शुचित्वं विधीयते तेन अशुचिधारणे दोषः शुचित्व-प्ररोचनार्थो न पुनरशुचेर्धारणे नरकपातः । केवलमविहितरुद्रनिर्म्माल्यस्पर्श-नमशुचेः स्नाननिमित्तपरम् । निर्म्माल्य (म्) अपकर्षणादिविहितत्वा(त्) तदा स्पर्शन (म्) स्नाननिमित्तम् । तेन शुद्धकाले धारणमशुद्धकाले त्यागः । निर्म्माल्य-स्वाङ्गलिप्तपत्रपुष्पघृतादि न तु नैवेद्यम् । ब्रह्माण्डे —

रुद्राङ्गलग्नं — — — दहेत् सर्व्वञ्च तत्क्षणात् ।

इति निर्म्माल्यप्रतिपत्तिमुक्त्वा तस्मादङ्गेभ्यश्च शाम्भव — — नैवेद्यस्य पृथक्-प्रतिपत्तिविधानात् ।

यत्तु योगशिवीये,—

वितानच्छत्रचिह्नानि वस्त्रं भूषणवाहनम् ।
गोभूहिरण्यवासादि देवद्रव्यमुदाहृतम् ॥
नैवेद्यगन्धपुष्पाद्यमचिरा + यते च यत् ।
तन्माल्यमुपभुक्तं सन्निर्म्माल्यमभिधीयते ॥

शिवार्चाकृदनैवेद्यभक्षणं लङ्घनं सजाम्।
दानञ्चाङ्गीक्षितस्यापि निषिद्धं त्र्यम्बकाज्ञया॥

उभयथापि निर्म्माल्यधारणं शुचिना कार्य्यम्। नैवेद्यस्य निर्म्माल्यभिन्नत्वेन

न भुञ्जीत निवेद्यान्नं गणानाञ्च शिवस्य च।

इति वाक्यान्तरात् तन्निषेधोऽस्त्येव।

न धारयेत् क्वचित् शम्भोर्निर्म्माल्यं न च दापयेत्

धारयेत् उपयोगार्थं स्वहादौ न रक्षयेदित्यर्थः। एवम्,—

क्रव्यादो जायते दाना(त्) + + सप्तस्य (?) भक्षणात्।
लङ्घनात् सिद्धिहानिः स्यान्निदध्याद्दहनोदके॥

इति। अस्य प्रतिपत्तिविशेषत्वेऽपि स्मृत्यन्तरे शिवनिर्म्माल्यदानभक्षणनिषेधात् तदपेक्षितानिष्टफलं स्यादेव। तत्नापवादवाक्यं पठति,—

रत्नहेमास्थिलिङ्गेषु चले लिङ्गे मदक्षिणे।
गुरुष्वपि न निर्म्माल्यं नाख्यासु प्रतिमासु च॥

अत्र मदक्षिणपदेन बाणस्वयम्भूलिङ्गमुच्यते। तस्य स्थूलाभावेन मदक्षिणसम्भावनया मदक्षिणयोग्यत्वसम्भवात्। गुरुषु स्थूलतरेषु प्रासादं विना बहिःस्थापिताकायलिङ्गेषु। आख्यास्विति प्रतिमाविशेषणं तेन शिवाख्यासु प्रतिमास्वित्यर्थः। तेन क्षत्रिमस्थापितलिङ्गमात्रे दोषः। नाख्यत्वेति। अत्र प्रामाण्येऽपि स्वयम्भू बा(ण) चलरत्नहेमास्थिलिङ्गप्रतिमानैवेद्यभक्षणस्य प्रतिपत्त्यन्तरविधानादेवाभयम्। अपवादवचनादपि कदाचित् भक्षणे न दोषः।

यत्तु,—

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम्।
अनिवेद्य न भोक्तव्यं यस्मान्यदुपकल्पितम्॥

इति तद—रा (?) शिवभक्तस्य स्वभोज्ये शिवोपभुक्तिचिन्तामात्रपरमिति वदन्ति।

अथ शिवस्य गन्धः।

भविष्यपुराणे,—

अथानुलेपनं कृत्वा वरैर्गन्धैः सुगन्धिभिः।
वर्षकोटिशतं दिव्यं शिवलोके महीयते॥
गन्धानुलेपनं पुण्यं द्विगुणं चन्दनस्य च।
चन्दनादगुरोर्ज्ञेयं पुण्यमष्टगुणं नृप॥

कृष्णागुरोर्विशेषेण द्विगुणं फलमाप्नुयात् ।
तस्मात् शतगुणं पुण्यं कुङ्कुमस्य विधीयते ॥
चन्दनागुरुकर्पूरैः सूक्ष्मं पिष्टैः सकुङ्कुमैः ।
शिवस्याङ्गं समालिप्य कल्पकोटिं वसेद्दिवि ॥
संवीज्य तालवृन्तेन शुभगन्धैः प्रलेपितम् ।
दशवर्षसहस्राणि वीर शिवपुरे वसेत् ॥

तालवृन्तदाने दशवर्षसहस्रं शिवलोके वासः। मयूरव्यजनदाने वर्षकोटिशतं वायुलोकाप्तिः। हेमरत्नदण्डचामरदाने चामरहस्ताभिः स्त्रीभिर्वीजितस्य सूर्यपुराप्तिः।

शिवस्य पुष्पाणि ।

भविष्यपुराणे,—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैः ॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेत् शिवम् ।

अत्र पूर्व्व(व)देव पुष्पाणां भविष्यपुराणोक्तानां पूजाङ्गत्वं गुणफलसम्बन्धश्च ।

अर्कपुष्पे तथैकस्मिन् शिवाय विनिवेदिते ।
दश दत्त्वा सुवर्णस्य यत् फलं तदवाप्नुयात् ॥

तत्फलञ्च शिवलोकवासः। अर्कपुष्पसहस्रतुल्यफलं करवीरकस्य दाने। जाती-पाटलात्रितयश्वेतमन्दारसितपद्मानि करवीरसमानि। करवीरसहस्रतुल्यं विल्वपत्रम्। विल्वपत्रसहस्रतुल्यं बृहतीपुष्पम्। बृहतीसहस्रतुल्यं द्रोणपुष्पम्। द्रोणपुष्पसहस्रतुल्यमपामार्गपुष्पम्। तत्सहस्रतुल्यं कुशपुष्पम्। तत्सहस्रसमं नीलोत्पलम्। तत्सहस्रसमं वकपुष्पम्। वकसहस्रसमं धूस्तूरम्।—

नागचम्पकपुन्नागा धूस्तूरस्य समाः स्मृताः ।

तथा अखण्डविल्वपत्रैः शिवलोकमहितत्वम्। धूस्तूरे गोलक्षफलम्। बृहतीपुष्पैर्गवायुतफलम्। अशोकश्वेतमन्दारकर्णिकारवककरवीरार्कमन्दारशमीतगर-केशरैर्यथालाभं पूजने रुद्रकन्यासमाकीर्णपुष्पमालायुक्तसूर्यकोटिविमानेन सूर्यलोके महीयते। अपराजिता श्वेतमन्दारमल्लिका। अपरो मन्दार(ः) पारिभद्रः। स्कान्दे अर्ककरवीरविल्वबकैर्लिङ्गपूजने दिव्यवर्षसहस्रशतं स्वर्गः। भविष्यपुराणे शिवस्योपरि पुष्पमण्डपकरणे सर्वौषधि — — — शिवपुरवासाय। शिवगृहस्य पुष्पमालिकाभि(ः) मण्डने अक्षयलोकाप्तिः। मालाभि(ः) लिङ्गदेहवेष्टने देवीपुत्रत्वम्। देवीपुराणे वैशाखे पाटलया पूजा ज्यैष्ठे पद्मेन आषाढ़े विल्वकल्हारैः

श्रावणे नवमालिकया कदम्बैश्चम्पकैर्भाद्रपदे आश्विने पद्ममालया कार्त्तिके शत-पत्रपत्रिकया मार्गे नीलोत्पलैः पौषे कुब्जकैः माघे कुन्दपुष्पैः फाल्गुने मरुवकैः चैत्रे शतपत्रैः पूजने सर्व्वकामावाप्तिफलम्। तथा,—

पञ्चाक्षरेण मन्त्रेण विल्वपत्रैः शिवार्च्चनम्।
करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदम्॥

कृष्णाष्टम्यां विल्वपत्रैरखण्डैरर्च्चने ब्रह्महत्यापापक्षयः। माघकृष्णचतुर्द्दश्यां विल्वदलार्चने पृथ्वीदानफलम्। तुलसीदलदानेन मनोवाक्कायजन्मपापक्षयः।

अर्केण म्रियमाणश्चेत् मोक्षं धुस्तूरकेण तु।
नीलोत्पलैर्लभेद् भोगान् ज्ञानं मल्लिकया लभेत्॥
कुन्देन पुत्रलाभः स्यादुन्मत्तैर्गणपो भवेत्।
पूजयेत् पुत्रकामस्तु केतक्या परमेश्वरम्॥

वक्ष्यमाणकेतकीनिषेधः पूजाविषयः। मुनिपद्मदाड़िमकह्लारकर्कटीरक्तचन्दनकोकिलाक्षकोविदारपुष्पाणि पूजाङ्गानि न पृथक् देयानि। तथा केशरवकुलगिरिकर्णिकाकाशपुष्पमन्दारापराजिताकुब्जकमल्लिनीतगरकुरण्टकर्णिशपोदुम्बरजयापामार्गपुष्पकुसुम्भकुङ्कुमनीलकुसुदरक्तोत्पलस्थलपद्मानि निर्दिश्य

स्थानि शिरसा देवि यो मे भक्त्या निवेदयेत्।

इति वचनात् पूजाङ्गानि। गिरिकर्णिका अपराजिता श्वेता नीला च। तथा कुटजः।

तथा स्कान्दे,—

तुलसीगन्धपुष्पाणि शुक्लकुन्दं सकुन्दकम्।
अशोकः किंशुकश्चैव शस्तं शङ्करपूजने॥

अत्र बृहत्कुन्दगन्धकुन्दयोर्विधिः। भविष्ये कुन्दनिषेधस्तदितरकुन्दपरः।

केतकी अतिमुक्तश्च कुन्दो यूथी मदन्तिका।
शिरीषसर्जबन्धूककुसुमानि विवर्ज्जयेत्॥
अङ्कोलिपत्रकुसुमं करञ्जोद्भूतरूद्भवम्।
वैभीतकानि पत्राणि कुसुमानि विवर्जयेत्॥

अङ्कोलिः काङ्गो इति प्रसिद्धम्। ओड्रपुष्पं जवापुष्पम्।

निर्गन्धान्युग्रगन्धानि कुसुमानि विवर्जयेत्।

पुष्पालाभे पत्राणि पत्राभावे फलानि फलाभावे तृणगुल्मौषधिविज्ञानं पूजाङ्गम्।

भविष्ये.— धुत्तूराणि करञ्जानि रात्रौ देयानि शङ्करे।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका॥

पुष्पफलवाक्यविशेषोऽयम्। तेन न परिसंख्यादोषः।

प्रहरं तिष्ठते जाती करवीरमहर्निशम्।

## अथ धूपाः।

भविष्यपुराणे,—

कृष्णागुरुं सकर्पूरं धूपं दद्यान्महेश्वरे।
नैरन्तर्येण मासार्द्धं तस्य पुण्यफलं शृणु॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
भुङ्क्ते शिवपुरे भोगान् तस्यान्ते च महीपतिः॥

पक्षं सघृतगुग्गुलुधूपदानात् शिवलोके महीयते। कृष्णचतुर्द्दश्यां सघृतगुग्गुलु-धूपदाने शिवसालोक्यम्।

देवदारुसमेतञ्च सर्व्वश्रीवासकुङ्कुमम्।
श्रीफलस्नाज्यसम्मिश्रं दत्वाप्नोति परां गतिम्॥
एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम्।
अगुरु दशसाहस्रं द्विगुणं वा सितागुरु॥
गुग्गुलु दशसाहस्रं सघृतं द्विगुणं भवेत्।

द्विपलसहस्रमाहिषाख्यगुग्गुलुसघृतधूपेन शिवतुल्यः। स्कान्दपुराणेन नन्दि-तुल्यः। स्कान्दे अमावास्यायां सघृतक्षीरगुग्गुलुधूपदानेनाक्षयस्थानाप्तिः। कवाट-द्वारा दिक्षु पुष्पमालाभिर्मण्डयित्वा धूपने स्वामोदेन दिशः पूरयन् कल्पकोटिशतं शिवलोके महीयते। रुद्राहुतौ शिवालये धूपने शिवतुल्यः स्यात्।

## अथ दीपाः।

भविष्यपुराणे,—

घृतदीपप्रदानेन शिवाय शतयोजनम्।
विमानं लभते दिव्यं सूर्य्यकोटिसमप्रभम्॥

कार्त्तिके मासि विशेषतश्च चतुर्द्दश्याममावास्यायां दीपमालाकरणे दीपसंख्ययुग-सहस्राणि रुद्रलोके महीयते। शिवायतने दीपदत्तोद्बोधने शिवलोकाप्तिः। शिवस्याग्रतः शिरसि ललाटे हस्ताभ्यां वचसा दीपधारणे सकलरात्रिनयने कल्पायुतशतं दिव्यं शिवलोके महीयते। स्कान्दे कार्त्तिके प्रत्यहं दीपमालादान-मन्ते ब्राह्मणभोजनं गाणपत्यफलाय।

अथ नैवेद्यम् ।

शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम् ।
शिवाय तच्चरुं दद्याच्चतुर्दश्यां विशेषतः ॥
संयावकृशरापूपपायसं यावकं तथा ।
घृतपूरादिसंमिश्रमेवमादि प्रकल्पयेत् ॥
यावन्तस्तण्डुलास्तस्मिन् नैवेद्ये परिसंख्यया ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

गुड़खण्डयुतघृतपाचितभक्ष्यनिवेदने फलं शतगुणम् ।

सर्जिकापानकाद्यानां(म्) लक्षं फल माप्यते । (?)

तद्दृक्शासितजनस्य । स्कान्दे,—

दक्षिणाय( न संक्रान्तौ ) पायसं घृतसंयुतम् ।
निवेदयेद् वर्षमेकं स मे न विषमो भवेत् ॥
चरवो दशसाहस्रा यावकश्च चतुर्गुणः ।
शेषाश्च चरवः सर्व्वे यावकार्द्धेन सम्मिताः ।
घृतपात्रं समं स्यादं ? इह प्रेत्य च शाश्वतम् ।
मातुलुङ्गफलादीनि सुपक्वानि निवेदयेत् ॥
शिवाय तत्फलं तस्य यद्भक्ष्याणां निवेदने ।

तथा,—

रुद्रायान्नप्रदानेन यावत् सिक्थोऽमरैः सह ।
षोड़शैवाब्दलक्षाणि वसेत् श्रद्धासमन्वितः ॥

अथ शिवप्रदेयानि ।

भविष्ये,—

सर्व्वेषामेव पात्राणां परं पात्रं महेश्वरः ।
शिवे भक्तं हुतं जप्तं बलिपूजानिवेदनम् ॥
एकान्ततोऽनन्तफलं तद्भवेन्नात्र संशयः ।

तथा, —

वासांसि सुविचित्राणि सारवन्ति मृदूनि च ।
धूपितानि शिवे दद्याद् विकेशानि नवानि च ॥
यावत् तद्वस्त्रतन्तूनां परिमाणं विधीयते ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

त्रिवृत् शुक्लञ्च पीतं वा पट्टसूत्रादिनिर्म्मितम् ।
दत्त्वोपवीतं रुद्राय भवेद् वेदान्तगः सुखी ॥
ब्रह्माण्डतन्तु(?)यो दद्याद्धेमं लिङ्गे समौक्तिकम् ।
इन्द्रस्यार्द्धासने तावद् यावदिन्द्राश्चतुर्द्दश ॥

नन्दिपुराणे,—

मुक्तां मुक्तार्द्धमात्रं वा अर्द्धं वा प्रतिवासरम् ।
कनकं यस्य लिङ्गे तु लभेत् पदमनुत्तमम् ॥
एवमर्थानुसारेण फलं ज्ञेयं समासतः ।
योऽर्कपत्रपुटे कृत्वा मधुपर्कममन्त्रकम् ।
निवेदयति सर्व्वाय सोऽश्वमेधफलं लभेत् ॥

भविष्ये,—

सर्व्वस्य पुरतो दत्त्वा दर्पणन्तु सुनिर्म्मलम् ।
कल्पायुतसहस्रन्तु शिवलोके महीयते ॥

तथा,—

श्वेतं महाध्वजं दत्त्वा परं याति शिवान्तिकम् ।

शिवगृहे ध्वजमालादानेऽष्टदिक्षु ध्वजाष्टकदाने वा कल्पायुतशतं वा दिवि मोदते। स्कान्दे,—

छत्रं + दद्यात् यः सोऽपि दीप्यते तेजसा सह ।

भविष्ये,—

शरच्चन्द्रांशुविमलं मुक्तादामोपशोभितम् ।

मणिकाञ्चनान्यतमदण्डं छत्रं दत्त्वा विचित्रच्छत्रशोभितो विमानशतसम्भोगैः शिवपुरे चिरं स्थित्वा ससमुद्रपर्य्यन्तां महीं भुङ्क्ते। ब्रह्मलासमायुक्तमहाघनकांस्य लोहान्यतमसयघण्टायाः शिवालये बन्धने घोषाकर्ण(?)शततुल्यः शिवलोके महीयते। शिवाय पयस्विनीगोदाने सचराचरजगद्दानफलम् ।

वृषभं शुक्लवर्णं वा नीलं वा विनिवेदयेत् ।
यावत्प्रसूतिरोमाणि तत्प्रसूतिकुलेषु वै॥
तावद्युगसहस्राणि शिवलोके महीयते।
शिवाग्निकार्य्ये कपिलां दत्त्वा गोशतजं फलम् ॥
क्रोशमात्रं परं क्षेत्रं शिवस्य परमात्मनः ।
देहिनां तत्र मृत्युर्न्तं शिवसायुज्यकारणम् ॥

मनुजैः स्थापिते लिङ्गे चोत्तमानमिदं स्मृतम् ।
स्वायम्भुवे सहस्रस्य दीर्घं चैव तदर्द्धकम् ॥(१)
यः कुर्य्याद् दीर्घिकां वापीं कूपं वापि शिवालये ।
त्रिसप्तकुलसंयुक्तः शिवलोके महीयते ॥

स्कान्दे,— दद्यात् कृष्णतिलांश्चैव तथा सिद्धार्थकांश्च हि ।
यो मे देवि महाभक्त्या स मे न विप्रियो भवेत् ॥

तथा,— गोचर्म्ममात्रमपि वा यो मे दद्याद् वसुन्धराम् ।
स मे पुरं समासाद्य गणेशैः सह मोदते ॥

अथ शिवधर्म्माः।

तत्वसारसंहितायाम्,—

भस्मपुण्ड्री भवेन्नित्यं शिवपूजापरायणः ।
सिद्धक्षेत्रनिवासी च शैवीं सिद्धिमवाप्नुयात् ॥

तथा,— लिङ्गार्च्चनं रुद्रजपो व्रतं शिवदिनत्रये ।
वाराणस्याञ्च मरणं मुक्तिरेषा चतुर्विधा ॥
एकादश्यष्टमी चैव चतुर्दशी शिवप्रिया ।
तासामाद्यामुपवसेद् विना नाद्यात् तयान्ययोः ॥

अत्र शिवप्रीत्यर्थं एकादशीव्रते शिवपूजावश्यकम् ।

कालोत्तरे,—

दीक्षितानां क्रमेणैव शिवाचारो निगद्यते ।
किं वर्ज्यं किञ्च कर्त्तव्यं शिवमार्गे स्थितेऽध्यय ॥
अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोस्तथा ।
व्यतीपातेषु सर्व्वेषु दिनवृद्धौ दिनक्षये ॥
संक्रान्तावयनाख्यान्तु षडशीतिमुखे तथा ।
द्विगुणं पूजनं होमं जपं मन्त्रेण वर्त्तनम् ॥
भीतेषु रक्षणं कार्य्यं वात्सल्यञ्च तपस्विषु ।
कारुण्यं सर्व्वभूतेषु क्षमा सत्यमचापलम् ॥
अन्टतं गुरुदेवार्थे न दोषाय प्रकल्पते ।
रुद्राक्ष(१) कण्ठकार्य्यं + समञ्च विषमं दृढम् ॥
एकत्रिपञ्चवदनं यथालाभन्तु धारयेत् ।
द्विचतुःषण्मुखं शक्तमन्नणं तीक्ष्णकण्टकम् ॥

दक्षबाहौ शिखायां वा धार्य्यन्तु चतुराननम्॥
अधारणान्महादोषः सिद्धयस्तस्य दूरतः।
रुद्राक्षो धारणीयस्तु दीक्षितैश्चाप्यदीक्षितैः॥
नित्यं हेममयी धार्य्या मुद्रिका दक्षिणे करे।
पद्मरागान्विता कार्य्या नीलेन रचिताऽथवा॥
धार्य्ये विचित्रहेमाढ्ये कुण्डले रचनान्विते।
शिवसंज्ञा द्विजस्यैव कवराख्या(?)न्यपस्य च॥
वैश्यानां शैवसंज्ञा च शूद्राणां + गणान्वितम्।
अनाथदुर्ब्बलं भीतं दुर्गस्थं न परित्यजेत्॥
गवासुत्थापनं कार्य्यं मग्नानां कर्दमेषु च॥
चोदको बोधकश्चैव मोचकस्तु तृतीयकः।
शिववत् पूजयेत् सर्व्वान् यदचेभो यदा नृणाम्॥
यः प्रेरकस्तु जन्तूनां शिवे प्रेतस्य चोदकः।
दीक्षागुरुर्म्मोचकस्तु बोधकः शास्त्रदर्शकः॥

तथा,—

स्नानं पूजा जपो ध्यानं होमश्चैव तु पञ्चमः।
इति नित्यं सदा कुर्य्यात् परमास्त्रं विवर्ज्जयेत्॥
पूजनीयो महादेवो नापरं मनसा स्मरेत्।
न वामहस्ते पूजा तु कर्त्तव्या मनसा ऽपि॥
वामहस्तेन लिङ्गन्तु नैव स्प्रष्टव्यं कदाचन।
वामाचारो न कर्त्तव्यः तत्र निन्दां च वर्जयेत्॥
न निन्दाकरणं देवो न शास्त्रं शिवभाषितम्।
शङ्करो नार्च्चितो यावत् तावन्नान्यत्समाचरेत्॥
शिववत् शिवभक्तास्तु द्रष्टव्याः शिवमिच्छता।
न शून्यमस्तकं लिङ्गं दृष्ट्वा यायात् कदाचन॥

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे नानाविधशिवाराधनकर्म्माणि।

---

## [1]ब्रह्मणः ।

भविष्यपुराणे,--सम्मार्जने चान्द्रायणफलम् । लेपने अग्निष्टोमफलम् । मुखक्षालनम् । [ [2]दन्तधावनम् ।] पञ्चविंशतिपलमितघृतेनाभ्यङ्ग्य वर्षकोटिसहस्रार्जितपापक्षयः । यवगोधूमचूर्णैरुद्वर्त्तनम् । [3]तप्तेन शीतेन जलेन स्नानम् । स्नानकाले गीतनृत्यादि पूर्व्ववत्फलदम् । नीराजनं पूर्व्ववत् । कल्पकोटिसहस्रार्जितपापक्षयार्थं ब्रह्माणं घृतेन स्नापयेत् । शुक्लप्रतिपदि घृतस्नानादेकविंशकुलमुद्धृत्य ब्रह्मलोकप्राप्तिः । क्षीरस्नाने गवायुतदानफलम् । चतुःषष्टिपलपयसा स्नानं ब्रह्मलोकाप्तये । दध्ना स्नानाद् विष्णुलोकप्राप्तिः । इक्षुरसस्नानाद् ब्रह्मलोकप्राप्तिः । मन्त्रपूतकपिलापञ्चगव्यकुशवारिस्नानं पूर्व्वतः शतगुणम् । फलोदकस्नानादर्कसालोक्यम् । सर्व्वौषधिस्नानात् कामगविमानेन ब्रह्मलोकप्राप्तिः । गन्धचन्दनोदकेन स्नानाद्रुद्रलोकप्राप्तिः । पाटलोत्पलकरवीरपद्मानामेकतमोदक[4]स्नानाद् ब्रह्मलोकप्राप्तिः । कर्पूरागुरुतोयस्नानाद् ब्रह्मलोकप्राप्तिः । गायत्रीशतजप्तनिर्मलाम्भःस्नानं ब्रह्मलोकदम् । शीताम्बुना धारोष्णपयसा घृतेन च क्रमात् स्नपयित्वा

(१) Y. अथ ब्रह्मणो नानाविधकर्म्माणि ।

(२) D. Omits the portion bracketed.

(३) Y. उष्णेन शीतलेन ।

(४) D. स्नानेन ।

पूजां कृत्वाश्वमेधसहस्रफलम् । स्नानपात्रविशेषात् फलविशेषः पूर्व्ववत् ।

ब्राह्मणो दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
स्पर्शनादर्च्चनं श्रेष्ठं घृतस्नानमतः परम् ॥ *

---

* Y. Reads the following after this mark :—

भविष्ये,—

यथानुलेपनं कृत्वा दिव्यैर्गन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं ब्रह्मलोके महीयते ॥
गन्धानुलेपनं पुण्यं लेपनं चन्दनस्य च ।
चन्दनादगुरोर्ज्ञेयं पुण्यमष्टगुणं नृप ॥
कृष्णागुरोर्विशेषेण द्विगुणं फलमादिशेत् ।
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते ॥
यः समालभते कश्चु चन्दनागुरुकुङ्कुमैः ।
कर्पूरवारिभिर्मिश्रैस्तथा कस्तूरिकान्वितैः ॥
वर्षाणाञ्च कोटिशतं विहृत्य त्रिदशालये ।
पुनः संजायते भूमौ राजराजो न संशयः ॥
चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः ।
ब्रह्मणोऽङ्ग(?) समालिप्य कल्पकोटिं वसेद् दिवि ॥
संयोज्य ताम्बूलेन शुभगन्धैः प्रलेपितम् ।
दशवर्षसहस्राणि वीर मित्रपुरे वसेत् ॥
भक्त्या निवेद्य ब्रह्मार्थं ताम्बूलं नराधिप ।
दशवर्षसहस्राणि वीर मित्रपुरे वसेत् ॥
मायूरव्यजनं कृत्वा ब्रह्मणेऽतीवशोभनम् ।
कल्पकोटिशतं पूर्णं प्रभञ्जनपुरे वसेत् ॥
दद्याद् ब्रह्मणे च परं (?) मणिरत्नविभूषितम् ।
हेमरौप्यादिदण्डं वा तस्य पुण्यफलं शृणु ॥
चामरव्यग्रहस्ताभिर्दिव्यस्त्रीपरिवारितः ।
महागौरविमानस्थश्चिरं ब्रह्मपुरे वसेत् ॥

अत्र ब्रह्मपूजायां यद्यपि पुष्पाणि नोक्तानि तथापि प्रपञ्चसारादिषु पूजासामान्योक्तानि ग्राह्याणि। एवं गणपत्यादिदेवतान्तरपूजायाम्। विशेषतस्तु भविष्ये,—

पाटलोत्पलपद्मानि करवीराणि सर्व्वदा।
ब्रह्मणेऽर्पणानि (परानि) योज्यानि स्थिराणि सुरभीणि च॥

इत्येवं ब्रह्मणोक्तानि पुष्पाणि पूजायां ब्राह्मणैर्ग्राह्याणि। यदा तु

शिवपूजाङ्गपुष्पाणि वैष्णवेनार्चितानि वै।
अन्येषामपि देवानां कथितानि मनीषिभिः॥

इति वचनात् क्रियते तदा शिवपुष्पाण्यपि ब्रह्मणो गणेशस्य कार्त्तिकेयादेश्च बोध्यानि।

अथ नैवेद्यम्।

देवतानाञ्च यो दद्याद्भक्ष्यार्थं श्रद्धयान्वितः।
शिवकृते शिवकृते वसेद्धुतं समानकमरैः सह॥
एतद्गुणगुणं पुण्यमन्येषां गुणसंयुते।
यो दद्याद् ब्रह्मणेऽन्नानि तस्माद्द्विगुणितं फलम्॥
तस्माद् विष्णौ च दत्वान्नं द्विगुणं फलमश्नुते।
रुद्रायान्नप्रदानेन फलमेतच्चतुर्गुणम्॥

यत्तु भविष्ये ब्रह्मनैवेद्यमधिकृत्य।

खण्डलड्डुकश्यावेषकारघाणेकवर्त्तका।
खज्जिका लोपिका दुग्धा ध्यावेष्टकञ्जिलाञ्जिका॥
फलानि घनाघन(घन)पक्वानि खाद्यानि विविधानि च।

इति तत् पूजानैवेद्यार्थं।

अथ ब्रह्मधर्म्माः।

तत्त्वसारसंहितायाम्,—

ब्रह्ममार्गे समश्नीयात् पद्मपत्रे तथोत्तरे।
जपेत् पद्मोद्भवैर्बीजैः पद्मपीठसमीपतः॥
यज्ञोपवीतदाता स्याद् ब्राह्मणानां शुचिः सदा।
एवं यो वर्त्तते नित्यं जन्मजन्मान्तरेष्वपि।
चतुर्वेदी च तु भूत्वा पुनर्ब्रह्मत्वमाप्नुयात्॥

इति नित्याचारप्रदीपे नानाविधब्रह्माराधनकर्म्माणि।

## [1]अथ विष्णोः ।

नरसिंहपुराणे,—

नरसिंहगृहे नित्यं यः सम्मार्जनमाचरेत् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके स मोदते ॥
गोमयेन मृदा तोये यः कुर्य्यादुपलेपनम् ।
चान्द्रायणफलं प्राप्य विष्णुलोके महीयते ॥
निर्माल्यमपकृष्याथ तोयेन स्नाप्य केशवम् ।
नरसिंहाकृतिं राजन् सर्व्वपापैः प्रमुच्यते ॥
[2]गोदानस्य फलं प्राप्य यानेनाम्बरगोभिना ।
नरसिंहपुरं प्राप्य मोदते कालमक्षयम् ॥

वराहपुराणे,—

पश्चादालेपयेद् भूमिं गोमयेन दृढ़व्रतः ।
तस्य दृष्ट्वा विलिपन्तु मम तुष्टिः प्रजायते ॥
लिप्यमानस्य विद्यन्ते यावन्तो जलविन्दवः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
अभ्युक्षणं च यः कुर्य्यात् पानीयेन सुरालये ।
स शान्तपापो भवति नात्र कार्य्या विचारणा ॥
हरेर्गृहं सदा यस्तु तुलसीदलविप्रुषैः ।
त्रिसन्ध्यं प्रोक्षयेद् भक्त्या महापापैः प्रमुच्यते ॥

---

(१) Y. अथ सकलदेवताराधनप्रयोजनभूतनाना विधविष्णाराधनमभिधीयते ।
(२) गोप्रदानफलं ॰

तथा,—

कल्यमेव समुत्थाय हन्याद् भेरीं यथोदिताम्।
यदि भेरी न विद्येत कवाटं तत्र वादयेत्॥
दीपं न ज्वालयेद् यावत्तावद्देवं न संस्पृशेत्।
दीपं प्रज्वालयित्वा तु हस्तशौचन्तु कारयेत्॥
चरणौ वन्दयित्वा तु दन्तकाष्ठमुपानयेत्।

तथा—

निर्माल्यं शिरसः कश्चिद् भक्त्या चापीह्य मानवः।
कुर्य्यात्तु मुखकर्म्माणि स्वच्छेन सलिलेन च॥

अत्र द्वारोद्घाटनदन्तधावनादिषु वराहपुराणीयमन्त्राम्नानेऽपि प्रणवेन सर्व्वं करणीयम्। "यः प्रणवमधीते स सर्व्वमधीते" इति सर्व्वमन्त्रप्रत्याम्नातत्वेन तापनीयश्रुतौ [1]प्रणवस्य विधानात्। नरसिंहपुराणे,—

गीतवाद्यादिकं नृत्यं शङ्खतुर्य्यादिनिःस्वनम्।
यः कारयित्वा विष्णोस्तु सन्ध्यायां मन्दिरे नरः॥
सर्व्वकालेऽविशेषेण कामगः कामरूपवान्।
स्वर्गात् स्वर्गमनुप्राप्य विष्णुलोके महीयते॥

---

(1) Y. प्रणवविधानात्।

## अथ स्नानम्।

तत्र प्रथमभ्यञ्जनम्। वाराहे,—

शीघ्रमभ्यञ्जनं कुर्य्याद् दद्यात् तैलं घृतञ्च यत्।

"अभ्यङ्गे पञ्चविंशती"ति पञ्चविंशतिपलमिततैलं घृतञ्च तावत् तथा शिरसि प्रदद्यात् पश्चात् दक्षिणाङ्गे ततो वामाङ्गे।

[1]पश्चात् पृष्ठे पुनश्चैव पादौ पश्चात् कटिं तथा।

एवमभ्यञ्जनानन्तरमुद्वर्त्तनम्। वाराहे,—

कलायस्यापि चूर्णेन पिष्टचूर्णेन वा पुनः।

एतेनोद्वर्त्तनं कुर्य्याद् गन्धद्रव्यैश्च संयुतम्॥

नारसिंहे,—

[2]यवगोधूमचूर्णैश्च उद्वर्त्त्योष्णेन वारिणा।

प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्॥

तोयेन भक्त्या संस्नाप्य विष्णुलोके महीयते।

स्नाप्य दध्ना सकृद्विष्णुं [3]विष्णुलोकमवाप्नुयात्॥

यः करोति हरेरर्च्चां स्नापनं मधुना नरः।

अग्निलोके स मोदित्वा पुनर्विष्णुपुरे वसेत्॥

घृतेन स्नापनं यस्तु पर्व्वकाले विशेषतः।

---

(१) Y. पश्चात् पृष्ठे ततः पादयो(ः) ततः कट्याम्। एवमभ्यञ्ज०

(२) Y. यवगोधूमजैश्चूर्णैरुद्वर्त्त्यौ०

(३) विष्णुलोके महीयते।

नरसिंहाकृतेः कुर्य्यात् शङ्खभेरीनिनादितम् ।
पापं सकलमुन्मुच्य विष्णुलोके महीयते ॥
पञ्चगव्येन देवेशं यः स्नापयति भक्तितः ।
[1][ब्रह्मकूर्चविधानेन विष्णुलोके महीयते ॥]

[2]ब्रह्मकूर्चविधानं न परिमाणार्थं "स्नाने पलशतं ज्ञेय"मिति परिभाषणात् । किन्तु

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसीति घृतञ्चैव देवस्यत्वा कुशोदकम् ।

इति मन्त्रप्राप्त्यर्थम् ।

पयः काञ्चनवर्णायाः श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलायाश्च तथा घृतम् ॥
दधि च कृष्णवर्णाया एतद् वै पञ्चगव्यकम् ।
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ।
दध्नि वायुः सदा देवः सोमः क्षीरे घृते रविः ॥

आलोद्य निर्मथ्य प्रणवेन मूलमन्त्रेण स्नानम् ।

पादपीठन्तु यो भक्त्या बिल्वपत्रेण घर्षयेत् ।
उष्णाम्बुना च प्रक्षाल्य सर्व्वपापैः प्रमुच्यते ॥
कुशपुष्पोदकस्नानाद् ब्रह्मलोकमवाप्नुयात् ।
रत्नोदकेन सावित्रं कौवेरं हेमवारिणा ॥

---

(१) Y. Omits the portion brackated.

(२) Y. ब्रह्मकूर्चविधाने परिमाणार्थं स्नानं शतपलं ज्ञेयमिति परिभाषणात् ।

नरसिंहन्तु संस्नाप्य कर्पूरागुरुवारिणा ।
इन्द्रलोके स मोदित्वा पश्चाद् विष्णुपुरे वसेत् ॥
पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तमः ।
सावित्रं लोकमासाद्य विष्णुलोके महीयते ॥

विष्णुधर्म्मे,—

आह्लादं निर्वृतिं स्वास्थ्यमारोग्यञ्च सुरूपताम् ।
सप्तजन्मान्यवाप्नोति नरः स्नानप्रदो हरौ ॥
[2]स्नानार्थं सुरभीक्षीरं महिष्याद्यास्तु वर्ज्जिताः ।
दुःस्वप्ननाशनं श्रेयममङ्गल्यविनाशनम् ॥
मङ्गल्यवृद्धिदं दध्ना स्नपनं द्विजसत्तमाः ।
स्नाप्य दध्ना सकृद्विष्णुं विष्णुलोकमवाप्नुयात् ॥
गवां शतस्य विप्रेभ्यः सम्यग्दत्तस्य यत्फलम् ।
घृतप्रस्थेन तद् विष्णोर्लभेत् स्नानान्नसंशयः ॥
अयने विषुवे प्राप्ते यः स्नापयति केशवम् ।
घृतप्रस्थेन वै पापं सकलं स व्यपोहति ॥
पलं सुवर्णाश्चत्वारः प्रस्थः षोड़शकं पलम् ।
वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ।
तद्घृताभ्यञ्जनाद् विष्णोर्दहेत् सर्व्वं न संशयः ॥

अभ्यञ्जनं पञ्चविंशतिपलेन ।

रोगार्त्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।

---

(२) Y. स्नानार्थे ।

भयान्मुच्येत [1]भीतश्च घृतेन स्नापयन् हरिम् ॥
प्रतिमासं सिताष्टम्यां घृतेन जगतीपतिम् ।
स्नापयित्वा समभ्यर्च्य सर्व्वपापैः प्रमुच्यते ॥
द्वादश्यां पञ्चदश्याञ्च गव्येन [2]माहिषेण वा ।
स्नपनं देवदेवस्य महापातकनाशनम् ॥

मधुना स्नानाद् विष्णुलोकप्राप्तिः । इक्षुरसेन विद्याधरलोकः । खण्डेन स्नाने पापक्षयपूर्व्वकविष्णुलोकमहि(त)त्वम् । [3]बीजोदकस्नानात् क्रियासाफल्यम् । पुष्पोदकेन श्रीलाभः । फलतोयेन क्रियासाफल्यम् । [4]पञ्चामृतस्नानं महापातकनाशनम् ।

तत्रैवम्,—

दुग्धेन दध्ना चाज्येन मधुना चैक्षवेण च ।
प्रत्येकं जलपुष्पाभ्यां धूपेनान्तरितं तथा ॥
अश्वःपलैश्चतुर्भिस्तु [5]सम्पूर्णं गडुकं स्मृतम् ।
गडुकञ्चाष्टलोहोत्थं कर्षाभ्यधिकषट्पलैः[6] ॥
गडुकानि जलस्याथ प्रदेयानि यथाविधि ।
शतञ्चाष्टोत्तरञ्चैव तथाचाष्टौ सदैव हि ॥

(१) Y. भीतस्तु ०
(२) Y. हविषा स्वयं ।
(३) Y. बीजोदकेन स्नानात् ०
(४) Y. पञ्चामृतस्नानेन महापातकनाशः ।
(५) Y. सम्पूर्णगडुकं ०
(६) Y. षट्पदैः ।

अनुक्तपरिमाणस्नाने पलशतम्।

मृत्कुम्भात् ताम्रकुम्भैस्तु स्नानं दशगुणं स्मृतम्।
रौप्यैर्लक्षोत्तरं प्रोक्तं हैमैः कोटिगुणं भवेत्॥
जलाढ़कसुपूरांस्तु लोहजान् कारयेद् घटान्।
अष्टाविंशाधिकशतपलपूरांस्तु मार्त्तिकान्॥

स्कान्दे,—

शङ्खस्थितेन तोयेन यः स्नापयति केशवम्।
कपिलाशतसहस्रस्य दत्तस्य फलमश्नुते॥

अक्षतपुष्पान्वितशङ्खतोयस्नानात् पूर्व्वकृतपापक्षयः। तिलकुसुमयुतशङ्खतोयस्नानाद् विष्णुलोकप्राप्तिः। अष्टाक्षरेण शङ्खस्थितगन्धोदकस्नानान्मोक्षः। शङ्खस्थतीर्थजलस्नानात् कुलशतोद्धारः। शङ्खस्थितकपिलाक्षीरस्नानाद् यज्ञायुतसहस्रफलम्। "अश्विनोर्भैषज्येन" इति "अभिषिञ्चामि" इत्यन्तेन स्नानकाले नृत्यादिकरणम्। [¹स्कान्दे],

कृष्णं सन्तोषयेद् यस्तु सुगीतैर्मधुरैः स्वरैः।
सामवेदफलं तस्य जायते नात्र संशयः॥
यो नृत्यति प्रहृष्टात्मा भावे बाह्ये च भक्तितः।
स निर्दहति पापानि मन्वन्तरशतेष्वपि॥
गीतवाद्यादिनिर्घोषं देवदेवस्य कारयेत्।
घण्टाऽभावेऽप्यशक्तस्य सर्व्ववाद्यमयो यतः॥

---

(१) Y. Omits the portion bracketed.

जयकारस्य करणाद् वन्द्यो भवति भूतले।
पदे पदे क्रतुफलं यात्रानुगमनं हरेः॥
[[1]सर्व्वं सम्पूर्णतामेति * * * * * * * * *।]
स्तोत्रैः स्तुत्वा हरिं पापान्मुक्तो विष्णुपुरे वसेत्॥

स्कान्दे,—

स्नानार्चनक्रियाकाले घण्टानादं करोति यः।
मन्वन्तरसहस्राणि मन्वन्तरशतानि च॥
घण्टानादेन देवेशः प्रीतो भवति केशवः।
वेणुवीणास्वनेनैव करोति स्नपन हरेः॥
मृदङ्गवाद्येन युतं पणवेन समन्वितम्।
अर्चनं वासुदेवस्य सनृत्यं मोक्षदं नृणाम्॥
स्नानकाले च देवस्य पठेन्नामसहस्रकम्।
प्रत्यक्षरं भवेत् पुण्यं कपिलागोशतोद्भवम्॥
गीतवाद्याद्यभावे तु कुर्य्यात् पुस्तकवाचनम्।
न लौकिकैः स्तवैर्देवांस्तोषयेद् वाह्यजैरपि॥

वाह्यजै बौद्धाद्यागमस्थैः।

[2]लौकिकनिषेधापवादमाह,—

अदुष्टलक्षणैः देवं स्वयं विरचिताक्षरैः।
स्तुवन् ब्राह्मणशार्दूलाः सर्व्वान् कामानवाप्नुयात्॥

---

(१) Y. Omits the portion bracketed.

(२) Y. लौकिकविशेषापवादमाह।

तथा,—कुर्य्यादारत्रिकं यस्तु कल्पकोटिं वसेद् दिवि ।

मन्त्रहीनं क्रियाहीनं यत् कृतं पूजनं हरेः ।

सर्व्वं सम्पूर्णतामेति कृते नीराजने सुत ॥

नीराजनञ्च स्वर्णादिपात्रे गोमयादिकृतपद्मकस्वस्तिकश्रीवत्स-कौस्तुभध्वजसहित[३]दूर्व्वाचतचूतन्यग्रोधाश्वत्थपत्रसहिते नानावर्त्ति-युक्तदीपं कृत्वा वन्दापनम् । [४]स्कान्दे,—

कृष्णाग्रतो महाभक्त्या कुर्य्यात् पुस्तकवाचनम् ।

प्रत्यक्षरं लभेत् पुण्यं कपिलाशतदानजम् ॥

ऋग्यजुःसाममन्त्रैश्च कृष्णं सन्तोषयन्ति ये ।

कल्पान्तं ब्रह्मलोके [५]तु ते वसन्ति द्विजोत्तमाः ॥

योगशास्त्राणि वेदान्तं [६]ये जनाः कृष्णसन्निधौ ।

पठन्ति रविबिम्बं ते भित्त्वा यान्ति न संशयः ॥

यः पठेद्रामचरितं भारतं व्यासभाषितम् ।

पुराणानि महीपाल प्राप्ता मुक्तिं न संशयः ॥

तथा,—अगम्यागमने पापमभक्ष्यस्य च भक्षणे ।

सर्व्वं तन्नाशमायाति मण्डयित्वा हरेर्गृहम् ॥

अणुमात्रञ्च यः कुर्य्यान्मण्डनं केशवाग्रतः ।

मृदा धातुविकारैश्च कल्पकोटिं वसेद् दिवि ॥

---

(३) Y. दधिदूर्व्वा ।

(४) Y. स्कन्दपुराणे ।

(५) Y. ०च०

(६) D. योगिनः० ।

सर्व्वतोभद्रमण्डलं परिभाषायामुक्तम्।

शालग्रामशिलाग्रे तु यः कुर्य्यात् स्वस्तिकं [1]शुभम्।
कार्त्तिके तु विशेषेण पुनात्यासप्तमं कुलम्॥
स्वस्तिकं माधवस्याग्रे य कुर्य्याद् बहुरूपकम्।
सप्तजन्मानि वैधव्यं न [2]साप्नोति कदाचन॥

[3]स्वस्तिकमण्डलञ्चैवम्,—

अष्टादशाष्टादशकैः पदानां त्रिशतं भवेत्।
चतुर्विंशाधिकं तत्र मध्ये षट्त्रिंशताम्बुजम्॥
स्वस्तिकाष्टकमाशासु लिखेद् विधिवदीदृशम्।
षट्त्रिंशत्कोष्ठकैरेकं स्वस्तिकं दिशि कारयेत्॥
पद्मावसानसूत्राणि स्थापितानि न लोपयेत्।
एकं त्रीणि वहिः पञ्च नव कोष्ठस्य मार्जनात्॥
अथ द्वादशकोष्ठैस्तु स्वस्तिकं कार्य्यमीदृशम्।
षोड़शषोड़शकोष्ठैस्तु स्वस्तिकाष्टकमालिखेत्॥
अन्तरेकं वहिस्त्रीणि स्यादेवं कोष्ठमार्जनम्।
पदैः षोड़शभिर्मध्ये [4]पद्मकं परिकल्पयेत्॥
मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः।
रजोभिः पूरयेत् तानि स्वस्तिकानि शिवादितः॥

---

(१) Y. स्त्वहम्।
(२) D. प्राप्नोति।
(३) Y. स्वस्तिकमण्डलं यथा।
(४) D. पद्मञ्च।

महापातकयुक्तोऽपि पातकी चोपपातकी ।
विमुक्तपापो भवति विष्ण्वायतनचित्रकृत् ॥
यावन्ति विष्णुरूपाणि सुरूपाणि [1]विलेखयेत् ।
तावद्युगसहस्राणि विष्णुलोके महीयते ।

स्कान्दे,—त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥
नमितः सर्व्वदेवैस्त्वं पाञ्चजन्य नमोऽस्तु ते ।

इति शङ्खमादाय,—
शङ्खे कृत्वा तु पानीयं भ्रामयेत् केशवोपरि ।
वारि धेनुसहस्राणां [2]फलं प्राप्नोति तावता ॥

स्नानान्ते—देवस्य मस्तकं कुर्य्यात् कुङ्कुमोपहितं सदा ।
इति वचनान्मस्तके पुष्पं दद्यात् ।
भ्रामयित्वा हरेर्मूर्द्ध्नि मन्दिरं शङ्खवारिणा ।
प्रोचयेद् वैष्णवो यस्तु नाशुभं तद्गृहे भवेत् ॥
कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम् ।
यो ददाति तिलैर्मिश्रं चान्द्रायणफलं लभेत् ॥*
[3][इति विष्णुस्नानकार्य्याणि ।

---

(१) Y. लिखेखयेत् ।
(२) Y. फलमाप्नोति ।
(३) Y Omits the portion bracketed.

---

* Y reads the following after this mark :—

अथ महास्नानम् ।
महास्नानेन गोविन्दं सम्यक् संस्नाप्य मानवः ।
सर्व्वान् कामानवाप्नोति नात्र कार्य्या विचारणा ।

राजाग्निचौरदुर्भिक्षमहारोगाद्युपद्रवे।
उत्तमं स्नपनं कार्य्यं सर्व्वरोगोपशान्तये॥

तद्विधिः,—

अस्त्रेण रक्षयेद्‌ दुग्धं कवचेनावगुण्ठयेत्।
अमृतीकरणं कृत्वा वासुदेवेन मन्त्रयेत्॥
अभिषेकञ्च मूलेन गण्डूकानां ततो भवेत्।
अर्घ्यादिधूपपर्य्यन्तं कृतो (ततो विष्णुं) समर्चयेत्॥

एवं दध्यादिमन्त्रविशेषः दधि सङ्कर्षणेन। घृतं प्रद्युम्नेन। मध्वनिरुद्धेन। खण्डं नारायणेन। ओँ नमो भगवते वासुदेवाय। ओं नमो भगवते सङ्कर्षणाय ओं नमः। ओँ ओं नमो भगवते प्रद्युम्नाय ओँ ओं नमः। ओँ नमो भगवते प्रद्युम्नाय (अनिरुद्धाय) ओं अं नमः। ओँ ओँ ओँ नमो भगवते वासुदेवाय ओँ ओँ ओँ नमः।

तथा,—

सर्पिःपलसहस्रेण गोविन्दस्य शिवस्य वा।
महास्नानं नरः कृत्वा सर्वपापैः प्रमुच्यते॥

बृहत्कालोत्तरे—

पयोदधिघृतानाञ्च सहस्रैष्टोत्तरद्वयैः।
महास्नानं पलानाञ्च कलानामपि तत्समम्॥

तथा,—

महास्नाने प्रसक्ते तु स्नानमष्टविधं स्मृतम्।
स्वच्छं हैमं सुगन्धञ्च सुरत्नं फलपुष्पकम्॥
सर्व्वौषधिजलञ्चान्यत् स्नापयेत् क्रमशः शुचिः।

अन्यदितिजलान्तरमष्टविधत्वाय। अत्र यद्यपि

पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम्।

इति पञ्चद्रव्येण मिलित्वा सहस्रद्वयमिति प्रतीयते। तथा(पि) सहस्राष्टोत्तरद्वयैरिति पलानामपि तत्सममिति पलाष्टकेऽपि सहस्रद्वयविधानाञ्च प्रत्येकं सहस्रद्वयम्। केवलदुग्धादिमहास्नाने सहस्रद्वयमेव। तत्राप्यष्टद्रव्यस्नानाङ्कृत्वा-ऽऽदेतदङ्गभूतनारिकेलोदकानि (कादि) स्नानं घतपलेन। हैमादुदकान्तात्तु तत्त(त्)द्रव्ययोगेन सुरामांसीत्यादि सर्व्वौषधिगणः। गन्धोदके सर्व्वगन्ध इत्याहुः। चन्दनाभावे अगुरुकुङ्कुमोशीरजटामांसीमुरा इति च।

## महास्नानप्रयोगः।

सार्व्वभौमत्वकामः परमैश्वर्य्यकामो महाशान्तिकामो महारोगोपशमनकामो राजाग्निचोरदुर्भिक्षाद्यन्यतमोपद्रवनिवृत्तिकामो वा विष्णुमूर्त्तौ महास्नानमहं करिष्य इति स्वस्तिवाच्य सङ्कल्प्य वैकालिका (च्छिद्रा) वधारणं कृत्वाचार्य्यं वृणुयात्। अथाचार्य्यः द्वारपालपूजां कृत्वा देवगृहे प्रविश्य पञ्चोपचारेण देवं सम्पूज्य देव त्वां स्नानमण्डपं नयामीति विज्ञाप्य तूर्य्यघोषपूर्व्वकं देवं स्नानमण्डपं नीत्वा तत्र धूपामोदं वितानबन्धनं फलपल्लवपुष्पयुक्तकुम्भचतुष्कस्थापनञ्च कृत्वा दीपद्वयत्रयसृष्ट्यात्य देवदक्षिणेऽष्टाधिकशतपलतैलपात्रे रक्तवर्त्तिं प्रज्वाल्य वामे साष्टशतपलघृतपात्रे शुक्लवर्त्तिञ्च प्रज्वाल्य ततोऽष्टाधिकशतमभितः प्रज्वाल्य स्नानाय द्रव्याणि सन्निधाप्य आसने उपविश्य भावनाचतुष्टयान्तं समन्त्रं न्यासं कृत्वा स्नापनाय मूर्त्तिं ध्यात्वा सामान्यार्घ्यं संस्थाप्य स्नानोपयोगिसर्व्वं प्रोक्ष्य पञ्चोपचारैर्देवं सम्पूज्य

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्।

इति पञ्चगव्यं गृहीत्वा प्रणवेनैकीकृत्य मूलेनाभिमन्त्र्य तेनैव हूदा स्नपनम्। अनन्तरं शुद्धोदकपलशतेन स्नपनम्। सर्व्वत्रानन्तरं स्नानं पलशतेन। मूलेन कुशोदकमभिमन्त्र्य हूदा स्नपयित्वा अनन्तरं स्नानं कृत्वा पञ्चोपचारैः सम्पूज्य मूलाभिमन्त्रितघृतविंशतिपलेन मूलेनाभ्यङ्गानन्तरं संस्नाप्य मूलाभिमन्त्रितशालिपिष्टशतेन मूलेनोद्वर्त्त्य अनन्तरं स्नानं कृत्वा अश्लेष राजिकाभिः सिद्धार्थैर्वा निर्मञ्छ्य मूलाभिमन्त्रितपञ्चविंशतिपलशुद्धामलकेनानुलिप्यानन्तरं संस्नाप्य यवचूर्णेन विरूक्ष्यानन्तरं संस्नाप्यार्घ्यादिधूपान्तैः सम्पूज्य शालिपिष्टमयसप्तवर्त्तिकदीपेन नीराज्योष्णोदकैः संस्नाप्य विशेषार्घ्यं संस्थाप्याष्टोत्तरसहस्रद्वयपलपरिमितं क्षीरं संस्कुर्य्यात् क्षीरमर्घ्याम्बुना प्रोक्ष्य गन्धपुष्पाभ्यामभ्यर्च्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य धेनुमुद्रयामृतीकृत्य ओँ नमो भगवते वासुदेवाय ओँ नम इत्यभिमन्त्र्य सुवर्णादिपात्रे कृत्वा देवं स्नानोदके विचिन्त्य मूलमन्त्रमुच्चार्य्य श्रीकृष्णं क्षीरेण स्नापयामीति स्नापयेत्। कर्षाधिकषट्पलपरिमितहेमादिनिर्मितजलपलचतुष्टयग्राहिशङ्खकेनाष्टोत्तरशतवारं मूलेन स्नपनम्। धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलदधिसंस्कारः। दधि प्रोक्षणादिभिः संस्कृत्य ओँ नमो भगवते सङ्कर्षणाय इत्यभिमन्त्र्य पूर्व्ववद् दध्ना स्नपनं मूलेन। शङ्खकस्नपनं पूर्व्ववत्।

धूपान्तपूजा। अष्टोत्तरसहस्रद्वयपलमिताज्यं संस्कृत्य ओँ नमो भगवते प्रद्युम्नाय नम इत्यभिमन्त्र्य मूलेन स्नपनम्। गडुकस्नानं पूर्व्ववत्। धूपान्तपूजा। अष्टाधिकसहस्रद्वयपलमितमधु प्रोक्षणादिभिः संस्कृत्य ओँ नमो भगवते अनिरुद्धाय ओँ ओं नम इत्यभिमन्त्र्य मूलेन स्नपनम्। गडुकस्नानं धूपान्तपूजा। अष्टोत्तरसहस्रद्वयपलमितं खण्डमिक्षुरसं वा प्रोक्षणादिभिः संस्कृत्य ओँ नमो भगवते नारायणाय ओँ ओँ ओँ नम इत्यभिमन्त्र्य मूलेन स्नपनम्। गडुकस्नानं धूपान्तपूजा पूर्व्ववत्। ततोऽष्टोत्तरशतपलमितनारिकेलोदकं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपनं पञ्चविंशतिपलमितयवगोधूमचूर्णैर्निरुक्ष्य शुद्धोदकेन संस्नाप्य धूपान्तैः सम्पूज्याष्टोत्तरशतपलमितेक्षुरसं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपयित्वा शुद्धोदकेन स्नापयेत्।

अथाष्टविधजलस्नानम्। (?)

धूपान्तैः सम्पूज्याष्टाधिकसहस्रद्वयपलमितस्वच्छजलं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपयित्वा शुद्धोदकेन स्नपयेत्। धूपान्तैः सम्पूज्याष्टाधिकसहस्रद्वयपलमितहिरण्योदकं संस्कृत्य मूलेनाभिमन्त्र्य तेन संस्नाप्य शुद्धोदकेन स्नापयेत्। धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितपद्मजातीपुष्पोदकं संस्कृत्याभिमन्त्र्य स्नपयित्वा शुद्धोदकेन स्नापयेत्। धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितसर्वौषधिजलं संस्कृत्य मूलेनाभिमन्त्र्य तेन संस्नाप्य तेनोदकेन स्नापयेत्। धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितशुद्धोदकं संस्कृत्याभिमन्त्र्य तेन संस्नाप्य तोयेन स्नापयेत्। इति विधिस्नानम्।

अथ सुवर्णाद्यन्यतमकलशे वस्त्रपूतमष्टोत्तरशतपलपरिमितजलं जलदैवतमन्त्रैः पूजयित्वा कुशापामार्गकर्पूरजातीचम्पकपाटलासितकरवीरमल्लिकाकमलोत्पलचन्दनागुरुकुङ्कुमादिकं प्रक्षिप्यानुष्टुप्नारसिंहमन्त्रराजं विन्यस्य मूलेनाभिमन्त्र्य तेन स्नापयेत्। पुरुषसूक्तेन तेनोदकेन स्नापयेत्। प्रणवेन शुद्धोदकेन स्नापयेत्। स्वच्छवस्त्रेणाङ्गप्रोञ्छनम्। कर्पूरादियुक्तचन्दनानुलेपनम्। वस्त्रद्वयपरिधापनम्। स्वर्णपद्मदानम्। स्वच्छसुगन्धिपुष्पमालादानञ्च कृत्वा पुष्पाञ्जलिं दत्वा विलोमार्घ्यजपस्तुतिप्रणामफलसमर्पणोद्वासनानि कृत्वाच्छिद्रावधारणं कृत्वा पूजागारे देवं स्थापयेत्। ततो महास्नानाङ्गत्वेन महापूजा।

पञ्चविंशतिपलमितेन गन्धेनानुलेपनं स्वच्छसुगन्धिपुष्पमाला धूपो दीपा इति महार्घरमायाः। नीलोत्पलबिल्वपत्रपद्मचम्पकादिनानाविधपुष्पाणि। नेत्रपटादिदिव्यवस्त्रम्। भोज्यभोज्यचोष्यपेयादि नानानैवेद्यं द्रमद्रोणमितमन्नं

## अथ दुर्गायाः ।

देवीपुराणे,—

देवीगृहन्तु यः शक्र सम्मार्जयति नित्यशः ।
स भवेद् बलवान् सौख्यधर्म्मसम्पत्तिसंयुतः ॥
देव्या गृहन्तु यः शक्र गोमयेनोपलेपयेत् ।
स्त्री पुमान् वा यथाशक्ति षण्मासाच निरन्तरम् ।
स लभेदीप्सितान् कामान् देवीलोकञ्च गच्छति ॥

भविष्यपुराणे—रक्ताकारमण्डलं देवीगृहे कृत्वा वैष्णवीलोकाप्तिः । पद्माकारमण्डले ब्रह्माणीपुरप्राप्तिः शङ्खचूर्णमण्डलकरणे वाराहीलोकप्राप्तिः । त्रिशूलयुक्तमण्डलेन माहेश्वरीलोकः । वज्रचिह्नितमण्डलेन ऐन्द्रीलोकप्राप्तिः । पीतकृष्णादिवर्णैः श्रीवत्साकृतिमण्डलेन श्रीलोकप्राप्तिः । स्वस्तिकमण्डलेन कल्पान्तममरलोकप्राप्तिः । निर्म्माल्यमपकृष्य दन्तधावनमुखक्षालने ।

घृताभ्यक्तां घृतस्नातां दुर्गां रत्नाद्भिरर्चयेत् ।
यवगोधूमजैश्चूर्णैः घर्षयेद् वल्कलेन च ॥
घृतेन पयसा दध्ना चण्डिकां स्नपयेन्नृप ।
विल्वपत्रैः पादपीठं घर्षयेद् यत्नतस्ततः ।

---

सप्तद्रोणमितं वा । असम्भवे,आढ़कमितम् । दर्पणच्छत्रचामरादिनानाविधपूजोपचाराः । इत्येवं पूजा समाप्ता । आचार्य्यदक्षिणा । इति वृहत्कालोत्तरोक्तविष्णुमहास्नानविधिः ।

गोसहस्रशते दत्ते पुष्करे यत्फलं लभेत् ॥

पिष्टप्रदीपचूताश्वत्थादिपल्लवमेध्यौषधियवादिबीजादर्भैः शङ्ख-भेर्य्यादिनिनादसहिते यावद्दिनं नीराजनं तावत्कल्पसहस्रं दुर्गालोकप्राप्तिः। प्रदीपेन नीराजने सूर्य्यलोकप्राप्तिः। लव-णाचतैर्विष्णुलोकप्राप्तिः। सुवर्णरूप्यैर्ब्रह्मलोकप्राप्तिः। त्रिकालं गीतवाद्यनृत्यकरणे पदसंख्यवर्षसहस्रं ब्रह्मलोकप्राप्तिः। पञ्चगव्य-स्नाने सुरभीपुरप्राप्तिः। कपिलापञ्चगव्यघृतक्षीरैः स्नानं ततः शतगुणम्। वर्षपद्मसहस्रार्जितपापक्षयार्थं घृताभ्यङ्गः। शुक्लनवम्यां घृतस्नानेन एकविंशपुरुषोद्धरणपूर्व्वकं दुर्गालोकप्राप्तिः। क्षीर-स्नानेनेन्द्रीलोकप्राप्तिः। दधिस्नानेन शिवलोकः। इक्षुरसस्नानेन विष्णुलोकः। गन्धचन्दनवारिस्नानेन चन्द्रलोकः। हेमवारि-स्नानेन वसुलोकः। रत्नजलस्नानेन विष्णुलोकः। द्रोणबिल्व-करवीरनीलोत्पलान्यतमपुष्पजलस्नानेन विष्णुलोकः। कर्पूरवारि-स्नानेन चण्डिकासालोक्यम्। अगुरुवारिस्नानेनेन्द्रलोकः। पितॄ-नुद्दिश्य मधुस्नानात् वर्षशतत्रयं पितृतृप्तिः। सर्व्वैरेतैर्युगपत् स्नाने-नाश्वमेधशतसहस्रराजसूयशतफलोत्तरं विष्णुलोकः। पौर्णमास्यां नवम्यामष्टम्याञ्च स्नानस्य वाजपेयफलम्। कुम्भविशेषात् फल-विशेषः। पुष्पवारिणा अर्घ्यदाने स्वर्गः। गन्धोदकार्घ्येण गन्धर्व्व-लोकः। द्वादशाङ्गार्घ्येण दशपद्मसहस्रवर्षं स्वर्गः।

आपः क्षीरं कुशाग्राणि हविरक्षततण्डुलाः।

तिलाः सिद्धार्थकं दूर्व्वा कुङ्कुमं रोचना मधु ॥

इति द्वादशाङ्गार्घ्यः। दारवार्घ्यपात्रेणाग्निष्टोमफलम्।

ताम्रपात्रेण पौण्डरीकफलम्। पलाशपद्मपत्राभ्यां गोसहस्र(दान)-फलम्। रौप्यपात्रेण विष्णुयागफलम्। सुवर्णपात्रेण बहुसुवर्ण-यज्ञफलम्। एवं सर्व्वोपचारपात्रे फलविशेषः।

---

## अथ(सूर्य्य)देवदर्शनप्रदक्षिणनमस्काराः।

भविष्यपुराणे,—

मेरुमन्दरमानोऽपि राशिः पापस्य कर्म्मणः।
आसाद्य भास्करं मर्त्त्यैस्त्वाशयति तत्क्षणात्॥
यः कुर्य्याद्दर्शनं मासमेकाहारो जितेन्द्रियः।
स यत् फलमवाप्नोति न तत् सर्व्वैर्महामखैः॥
पौर्णमास्याममावास्यां दर्शनं पुण्यदं स्मृतम्।
सप्तम्याञ्च तथाष्टम्यां दिवसे च रवेः सदा॥

सकृत्प्रदक्षिणप्रणामाद् राजसूयाश्वमेधफलम्।

त्रिःकृत् प्रदक्षिणीकृत्य नमस्कारात् परां गतिम्।
प्रणम्य दण्डवत् भूमौ गतिं पुण्यशतोद्भवाम्॥

---

## अथ शिवस्य ।

भविष्यपुराणे,—

लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
सकृत्प्रदक्षिणीकृत्य सर्व्वपापैः प्रमुच्यते ॥

स्कान्दे,—

सुदूरमपि गच्छेत यत्र देवो महेश्वरः ।
दृष्ट्वा लिङ्गं महेशस्य पातकैर्विप्रमुच्यते ।
सप्तजन्मकृतैर्देही मनोवाक्कायकर्म्मभिः ॥
पूजितं वा महादेवं पूज्यमानमथापि वा ।
दृष्ट्वा प्रयाति वै मर्त्त्यो ब्रह्मलोकं न संशयः ॥
एकः पूजयते भक्त्या भक्त्या चान्यः प्रपश्यति ।
तुल्यमेव फलं ताभ्यां भक्तिरेवात्र कारणम् ॥
यः प्रातर्देवदेवेशं शिवलिङ्गस्वरूपिणम् ।
पश्येत् स याति सर्व्वस्मादधिकां गतिमेव हि ॥
मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत् ।
सायाह्ने सर्व्वयज्ञानां फलं प्राप्य विमुच्यते ॥

स्कान्दे,—

स्नातो यः पूर्व्वसन्ध्यायां सदा मामभिगच्छति ।
स मृतो यक्षराजस्य मित्रं भवति वीर्य्यवान् ॥

तथा,— प्रातस्तु दर्शनं शम्भो र्नैशमेनो व्यपोहति ।

आजन्मनस्तु मध्याह्ने सप्तजन्मकृतं निशि।
अर्द्धमासकृतं पापं दृष्ट्वा पर्व्वणि सन्त्यजेत्॥
सोमनाथं जगन्नाथं दृष्ट्वा स्पृष्ट्वा विकल्मषः।
जायते नात्र सन्देहः अपि चाण्डालयोनिजः॥

योगशिवीये,—

अङ्गुष्ठमुच्छ्रितं कृत्वा बद्ध्वा मुष्टिञ्च दक्षिणे।
पिण्डिकायां न्यसेल्लिङ्गमङ्गुष्ठेन च संस्पृशेत्॥
उमामहेशमन्त्राभ्यां स्पर्शनं मोक्षकाङ्क्षिणाम्।
शिवोमामन्त्रयोगेन स्पर्शनं भूतिमिच्छताम्॥

भविष्यपुराणे,—

कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः।
अश्वमेधसहस्रस्य यष्टस्य च फलं लभेत्॥

अन्यत्र च—

प्रदक्षिणत्रयं कुर्य्यात् प्रासादस्य समन्ततः।
सव्यापसव्यन्यायेन मृदुगत्या शुचिर्नरः॥
पदे पदेऽश्वमेधस्य यज्ञस्य लभते फलम्।
सव्यं व्रजेत् ततोऽसव्यं प्रणालीं नैव लङ्घयेत्॥

अस्यानेकगुणविधानात् प्रकरणान्तराच्च भिन्नत्वेऽपि सधर्म्मकत्वादधर्म्मके भविष्यपुराणीयप्रदक्षिणेऽतिदेशात् सव्यापसव्यादिधर्म्मप्रवृत्तिः शिवप्रदक्षिणं प्रत्यवान्तरसादृश्यात्। एवमेकीभूतमनाः कुर्य्यात् शिवे च प्रदक्षिणत्रयम्। अत्रापि धर्म्मप्रवृत्तिरेव।

यदपि

चण्डस्य (च) वृषस्यापि देवस्य च शुभार्थिभिः।

मध्ये यात्रा न कर्त्तव्या यत्र लिङ्गं क्रियामयम् ॥

इति

बाणे स्वयम्भूलिङ्गे च सोमसूत्रं न विद्यते।

इति कृत्रिम एव लिङ्गे सोमसूत्रलङ्घनदोषः।

सोमसूत्रप्रणालादिलङ्घने तु महद् भयम्।

इत्यपि सामान्यं कृत्रिमपरमेव। तथापि पुरुषार्थदोषो बाणस्वयम्भु(लिङ्गे)च माभूत्। सव्यापसव्यादियुक्तप्रदक्षिणविधिः स्यादेवाविशेषात्। तन्त्रसारसंहितायाम्,—

अर्घ्यपात्रं तथा पुष्पमर्चनायागसाधनम्।

गृहीत्वा नैव कुर्व्वीत देवतायाः प्रदक्षिणम् ॥

देवशक्तिपरीवारवाहनानाञ्च मध्यतः।

प्रदक्षिणं न कुर्व्वीत कुर्य्यात् सर्व्वस्य वाह्यतः ॥

प्रासादे मण्डपे गेहे वृक्षमूले वनेऽपिवा।

पूज्यन्ते देवता यत्र तत्रैवं विधिमाचरेत् ॥

भविष्यपुराणे,—

नमस्कृत्य महादेवमश्वमेधफलं लभेत्।

प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत्।

स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥

अत्र प्रणामपूर्व्वकाञ्जलिकरणं शिरसि फलाय विधीयते। प्रणामनमस्कारयोर्भेदात्।

जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः।
कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात्॥

भविष्ये,—

सर्व्वदानोपवासेषु सर्व्वयज्ञेषु यत् फलम्।
स्तुतिजप्योपहारेण शिवे तत्फलमाप्नुयात्॥

स्तुतिः शिवस्य। जपः शैवमन्त्रस्य।

शिवाहुत्या जगत् कृत्स्नं दृष्टिपातेन धारयेत्।
यत् सम्यार्थं जगत् पुण्यमग्निकार्य्येण तल्लभेत्॥

अग्निकार्य्यञ्च—

तिलैर्होमः प्रकुर्व्वीत दधिमध्वाज्यसंयुतैः।
अष्टोत्तरशतञ्चाज्यं मूलमन्त्रेण मन्त्रवित्॥

इति वचनादेवं कार्य्यम्। स्कान्दे,—

इदञ्च परमं गुह्यं यो मे देवि निवेदयेत्।
अर्कपर्णपुटं पूर्णं घृतस्य मधुनस्तथा॥
अर्चयित्वा च मां देवि यो मे नामानि कीर्त्तयेत्।
चतुर्द्दश्यामथाष्टम्यां पक्षयोरुभयोरपि।
वामदेव सुदेवेति हरगुप्तेति वा पुनः॥
उमापते नीलकण्ठ शान्त श्रीकण्ठ गोपते।
सर्व्व भीम पशुपते शङ्कर प्रभवेति च।
महादेवेति चाप्यन्यं नाम गुह्यं प्रकीर्त्तयेत्॥

दिवि देवैश्च पूज्यन्ते।

एतेषामेकमपि यः कथयेद् वा पठेत् सदा।
स देहबन्धं भित्त्वा तु मामेव प्रतिपद्यते॥

तथा,—

इमानि तु महाभागे यो मे नामानि कीर्त्तयेत्।
समस्तनिलयो भर्गो भस्मशायी यतक्रतुः॥
वामदेवः प्रशान्तश्च सर्व्वश्चैव त्रिलोचनः।
तापसोऽर्च्चः प्रियः मैत्र्यो यज्ञरूपोऽन्तकालकृत्॥
पुराणः पुरुहूतश्च मृत्योर्मृत्युर्जितेन्द्रियः।
अतीन्द्रियो निरिन्द्रियः सर्व्वभूतहृदिस्थितः॥
संसारचक्री योगात्मा कपाली दण्डिरेव च।
महादेव महादेव महादेवेति चैवहि॥
पठेदेतन्नियमवान् शृणुयाद् वापि यः सदा।
स देहभेदमासाद्य योगात्मा गणपो भवेत्॥

तथा,—

कीर्त्तयन्ति च ये रुद्रं सकृदप्यत्र मानवाः।
सर्व्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि॥
अश्वमेधसहस्राणिर्महादेवेति कीर्त्तनात्।
हरइत्युच्चरन् मर्त्यः सर्व्वपापैः प्रमुच्यते॥
ॐ नमो नीलकण्ठाय इति पुण्याक्षरात्मकम्।
मन्त्रमाह सकृद् वा यः पातकैः स विमुच्यते॥

त्रिपुरहर हरादिदेव शम्भो
त्रिनयन शङ्कर शूलपाणे ।
भव शरणमितीरयन्ति येऽस्मिन्
भवजलधौ न भवन्ति ते मनुष्याः ॥
जयेश्वर महादेव जय भूतपते हर ।
जयाशेषमहापापमोचक त्रिपुरान्तक ।
इति सङ्कीर्त्त्य वृजिनं त्यक्त्वा यान्ति परां गतिम् ॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्व्वाय महादेवाय ते नमः ॥
एतानि मम नामानि यः पठेत् शिवसन्निधौ ।
तस्य मृत्युभयं नास्ति सत्यं सत्यं वदाम्यहम् ॥
सकृदुच्चार्य्य रुद्रेति सर्व्वपापैः प्रमुच्यते ।
हरेति कीर्त्तिते वापि ज्योतिष्टोमफलं लभेत् ॥
¹[भवेति कीर्त्तिते वापि सर्व्व(सर्प)मेधफलं लभेत् ।]
शर्व्वमुक्त्वा नमस्कृत्य शिवलोके महीयते ॥
वेदैरधीतैः किं तस्य महादेवेति यो वदेत् ।
शिवेति सकृदुच्चार्य्य मोक्षमाप्नोति मानवः ॥
अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ।
यः स्मरेद् देवमीशानं न स पापेन लिप्यते ॥
स्कान्दे,— निर्म्माल्यं यो हि मे देवि शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ।

(१) D. Omits the portion bracketed.

नरके पच्यते घोरे तिर्य्यग्योनौ च सम्भवेत् ॥
ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत् ।
तस्य पापं महत् शीघ्रं नाशयिष्ये महाव्रते ॥

अत्र धारणाङ्गतया शुचित्वं विधीयते । तेनाशुचिधारणे दोषः शुचित्वप्ररोचनार्थो न पुनरशुचेर्धारणे नरकपातफलकः । केवलमविहितरुद्रनिर्म्माल्यस्पर्शनमशुचेः स्नाननिमित्तान्तरम् । निर्म्माल्यापकर्षणादेर्विहितत्वात् तदा स्पर्शनं न स्नाननिमित्तम् । तेन शुद्धिकाले धारणमशुद्धिकाले त्यागः । निर्म्माल्यञ्चाङ्गलग्नपत्रपुष्पगन्धघृतादि न तु नैवेद्यं

ब्राह्मे,—रुद्राङ्गलग्नं सर्व्वञ्च दहेत् सर्व्वञ्च तत्क्षणात् ।
इति निर्म्माल्यप्रतिपत्तिमुक्त्वा "भस्माङ्गेभ्यश्च शाम्भव"मिति नैवेद्यस्य पृथक् प्रतिपत्तिविधानात् । यत्तु योगशिवीये,—

वितानच्छत्रचिह्नानि वस्त्रभूषणवाहनम् ।
गोभूहिरण्यदासादि देवद्रव्यमुदाहृतम् ॥
नैवेद्यं गन्धपुष्पाद्यमचिरान्म्लायते च यत् ।
तन्माल्यमुपभुक्तं सन्निर्म्माल्यमभिधीयते ॥
[1]शिवार्च्चारूढनैवेद्यभक्षणं लङ्घनं स्रजाम् ।
दानं वा दीक्षितस्यापि निषिद्धं त्वाम्बकाज्ञया ॥

उभयथापि निर्म्माल्यधारणं शुचिना कार्य्यम् । नैवेद्यस्य निर्म्माल्यभिन्नत्वे च

(1) E. F. शिवार्च्चा रुद्रनैवेद्यं

न भुञ्जीत निवेद्यान्नं गणानाञ्च शिवस्य च ।

इति वाक्यान्तरात्तन्निषेधोऽस्त्येव ।

न धारयेत् क्वचित् शम्भो र्निर्म्माल्यञ्च न दापयेत् ।

इति न धारयेदुपयोगार्थं गृहादौ न रक्षयेदित्यर्थः । एवम्,—

क्रव्यादो जायते दानान्मातङ्गस्तस्य भक्षणात् ।

लङ्घनात् सिद्धिहानिः स्यान्निदध्याद्दहनोदके ॥

इत्यस्य प्रतिपत्तिविधिविशेषत्वेऽपि स्मृत्यन्तरे शिवनिर्म्माल्यदान-भक्षणलङ्घननिषेधादपेक्षितानिष्टफलं स्यादेव । अत्रापवादवाक्यं पठन्ति,—रत्नहेमाश्मलिङ्गेषु चले लिङ्गे प्रदक्षिणे ।

गुरुष्वपि च निर्म्माल्यं नाख्यासु प्रतिमासु च ॥

अत्र प्रदक्षिणपदेन वाणस्वयम्भूलिङ्गमुच्यते । अत्र सोमसूत्रा-भावेन प्रदक्षिणसम्भावनया प्रदक्षिणयोग्यत्वसम्भवात् । गुरुषु स्थूलतरेषु प्रासादं विना वहिःस्थापिताकाशलिङ्गेषु । आख्यास्विति प्रतिमाविशेषणं तेन शिवाख्यासु प्रतिमास्वित्यर्थः । तेन कृत्रिम-मनुष्यस्थापितलिङ्गमात्रस्य निर्म्माल्ये दोषः नान्यत्रेति अस्य प्रामाण्येऽपि स्वयम्भूवाणचलरत्नहेमाश्मलिङ्गप्रतिमानैवेद्यमङ्गलम्नं चामीषां प्रतिपत्त्यन्तरविधानादेवाभक्ष्यम् । अपवादवचनादापदि कदाचित् भक्षणे न दोषः । यत्तु,—

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।

अनिवेद्य न भोक्तव्यं यच्चान्यदुपकल्पितम् ॥

इति तदत्यन्तशिवभक्तस्य स्वभोज्ये शिवोपभुक्तिचिन्तामात्र-परमिति वदन्ति । ]

## [1]अथ विष्णोः ।

[2]स्कान्दे,—

त्रिकालं ये प्रपश्यन्ति मुखं कृष्णस्य नित्यशः ।
न तेषां पुनरावृत्ति र्विष्णुलोकात् कथञ्चन ॥
अर्च्चितं केशवं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ।
पूजितं पूज्यमानं वा यः पश्येत् भक्तितो हरिम् ।
श्रद्धया मोदयेद् यस्तु सोऽपि योगफलं लभेत् ॥

[3]स्कान्दे—

ये पश्यन्ति नरा विष्णुं हेमभूषणभूषितम् ।
सकृद् भक्त्या कलौ शक्र पुनात्यासप्तमं कुलम् ॥
ये पश्यन्ति सकृत् कृष्णं पद्मपत्रोपरिस्थितम् ।
भक्त्या पद्मालयाकान्तं तैराप्तं दुष्करं पदम् ॥
चित्रस्थं पुण्डरीकाक्षं [4]सविलासं सविभ्रमम् ।
दृष्ट्वा विमुच्यते पापै र्जन्मकोटिषु[5] सञ्चितैः ॥
कान्तिभूषणभागाद्याश्चित्रे यस्मात् स्फुटं स्थिताः ।
तस्मात् सन्निधिमायान्ति चित्रस्थाः सुविशेषतः ॥

---

(१) Y. अथ दर्शनप्रणामप्रदक्षिणादिफलम् ।
(२) Y. स्कान्दपुराणे ।
(३) Y. स्कान्दपुराणे ।
(४) Y. सविन्यासं ०
(५) Y. ०कोटिसुसञ्चितैः ।

दृष्ट्वा सम्पूजितं देवं नृत्यमानोऽनुमोदयेत् ।
असंशयमतिप्राज्ञः परं ब्रह्माधिगच्छति ॥

गारुड़े,—

यः पश्यति मुखं विष्णो रात्रौ जागरणे स्थितः ।
[1]शतजन्मकृतं पापं निमिषार्द्धेन नश्यति ॥

[2]स्कान्दे—

शङ्के कृत्वा तु पानीयं भ्रामयेत् केशवोपरि ।
सन्निधौ वसति विष्णोः कल्पान्तं क्षीरसागरे ॥
एवं कृत्वा तु कृष्णस्य यः करोति प्रदक्षिणम् ।
पठन्नामसहस्रन्तु स्तवमन्यं पठन्नृप ।
सप्तद्वीपवतीपुण्यं लभेत् प्रतिपदे पदे ॥
रुक्ममासकदानस्य फलं [3]विप्र पदे पदे ।
पुरुषस्तु समाप्नोति यः करोति प्रदक्षिणम् ॥
प्रदक्षिणं ये कुर्व्वन्ति भक्तियुक्तेन चेतसा ।
न ते यमपुरं यान्ति [4]यान्ति पुण्यवतां गतिम् ॥
देवदेवस्य कृष्णस्य यः करोति प्रदक्षिणम् ।
पदे पदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात् ॥
प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे ।
पृथ्वीप्रदक्षिणफलं नरः प्राप्य हरिं व्रजेत् ॥

---

(१) Y. शतजन्मार्ज्जितम् ।
(२) Y. स्कन्दपुराणे—
(३) D. विप्राः ।
(४) Y. प्राप्य—

[1]पृथ्वीप्रदक्षिणफलमश्वमेधशतफलप्राप्त्यनन्तरमोक्षप्राप्तिरूपं भारतोक्तम् ।

त्रिः प्रदक्षिणमावृत्य प्रत्येकं दण्डवत् क्षितौ ।
कीर्त्तयन् मम नामानि यज्ञकोटिफलं लभेत् ॥

अत्र प्रदक्षिणप्रणामकीर्त्तनानां त्रयाणां फलम् ।

त्रिः प्रदक्षिणं यः कुर्य्यात् [2]साष्टाङ्गञ्च प्रणामकम् ।
दशाश्वमेधस्य फलं [3]प्राप्नुयान्नात्र संशयः ॥
प्रदक्षिणं यः कुरुते कार्त्तिके विष्णुसद्मनि ।
पदे पदेऽश्वमेधस्य फलभागी भवेन्नरः ॥

यत्र यत्र संख्या नोक्ता तत्र तत्र—

एकं प्रदक्षिणं चण्ड्याः सप्तार्के त्रिर्विनायके ।
चत्वारि [4]केशवस्य स्यात् शिवस्यार्द्धं प्रदक्षिणम् ॥

[5]अर्द्धं द्वयम् । तथा—

नमो ब्रह्मण्य[6]देवाय यो मां दृष्ट्वाभिवादयेत् ।
भवत्यकल्मषो नित्यं सुखं याति महापथम् ॥

---

(१) D. पृथ्वीप्रदक्षिणफलमश्वस्य मेधः । तत्फलप्राप्त्यनन्तरमोक्षप्राप्तिरूपं भारतोक्तम् ।

(२) Y. साष्टाङ्गस्य प्रणामकम् ।

(३) Y. चाप्नुयान्नात्र ०

(४) Y. केशवे विद्यात् ।

(५) Y. नार्द्धद्वयम् । E. F. चार्द्धद्वयम् ।

(६) Y. ० देवायेति०

देवार्चादर्शनादेव प्रणमेन्मधुसूदनम् ।
स्थानापेक्षा न कर्त्तव्या दृष्ट्वार्चां मुनिसत्तम ॥
देवार्चादृष्टिपूतं हि शुचि तद् वस्तु कीर्त्तितम् ।

यद्यप्येतद्दर्शनमात्रकालीनप्रणामविधिप्ररोचनार्थं तथापि तत्-स्थानस्याशौच [1]सन्देहे तदपनयनप्रतीक्षायां विलम्बापत्ते र्विधि-बाधात् सन्दिग्धशौचापवादोऽनेन क्रियते । स्पष्टामेध्यादिदर्शने तु तत्परिहारेणान्यत्र प्रणामसम्भवान्न विलम्ब इति [2]न तदपवादः । तेनार्चाग्रभूमिभागस्याशौचशङ्कया विलम्बो न कार्य्यः शुद्धत्वा-दर्चाग्रस्थस्य स्पष्टामेध्यस्य तु परिहारः कार्य्यः ।

तथा,—

दण्डप्रणामं कुरुते विष्णवे भक्तिभावितः ।
रेणुसंख्यं वसेत् स्वर्गे मन्वन्तरशतं नरः ॥
[3]जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवस्य सर्व्वकाममवाप्नुयात् ॥
परमाणूनि यावन्ति ललाटे पुरुषस्य च ।
तावदब्दानि विप्रेन्द्र स्वर्गलोके महीयते ॥
नमस्कारकृतो यज्ञः सर्व्वयज्ञेषु चोत्तमः ।
नमस्कारेण चैकेन साष्टाङ्गेन हरिं व्रजेत् ॥

(१) Y. सत्वकृत्ते तद ०
(२) Y. नापवादः ।
(३) D. जानुभ्याञ्च पाणिभ्याञ्च —

[1]पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः॥

[2][दृशा वीक्षणम्। मनसा नमस्कारः। वचसा नमस्करोमीति वाक्यम्।]

अभिवाद्य जगन्नाथं स कृतार्थस्तथा भवेत्।
नमस्कारक्रिया तस्य सर्व्वपापप्रणाशिनी॥

[3][विष्णुधर्म्मे,—

प्रणम्य शिरसा कृष्णं पादक्लिष्टे महीतले।
विकल्मषो भवेत् सद्यो ललाटे पाण्डुपांशुना॥

एकस्य कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेव जन्म
कृष्णप्रणामी न पुनर्भवाय॥

भगवद्गीतायाम्,—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥

तथा—

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्त्रे।

---

(१) D. दोर्भ्यां पद्भ्यां जानुभ्यामुरसा०
(२) D. Omits the portion bracketed.
(३) Y. Omits the portion bracketed.

विष्णुपुराणे,—

यस्मिन् न्यस्तमति र्न याति नरके स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किञ्चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥

गीतायाम्,—

सततं कीर्त्तयन्तो मां यजन्तश्च दृढ़व्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥
[1][ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।]

तथा,—

मच्चित्ता मद्‌गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥

तथा,—

एष मे सर्व्वधर्म्माणां धर्म्मोऽधिकतमो मतः ।
यद्‌भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा ॥
लोकाध्यक्षं स्तुवन्नित्यं सर्व्वदुःखातिगो भवेत् ।

इत्यादि बहुश्च उक्तं वक्ष्यते च ।

---

(१) D. Omits the portion bracketed.

## [1]अथ दुर्गायाः ।

भविष्यपुराणे,—

छित्त्वा भित्त्वाच भूतानि हत्वा सर्व्वमिदं जगत् ।
प्रणम्य शिरसा देवीं सर्व्वपापैः प्रमुच्यते ॥
सर्व्वावस्थां गतो वापि युक्तो वा सर्व्वपातकैः ।
दुर्गां दृष्ट्वा नरः सोऽपि प्रयाति परमं पदम् ॥
स्वपन् तिष्ठन् व्रजन् धावन् [2]प्रजने भोजने रतः ।
यः स्मरेत् सततं दुर्गां स च मुच्येत बन्धनात् ॥
दुर्गाया दर्शनं पुण्यं दर्शनादभिवादनम् ।
वन्दनात् स्पर्शनं श्रेष्ठं स्पर्शनात् तर्पणं वरम् ॥
तर्पणान्मांसदानन्तु महिषाजनिपातनम् ।
अहन्यहनि यो दुर्गां पूजयेद् रुधिरादिभिः ।
कुलानां शतमुद्धृत्य ब्रह्मलोके महीयते ॥

तथा,—

चण्डिका बलिदानेन अर्घ्यदानेन भास्करः ।
शङ्करो नृत्यगीताभ्यां नोपवासं विना हरिः ॥

---

(१) E. F. अथ दुर्गाया दर्शनादिफलम् ।
(२) E. F. प्रजपन्

## अथ सर्व्वदेवसाधारणप्रियाणि ।

शिवोऽभिषेकसन्तुष्टो भक्ष्यतुष्टो विनायकः ।
[1][अलङ्कारप्रियो विष्णुः श्रिया देवः प्रसीदति ॥
ब्रह्माध्ययनसन्तुष्टः कर्म्मणा च शतक्रतुः ।
वैनतेयः सर्पवरैर्भास्करोऽर्घ्येण तुष्यति ॥
होमेन तु ग्रहः श्रीदस्तेन तुष्टा नवग्रहाः ।
चामुण्डायचदैतेयाः सुरा मांसबलिप्रियाः ॥
धर्म्म आचारसन्तुष्टः पायसेन सुधाकरः ।
मन्मथः कुसुमै स्तुष्टो लक्ष्मीः पद्मार्चनप्रिया ॥]
ध्यानेन सर्व्वदा सर्व्वे ज्ञानयोगेन मुक्तिदाः ॥

भगवद्गीतायाम्,—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकम् ॥
अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥

तथा,—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमर्हति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥

---

(1) D. Omits the portion bracketed.

अन्तवत्तु फलं तेषां तद् भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि॥

इति मुक्तिफलव्यवधानेनान्यदेवपूजानिन्दा यद्यपि विष्णुभक्तिप्रशंसा र्थेति प्रतिभाति (तथापि) विष्णोः शुद्धसत्त्वप्रतिविम्बितचैतन्यरूपस्य तद्विम्बरूपस्य वा सर्व्वोत्कर्षात् रजस्तमोगुणतद्विकारावच्छिन्नानां देवतान्तराणां [1]गुणतारतम्यावस्थस्थावाद् गुणत्रयसाम्यावस्थाविद्यावच्छिन्नस्य वा विष्णोः सर्व्वोत्कर्षस्य [2]सर्व्ववादिसिद्धत्वात् "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" इति श्रुतिः। तमेतमग्निचित्यध्वर्य्यव उपासते सामेति च्छन्दोगा उच्छम्(?)इति बह्वृचा जातुर्(?)इति जातुविदः(?)सर्पा देवजन इति (सर्प) देवजनविदो रूपमिति गन्धर्व्वा गन्धर्व्व इत्यप्सरस इत्युक्त्वा तं यथायथोपासते तदेव भवति परिच्छिन्नोपासनायाः परिच्छिन्नफलम् (इति) उक्त्वा (च) तस्मादेवमेवंवित् सर्व्वैरेवैतैरुपासीत इति सर्व्वात्मकस्य विष्णोरुपास्यत्वं श्रुतेः।

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः।
तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्द्दनात्॥

इति याज्ञवल्कीयवचनाद्—

वासुदेवं परित्यज्य येऽन्यदेवमुपासते।
नरकाय भवन्त्येते नात्र कार्य्या विचारणा॥

इति दोषश्रुतेश्च।

---

(१) E. F. गुणतारतम्येन गुणतारतम्या०

(२) E. F. सर्व्ववादिसम्मतत्वा०

विशेषतश्च—नान्यदेवं नमस्कुर्य्याद् वैष्णवो न च पूजयेत्।

नान्यप्रसादं गृह्णीयान्नान्यदेवं निरीक्षयेत्॥

इति निषेधात् मोक्षार्थिना विष्णन्यदेवार्चनादिकं न कर्त्तव्यम्। केवलम्—

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।

विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम्॥

इत्युक्तदिशा देवतान्तराराधनस्यापि विष्णाराधनरूपत्वेन—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

इति देवतान्तरपूजनस्यापि विष्णोः समर्पणं कार्य्यम्। अन्यथा—

स्मृतिश्रुती मम वाक्ये यस्ते उल्लङ्घ्य वर्त्तते।

आज्ञाच्छेदी मम द्वेषी न भक्तश्च न वैष्णवः॥

इति भगवद्वचनविरोधः स्यात्। एवञ्च नान्यदेवं नमस्कुर्य्या-दिति विष्णाराधनोपायबुद्धिं विनेति शेषः। एवञ्च—

शक्तिनिष्ठो भवेत् शैवः शैवो विष्णुं प्रपूजयेत्।

वैष्णवो नारसिंहः स्यात् सा काष्ठा सा परा गतिः॥

इति क्रमाराधनं मुक्तिफलत्वेनोक्तं तत्तु देवताराधने मुक्तिफलाभि-धानं विष्णाराधनद्वारकं मन्तव्यम्। पुत्रपश्वादिफलाभिसन्धानन्तु विष्णाराधनेऽपि न कर्त्तव्यं किं पुनः विष्णाराधनफलकदेवतान्त-राराधने। फलकथनं तत्तत्कामिनः प्रवृत्तिसौकर्य्याय। कामार्थं तावत् प्रवर्त्ततां पश्चाद् विवेकी कामनां त्यक्त्वा प्रवर्त्तिष्यत इत्यभिप्रायः। यच्च वाराहे महादेववाक्यम्—

मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणञ्च द्विजोत्तम।
भजन्ते पापकर्म्माणस्ते यान्ति नरकं नराः॥

इति। तथा,—

मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरात्।
(तथा)
यस्त्वभेदेन पश्येत तस्य मुक्ति र्न संशयः॥

इति। तदुभयतो भेदबुद्धिरेव मुक्तिप्रतिबन्धकत्वेन निन्द्यते नत्वभेदकबुद्धिः। पूजाङ्गत्वेन येन विष्णुपूजायामीश्वराभेदबुद्धि-रङ्गं स्यात्। शिवपूजायामपि न विष्णुभेदबुद्धिरङ्गम्। किन्तु शिवाराधनं विष्णुप्रीतये करोमीत्येवं बुद्धिः कार्य्या। यच्च कौर्म्मे जयध्वजस्य विष्णुैकभक्तिं दृष्ट्वा भ्रातृभिरभियोगे व्यासवाक्यम्,—

या यस्याभिमता पुंसः सा हि तस्यैव देवता।
तस्मात् जयध्वजो नूनं विष्णुाराधनमर्हति॥

किन्तु रुद्रेणैकात्म्यबुद्ध्या पूज्यो हरिः सदेति तदपि—

विष्णुरुद्रान्तरं ब्रूयात् श्रीगौर्य्योरन्तरं तथा।
अज्ञानां मन्दबुद्धीनां वाक्यं शास्त्रविगर्हितम्॥

इति। स्मृत्यन्तरे स्नातकव्रतत्वेन विष्णुरुद्रभेदज्ञानस्य वर्जनीय-त्वात् तत्समानार्थत्वात् विष्णुाराधनप्रकरणबाधेन भेदज्ञानवर्जन-मेव पुरुषार्थतया बाध्यते न तु विष्णुपूजाङ्गत्वेन विष्णौ रुद्रैक्य-बुद्धिः। तत्सिद्धं विष्णुाराधनमेव मोक्षप्रदम्। देवतान्तराराधनं तत्समर्पणेन विष्णुाराधनरूपम्। शौचाचाराणां सर्व्वेषां विष्णुाराधन-रूपत्वादयं विशेषः,—शौचस्नानादेर्विष्णुपूजाधिकारसम्पादकत्वेन

द्दष्टद्वारं देवतान्तराराधनमदृष्टद्वारेण विष्ण्वाराधनपरम्। तथा-चादावेव प्रतिज्ञा—

यदुच्छ्वासादिकं कर्म्म तत्त्वया प्रेरितो हरे।
करिष्यामि तवाज्ञेयमिति विज्ञापनं मम॥
साधु वाऽसाधु वा कर्म्म यद् यदाचरितं मया।
तत्सर्व्वं भगवन् विष्णो गृहाणाराधनं परम्॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

सर्व्वञ्चैतदस्माभिर्विष्णुभक्तिप्रदीपे प्रपञ्चितम्।

इत्यग्निचिद्-वाजपेयिनरसिंहविरचिते नित्याचार-प्रदीपे देवगृहसंस्कारनिर्म्माल्यापनयनस्नानस्तु-तिनमस्कारप्रदक्षिणादिदेवकार्य्याणि।

---

देवकार्य्यकालेऽपराधप्रसङ्गश्चेत् तत्परिहाराय यत्नः कार्य्यः। तद्यथा—

अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः।
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे॥
देवोत्सवाद्यसेवा तु अप्रणामस्तदग्रतः।
एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम्॥
उच्छिष्टे चैव वाऽशौचे भगवद्वन्दनादिकम्।
पादप्रसारणञ्चाग्रे तथा पर्य्यङ्कबन्धनम्॥

भोजनं शयनञ्चैव मिथ्याभाषणमेव च।
उच्चैर्भाषा वृथाजल्पो रोदनञ्चैव विग्रहः॥
निग्रहानुग्रहौ चैव स्त्रीणां साकूतभाषणम्।
अश्लीलकथनञ्चैव अधोवायुविमोचणम्॥
कम्बलावरणञ्चैव परनिन्दा परस्तुतिः।
शक्त्या गौणोपचारश्च अनिवेदितभक्षणम्॥
तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम्।
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिनः॥
पृष्ठीकृत्यासनञ्चैव परेषामभिवादनम्।
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा॥

पादुकैर्वापीत्यपिशब्देनोपानद्दोऽप्युपादानम्। उत्सवादीत्यादिशब्दः प्रतिष्ठादिपरः। तत्पुरस्तात् प्रदक्षिणमन्यस्य। उच्छिष्टपदं लेपाशौचमात्रपरम्। [1][अशौचपदं सूतकमृतकपरम्।] कीर्त्तनमात्रन्तु अशौचे कर्त्तव्यमित्युक्तम्। पादप्रसारणञ्चाग्र इत्यग्रपदं परस्तुतिपर्य्यन्ते सम्बध्यते। शक्त्येति षोड़शोपचारसामर्थ्ये पञ्चोपचाराद्याश्रयणम्। अनिवेदितभक्षणं स्वभोज्यस्य भगवदुपभुक्तमचिन्तयित्वा भोजनम्। अनर्पणं अदानम्। विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिन इति सर्व्वपाकसमाप्तौ पुनरतिथ्यर्थं कृतस्य पाकस्यातिथिविनियोगानन्तरं यदवशिष्टं तस्य प्रदानम्। यद्वा दुर्गोत्सवशिवोत्सवादौ तत्पूजामात्रार्थं कृतस्य पाकस्यावशिष्टप्रदानम्। सर्व्वार्थनित्यस्वगृहस्थपाकस्य तु वैश्व-

(1) D. Omits the portion bracketed.

देवातिथिबलिदानानन्तरमपि विष्णुपूजार्थं स्वांशोऽस्तीति न विनियोगावशिष्टत्वं सर्वार्थान्यादेर्भुवाग्टहीतस्य शेषाभावेन यथा शेषेण स्विष्टकृत्। तदुक्तं जैमिनिना,—"अशेषत्वात्तु नैवं स्यात् सर्व्वादानादशेषता।" त्यक्तस्य पुरोडाशादेः पूजान्तरनैवेद्यतुल्यत्वेन निषिद्धत्वादेवापरिग्रहः। तत्परिग्रहो विनियुक्तपरिग्रह एव विनियुक्तावशिष्टपरिग्रह इति नायमपराधस्तत्र। किन्तु निर्म्माल्यपुष्पदानादिवद्दोषान्तरं तत्र। श्राद्धे अवलेहितस्य श्राद्धदाने निषिद्धत्वात्। अवलेहितस्य दानासम्भवेन तज्जातीयपरत्वादस्य द्रव्यस्यैकदेशोऽन्यत्र विनियुक्तार्थपर्य्यवसानात्। बालाग्निगुरुदेवेभ्यः पितृपाको न दातव्यो यावत्पिण्डान्न निर्वपेदिति वाक्यान्तराच्च। पिण्डदानान्ते च

यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमथापि वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥

इति सर्व्वस्य पितॄनुद्दिश्य त्यागविधानात्। "भुञ्जीत पितृसेवित"मिति स्वभोज्यस्य पितृसेवितत्वकथनाच्च।

पितृशेषन्तु यो दद्याद्धरये परमात्मने।
रेतोधाः पितरस्तस्य भवन्तीत्यनुशुश्रुमः॥

इति श्राद्धशेषदाने स्यादेवापराधः। एवं "ततो गृहबलिं हरेत्" इत्यादिवचनान्तरात् पितृशेषादपि बलिहरणमिति। केवलं श्राद्धात् पूर्व्वम्,—

विष्णोर्निवेदितं सम्यक् देवेभ्यो जुहुयाद्धविः।
पितृभ्यश्चापि तद्देयं फलस्यानन्त्यमश्नुते॥

इति वाक्ये निवेदितपदस्य निवेदितजातीयपरत्वं निरिष्टिकाविनियोगनिषेधात्। वैष्णवं सात्वतेभ्यश्चेति प्रतिपत्तिविधानाच्च कल्पत इति श्राद्धपरिवेशकाल एव विष्णवे कल्पयित्वा निवेद्य श्राद्धोत्सर्गसमाचार इति निवेदितपदस्य निरिष्टिकापरत्वे कौसुतिकन्यायेन सुतरां तज्जातीयस्य दानाविरोध इति समाचारः संगच्छते। परेषामभिवादनमित्यत्रापि पृष्ठीकृत्येत्यनुषङ्गः। भगवदभिमुखमन्याभिवादने न विरोधः। केवलं स्वाचार्य्यसन्निधाने चाचार्य्यायोपसंगृह्य उपसंजिघृक्षेदाचार्य्यं प्रतिषिधेदितरः। आचार्य्यस्याचार्य्यसन्निधाने अनेन न्यायेनाभिवाद्य तं निवारयेदित्याहुः। निजस्तोत्रं स्वस्तुतिः। अत्र शिष्टाः,—

अहन्यहनि यो मर्त्त्यो गीताध्यायं पठेत् पुनः।
द्वात्रिंशदपराधांस्तु क्षमतेऽस्य च केशवः॥

इति। तथा,—

अपराधसहस्राणि अपराधशतानि च।
पद्मेनैकेन देवेशः क्षमते हेलयार्चितः॥

पाद्मे,— यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः।
अपराधसहस्राणि नित्यं हरति केशवः॥

इति। स्कान्दे—

अपराधाश्च ये प्रोक्ताः (१)पुराणैः केशवार्च्चने।
प्रोक्ते नामसहस्रे तु विलयं यान्ति कार्त्तिके॥

---

(१) D. पुरुषैः०

गारुड़े,—

कृतापराधोऽपि यदा कृत्वास्य मुखदर्शनम् ।

मुच्यते नात्र सन्देहः पापैर्जन्मायुतैः कृतैः ॥

अत्र चापराधस्यापि दुरितहेतुत्वान्नामकीर्त्तनमपि तन्नाशोपायः । यत्तु भविष्ये,—

दशापराधांस्तोयेन क्षीरेण च शतात्परम् ।

सहस्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत् ॥

इति तत् सूर्य्यशिवदुर्गापराधविषयं न च विष्णुतोयस्नानादौ। सौरस्नानफलस्य दशापराधक्षमादेरतिदेशफलस्यानतिदेशात् । तदुक्तं जैमिनिना,—"कर्म्मणस्त्वप्रवृत्तित्वात् फलनियमकर्त्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ।" एतेन सूर्य्यादेरप्येते द्वात्रिंशदपराधाः । अपराधक्षमालिङ्गादित्यवधेयम् । यत्तु वाराहे द्वात्रिंशदपराधकीर्त्तनं प्रायश्चित्तकीर्त्तनञ्च तत् गृहीतवराहपुराणीयवैष्णवदीक्षभागवतपरम् । तथाहि,—शुद्धो भागवतः शुचिः

मम शास्त्रं वहिष्कृत्य अस्माकं यः प्रपद्यते ।

इति लिङ्गात् । तथाच तानि,-राजान्नं भक्षित्वोपसर्पणं तत्र चान्द्रायणतप्तकृच्छ्रसान्तपनानि । दन्तकाष्ठमखादित्वोपसर्पणं तत्र सप्तदिनानि दन्तकाष्ठमखादित्वाकाशशयनम् । मैथुनं गत्वा अस्नातस्य देवोपसर्पणं तत्र त्र्यहं यावकाहारः पिण्याकेन पुनस्त्र्यहं दिनमेकं वायुभक्षणम् । शवं स्पृष्ट्वाऽकृतप्रायश्चित्तस्य भगवदुपसर्पणं तत्र सप्तदिनमेकभक्तं त्रिरात्रमुपोष्य पञ्चगव्याशनम् । पञ्चरात्रशास्त्रं मुक्त्वा प्रकारान्तरेण भगवत्पूजा तत्र सप्तम्यामेकभक्तं ततो

दिनचयमुपोष्य पश्चात् पञ्चगव्याशनम्। रजस्वलां स्पृष्ट्वा प्रकृत-स्नानस्य विष्णुस्पर्शनं तत्र त्रिरात्रमाकाशशयनम्। अथवा एका-हारः। पञ्चदशदिनान्ते पञ्चगव्यम्। शवं स्पृष्ट्वाऽकृतप्रायश्चित्तस्य देवेऽवस्थानं तत्र पञ्चदशदिनमेकाहारोऽन्ते पञ्चगव्यं पिबेत्। देवस्पर्शनकालेऽधोवायुविसर्गः तत्र दिनत्रयं यावकभक्षणं दिनत्रयं कणभक्षणम्। देवकर्म्मकाले पुरीषोत्सर्गः तत्र दिनमेकं जले शयनम्। पञ्चरात्रमनधीत्य शास्त्रान्तरपठनं तत्र पञ्चदशदिन-माकाशशयनम्। नीलवस्त्रं परीधाय भगवदुपसर्पणं तत्र पञ्च-चान्द्रायणं वराहोक्ताचमनं कृत्वा देवोपसर्पणम्। तच्चैवम्,— प्राङ्मुखः पादौ प्रक्षाल्य यथाविध्याचम्य स्त्रयेण करौ प्रक्षाल्य सप्तभिः प्रसृतिभिर्मुखं प्रक्षाल्य पादयोरेकैकस्मिन् पञ्चपञ्चाञ्जलि-प्रसृतीर्दत्वा प्रसृतित्रयं पिबेत्। कराभ्यां मुखमुन्मृज्य प्राणायाममेकं कृत्वा शिरसि ब्रह्मार्घं स्मृत्वा वारत्रयं तत्स्पर्शनम्। एवं दक्ष-कर्णस्य वारत्रयं स्पर्शनम्। ततो दक्षनासायाः। ततः सलिल-प्रसृतिचयस्य प्रक्षेपः।

अपराधं कृत्वा प्रायश्चित्तमकृत्वा भगवदुपसर्पणं महासान्तपनं तप्तकृच्छ्रञ्च। क्रुद्धस्य चलचित्तस्य देवस्पर्शनं आकाशशयनं कुर्व्वाणः षष्ठे कालेऽन्नं भागवताष्टगृहेभ्यो भिक्षयित्वा भुञ्जीत। निषिद्धपुष्प-णार्चनं तत्र मासमेकभक्तं दिनसप्तकं वीरासनम्। मासं चतुर्थकाले घृतपायसभोजनं दिनत्रयं यावकं दिनत्रयं वायुभक्षः। रक्तवस्त्रस्य देवोपसर्पणं तत्र पञ्चदशदिनान्येकभक्तं दिनद्वयं वायुभक्षः दिनमेकं जले वासः। अन्धकारे दीपं विना स्पर्शनं मन्त्रं विना च स्पर्शनं

तत्र पञ्चदशदिनान्येकभक्तं एकस्यां द्वादश्यामेकभक्तं ततो दिनं जलाहारस्ततो गोमूत्रसिद्धयवागूप्राशनम् । नीलव्यतिरिक्तरक्तवस्त्रपरिधानेन भगवत्कर्म्मकरणं तत्र सप्ताहं यावकभक्षणं त्रिरात्रं सक्तुग्रासभक्षणं त्रिरात्रं पिण्डत्रयभक्षणम् । अधौतवस्त्रेण भगवत्कर्म्मकरणं तत्र यावकेन त्र्यहं पिण्याकेन त्र्यहं कणभक्षस्त्र्यहं पयोभक्षस्त्र्यहं दध्याहारस्त्र्यहं पायसेन दिनत्रयं वाय्वाहारस्त्र्यहम् । भुक्त्वा वराहमांसं भगवदुपसर्पणं जलं पीत्वा सप्ताहावस्थानं अक्षारलवणेन त्रिदिनं सक्तुभिश्च तथा त्र्यहं जलभक्षश्च सप्तैव सप्तपाषाणभक्षकः । सप्ताहं पयोभक्षः । जालपादं भक्षयित्वा भगवदुपसर्पणं जालपादः पक्षिविशेषः तत्र याज्ञवल्क्येन फलाहारेण त्र्यहं अक्षारलवणं त्र्यहम् ।

दिनत्रयं पयोभक्षो वायुभक्षो दिनत्रयम् ।

दीपं स्पृष्ट्वा हस्तावप्रक्षाल्य देवस्पर्शनं तत्कर्म्मकरणञ्च तत्र शुक्लद्वादश्यां चतुर्थकालभोजनं आकाशशयनञ्च । श्मशानं गत्वाऽस्नात्वा भगवदुपसर्पणं तत्र पञ्चदशदिनानि चतुर्थभक्तं आकाशशयनमेकवस्त्रस्य कुशास्तरे । तत्र प्रभाते पञ्चगव्याशनम् । तैलनिष्पीड़नावशिष्टपिण्याकं भक्षयित्वा भगवदुपसर्पणं तत्र सतक्रयावकेनैकदिनं एकान्नपिण्डं जलञ्चैकदिने रात्रौ वीरासनं द्वितीयदिने रात्रावाकाशशयनं प्रभाते पञ्चगव्याशनम् । वराहमांसनैवेद्यदानं तत्र फलाहारः सप्तदिनं मूलाहारः सप्तदिनं सप्तदिनं पायसाहारः तिलाहारः सप्तदिनं यावकाहारः सप्तदिनं दध्याहारः सप्तदिनं सप्ताहं क्षारवर्ज्जितः । मद्यं गृहीत्वा देवगृहप्रवेशः तथा दीक्षितस्य

मद्यपानं तत्राग्निवर्णतप्तं सुरापानम्। कुसुम्भशाकादानं तत्र चान्द्रायणम्। पारक्येण वस्त्रेण नधूतेन वा भगवत्कर्म्मप्रचारः माघमासस्य शुक्लद्वादश्यां पूर्व्वमष्टकालभोजनं कृत्वा जलमात्राहारः प्रभाते पञ्चगव्याशनम्। विष्णवे नवान्नं न दत्वा नवान्नाशनं त्रिरात्रमुपवास एकरात्रमाकाशशयनम्। गन्धमाल्यान्यदत्वा धूपदानं तत्र शुक्लपक्षद्वादशीमारभ्य अष्टकालभोजनं आकाशशयनं प्रभाते पञ्चगव्यम्। उपानच्छन्नपदस्य देवगृहप्रवेशः तत्रैकरात्रमाकाशशयनं प्रभाते पञ्चगव्यम्। भेरीशब्दमकृत्वा भगवत्प्रबोधनं शुक्लद्वादश्यामाकाशशयनम्। प्रभूतमन्नं भुक्त्वा उद्गारयुक्तस्य भगवदुपसर्पणं तत्र यावकेन त्र्यहं वायुभक्षस्त्र्यहं तत्र आकाशशयनं कुशेषु प्रभाते पञ्चगव्याशनम्। असम्भृते देशे भूमौ कुशे शयनं तत्र कृच्छ्रचान्द्रायणाद्यशक्तौ प्रत्याम्नायेनानुष्ठानं गीताध्यायपठनं पद्मपुष्पदानमप्यशक्तस्य सहस्रनामपठनं कृष्णमुखदर्शनम्[1]।

नरसिंहनिर्म्माल्यलङ्घनाद् भग्नदिव्यरथारोहणासमर्थं सुमन्तुं प्रति नारदवाक्यम्,—

अत ऊर्द्धन्तु निर्म्माल्यं मा लङ्घय महीपते।
नरसिंहस्य देवस्य तथान्येषां दिवौकसाम्॥

अत्र द्विजोच्छिष्टमार्ज्जनं प्रायश्चित्तमुक्तं नारसिंहे।

नित्याचारप्रदीपे भगवदपराधाः।

(१) अत्रैतन्निन्नपराधकीर्त्तने तत्प्रायश्चित्तकीर्त्तने च मूलवराहपुराणतः स्थाने स्थाने वैषम्यं दृश्यते। वराहपुराणस्य १२०—१२६ अध्याया द्रष्टव्याः।

अत्र "देवकार्य्यस्य सर्व्वस्य" इति वचनाद् देवतासम्प्रदानस्यापि प्रथमभाग एव कालः ।

पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् ।
विलेपनञ्चाक्षतञ्च केशवाय प्रयच्छति ।
तेन पुण्येन निवसेत् विष्णुलोके युगायुतम् ॥

इति सामान्यतः । विशेषतो विष्णुधर्म्मे—

पुष्पाणि च सुगन्धीनि मनोज्ञानि च यः पुमान् ।
प्रयच्छति हृषीकेशे स भागवत उत्तमः ॥

इति । तत्तद्वाक्येस पूजाप्रकरणाद् बहिरेव फलार्थत्वेन तत्तद्द्रव्यविधानवाक्येन पूजासम्बन्धे फलसम्बन्धे वा वाक्यभेदापत्तेः पृथगेव गन्धविधानं फलार्थं विधीयते । एवं गोभूहिरण्यगृहयानासनदानञ्च तत्तत्फलार्थमेव । तत्र देवतायाः प्रतिग्रहीतृत्वाभावेन ददात्यर्थस्य गौणत्वात् यत्र दद्यादिति यत्र वार्चयेदिति यत्रानुलिम्पेदिति सर्व्वत्र तत्तद्द्रव्यपुष्पगन्धादिविशिष्टपूजैव फलार्थं विधीयते । न च पूजायाः पञ्चोपचारादिनियमो देवताप्रीतिहेतुक्रियामात्रस्य पूजाशब्दार्थत्वात् ।

तदुक्तं भारते,—

यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा ।

इति । तथाच भट्टाः,—

स्तुतेरपि हि पूजात्वाज्जायेत यजिवाच्यता ।

इति । न च भट्टमते देवताप्रीत्यभावात् प्रीतिहेतुत्वं न पूजास्वरूपं तथापि देवतामुद्दिश्य कृता प्रीतिजननयोग्या क्रिया

पूजेति प्रशोकपुष्पदानं गन्धानुलेपनादिकञ्च पूजैवेति न दोषः । अन्यथा पुष्पस्य देहे दानं गन्धस्यानुलेपनञ्च न स्यात् । देवतामुद्दिश्य त्यागमात्रेण दानविध्युपपत्तेर्देवताप्रतिमासम्बन्धो निष्प्रमाणकः । सुवर्णरजतगृहक्षेत्रादीनां साक्षात् प्रतिमाशरीरेऽनुपयोगेऽपि तद्रक्षणविधानादपहारे दोषाभिधानाच्च प्रतिमाशरीरे द्वारान्तरेण तेषामप्युपयोगः । तथाच योगशिवीये चण्डप्रतिष्ठानन्तरम्,—

वृषादेनं शिवद्रव्यं रक्षंस्तिष्ठन् शिवान्तिके ।
वितानच्छत्रचिह्नानि वस्त्रभूषणवाहनम् ॥
गोभूहिरण्यदासादि देवद्रव्यमुदाहृतम् ।

भविष्यपुराणे च,—

नाधिकारोऽस्ति विप्राणां भौमानां देवपूजने ।
भृत्या भरतशार्दूल स्वाधिपत्ये विशेषतः ॥

इति । स्वाधिपत्ये देवभूमिप्रभुत्वे भौमानां मखेतरब्राह्मणानां मूल्यग्रहणेन नाधिकार इति मूल्यग्रहणं विना देवप्रभुत्वेऽधिकार इत्युक्तं भवति । मखानान्तु वेतनपूर्व्वकमप्यधिकारः ।

देवालयेषु सर्व्वेषु वर्ज्जयित्वा शिवालयम् ।
अधिकारः स्मृतो राजन् भोजकानां न संशयः ॥

इति भोजकपदवाच्यमखाधिकारं दर्शयति । एवं शावरभाष्ये देवग्राम इति तदुपजीविनां तत्र व्यवहारादभिधीयते इति । अन्यथा त्यक्ते साधारण्यात् सर्व्वेषां व्यवहारः स्यात् । तदुपजीविव्यवहारस्तु पूजाविनियोगार्थ एव तेन भूम्या दानमपि पूजैव ।

केवलं दानप्रायपठितानां दानेतिकर्त्तव्यतया अनुष्ठानसमाचारः । देवद्रव्यं देवतामुद्दिश्य त्यक्तं द्रव्यमिति यद्यपि लक्ष्मीधरेणोक्तं तथापि त्यागोऽपि पूजैवेति न दोषः । तथाच मन्त्रदेवप्रकाशिकायां पूजा पञ्चविधा । अभिगमनम् । उपादानम् । इज्या । स्वाध्यायः । योगः । इति श्रीपञ्चरात्रेऽभिहितम् । तत्राभिगमनं नाम सम्मार्जननिर्म्माल्यवहिःकरणादि । उपादानं पूजासाधनसम्पादनम् । इज्या गन्धपुष्पादिदानम् । स्वाध्यायो मन्त्रजपः । योगो देवतास्वरूपभावनेति । न चैवं पूजार्थं मातृकान्यासादिकरणप्रसङ्गः । तथा

सपर्य्या त्रिविधा प्रोक्ता तासामेकां समाश्रयेत् ।

इति पञ्चोपचारदशोपचारषोड़शोपचाररूपत्रिविधपूजामधिकृत्य विधानेऽन्यत्र प्रसङ्गाभावात् । अतिथिपूजादौ येनादरस्यावश्यकत्वात् स्वार्त्तपूजादौ तेषामनङ्गत्वात् ।

अर्चितं प्रतिगृह्णाति अर्चिताय प्रयच्छति ।

इत्यादौ पुष्पादिदानमात्रेण पूजादर्शनाच्चेति । अत्र दानप्रकरणोक्तानां येषां पूजायां न निषेधस्तेषां पूजायामपि स्यादेवात्वम् । ]

---

## ( अथानुलेपनम्। )

[1]चन्दनेनानुलिप्यैनं चन्द्रलोकमवाप्नुयात्।
शारीरमानसै र्दुःखैस्तथैवच विमुच्यते॥
दत्वा मृगमदं मुख्यं यशसा च विराजते।
दत्वा जातीफलक्षोदं क्रियासाफल्यमाप्नुयात्॥
रम्येणागुरुसारेण अनुलिप्य जनार्द्दनम्।
सौभाग्यमतुलं लोके बलं प्राप्नोति चोत्तमम्॥
तथा वकुलनिर्य्यासैरग्निष्टोमफलं लभेत्।
वकुलागुरुमिश्रेण चन्दनेन सुगन्धिना॥
समालभ्य जगन्नाथं पौण्डरीकफलं लभेत्।
[2]न दातव्यं द्विजश्रेष्ठ अतोऽन्यदनुलेपनम्॥

वाराहे,—[3]कर्पूरं कुङ्कुमञ्चैव शुक्लं तगरमेवच।
रसञ्च चन्दनञ्चैव अगुरुं गुग्गुलं तथा।

---

(१) Y. reads before this:—

चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः।
अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति॥
चन्दनं सर्व्वतः श्रेष्ठं लेपनं शीतलं शुभम्।
भक्तेन भगवान् विष्णुर्यत्नेनानेन लेपितः॥
चन्द्रलोकं समाविश्य ततो विष्णुपुरं वसेत्।
विष्णुधर्म्मोत्तरे,—
चन्दनेनानुलिप्यैनं ०

(२) Y. adds before this line:—

एकीकृत्य तु सर्व्वाणि सोऽश्वमेधफलं लभेत्।

(३) Y. कुङ्कुमं कर्पूरञ्चैव ०

एतैर्विलेपनं दद्यात् सुरभिञ्च विचक्षणः ॥

एतच्च फलाश्रवणात् पूजाङ्गविषयम् । तत्वसारसंहितायाम्,—

उशीरं कुङ्कुमञ्चैव मांसी मलयजं तथा ।

तथाम्बुजञ्च ह्रीवेरं कुष्ठञ्चागुरुमेव च ॥

गन्धस्त्वेतानि [1]चाङ्गानि

इत्युक्तं तदपि पूजाङ्गम् । विष्णुः,—चन्दनागुरुकुङ्कुमकर्पूरमृगमद-जातिफलवर्ज्यमनुलेपनं न दद्यात् । एतेषामेकेनापि गन्ध[2]साद्गुण्यम् । न त्वेषामेकमपि परिह्वत्येत्यर्थः । [3]गारुड़े,—

कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।

कुङ्कुमस्य त्रयश्चैकं शशिनः स्याच्चतुः समम् ॥

[ कर्पूरं चन्दनं दर्पं कुङ्कुमञ्च चतुः समम्[4] । ]

सर्व्वगन्धमिति प्रोक्तं समस्तरसवल्लभम्[5] ॥

विष्णुधर्म्मे,—

कालियकं तुरुष्कञ्च रक्तचन्दनमेव च ।

नृणां भवति रोगाय दत्तानि पुरुषोत्तमे ॥

दारिद्र्यं पद्मकं कुर्य्यादुशीरं चित्तविभ्रमम् ।

---

(१) Y. चान्यानि

(२) Y. साङ्गुण्यम् । नत्वेतेषा ०

(३) Y. गरुड़पुराणे,—

(४) D. Omits the portion bracketed.

(५) Y. ० समस्तसुरवल्लभम् ।

## अथ व्यजनम्।

विष्णुधर्म्मोत्तरतृतीयकाण्डे,—

अनुलिप्य जगन्नाथं तालवृन्तेन वीजयेत्।
विष्णुलोकमवाप्नोति पुरुषस्तेन कर्म्मणा॥

तेन कर्म्मणा व्यजनेन नत्वनुलेपनव्यजनयोः समुदितयोः फल-सम्बन्धः।

[1]चामरैर्व्वीजयेद् यस्तु देवदेवं जनार्द्दनम्।
तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयम्॥

---

[2][*सर्व्वपूजाप्रकृतीभूतदीक्षापूजायां प्रपञ्चसारे कानिचित् पुष्पाण्युक्त्वा

सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि च।

इति स्वागमोक्तपुष्पाणां विधानात् न च तत्तद्देवतागमे पूजाङ्गत्वेन यान्युक्तानि तेषामेव ग्रहणम्। स्वागमोक्तानीत्यविशेषोपादानात् काम्यानामपि पूजाङ्गत्वाविशेषाच्च। भविष्यपुराणादेरपि तत्तद्देवतायाः स्वागमत्वमेवाविशेषादागमपदस्य शास्त्रपरत्वादिति*।

अत्र सूर्य्यप्रदेयानि,—

---

(१) Y. चामरैर्वीजयेद्।

(२) Y. Omits the portion bracketed.

*—* अत्रायं तारकाद्वयमध्यगतः पाठस्त्रिष्वादर्शपुस्तकेषु दृष्ट इति यद्यपि यथायथं रक्षितस्तथापि पूर्व्वापरसन्दर्भेण सह सम्बन्धनिरपेक्ष इति प्रक्षिप्तत्वेन सम्भाव्यते।

भविष्यपुराणे,—

अथानुलेपनं कृत्वा दिव्यैर्गन्धैः सुगन्धिभिः।
वर्षकोटिशतं दिव्यं सूर्य्यलोके महीयते॥
गन्धानुलेपनं पुण्यं द्विगुणं चन्दनस्य च।
चन्दानाच्चागुरु श्रेयं पुण्यमष्टगुणं नृप॥
कृष्णागुरो विशेषेण द्विगुणं फलमाप्नुयात्।
तस्मात् शतगुणं पुण्यं कुङ्कुमस्य विधीयते॥
चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः।
भानोरङ्गं समालिप्य कल्पकोटिं वसेद् दिवि॥
सम्वीज्य तालवृन्तेन शुभगन्धैः प्रलेपितम्।
दशवर्षसहस्राणि वीर मित्रपुरे वसेत्॥

तालवृन्तदानेन दशवर्षसहस्रं सूर्य्यलोकवासः। मायूरव्यजनदानेन वर्षकोटिशतं वायुलोकाप्तिः। हेमरत्नरूप्यदण्डचामरदाने चामरहस्तस्त्रीसेवितस्य चिरं सूर्य्यलोकाप्तिः।

---

## अथ शिवस्य।

अयमेव गन्धः सूर्य्यपदस्थाने शिवपदप्रक्षेपेण शिवस्य चार्थबोधकः। इति शिवस्य।

---

## अथ ब्रह्मणः।

सूर्य्यगन्ध एव सूर्य्यपदस्थाने ब्रह्मपदप्रक्षेपेण ब्रह्मणश्चार्थबोधकः।

---

## अथ विष्णोः ।

नरसिंहपुराणे,—

चन्दनागुरुकर्पूरकुङ्कुमैरच्युताकृतिम् ।

विलिप्य भक्त्या राजेन्द्र कल्पकोटिं वसेद् दिवि ॥

विष्णुधर्म्मे,—

चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः ।

अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति ॥

चन्दनं सर्व्वतः श्रेष्ठं लेपनं शीतलं शुभम् ।

भक्तेन भगवान् विष्णुर्यैस्तेनानेन लेपितः ॥

चन्द्रलोकं समाविश्य ततो विष्णुपुरं विशेत् ।

विष्णुधर्म्मे,—चन्दनेन चन्द्रलोकम् । मृगमदेन यशः । जातिफलेन क्रियासाफल्यम् । अगुरुसारेण सौभाग्यम् । वकुलनिर्य्यासैरग्निष्टोमफलम् । वकुलागुरुमिश्रचन्दनेन पौण्डरीकफलम् । सर्व्वैरेकीकृतैरश्वमेधफलम् ।

वाराहे,—

कर्पूरं कुङ्कुमञ्चैव शुक्लं तगरमेव च ।

रसञ्च चन्दनञ्चैव अगुरुं गुग्गुलं तथा ।

एतैर्विलेपनं दद्यात् सुरभिञ्च विचक्षणः ॥

---

## अथ दुर्गायाः ।

भविष्ये,—

चन्दनागुरुकर्पूरैर्यस्तु दुर्गां प्रपूजयेत् ।
स तु वर्षशतं दिव्यं शक्रलोके महीयते ॥

तथा गन्धानुलेपनेन ज्योतिष्टोमफलम् । कृष्णागुरुणा वाजपेयफलम् । कुङ्कुमेन गोसहस्रफलम् । चन्दनागुरुकर्पूरकुङ्कुमैः श्लक्ष्णपिष्टैर्विलिप्य कल्पकोटिपर्य्यन्तं स्वर्गः ।

विलिप्तां पूजयेद् दुर्गां गन्धपुष्पाधिवासिताम् ।
तालवृन्तेन संवीज्य महामखफलं लभेत् ॥

इति नित्याचारप्रदीपेऽनुलेपनानि ।

---

## अथ पुष्पाणि ।

### सूर्य्यस्य ।

भविष्ये,—

पुष्पैररण्यसम्भूतैः [1]पत्रैर्वा गिरिसम्भवैः ।
अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैः ॥

---

(१) E. F. पत्रैर्वाऽगिरिसम्भवैः ।

आज्ञारामोद्भवैर्वापि पुष्पैः सम्पूजयेद् रविम्।
पुष्पजातिविशेषेण लभेत् पुण्यं शताधिकम्॥

इति।

दत्वा दश सुवर्णस्य निष्कस्य लभते फलम्।
करवीरे तथैकस्मिन्नर्काय विनिवेदिते॥

अत्र पुष्पैः सम्पूजयेदिति स्पष्टविधिना वक्ष्यमाणसर्व्वपुष्पाणां पूजाङ्गत्वावगमः। पुष्पजातिविशेषेणेत्यादिना तेषामेव फलसम्बन्धः। नचाश्रयलाभः। उपक्रमे पूजामनूद्य पुष्पविधानमुपसंहारे च स्वयमुत्पाद्य पुष्पाणीति पूजाङ्गविधिमध्येऽपि मुकुलैर्नार्चयेद्देवमित्येवं पूजाङ्गविधानात् कथम्भावानुस्मृतिरूपप्रकरणप्रधानविध्यभावेऽपि सद्भावात् प्रकरणादाश्रयलाभसम्भवात्। तत्र यथा "भूयस्तेनोभयश्रुति"इति नित्यज्योतिष्टोमस्य यजुर्वेदोत्पन्नत्वेन सामवेदे तद्विध्यभावेऽपि प्रकरणम्।

तदुक्तम्,—

परप्रकरणस्थानामङ्गं श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्देशेन तदिष्यते॥

इति। नचैवं फलश्रुतेरङ्गस्थस्य जुहूपर्णमयीन्यायेनार्थवादत्वम्। "फलन्तु तत्प्रधानायाम्" इत्युक्तदिशा फलविधित्वप्रतीतेः। एवं कामशब्दतुल्यनिर्द्देशात् यथा खादिरं वीर्य्यकामस्येति संयोगपृथक्त्वविधिः (तथा) स्मृतिवाक्येषु फलं प्राप्नुयादित्यादिशब्दैरेव फलविधिप्रतीतिः। यदा तु नात्र पूजाप्रकरणमितिपक्षस्तदा गुणफलसम्भवात् तत्तत्पुष्पपूजनमेव फलाय विधीयते।

तथा च नित्यपूजाकालं विनापि प्रातर्य्येतानि पुष्पाणि देयानि। तत्र करवीरपुष्पदाने दशसुवर्णनिष्कदानफलम्। जाती-वकुल-पाटलश्वेतमन्दारसितपद्मनागकेशर–चम्पकपुन्नागमुद्गरास्तत्-समाः। अर्कपुष्पेण सूर्य्यलोकप्राप्तिः। करवीरसहस्रेभ्यो विल्व-पत्रमधिकम्। विल्वपत्रसहस्रेभ्यः पद्ममेकम्। पद्मसहस्राद् वकपुष्पम्। तत्सहस्रात् शमीपुष्पम्। वृहतीपुष्पं कुङ्कुमपुष्पञ्च शमीपुष्पसमम्। तत्सहस्रान्नीलोत्पलम्। [1]रक्तोत्पलसहस्रा-न्नीलोत्पलशतम्। रक्तकरवीरैश्च पूजने कल्पकोटिशतञ्च सूर्य्य-लोके वासः। सर्व्वपुष्पेषु मालायां स्वस्वफलं द्विगुणम्।

तथा,—मालती मल्लिका चैव तथा काशोऽतिमुक्तकः।

पाटली करवीरश्च जया पारन्तिकेति (?) च॥

कुजकस्तगरश्चैव कर्णिकारः कुरुण्टकः।

चम्पको रेतकः (?) कुन्दो वाणो वदरमालिका॥

अशोकस्तिलको लोध्रस्तथा पैनाटरूपकः (?)।

शतपत्राणि चान्यानि वकाद्यानि विशेषतः॥

अगस्तिकिंशुकौ तद्वत् पूजार्थं भास्करस्य च।

विल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च॥

तमालपत्रं च तथा सदैव तपनप्रियम्।

तुलसी कालतुलसी तथा रक्तञ्च चन्दनम्॥

[2]केतकीपुष्पपत्रञ्च सद्यस्तुष्टिकरं रवेः।

---

(१) E. F. रक्तोत्पल-सहस्रनीलोत्पलशतरक्तकरवीरैश्च पूजने ०

(२) D. केतकीपत्रपुष्पञ्च ०

अतिमुक्तो माधवी। कुरुण्टकोऽत्र पीताम्लानः। केतकी पत्रदानमपि। एतेषां माल्यादीनां फलश्रवणाभावात् पूजाया-मेवाङ्गत्वम्। एवं पुष्पाभावे पत्राणि पत्राभावे फलानि फलाभावे तृणगुल्मौषधीः। इत्यपि पूजाविषयं न फलार्थम्। कीटकोटावपन्न-शीर्णपर्युषितस्वयम्पतितमुकुलवर्जनं तु पूजायामिव फलार्थपुष्प-समर्पणे इति। ततस्तु,—

सुदगराणि कदम्बानि रात्रौ देयानि भानवे।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका॥
प्रहरं तिष्ठते जाती करवीरमहर्निशम्।

न निर्माल्यतां यातीत्यर्थः। अन्येषु यावद्गन्धानुवृत्तिः। ततः पूर्व्वमुद्धरणे तु ब्रह्महत्याफलं महारौरवपातः। सूर्य्यस्योपरि पुष्प-मण्डपकरणे सूर्य्यलोके सर्व्वोपरि वासः। नानापुष्पैः सूर्य्यगृह-मण्डने अक्षयं कालं रमते। स्वयमुत्पाद्य पुष्पाणि सूर्य्यपूजने सूर्य्यतुष्टिः। स्वर्णपद्मदाने कल्पान्तमिन्द्रार्द्धासने वासः।

वर्ज्याणि पुष्पाणि।

देवीपुराणे,—

सूर्य्यस्य तगरं तथा। वर्जयेदित्यर्थः।

भविष्ये,—

कुब्जलोन्मत्तकं केरी तथाच गिरिकर्णिका।

गिरिकर्णिका अपराजिता।

तथाम्रातकजैः पुष्पैर्नार्चनीयो दिवाकरः।

---

# अथ शिवस्य पुष्पाणि ।

भविष्यपुराणे,—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।

अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥

आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेत् शिवम् ।

अत्र पूर्व्ववदेव पुष्पाणां भविष्यपुराणोक्तानां पूजाङ्गत्वं गुणफलसम्बन्धश्च ।

अर्कपुष्पे तथैकस्मिन् शिवाय विनिवेदिते ।

दश दत्वा सुवर्णस्य यत्फलं तदवाप्नुयात् ॥

तत्फलं शिवलोकवासः। अर्कपुष्पसहस्रतुल्यफलं करवीरस्यैकस्य दाने। जातीपाटलविजयश्वेतमन्दारसितपद्मानि करवीरसमानानि। करवीरसहस्रतुल्यं विल्वपत्रम्। विल्वपत्रसहस्रतुल्यं बृहतीपुष्पम्। बृहतीपुष्पसहस्रतुल्यं द्रोणपुष्पम्। द्रोणपुष्पसहस्रतुल्यमपामार्गपुष्पम्। तत्सहस्रतुल्यं कुशपुष्पम्। तत्सहस्रसमं [1]शमीपुष्पम्। तत्सहस्रतुल्यं नीलोत्पलम्। नीलोत्पलसहस्रसमं रक्तपद्मम्। तत्सहस्रतुल्यं वकपुष्पम्। वकसहस्रसमं धूस्तूरम्।

[2]नागचम्पकपुन्नागा धूस्तूरकसमाः स्मृताः ।

तथा अखण्डविल्वपत्रैः शिवलोकमहि(त)त्वम्। धूस्तूरैर्गोलक्षफलम्। बृहतीपुष्पैर्गवायुतफलम्। अशोक-श्वेतमन्दार[3][कर्णि-

(१) E. F. शमीपत्रम् ।

(२) F. F. नागपङ्कजपुन्नागा ०

(३) D. Omits the portion bracketed.

कारवककरवीरार्कमन्दार ] शमीतगरकेशरैर्यथालाभं पूजने रुद्र-कन्यासमाकीर्णपुष्पमालायुक्तसूर्य्यकोटितुल्यविमानेन सूर्य्यलोके मह्यीयते। श्वेतमन्दारः प्रसिद्धः। अपरो मन्दारः पारिभद्रः। स्कान्दे अर्क-करवीरविल्ववकैर्लिङ्गपूजने दिव्यवर्षशतं स्वर्गः। भविष्यपुराणे शिवस्योपरि पुष्पमण्डपकरणं सर्व्वोपरि शिवपुर-वासाय। शिवगृहस्य पुष्पमालाभिर्मण्डने अक्षयलोकप्राप्तिः। मालाभि लिङ्गवेदीवेष्टने देवीपुत्त्रत्वम्। देवीपुराणे वैशाखे मालया पूजा ज्यैष्ठे पद्मेन आषाढ़े विल्वकल्हारैः श्रावणे नव-मालिकाकदम्बैश्चम्पकै र्भाद्रपदे आश्विने पद्ममालिकया कार्त्तिके शतपत्त्रिकया मार्गशीर्षे नीलोत्पलेन पुष्ये वककुजकैश्च माघे कुन्दकुसुमैः फाल्गुने मरुवकैः चैत्रे शतपत्रैः पूजने सर्व्वकामाप्तिः फलम्।

तथा,—

पञ्चाक्षरेण मन्त्रेण विल्वपत्त्रैः शिवार्चनम्।
करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदम्॥

कृष्णाष्टम्यां विल्वपत्त्रैरखण्डैरर्चने ब्रह्महत्यापापक्षयः। माघ-कृष्णचतुर्द्दश्यां विल्वदलार्चने पृथ्वीदानफलम्। तुलसीदलदानेन मनोवाक्कायजन्यपापक्षयः।

अर्केण म्रियमाणच्छेन्मोक्षं धूस्तूरकेण तु।
नीलोत्पलैर्भजेद् भोगान् ज्ञानं मल्लिकया लभेत्॥
कुन्दैः सुपुत्त्रलाभं स्यादुन्मत्तैर्गणपो भवेत्।
पूजयेत्पुत्त्रकामस्तु केतक्या परमेश्वरम्॥

वक्ष्यमाणकेतकीनिषेधः पूजाविषयः । सुनिषण्णदाड़िम-कुष्माण्डकर्कटि-रक्तचित्रककोकिलाक्ष-कोविदारपुष्पाणि पूजाङ्गानि पृथक्‌देयानि। तथा केशरवकुलगिरिकर्णिका-काशपुष्प-मन्दारापराजिता-कुब्जक-शङ्खिनी-उशीरतगर-कुरुण्टक-शिंशपो-दुम्बरजया-यज्ञवृक्षपुष्पकुसुम्भ-कुङ्कुम-नीलकुमुद-रक्तोत्पल-स्थल-पद्मानि निर्दिश्य

गृह्णामि शिरसा देवि यो मे भक्त्या निवेदयेत् ।

इति वचनात् पूजाङ्गानि। गिरिकर्णिका अपराजिता श्वेता नीला च जया कुटजः ।

. तथा स्कान्दे,—

तुलस्यगस्त्यपुष्पाणि बृहत्कुन्दं सुकुन्दकम् ।
अशोकः किंशुकश्चैव शस्तं शङ्करपूजने ॥

अत्र बृहत्कुन्दसुकुन्दयोर्विधिः । भविष्ये कुन्दनिषेधस्तदितर-कुन्दपरः ।

केतकी ह्यतिमुक्तश्च कुन्दो यूथी मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥
आङ्कोलपत्रकुसुमं करञ्जोड्रतरूद्भवम् ।
वैभीतकानि पत्राणि कुसुमानि विवर्जयेत् ॥

आंकोलः । आङ्क इति प्रसिद्धम् । ओड्रपुष्पं जवापुष्पम् ।

निर्गन्धान्युग्रगन्धानि कुसुमानि विवर्ज्जयेत् ।

पुष्पालाभे पत्राणि पत्रालाभे फलानि फलालाभे तृणगुल्मौषधि-विधानं पूजाङ्गम् ।

भविष्ये,—

धुस्तूराणि कदम्बानि रात्रौ देयानि शङ्करे।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका॥

पुष्पफलविधानवाक्यशेषोऽयम्। तेन न परिसंख्यादोषः।

प्रहरं तिष्ठते जाती करवीरमहर्निशम्।

---

## [1]अथ विष्णोः।

[2]नरसिंहे—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः।
अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैः॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद्धरिम्।
पुष्पजातिविशेषेण भवेत् पुण्यं विशेषतः॥
तपःशीलगुणोपेते पात्रे वेदस्य पारगे।
दश दत्वा सुवर्णानि यत्फलं लभते नरः।
तत्फलं लभते मर्त्त्यो हरेः कुसुमदानतः॥

अत्र प्रथमं पूजाङ्गत्वेन पुष्पमरण्यसम्भूतमात्मारामोद्भवञ्च विहितं पुनः काम्यं कुसुमदानं च विहितं हरेः कुसुमदानत इति।

---

(१) Y. अथ पुष्पाणि।
(२) Y. नरसिंहपुराणे।

तेनाकाङ्क्षाविच्छेदात् [१]प्रकरणादानं नास्ति तेन वक्ष्यमाणफल-[२]वाक्ये विशेषपुष्पपूजनादेव फलप्रतीतिः। न पूजायां गुणफलम्। केवलं स्वागमोक्तानि यानि च इति प्रपञ्चसारोक्तेः पूजाङ्गत्वमप्येषा-[३]मुक्तमेव। तथाच नरसिंहे,—

द्रोणपुष्पे तथैकस्मिन् केशवाय निवेदिते।
दश दत्वा सुवर्णानि यत्फलं तदवाप्नुयात्॥

द्रोणपुष्प[४]खादिरशमीपुष्पविल्वपुष्पनन्द्यावर्त्ताख्यपिण्डीतकरक्तकर-वीर [[५]श्वेतकरवीर] पलाशवकुलकुशपुष्पनवमालापदवाच्यनेपालाख्यपुष्पचम्पकाशोकसेवती[६]कुन्दमालतीत्रिसन्ध्यारक्तत्रिसन्ध्या-श्वेतकुन्दशतपत्रमल्लिकाजातीपुष्पाणां पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरं सहस्रगुणफलम्। सुवर्णदानफलतारतम्येन विष्णुलोकवासतार-तम्यम्। जातीपुष्पसहस्रग्रथितमालादाने [७]कल्पकोटिशतं विष्णु-पुरे वासः। [८][तथा] अपामार्गभृङ्गराजखादिरशमीदूर्व्वाकुश-दमनकविल्वपत्रतुलसीपत्राणामुत्तरोत्तरप्राशस्त्य[९]मुक्तम्।

एतेषाञ्च यथालब्धैः पत्रैर्योऽभ्यर्चयेद्धरिम्।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते॥

---

(१) D. प्रकरणादाश्रयदानं नास्ति।
(२) Y. वाक्यैः पुष्पविशेषपूजनादेव०
(३) Y. ०सक्तवान्।
(४) Y. अपाम्बादिश्चखड्मा पुष्प (?) विल्वपुष्पवकपुष्पनन्द्या०
(५) Y. Omits the portion breckated.
(६) Y. कुब्जक मालतीत्रिसन्ध्य रक्तत्रिसन्ध्य श्वेत०
(७) D. कल्पकोटि सहस्रशतञ्च (?)
(८) Y. Omits the portion bracketed. E. F. तथाच,—
(९) D. ०सक्ता।

तथा—

मल्लिका मालती जाती केतकाशोकचम्पकैः।
[1]पुन्नागनागवकुलैः पद्मैरुत्पलजातिभिः॥
एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः।
अर्चयन् दशसुवर्णस्य प्रत्येकं फलमाप्नुयात्॥

पूजने एतेषां पुष्पाणां [2]दशसुवर्णफलमुक्ता

एतैश्च नित्यं हरिमर्च्य भक्त्या
नरो विशुद्धो हरिमेव याति।

इति प्रत्यहं पूजनफलमुक्तम्।

[3]केतकीदानं फलार्थं विहितम्। एवञ्च वामनपुराणे केतकीनिषेधो नित्यपूजाविषयः।

वक्ष्यमाणवाक्यैः [4]काम्यपुष्पेणार्चनं विधीयते। तथाहि [5]स्कान्दे,—

आहृतेनापि चैकेन पद्मेन मधुसूदनम्।
यदा कदाचिदभ्यर्च्य [6]नरो विष्णुपुरं व्रजेत्॥
अपराधसहस्राणि अपराधशतानि च।
पद्मेनैकेन देवेशः क्षमते ह्लियार्चितः॥

(१) Y. पुनागनाग ०
(२) Y. दशसुवर्णमुक्ता।
(३) Y. यत्र केतकीदानं ०
(४) Y. काम्येन पुष्पेण ०
(५) Y. स्कन्दपुराणे।
(६) Y. जनो ०

तथा [1]पद्मेनैकेनार्चने वर्षायुतसहस्रपापक्षयः।

सुवर्णकेतकीपुष्पं यो ददाति जनार्द्दने।
कोटिजन्मार्जितं पापं हरति गरुड़ध्वजः॥
एकपत्रयापि केतक्या यदा सम्पूज्यते हरिः।
पूजितो द्वादशाब्दन्तु [2]केशवस्तस्य तुष्यति॥
केतकीपत्रपुष्पञ्च सद्यस्तुष्टिकरं हरेः।

एतेनाखण्डपुष्परूपेण पत्ररूपेण च देयत्वमुक्तम्। विष्णुधर्म्मोत्तरे,—

नीलोत्पलशतं दत्वा [3]अग्निष्टोमफलं लभेत्।
पौण्डरीकं सहस्रेण राजसूयञ्च लक्षदः॥
नीलोत्पलसमं दानं चम्पकस्य प्रकीर्त्तितम्।
मल्लिकापुष्पजातीनां [4]यूथिकायास्तथैवच॥
तथा कुब्जकजातीनां फलं तद्वत्प्रकीर्त्तितम्।

तथा रक्तपद्मैकदानं स्वर्णमासदानफलम्। शतदानमग्निष्टोमफलम्। सहस्रेण [5]सूर्य्यलोकप्राप्ति [[6]लक्षेण विष्णुलोकप्राप्तिः।] तथा कुमुदैकदानं रूप्यमासकदानफलम्। कुमुदशतेन चन्द्रलोकः। सहस्रेण यथेष्टा गतिः। लक्षेणाश्वमेधफलम्।

---

(१) Y. पद्मेनैकेनानेन वर्षा०
(२) D. केशवस्तस्य निश्चितम्। Y. केशवस्तेन निश्चितम्।
(३) Y. वह्निष्टोमफलम्०
(४) Y. फलं तद्वत्प्रकीर्त्तितम्।
(५) Y. सूर्य्यलोकाप्तिः।
(६) Y. Omits the portion bracketed.

जातीपुष्पसहस्रेण यथेष्टां गतिमाप्नुयात्।
श्वेतद्वीपमवाप्नोति लक्षपूजाविधायकः॥
करवीरस्य पुष्पेण रक्तेनाथ सितेन वा।
मुचुकुन्दस्य चैकेन सम्पूज्य गरुड़ध्वजम्॥
यावच्चन्द्रश्च सूर्य्यश्च [1]स्वर्गीभूत्वा ततः पुनः।
पुरं नारायणं याति सत्यमेतन्मयोदितम्॥
जातीभिर्म्मल्लिकाभिश्च पुन्नागैर्नागचम्पकैः।
श्रीपतिं सकृदभ्यर्च्य श्रियं पूर्णामवाप्नुयात्॥
[2]चम्पकैर्नन्द्यावर्त्तैः कुसुदैश्च कुरुण्टकैः।
वालैश्च शतपत्रैश्च माधवैः कुसुमैः शुभैः॥
[3]अकाले वाप्यभक्त्या वा तथैवामन्त्रपूर्व्वकम्।
सम्पूजितो नृणां विष्णुः सर्व्वान् कामान् प्रयच्छति॥
किं पुनर्भक्तिपूर्व्वन्तु मन्त्रपूर्व्वं सनातनम्।
अर्च्चयन् कुसुमैरेभि र्मुक्तिभागीति [4]भाष्यते॥

[5]कुरुण्टकः पीताम्लानकः। वालं कुरुवेलितिविख्यातम्।

जवापुष्पैः पुमान् भक्त्या सम्पूज्य गरुड़ध्वजम्।
उत्तमां गतिमाप्नोति प्रसन्ने गरुड़ध्वजे॥

---

(१) D. स्वर्गें भूत्वा ०
(२) Y. चम्पकैश्चन्द्रवर्णैः (च) कुसुदैश्च ०
(३) Y. अकाले वाप्यभक्तौ वा ०
(४) Y. भाव्यते।
(५) Y. तेन कुरुण्टकः अम्लातकः।

एवञ्च जवापुष्पं विष्णुपूजामात्रे सर्व्वमूर्त्तौ देयम्। तथाच 'वामने विष्णुमूर्त्तिमात्रदेयमित्युक्तमिति वक्ष्यते। तेन

यो जवाकुसुमैकेन नारसिंहमथापरम्।
जलशायिनमभ्यर्च्य सर्व्वान् कामानवाप्नुयात्॥

इति फलविशेषार्थम्।

अष्टैश्वर्य्यमवाप्नोति स्थलपद्मेन चार्च्चने।
अचिरात् ज्ञानमाप्नोति वकपुष्पार्च्चिते हरौ॥
सर्व्वलोकाधिपत्यञ्च चम्पकेन प्रयच्छति।
हन्यात् शोकमशोकेन पूजितो देवकीसुतः॥
अगस्त्यैरसितैः शुक्लैः प्राप्नोति परमं पदम्।
सेवतीकुसुमैश्चान्यैर्यूथिकाकुसुमैस्तथा॥
अतसीकुसुमैश्चैव पाठलीतरुसम्भवैः।
अशोककुसुमैश्चैव तिलकोद्भवपुष्पकैः॥
पारन्तीकुसुमैश्चैव कुसुमैः [2]कुटजोद्भवैः।
नारायणं समभ्यर्च्य चिरं स्वर्गे महीयते॥

पारन्ती रङ्गिणी।

कर्णिकारैः सकल्हारैस्तथा नीपैः कदम्बकैः।
गोकर्णनागकर्णाभ्यां वकुलैस्तगरैस्तथा॥

[3][नागकर्णः पत्नाग्रश्च।]

---

(१) Y. वामनपुराणे।
(२) Y. कुलकोद्भवैः।
(३) Y. Omits the portion bracketed.

अर्जुनैर्हरिमभ्यर्च्य सर्व्वान् कामानवाप्नुयात् ।
मालत्या स्वर्गमाप्नोति [1]वकुलैश्च कुलोन्नतिम् ॥
मल्लिकाभिः श्रियं दद्यात् कुलानामेकविंशतिम् ।
पाटलैः किन्नरो नागकेशरैर्गुह्यकाधिपः ॥
विष्णोर्व्वश्युत्वमाप्नोति बन्धूकेनार्च्चिते हरौ ।
[2]द्विरन्तकुरिकाभ्याञ्च मण्डलेशत्वमाप्नुयात् ॥
[3]शरदूर्व्वामयैः पुष्पैस्तथा काशसमुद्भवैः ।
भुवनेशमलङ्कृत्य विष्णुलोकं व्रजेन्नरः ॥
पुरन्ध्रिपुष्पैः सन्तोषं याति चक्रगदाधरः ।

[4]विष्णुधर्म्मे,—

पुरन्ध्रिपुष्पं यो दद्यादेकमप्यत्र पण्डितः ।
तिलप्रस्थप्रदानस्य फलमाप्नोत्यसंशयम् ॥
पुरन्ध्रिमञ्जरीपुष्पसहस्रेणार्चयेद् हरिम् ।
अग्निष्टोममवाप्नोति [5]कुलमुद्धरते तथा ॥
कर्पूरपटवासेन पुरन्ध्रिपरिवासिताम् ।
महारत्नकरत्नेन तथा सूत्रेण निर्म्मिताम् ॥
मालां पुष्पसहस्रेण यः प्रयच्छति भक्तितः ।
अश्वमेधफलं तस्य नात्र कार्य्या विचारणा ॥

---

(१) Y. वकुलैः सुकुलोन्नतिम् ।
(२) Y. विहन्तकुरिकाभ्याञ्च ।
(३) Y. शरदुद्भवामयैः पुष्पैस्तथाकाशकुशोद्भवैः ।
(४) Y. विष्णुधर्म्मोत्तरे ।
(५) Y. कुलमुद्धरणे तथा ।

शतेन वाजपेयस्य लक्षेण सकलक्रतोः ।
मालत्या एकपुष्पेण प्रीतः क्रतुशतेन च ॥
अदत्वा केशवे मालां मालतीं नैव धारयेत् ।
विष्णुङ्गभ्रष्टमालत्या धारणे सुमहत् फलम् ॥
विल्वपत्रैरष्टशतैः पूज्य विष्णुपुरं व्रजेत् ।
शमीपत्रैः सर्व्वकामं भृङ्गराजैर्जगद्वशम् ॥
दूर्व्वयागस्त्यपत्रैश्च श्रीदेव्या विष्णुयोषिता ।
तमालैरच्युतं पूज्य नरः पापात् प्रमुच्यते ॥
दूर्व्वया चन्द्रलोकाप्तिः कुशैः सप्तर्षिसन्निधौ ।
[1]दमनमरुवाभ्याञ्च वासुदेवं व्रजेन्नरः ॥
सहा च सुरभिश्चैव जाम्बूकश्च यवं तथा ।
[2]कह्लारं देवमाता च सुरमर्त्यमहौषधीः ॥
वैष्णव्यः पत्रिकाः प्रोक्ता एताः स्वपुरदायिकाः ।
केतक्या वासकस्यैव कृष्णदुर्म्भरकस्य च ॥
[[3]अपामार्गस्य द्रोणस्य तगरस्य कुण्डिकस्य च ॥]
पिप्पलस्य च दर्भस्य पत्रं तुष्टिकरं हरेः ।
कार्त्तिके विल्वपत्रैस्तु[4] पूजनान्मुक्तिभाग् भवेत् ॥
वसन्ते दमनैः पूजा कृता कल्पशतं भवेत् ।
सहकारस्य मञ्जर्य्या गोकोटिफलमाप्नुयात् ॥

(१) Y. दमनकमरुवकाभ्याञ्च ०
(२) Y. कल्हारं देवता सा च सुरभश्च महौषधीः ।
(३) D. Omits the portion bracketed.
(४) Y. ० श्च ०

जम्ब्वाम्रबीजपूराणां पत्राणि च निवेदयेत् ॥
पूजासु वासमञ्जर्य्यो [1]दयितास्तस्य नित्यशः।
तिलधेनुसहस्रस्य फलं स्याद् बोधिपल्लवैः ॥

तथा,— यत् फलं सर्व्वपुष्पेषु पुष्पं पत्रेषु नारद।
तुलसीदलेन तत्सर्व्वं प्राप्यते केशवार्चनात् ॥
[2]तुलसीपत्रिका यत्र तत्र सन्निहितो हरिः।
कृष्णं कृष्णतुलस्या संपूज्य विष्णुपुरे वसेत् ॥
सुवर्णमणिपुष्पैश्च प्रीतो भवति नाच्युतः।
तुलसीदलार्द्धभागेन यथा प्रीयेत केशिहा ॥
समञ्जरीदलैर्युक्ता तुलसी संभवेत् क्षितौ।
कुर्व्वन्ति पूजनं भक्त्या कृतार्थास्ते कलौ युगे ॥
तुलसीदललक्षेण योऽर्च्चयेद् द्वारकाश्रयम्।
जन्मार्ज्जितसहस्रस्य पापस्य कुरुते क्षयम् ॥
वर्ज्ज्यं पर्य्युषितं पुष्पं वर्ज्ज्यं पर्य्युषितं जलम्।
न वर्ज्ज्यं तुलसीपत्रं न वर्ज्ज्यं जाह्नवीजलम् ॥
गृह्णाति तुलसीपत्रं शुष्कं पर्य्युषितं हरिः।

तत्र मन्त्रः,—
तुलस्यमृतनामासि सदा त्वं केशवप्रिये।
[3]केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥

---

(१) Y. दैवतास्तस्य ।
(२) Y. तुलसीवाटिका यत्र ।
(३) Y. केशवार्थं ।

त्वदङ्गसम्भवैर्देवं पूजयामि यथा हरिम्।
तथा कुरु पवित्राङ्गी कलौ मलविनाशिनी॥
मन्त्रेणानेन यः कुर्य्याद् गृहीत्वा तुलसीदलम्।
पूजनं वासुदेवस्य लक्षकोटिगुणं भवेत्॥
[1][तथा,]—न च्छिन्द्यात् सर्व्वथा विद्वान् द्वादश्यां तुलसीदलम्।
पुत्रमर्थं तथा स्वर्गं [2]विष्णुभक्तिञ्च चिन्तयन्॥
उपोष्य तुलसीपत्रैः सम्पूज्य नरकेश्वरम्।
द्वादश्यां तत्पदं [3]यायाच्छेदने तत्पदच्युतिः॥
लोभान्मोहाद् भयाद् वापि द्वादश्यां तुलसीदलम्।
छेत्तुं समुद्धरेद् यस्तु इमं मन्त्रमुदीरयेत्॥
त्वदङ्गे सर्व्वतीर्थानि [4]त्वयि देवो जनार्द्दनः।
अतस्त्वां विचिनोम्यद्य पूजनार्थं हरेस्तथा॥
क्षमां कुरु पवित्राङ्गि भक्तत्वं समजायताम्॥
(तथा,)— तुलसीदललग्नेन चन्दनेन जनार्द्दनम्।
विलेपयन्ति येऽत्यन्तं लभन्तेऽचिन्तितं फलम्॥
तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः।
प्रयान्ति गरुड़ारूढ़ास्तत्पदं चक्रपाणिनः।
श्राद्धे च तुलसीदानं पितॄणां तृप्तिकारकम्॥

---

(१) D. Omits the portion bracketed.
(२) Y. विष्णुभक्तिं विचिन्तयन्।
(३) D. याति छेदके तत्पदच्युतिः।
(४) Y. त्वदङ्गेऽपि जनार्द्दनः।

तथा सर्व्वपुष्पेषु,—

शतं स्यान्मुक्तके पुण्यं सहस्रं संस्कृते फलम्।
स्रजि लक्षगुणं प्रोक्तं माला कोटिगुणोत्तरा॥
प्रतिमामानमानेन मालामेकां सुगुम्फिताम्।
आरोप्य निखिलैर्देवैर्वन्द्यमानो दिवं व्रजेत्॥
योऽपि दूरात् समाहृत्य पुष्पाण्यपि च पत्रिकाः।
महापथं समारुह्य पूजयेद् देवतां बुधः।
सर्व्वपापक्षयस्तस्य तत्क्षणादेव जायते॥
[1]स्वर्णपुष्पेण चैकेन मुक्तिं सम्पूज्य चाप्नुयात्।
किं पुना रत्नमुक्तादिखचितं स्वर्णपङ्कजम्।
आरोप्य प्रतिमामूर्द्ध्नि पूजयन् [2]सिद्धिभागिति॥

स्कान्दे,—

स्वर्णपुष्पार्च्चितो यस्य गृहे तिष्ठति केशवः।
[3]तस्यैव पादरजसा शुद्ध्यते क्षितिमण्डलम्॥
वस्त्रनिर्म्मितपुष्पैश्च पूजयित्वेष्टदेवताम्।
साधयेदीप्सितं कामं सत्यमेतद् ब्रवीमि ते॥
अस्याभ्युक्षणतः शुद्धेद् वस्त्रपुष्पं दिने दिने।
कृत्रिमाण्यनुलेप्यानि गन्धेनापि सुगन्धिना॥

एवञ्च [4]स्वर्णरत्नपुष्पेऽपि गन्धलेपनम्।

---

(१) Y. स्वर्णस्य पुष्पेणैकेन ०
(२) Y. सिद्धिभाग्भवेत्।
(३) Y. तस्यैतत्पादरजसा ०
(४) Y. सुवर्णरत्न ०

यावच्चन्द्रश्च सूर्य्यश्च यावत्तिष्ठन्ति देवताः।
[1]न निर्म्माल्यं भवेत् पुष्पं स्वर्णरत्नविभूषितम्॥

तथा अग्निपुराणे,—

तमालामलकी [2]पुष्पं शस्तं केशवपूजने।
प्रवालैः शुचिभिः शस्तै [3]र्जलेन प्रोक्षितैर्वने॥
वनस्पतीनां सर्व्वेषां तथा दूर्व्वाग्रपल्लवैः।

विष्णुधर्म्मे,—

धर्म्मार्जितधनक्रीतैर्यः कुर्य्यात् केशवार्चनम्।
उद्धरिष्यत्यसन्देहं सप्त पूर्व्वान् परावरान्॥
पञ्चविंशत्यतीतांश्च पञ्चविंशत्यनागतान्।
उद्धरेदात्मनो वंशान् नात्र कार्य्या विचारणा॥

यत्तु,—

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्।
शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् व्रजत्यधः॥

इति क्रयक्रीतशूद्रानीतनिन्दनं तदुरचितस्वाहरणप्ररोचनार्थम्। उदितहोमप्रशंसार्थमनुदितनिन्दावत्।

स्वारामस्थैश्च संपूज्य फलं स्वादेतदेव तु।

एतत्पञ्चविंशकुलोद्धरणमित्यर्थः।

---

(१) निर्म्माल्यं न भवेत्।
(२) Y. पल्लवैः।
(३) Y. र्जलप्रक्षालितैर्वने।

अरण्यादाहृतैः पुष्पैः सर्व्वान् कामानवाप्नुयात्।
[1]अकामः स पुनर्याति तद् विष्णोः परमं पदम्॥
वाह्यपुष्पसहस्राणां सहस्रायुतकोटिभिः।
पूजने यत् फलं पुंसां मानसेनैव तत्समम्॥

नारदपञ्चरात्रे,—

मालतीवकुलाशोकसेफाली[2]नवमालिका।
अम्लानं तगराख्यञ्च मल्लिका[3]मधुपिण्डिका॥
यूथिकाश्वपदं कुन्दं कदम्बं [4]शिखिपिङ्गलम्।
पाटली चम्पकं हृद्यं लवङ्गमतिमुक्तकम्॥
केतकं कुरुवकं विल्वं कल्हारं वासकं द्विजाः।
पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे॥
मदीयार्चनमाला च पुष्पैरेभिर्महामुने।
ग्रथिता स्यात् तथा तुल्यैः पञ्चविंशतिभिः क्रमात्॥
एभिरेवार्च्चितो नित्यं साधकेन महामुने।
ददामि सर्व्वकल्याणं तथैश्वर्य्यसुखानि च॥

[ [5]सेफाली गङ्गसियोलीति प्रसिद्धिः। नवमालिका निवालीति प्रसिद्धिः। मधु मधुकपुष्पम्। पिण्डिका पिण्डीतगरः। अश्वपदं नागकेशरः। शिखी चित्रकपुष्पम्। पिङ्गलं जवापुष्पम्।]

---

(१) Y. अकामः पूजयन् याति ०
(२) Y. वनमालिका।
(३) D. मधुपर्णिका।
(४) D. शङ्खपङ्कजम्।
(५) D. Omits the portion bracketed.

विष्णुधर्म्मे,—

[1]श्वेतैः पुष्पैः समभ्यर्च्य सर्व्वान् कामानवाप्नुयात्।
ऐश्वर्य्यमाप्नुयाल्लोके पीते र्देवं समर्चयन्।
[2]शत्रूणामभिचारेषु तथा कृष्णैः समर्चयेत्॥
सुवर्णपुष्पैरभ्यर्च्य राजसूयफलं लभेत्।
रत्नपुष्पैः समभ्यर्च्य राजा भवति भूतले॥
कृत्वा पुष्पगृहं विष्णोः पुष्पैर्वापि वितानकम्।
फलेन योगमाप्नोति राजसूयाश्वमेधयोः॥

तत्रैव,—

अञ्जलीरोदिकापुष्पैः कुष्माण्डतिमिरोद्भवैः।
भुवनेशमलङ्कृत्य विष्णुलोकं व्रजेन्नरः॥

विष्णुधर्म्मे,—

पुष्पप्रकरमत्यर्थं [3]सुगन्धं केशवालये।
अनुलिप्ते नरो दत्वा न दुर्गतिमवाप्नुयात्॥
येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च।
तानि पुष्पाणि देयानि विष्णवे प्रभविष्णवे॥

स्कान्दे,—

मालती तुलसी पद्मं केतकी मुनिपुष्पकम्।
कदम्बपुष्पं लक्ष्मीश्च कौसुभं केशवप्रियम्॥

---

(१) D. श्वेतपुष्पैः।
(२) Y. शत्रूणामभिचारेषु तथा कृष्णैः समर्चयन्।
(३) Y. यः कुर्य्यात् केशवालये।

मालतीकलिकामालामीषद्‌विकसितां हरेः।
दत्वा शिरसि विप्रेन्द्र वाजिमेधायुतं लभेत्॥
मुनिपुष्पकृतां मालां दृष्ट्वा कण्ठे विलम्बिताम्।
प्रीतो भवति दैत्यारिः [1][शतजन्मानि नारद॥
त्रिंशद्‌वर्षसहस्राणि त्रिंशद्‌वर्षशतानि च।
प्रीतो भवति दैत्यारिः] कदम्बकुसुमार्चितः॥
ददाति वाञ्छितान् कामान् सप्तजन्मानि सम्पदः।
केशवः केतकीपुष्पैर्मिथुनस्थे दिवाकरे।
येनार्चितः सकृद्‌ भक्त्या स मुक्तो नरकार्णवात्॥
कर्कराशिगते सूर्य्ये केतकीपत्रकोमलैः।
येऽर्चयिष्यन्ति गोविन्दं सम्प्राप्ते दक्षिणायने॥
कृत्वा पापसहस्राणि कृत्वा पापशतानि च।
तेऽपि यास्यन्ति विप्रेन्द्र यत्र विष्णुः श्रिया सह॥

तथा—

कुम्भीपुष्पन्तु देवेशे प्रयच्छति जनार्द्दने।
सुवर्णपलमात्रन्तु पुष्पे पुष्पे भवेन्मुने॥

विष्णुधर्म्मे—

कुङ्कुमस्य च पुष्पाणि तथा भूचम्पकस्य च।

भूचम्पकश्च कनकचम्प इतिख्यातः। विष्णुरहस्ये,—

कर्णिकारमयैः पुष्पैर्मम लोके महीयते।

(१) Y. Omits the portion bracketed.

यत्तु वामनपुराणे बलिं प्रति प्रह्लादवाक्यम्।

तान्येव सुप्रशस्तानि कुसुमानि महामुने।
यानि स्युः सुप्रशस्तानि रसगन्धयुतानि च॥
[1]जाती शताका सुमनाः कुन्दश्चाटरुषस्तथा।
बाणश्च चम्पकाशोकं करवीरश्च यूथिका।
पारिभद्रः पाटलो च वकुलं गिरिमालिनी।
तिलकं जासवनजं पानकं तगरं त्वपि।
एतानि सुप्रशस्तानि कुसुमान्यच्युतार्चने।
सुरभीणि तथान्यानि वर्ज्जयित्वा तु केतकीम्।

[2]शताका सञ्चोप इति प्रसिद्धम्। आट रूषः वासकपुष्पम्। जासवनजं जवाकुसुमम्। एतत् पूजाङ्गमेव पृथक् देयम्।

[3]यच्च प्रपञ्चसारे—

तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ।
शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च॥
उत्पलानि च नीलानि कह्लारकुमुदानि च।
मालतीकुन्दमन्दारनन्द्यावर्त्तादिकानि च।
पलाशपाटलौ पार्थं पारन्त्यवन्तिकानि च।
चम्पकानि च नागानि रक्तमन्दारकाणि च।
अशोकोद्भवबिल्वाद्या कर्णिकारोद्भवानि च।

---

(१) Y. जातीशतावा सुमना?
(२) Y शतावा सइप।
(३) Y. तत्र प्रपञ्चसारे।

[1][पार्थं अर्ज्जुन] पारन्ती रङ्गिणी।

सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि च।

अत्र केतकीविधानात् वामने निषेधात् पूजायां विकल्पः।

[2][केतकीविधानं विष्णुदेवपरम्।]

एतान्यपि पूजाङ्गान्येव पृथक् देयानि।

प्रपञ्चसारे—

मुकुलैः पतितैर्म्लानैः शीर्णैर्जन्तुविदूषितैः।

आघ्रातैरङ्गसंस्पृष्टैरूषितैश्चैव नार्च्चयेत्॥

तथा—

अर्कपद्मोत्पलादन्यन्मुकुलानि विवर्ज्जयेत्।

पतिताघ्राताङ्गस्पृष्टे दृष्टदोषादशौचम्। तच्च अद्भिर्निर्णिक्तं [3]शुद्धं कर्म्मणि योग्यम्। जन्तुदूषिते जन्तुबहिष्कारेण पूजा कार्य्या[4]।

नमुक्तैः पूजयेद् विष्णुं तथैवातिविकाशितैः।

तथा शीर्णेन जीर्णेन भूमिष्ठेन युतेन च॥

उत्सृष्टेनावशिष्टेन गन्धवर्णहृतेन च।

निशि गेहोषितेनैव निर्म्माल्येन तु केनचित्॥

---

(१) D. Omits the portion bracketed.

(२) D. Omits the portion bracketed.

(३) Y. शुद्धकर्म्मणि।

(४) Y. कर्त्तव्या।

न च्छिन्नेन न भिन्नेन तथोत्सङ्गस्थितेन वा।

अपूतदेशजातेन पाषण्डेनार्पितेन वा॥

अर्च्चयित्वा जगन्नाथं नरो नरकमाप्नुयात्।

अत्र गन्धवर्णहृतेन च इत्यत्रोभयाभाव [ [1]एव ] निषेधो नैकाभावे।

[2]केचिद् वर्णगुणादेव केचिद् गन्धगुणादपि।

इति वचनात्। तथा विष्णुधर्म्मे—

उग्रगन्धं न दातव्यमन्यदेवस्थहोद्भवम्।

श्मशानचैत्यद्रुमजं भूमावथ निपातितम्॥

शुक्लान्य[3]वर्णकुसुमं न देयञ्च तथा भवेत्।

[4]एतद् विशेषविहितेतररक्तविषयम्। तथाच विष्णुः,—नोग्रगन्धपुष्पं नागन्धकण्टकिजञ्च। कण्टकिजमपि शुक्लं सुगन्धमत् तद् दद्यात्। रक्तमपि कुङ्कुमजं जलजं दद्यात्। यद्यपि रक्तनिषेधः केवलरक्तजातीये सावकाशः। जवापुष्पविधिश्च शुक्लजवापुष्पे रक्तजवापुष्पे द्वयोर्व्विधिनिषेधयोः प्रवृत्तौ न विशेषः। तथापि विशेषविधेः [5]शीघ्रप्रवृत्तत्वात् तद्विषयपरिहारेण निषेधः प्रवृत्तः। विहितहिंसापरिहारेण हिंसानिषेधप्रवृत्तिवत्।

---

(१) Y. Omits the portion bracketed.

(२) Y. केचिद् गन्धगुणादेव केचिद् वर्णगुणादपि।

(३) Y. ० वस्त्र ०

(४) एतद्विशेषविहितं रक्तव्यतिरिक्तविषयम्।

(५) Y. शीघ्रप्रवृत्तत्वात् ०

[1]विष्णुधर्म्मे,—

यदायुर्व्वेदविधिना शुक्लं रक्तीकृतं भवेत् ।
तद्रक्तमपि दातव्यं [2]विल्वपत्रं तथैव च ॥

आयुर्व्वेदविधिना दोहददानादिना ।

तथा,— मध्येऽन्यवर्णं यस्य स्यात् शुक्लस्य कुसुमस्य च ।
[3]पुष्पं शुक्लन्तु विज्ञेयं मनोज्ञं केशवप्रियम् ॥

अत्र,— रक्तानि नीलकृष्णानि भूषणार्थं नियोजयेत् ।

इति रक्तादिनिषिद्धपुष्पाणामपि मण्डने न विरोधः । एवञ्चास्योपलक्षणतया मुकुलादीनामपि मण्डने विनियोगः। "मुकुलैर्नार्चयेत्" इति पूजायामेव निषेधात् ।

काञ्चनारं व्यक्तरक्तं धूसराङ्ककमेव च ।
कुटजं सिन्धुवारञ्च शिरीषं गिरिकर्णिकम् ॥
कृष्णापराजिता चैव जयन्ती [4]तगरस्तथा ।
प्रमादात् ज्ञानतो वापि यो दद्याद् विष्णवे क्वचित् ।
उन्मादं दारुणं दुःखं तस्मै विष्णुः प्रयच्छति ॥

[[5]विष्णुधर्म्मोत्तरे,—

नीलमुन्मत्तकं काशं तथैव गिरिमल्लिकाम् ।
न कण्टकारिकापुष्पमच्युताय निवेदयेत् ॥

(१) Y. विष्णुधर्म्मोत्तरे।
(२) Y. विल्वपत्रैस्तथैव च।
(३) Y. शुक्लपुष्पञ्च विज्ञेयम् ।
(४) Y. शाल्मली तथा।
(५) Y. Omits the portion bracketed.

कोटजं शाल्मलीपुष्पं शैरीषं च जनार्द्दने।

निवेदितं भयं शोकं निःसत्वञ्च प्रयच्छति॥]

एतन्निषेधस्य येषां प्राप्तिर्नास्ति तेषां प्रतिनिधित्वेन प्राप्तानां पूजाविषये सावकाशत्वं विहितानां [1]विकल्पपरत्वञ्च।

[2]विष्णुधर्म्मे,—

[3]करवीरस्य पुष्पाणि तथा धुस्तूरकस्य च।

कृष्णाञ्च कुटजञ्चार्कं नैव देयं जनार्द्दने॥

[4][अत्र—

नन्द्यावर्त्तसहस्राद्धि करवीरं विशिष्यते।

इति विधानाद् विकल्पपरमेव। यत्तु,—]

न रक्तैः करवीरोत्थैः पुष्पैः सम्पूजयेद्धरिम्।

[5]इति तस्य प्रामाण्यविधेः प्रासादार्चनाविषयपरम्।

---

(१) D. विकल्पत्वम्।

(२) Y. विष्णुधर्म्मोत्तरे।

(३) Y. अर्कस्य च पुष्पाणि ०

(४) Y. Reads in the place of bracketed portion :—अर्कः करवीरः। कृष्णकुटजस्य निषेधात् शुक्लस्य ग्राह्यं (ग्राह्यत्वं) तथा न रक्तैः ०

(५) Y. अस्य प्रामाण्ये करवीरविधिर्बहिः पूजाविषयः। पर्य्युषित ०

पर्य्युषितनिषेधस्यापवादं पठन्ति,—

वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलम्।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम्॥

तथा,—

तत्कालानामलाभे तु एभिः पूजा विधीयते।
पुष्पाणि पञ्चरात्राणि फलान्येकादशं दिनम्॥
पवित्राणि त्रिरात्राणि शुद्धतोयानि चैव हि।
दिनैकं करवीरन्तु पाटली तु दिनत्रयम्॥
चतुर्हिनन्तु मन्दारं पुन्नागं पञ्चरात्रकम्।
पुन्नागाद् द्विगुणाश्चैव केतक्योत्पलमल्लिकाः॥
चम्पकं जातिपुष्पाणि [1]तेषां द्विदिनपूजनम्।
करञ्जं वकुलं बिल्वं बृहती वर्त्तिकाद्वयम्॥
दिनत्रयमिदं योग्यं तुलसी द्वयमुच्यते।
नित्यं प्रक्षाल्य तोयेन शुद्धस्थाने तु संग्रहेत्॥

[[2]अन्यत्र च,—]

[3]पङ्कजं बिल्वपत्रञ्च यावत्पञ्चदिनावधि।
न वर्ज्यं तुलसीपत्रं शुष्कं पर्य्युषितं त्वपि॥
पूजायोग्यं कर्णिकारञ्च पत्रं
न स्याज्जीर्णं मासकं कानकाख्यम्।

(१) D. न स्याद्द्विदिन०
(२) Y. Omits the portion bracketed.
(३) Y. अन्यत्र पङ्कजं बिल्वं यावत्०

इति। अत्र—

नैवेद्यपत्रपुष्पाद्यमचिराज्जायते च यत्।

तन्माल्यमुपभुक्तं सन्निर्माल्यमभिधीयते ॥

इत्युक्ते देवतायाः साक्षादुपभोगासम्भवादुपभोगकालः पारिभाषिकः। तत्र—

प्रहरं तिष्ठति जाती करवीरमहर्निशम्।

अहोरात्रं च निर्माल्यं पालाशं ब्रह्ममूर्द्धनि ॥

केतकी तु हरे मूर्द्ध्नि सुगन्धोत्पलमेव च।

[ [1]विष्णुधर्म्मोत्तरे,—

दत्तमात्रं हरेत् पुष्पं निर्माल्यं भवति क्षणात्।

उपभुक्तं त्वहोरात्रं मालत्याः कुसुमं हरेः ॥ ]

पुष्पान्तराणान्तु—

[2]निधि गन्धक्षयो यावन्नास्ति येषामसंशयम्।

नास्ति निर्माल्यता तेषां तावदित्यागमा जगुः ॥

इति। निर्गन्धानां वैरूप्यपर्य्यन्तमिति निर्माल्यकालात् पूर्व्वं देवाङ्गात् पुष्पवहिष्करणेन निर्म्माल्यग्रहणफलम्।

[3]न केवलम्—

[4]देवाङ्गादुद्धरेद् यस्तु तत्क्षणात् पुष्पलोभतः।

ब्रह्महत्यामवाप्नोति भोजको लोभमोहितः ॥

(१) D. Omits the portion bracketed.

(२) Y. निर्गन्धस्य क्षयो •

(३) Y. केवलम्।

(४) D. देवमभ्युद्धरेद् यस्तु •

इति दोषः। [[1]नात्र निर्म्माल्यलङ्घनदोषः] केवलं निर्म्माल्य-कालात् पूर्व्वं देवाङ्गात्यतने शुभस्थाने प्रतिपत्तिः कार्य्या। अथवा

वैष्णवप्रतिमालग्नं गन्धं पुष्पमथोदकम्।

प्रमादादपि संस्पृश्य नरो याति परां गतिम्॥

इति तत्त्वसारसंहितावचनात् स्यादेव ग्रहणे फलम्। अत्र च समित्पुष्पकुशादीनामाहरणकालो द्वितीयभाग एव वक्ष्यते। तथापि तस्य पुरुषार्थत्वात्कालान्तरे स्वयमाहरणे न पूजावैगुण्यं किन्तु पुरुषदोषः। अन्याहृतेन पूजायां तदपि नास्ति।

यत्तु— समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्।

शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् व्रजत्यधः॥

इति तत्र स्वाहरणस्तुत्यर्थत्वात् शूद्रानीतक्रयक्रीतनिन्दा नतु निषेधो [2]वाक्यभेदापत्तेः। स्वाहरणञ्च नित्यपूजायामेवाङ्गं न काम्यपूजायां नित्यानित्यसंयोगविरोधादिति नित्ये यथाशक्त्युप-बन्धादेवादोषः। पुत्रभार्य्यादीनां धर्म्मकार्य्येषु जायन्ते प्रतिहस्तका इति प्रतिनिधिकर्त्तृत्वस्मरणात् [3]तद्द्वाराहरणेऽपि न वैगुण्यम्।

[4]तथा—स्नानं कृत्वा तु ये केचित् पुष्पं चिन्वन्ति मानवाः।

देवता स्तन्न गृह्णन्ति भस्मीभवति [5]दारुवत्॥

अत्र स्नानं माध्याह्निकस्नानम्।

---

(१) D. Omits the portion bracketed.

(२) Y. वाक्यभेदोत्पत्तेः।

(३) Y. तद्द्वाहरणेऽपि ॰

(४) Y. तथाहारीतः।

(५) Y. ॰ काष्ठवत्।

तथा—

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा [1]पातयत्येकं ब्रह्महत्यां स विन्दति॥

इति अमावास्याया मध्यभागे निषेधः।

अंशु तस्मिन्नहोरात्रे पूर्व्वं विशति चन्द्रमाः।
ततो वीरुत्सु संक्रम्य प्रयात्यर्कं ततः क्रमात्॥

इति विष्णुपुराणवचनात्। अयमपि निषेधः पुरुषार्थ एव।

[2][द्वादश्याञ्च तुलसीपत्रग्रहणप्रकार उक्त एव।] पुष्पार्चापि विधानार्थं इति स्तेयापवादात् देवपूजापर्य्याप्तपुष्पस्य परस्तात् स्तेयेनापि पूजायामदोषः।

---

(१) Y. पातयत्यज्ञात् ब्रह्म॰
(२) D. Omits the portion bracketed.

[1][ अथ दुर्गायाः ।

भविष्ये,—

अग्निहोत्रपरे विप्रे वेदवेदाङ्गपारगे ।
सुवर्णानां सुवर्णस्य शते दत्ते न यत् फलम् ॥
तत् फलं लभते राजन् पूजयित्वा तु चण्डिकाम् ।
मालया बिल्वपत्राणां नवम्यां गुग्गुलेन च ॥
मालाद्वयेन बिल्वस्य राजसूयफलं लभेत् ।

तथा,—

करवीरस्रग्भिरग्निष्टोमफलेन सूर्य्यलोके महीयते। एवन्तु पद्ममालायाम्। वकपुष्पस्रग्भिर्वाजपेयफलम्। द्रोणपुष्पस्रग्भी-राजसूयफलेन सूर्य्यलोके महीयते। कुशपुष्पस्रग्भिरग्निष्टोमफलं सूर्य्यलोके महीयते। शमीपुष्पस्रग्भि र्गोसहस्रफलं विष्णुलोके महीयते। नीलोत्पलस्रग्भि र्वाजपेयफलं रुद्रलोके महीयते। नीलोत्पलसहस्रमालया वर्षकोटिसहस्रं वर्षकोटिशतं दुर्गानुचरो भूत्वा रुद्रलोके महीयते। प्रत्येकसुक्तपुष्पेषु दशनिष्कफलम्। मालाबद्धेषु तेषु द्विगुणम्। फलञ्च दुर्गालोकाप्तिः। मालती-मालयाश्वमेधाप्तिः।

तथा,—

मल्लिकामुत्पलं पद्मं शमीयं नागचम्पकम् ।
अशोकं कर्णिकारञ्च द्रोणपुष्पं विशेषतः ॥

---

(१) Y. Omits the portion bracketed.

करवीरं शमीपुष्पं कुङ्कुमं नागकेशरम्।

एतानि समुदितानि दत्वा सर्व्वकामाप्तिर्दुर्गानुचरत्वञ्च। नानापुष्पस्रग्भिश्चण्डिकोपरि पुष्पमण्डपकरणे विष्णुलोकाप्तिः। नवम्यां नानापुष्पैः पुष्पमण्डपं कृत्वा विमानमारुह्य चण्डिका-लोकेऽक्षयं कालं मोदते। अक्षयं कालं कल्पादप्यधिकम्। यत्तु देवीपुराणे,—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः।

अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः॥

आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेत् शिवाम्।

इति पूजाङ्गपुष्पाख्युक्ता

दश दत्वा सुवर्णानां यत् फलं कुसुमेषु तत्।

इत्युक्ता(च)फलविशेषार्थं पुष्पविशेषानाह—

कदम्बः कर्णिकारश्च सिन्धुवारः सकृद्वये।

पुन्नागश्चम्पकश्चैव यूथिका नवमल्लिका॥

तगरोऽर्जुनमल्ली च वृहती शतपत्रिका।

सुरसा सर्व्वभद्रा च सुरभिः करमर्द्दिका॥

दमनी मरुवकश्च शतधा पुष्पवृद्वये।

कदम्बैरर्चयेद् रात्रौ मल्लिका तूभयोः शुभा।

दिवा शेषाणि पुष्पाणि यथालाभं प्रपूजयेत्॥

तत्र कदम्बार्चने रात्रौ पूर्व्वोक्तफलम्। एवमन्यत्र। यत्तु देवीपुराण एव

शृणु शक्र प्रवक्ष्यामि पुष्पाध्यायं समासतः।

इत्युपक्रम्य मल्लिकाजाती-कुब्जकसितरक्तनीलपाण्डरपद्मकिंशुक-तगर-किङ्किरात-चम्पक-वकुलमन्दारकुन्दचिराटिका लोध्रकरवी-रार्क(सित रक्तपीतकृष्णरूप-चतुर्व्विधापराजिता धुस्तूरकमाधवी-बन्धूकागस्तिदमनसिन्धुवारसुरभीमरुवकपलाशदूर्व्वाङ्कुरकुशमञ्जरी-विल्वपत्रोक्तानुक्तजलस्थलजसर्व्वधान्यपत्रपुष्पाण्युक्तानि

पश्चाच—शुभं वाप्यशुभं किञ्चित् फलपुष्पनिवेदनम्।

भक्त्या निवेदयेत् सर्व्वं नाशुभं किञ्चिदाप्नुयात्॥

इत्युक्तं तत्पूजाङ्गमेव न तु फलार्थं तदश्रवणात्। तत्र "भक्त्या निवेदयेत्सर्व्वं" इति वचनात् "देवीनां चार्कमन्दारौ" इति देवीपुराणनिषिद्धं मन्दारार्कपुष्पादिकं निषिद्धमपि भक्तिविशेषे देयमित्युक्तम्। निषेधस्तु भक्तिरहितपरः। मुकुलादिनिषेधः पूर्व्ववत्। पुष्पाभावे पत्राणि पत्राभावे ओषधीः ओषध्यभावे भक्त्या पूजित इत्यपि पूजाविषयम्।

अथवा परार्थमुद्दिश्य विधिपूजा शुभावहा।

इत्युपक्रम्य—

शिवे विवर्ज्जयेत् कुन्दमुन्मत्तं च हरौ तथा।

देवीनां चार्कमन्दारौ सूर्य्यस्य तगरं तथा॥

इति निषेधः प्रासादे परार्थकृतपूजाविषयः। विधिस्तु गृहे स्वकृतपूजाविषय इति।

यद्यपि ब्रह्मपूजायां पुष्पाणि नोक्तानि तथापि प्रपञ्चसारादिषु पूजासामान्योक्तानि ग्राह्याणि। एवं गणपत्यादिदेवतान्तरपूजायाम्। विशेषतश्च भविष्ये,—

पाटलोत्पलपद्मानि करवीराणि सर्व्वदा।

स्नातो मध्याह्नयोग्यानि स्थिराणि सुरभीणि च॥

इत्येवं स्नातोक्तानि पुष्पाणि पूजायां ब्रह्मणा ग्राह्याणि। यदातु

शिवपूजाङ्गपुष्पाणि वैष्णवानीति तानि वै।

अन्येषामपि देवानां कथितानि मनीषिभिः॥

इति वचनं प्रमाणीक्रियते तदा शिवपुष्पाण्यपि ब्रह्मणो गणेशस्य कार्त्तिकेयादेश्च बोध्यानि।]

---

## अथ धूपाः।

[ [१]तत्र सूर्य्यस्य,—

गन्धयापि शुभा ये च धूपाश्च विजयादयः।

दिवाकरस्य धर्म्मज्ञ निवेद्याः सर्व्वदाच्युत॥

इत्यविशेषेण पूजाङ्गधूपं विधाय विषयविशेषात् फलविशेषमाह तेन तेषामेव पूजाङ्गत्वम्। कालान्तरे केवलानां फलार्थत्वञ्च। एवं सर्व्वदेवेषु बोध्यम्।

तत्र सूर्य्याय सघृतगुग्गुलुधूपदाने चतुर्वेदिगृहे जन्म।

देवदारुं नमेरुञ्च सिल्हकं कटुकं तथा।

श्रीफलञ्चाज्यसम्मिश्रं दत्वा श्रियमवाप्नुयात्॥

---

(१) Y. Omits the portion bracketed.

तस्मा अर्थे धूपं षट्सहस्रगुणम्।

अगुरुं दशसाहस्रं द्विगुणं वा सितागुरुम्।

गुग्गुलुं दशसाहस्रं

तदेव सघृतं द्विगुणम्। सिल्हकधूपेन स्वर्गः। कर्पूरागुरुधूपेन राजसूयफलम्। पक्षं गुग्गुलुधूपदानात् ब्रह्महत्यानाशः। संवत्सरेणाश्वमेधफलम्। कृष्णसप्तम्यां साज्यगुग्गुलुधूपदाने वर्षशतं सूर्य्यलोके वासः। द्विसहस्रफलसाज्यगुग्गुलुधूपं दत्वा सूर्य्यतुल्यो भवति। सूर्य्यगृहे धूपेन सूर्य्यलोकाप्तिः।

---

## अथ शिवस्य।

भविष्ये— कृष्णागुरुं सकर्पूरं धूपं दद्यान्महेश्वरे।

नैरन्तर्य्येण मासार्द्धं तस्य पुण्यफलं शृणु॥

कल्पकोटिसहस्राणि कल्पकोटिशतानि च।

भुङ्क्ते शिवपुरे भोगान् तस्यान्ते च महीपतिः॥

पक्षं सघृतगुग्गुलुधूपदानात् शिवलोके महीयते। कृष्णचतुर्द्दश्यां सघृतगुग्गुलुधूपेन शिवसालोक्यम्।

देवदारुसमेतञ्च सर्ज्जश्रीवासकुष्ठकम्।

श्रीफलं चाज्यसम्मिश्रं दत्वाप्नोति परां गतिम्॥

एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम्।

अगुरुं दशसाहस्रं द्विगुणं वा सितागुरुम्॥

गुग्गुलुं दशसाहस्रं सघृतं द्विगुणं भवेत्।

द्विसहस्रपलमाहिषाख्यगुग्गुलुसघृतधूपेन शिवतुल्यः। स्कान्द-पुराणेन नन्दितुल्यः। स्कान्दे अमावास्यायां सघृतचौरगुग्गुलु-धूपदानेनाक्षयस्थानाप्तिः। कवाटद्वारादिषु पुष्पमालादिभिर्मण्ड-यित्वा धूपने स्वाङ्गामोदेन दिशः पूरयन् कल्पकोटिशतं शिवलोके महीयते। रुद्रावृत्तौ शिवालये धूपने शिवतुल्यः स्यात्।

---

## अथ विष्णोः।]

[1]नारसिंहे,—

माहिषाख्यं गुग्गुलुं य स्वाज्ययुक्तं सशर्करम्।
धूपं ददाति राजेन्द्र नरसिंहाय भक्तिमान्॥
स धूपितः सर्व्वदिक्षु सर्व्वपापविवर्ज्जितः।
अप्सरोगणयुक्तेन विमानेन विराजितः।
वायुलोकं समासाद्य विष्णुलोके[2] महीयते॥

[3]वामने—

रुहिकाख्यं [4]कणं दारु सिल्हकं सागुरु सिताम्।
शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि[5] वै॥

---

(१) Y. नरसिंहपुराणे।
(२) D. स्वर्गलोके महीयते।
(३) Y. वामनपुराणे।
(४) Y. ज्ञणं दारु। (५) Y. मे।

रुहिका [1]जटामांसी। कणं गुग्गुलुः। सिता कर्पूरम्। शङ्खं नखी। [2]शङ्खविधानात्र धूपार्थं जीवजातमितिविष्णूक्तनिषेध-[3]स्तदितरविषयः।

तथा—

दत्वा तु गुग्गुलुं धूपं नाकपृष्ठे महीयते।
मधुसर्पिःसमायुक्तं द्वादशाहफलप्रदम्॥

स्कान्दे—

अगुरुन्तु सकर्पूरं [4]दिव्यचन्दनसौरभम्।
दत्वा नित्यं हरेर्भक्त्या कुलानां तारयेत् शतम्॥

तथा,—ये कृष्णागुरुणा कृष्णं धूपयन्ति कलौ युगे।
सकर्पूरञ्च राजेन्द्र [5]कृष्णभक्ता भवन्ति ते॥

[6]विष्णुधर्म्मे—

वसन्ते गुग्गुलेन ग्रीष्मे चन्दनसारेण तुरुष्केण प्रावृषि कर्पूरेण शरदि मृगमदेन हेमन्ते अगुरुसारेण शिशिरे धूपदानात् [[7]क्रमेणाग्निष्टोमराजसूयाश्वमेध] फलप्राप्तिः। [8][अत्र गृहीतदीक्षस्य]

(१) D. मांसी।
(२) Y. नखिविधाना०
(३) Y. स्तदतिरिक्तविषयः।
(४) Y. दिव्यं चन्दन०
(५) Y. कृष्णतुल्या भवन्ति ते।
(६) Y. विष्णुधर्म्मोत्तरे।
(७) Y, Omits the portion bracketed.
(८) Y Omits the portion bracketed.

अदत्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति ।

इति निन्दाकल्पितविधिना धूपदानात् प्राक् गन्धमाल्यदानं विहितम्। तेनाविशेषात् [1]काम्यधूपदानात् पूर्व्वमपि गन्धपुष्प दानमिति वदन्ति ।

घण्टां वामकरे कृत्वा वादयन् धूपयेद्द बुधः ।
तस्याः शब्देन विघ्नाश्च यान्ति सर्व्वे दिशो दश ॥
व्याधयो दुर्ग्रहाः सर्व्वे डाकिन्यो भूतराक्षसाः ।
घण्टानिनादश्रवणाद्धृतवीर्य्या भवन्ति ते ॥
[2][घण्टाशब्देन गच्छन्ति दानवाश्च भयङ्कराः ।
आगच्छन्ति च सुप्रीता विष्णुना सर्व्वदेवताः ॥
धूपेऽगुरुः सदा श्रेष्ठो गुग्गुलुः सिल्हकं द्विजाः ।
धूपे द्रव्यत्रयं श्रेष्ठं सगुड़ं सघृतं तथा ॥

एतत् फलाभिधानात् पूजान्तर्गतधूपविषयमिति वदन्ति। तथा] तत्वसारसंहितायाम्—

उशीरमगुरुश्चैव चन्दनं [3]विल्वचन्दनम् ।
गुग्गुलुश्चैव क्लीवेरं कर्कन्धूर्घृतमेव च ॥
मधुमुस्तसमायुक्तं [4]दशाङ्गानि तु धूपने ।

---

(१) Y. ताम्रधूप ०।

(२) Y. Omits the portion bracketed.

(३) D. विश्वचन्दनम् ।

(४) Y. दशाङ्गं नित्यधूपकम् ।

[1]तदपि पूजाङ्गमेव। नन्दिपुराणे—

[2]न शल्लकाज्यं न तृणं न सिक्थवसासम्भूतम्।
धूपं प्रत्यङ्गनिर्मुक्तं दद्यात् कृष्णाय बुद्धिमान्॥

तृणमुशीरातिरिक्तम्। [3][सिक्थं मधूच्छिष्टम्।] प्रत्यङ्गनिर्मुक्तं प्राण्यङ्गभवम्।

इति विष्णुसम्प्रदानककाम्यधूपविधिः।

---

[4][ अथ दुर्गायाः।

भविष्ये—

कृष्णागुरुं सकर्पूरं गन्धं च सिल्हकं तथा।
भगवत्यै नरो धूपमिमं दत्वा समाहितः॥
इह कामानवाप्याग्र्यान् दुर्गालोके महीयते।

मासार्द्धं साज्यगुग्गुलुधूपदानाद् गोसहस्रफलम्। कर्पूरागुरुधूपेन गोसहस्रफलम्। द्विशतपलाधिकद्विसहस्रपलगुग्गुलुधूपं शुक्लनवम्यां दत्वा चण्डिकाप्रियः स्यात्। माहिषाख्यं सघृतं सबिल्वं वा दत्वा वाजपेयफलं सूर्य्यलोकाप्तिः। कृष्णागुरुधूपे पापक्षयः।]

---

(१) Y. एतत् पूजाङ्गमेव।

(२) Y. त्रिशल्लनीजं न तृणं॰

(३) Y. Omits the portion bracketed.

(४) Y. Omits the portion bracketed.

## अथ दीपाः।

[1][सूर्य्यस्य। भविष्ये विष्णुमहादेवौ प्रति ब्रह्मवाक्यम्—

घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः।
प्रयाति सूर्य्यलोकञ्च दीपकोटिशतैर्वृतः॥
शिरसा धारयेद् दीपं भास्करस्याग्रतो निशि।
आप्रभातञ्च यो वीर भक्तिश्रद्धासमन्वितः॥
ललाटे चैव हस्ताभ्यां समुद्युक्तस्तथोरसि।
कल्पायुतशतं देवौ सूर्य्यलोके महीयते॥

कार्त्तिके मासि सप्तम्याममावास्यायां वा दीपमालादाने भास्करायुतसङ्काशः कुलोद्योतकरः। भास्करालये दीपवृक्षदानात् सूर्य्यलोकाप्तिः। कार्त्तिके प्रत्यहं सूर्य्यनामजपः सूर्य्यायतने च दीपदानं जातिस्मरत्वप्रज्ञाव्याहतेन्द्रियत्वफलदम्। प्रतिपच्चं षष्ठ्यामष्टम्यां वा सूर्य्याय दीपदाने कर्पूरमणिमुक्ताढ्यदीपमालाकुलविमानाधिरोहः। अत्र

तान् दृष्ट्वा न च हिंसेत न च तैलविवर्जितान्।
कुर्व्वीत दीपहर्त्ता च दरिद्रोऽन्धः प्रजायते॥

इति वचनाद् दीपदानकाले परहिंसावर्जनम्। तैलञ्च यावत् कालयोग्यं सन्निधेयम्।

---

(1) Y. Omits the portion bracketed.

## अथ शिवस्य।

भविष्ये,—

घृतदीपप्रदानेन शिवाय शतयोजनम्।
विमानं लभते दिव्यं सूर्य्यकोटिसमप्रभम्॥

कार्त्तिके मासि विशेषतश्चतुर्द्दश्याममावास्यायां दीपमालाकरणे दीपसन्ततिसंख्ययुगसहस्राणि रुद्रलोके महीयते। शिवायतने दीपवृक्षोद्बोधने शिवलोकाप्तिः। शिवाग्रतः शिरसि ललाटे हस्ताभ्यां वक्षसि दीपधारणेन सकलरात्रिनयने

कल्पायुतशतं दिव्यं शिवलोके महीयते।

स्कान्दे,—

कार्त्तिके प्रत्यहं दीपमालादानमन्ते ब्राह्मणभोजनं गार्हपत्यफलाय।

---

## अथ विष्णोः।]

[1]नारसिंहे,—

घृतेन तिलतैलेन दीपं [2]यो ज्वालयेन्नरः।
विष्णवे विधिवद् भक्त्या तस्य पुण्यफलं शृणु॥
विहाय पापसकलं सहस्रादित्यसप्रभः।
ज्योतिष्मता विमानेन विष्णुलोके महीयते॥

(१) Y. नरसिंहपुराणे।
(२) Y. प्रज्वालयेन्नरः।

[¹वाराहे,—

यस्तु दद्यात् प्रदीपञ्च सर्व्वतः श्रद्धयान्वितः।
स्वयंप्रभेषु देवेषु तस्योत्पत्तिर्विधीयते॥

स्वयंप्रभा ²ब्रह्मलोकादयः।]

स्कान्दे,—

यो ददाति महीपाल कृष्णस्याग्रे प्रदीपकम्।
³पातकन्तु समुत्सृज्य ⁴ज्योतीरूपं लभेत्पदम्॥
यावदक्षिनिमिषाणि दीपो देवालये ज्वलेत्।
तावद्वर्षसहस्राणि नाकपृष्ठे महीयते॥
घृतेनाप्यथ तैलेन दीपं प्रज्वालयेन्नरः।
विष्णवे विधिवद् भक्त्या विष्णुलोके महीयते॥
दीपे तैलं सदा शस्तं विष्णुलोकप्रदं नृणाम्।
तथाच सार्षपं वत्स मर्त्त्यलोके सुखप्रदम्॥
यो दद्यात् ⁵कापिलेनैव प्रदीपं केशवार्चने।
घृतेन स नरो याति विष्णुलोकं निरञ्जनम्॥
कपिलाया घृतं श्रेष्ठं प्रधानञ्चान्यजं घृतम्।
मध्यमं स्यादजासर्पिः ⁶शुद्धतैलं तथैवच॥

---

(१) D. Omits the portion bracketed.
(२) E. F. आदित्यलोकादयः।
(३) Y. पातकं तस्य उत्सृज्य ज्योतीरूपं लभेत् फलम्।
(४) E. F. विष्णुलोके लभेत्पदम्।
(५) Y. कापि तेनैव ०
(६) D. घृतैरत् ०

[1]दीपको ज्वलते यस्य अहोरात्रं हरेर्गृहे।
एकादश्यां मुनिश्रेष्ठ स स्वर्गानावतारयेत्॥
निर्बन्धेनापि विप्रेन्द्र कृत्वा चैवात्मविक्रयम्।
कर्त्तव्यं दीपदानन्तु यावत् कार्त्तिकपूर्णिमा॥
कृत्वा कोटिसहस्राणि पापानि सुबहून्यपि।
निमिषार्द्धेन दीपस्य विलयं यान्ति कार्त्तिके॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्द्दने।
सर्व्वं सम्पूर्णमायाति कार्त्तिके दीपदानतः॥
दिने दिने जपन्नाम केशवेति समाहितः।
ददाति कार्त्तिके यो वै विष्ण्वायतनदीपकम्॥
जातिस्मरत्वं प्रज्ञाञ्च समाप्नोति न संशयः।
श्रूयते तत्र पितृभिर्गीता गाथा च दीपने॥
भविष्यन्ति कुलेऽस्माकं पितृभक्ताः सुता भुवि।
संप्राप्य कार्त्तिकं मासं दयितं माधवस्य च॥
दीपं दास्यन्ति ये श्रुद्धा गयायां [2]पिण्डसेवनात्।
मुक्तिं प्राप्स्यामहे नूनं प्रसादाच्चक्रपाणिनः॥

तथा,—

[3]यः कुर्य्यात् कार्त्तिके मासि कर्पूरेण च दीपकम्।
द्वादश्याञ्चाथ वैशाखे तस्य पुण्यं वदामि ते॥

---

(१) Y. दीपकं ज्वालयेद् यस्तु अहोरात्रं ०
(२) Y. पिण्डमादरात्।
(३) Y. यः कार्त्तिके मासि दद्यात् कर्पूरेण च दीपकम्।

कुले तस्य प्रसूता ये ये भविष्यन्ति नारद ।
समतीताश्च ये केचिद्येषां संख्या न विद्यते ॥
क्रीड़ित्वा सुचिरं कालं देवलोके यदृच्छया ।
ते सर्व्वे मुक्तिमायान्ति प्रसादाच्चक्रपाणिनः ॥
वैष्णवो न स मन्तव्यः सम्प्राप्ते कार्त्तिके मुने ।
यो न यच्छति मन्दात्मा दीपं केशवमन्दिरे ॥
कार्त्तिके यत्फलं प्रोक्तं परं दीपप्रबोधने ॥
न तद् भवति विप्रेन्द्र न यज्ञै र्न महामखैः ॥
कार्त्तिकस्यासिते पक्षे कृष्णा या तु चतुर्द्दशी ।
तस्यां दीपः प्रयत्नेन दातव्यो देवतायतः ॥

[1]विष्णुधर्म्मे,—

पट्टसूत्रोद्भवां वर्त्तिं गन्धतैलेन दीपिताम् ।
नीरुजः सुभगश्चैव दत्वा भवति मानवः ॥
दीपपंक्तिः सुरचनां कुरुते केशवालये ।
विष्णोर्व्विमाने च तथा स नरः शङ्खचक्रधृक् ॥
कार्त्तिके कार्त्तिकी यावत् प्रासादोपरि दीपकम् ।
यो ददाति मुनिश्रेष्ठ पदमैन्द्रं [2]स गच्छति ॥
दत्वा दीपं न कर्त्तव्यं तेन कर्म्म विजानता ।
यः कुर्य्यात् तेन कर्म्माणि स्यादसौ पुष्पितेक्षणः ॥

येन दीपो दत्तस्तेन तद्दीपेन लौकिकं वैदिकं वा कर्म्मान्तरं

(१) Y. विष्णुधर्म्मोत्तरे ।

(२) D. न दुर्ल्लभम् ।

न कर्त्तव्यम्। अन्यस्यापि तेन कर्म्मकरणं निषिद्धमेव।

तथाच पठन्ति,—

देवदत्तेन दीपेन कृत्वा कर्म्म सुदुर्म्मतिः।
जायते कृपणश्चान्धस्तस्मात् तत्परिवर्जयेत्॥

[1]विष्णुधर्म्मे—

दीपहर्त्ता भवेदन्धः काणो निर्व्वापकस्तथा।

अत्र हरणं देवाग्रादन्यत्र नयनम्।

[2]भविष्ये—

यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम्।
प्रदोषे चैव द्वादश्यामेकादश्यां विशेषतः॥
यावत् प्रदीपसंख्या च घृतेनापूर्य्य यत्नतः।
तावद् वर्षसहस्राणि विष्णुलोके महीयते॥
[3]एकादश्याञ्च द्वादश्यां प्रतिपच्चञ्च यो नरः।
दीपं दद्यात् स दिव्यञ्च विमानमधिरोहति॥
करोत्यारत्रिकं यस्तु भक्तिभावपुरःसरम्।
प्राप्य ज्ञानं [4]प्रयाणान्ते गमिष्यत्यक्षयं पदम्॥

तथा—

बहुवर्त्तिसमायुक्तं ज्वलन्तं केशवोपरि।
कुर्य्यादारत्रिकं यस्तु कल्पकोटि दिवं वसेत्॥

एतन्नीराजनं पूजाङ्गमपि

---

(१) Y. तथा विष्णुधर्म्मोत्तरे। (२) Y. भविष्यपुराणे।
(३) D. एकादश्यां द्वादशीञ्च ०। (४) D. पुराणान्ते०

मन्त्रहीनं क्रियाहीनं यत्कृतं पूजनं हरेः।
सर्व्वं सम्पूर्णतामेति कृते नीराजने सुत॥

[1]एतद् वचनात्।

नीलरक्तादशं दीपं प्रयत्नेन विवर्जयेत्।

इति। तथा, महाभारते,—

हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः।
वसामेदोऽस्थिनिर्यासैर्न कार्य्यः पुष्टिमिच्छता॥

एतत् पूजान्तर्गतदीपेऽपि ज्ञातव्यम्।

[2]विष्णुधर्म्मे,—

तथा कर्पूरवर्त्त्यां च दीपयेत् सर्व्वसिद्धिदम्।
प्रज्वाल्य देवदेवस्य कर्पूरेण च दीपकम्॥
अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत्।
देवस्य दक्षिणे पार्श्वे देया तिलतुला नृप॥
पलाष्टकयुतां राजन् वर्त्तिं [3]तत्र च दापयेत्।
महारजनरक्तेन समग्रेण तु वाससा॥
वामपार्श्वे च देवस्य देया घृततुला नृप।
पलाष्टकयुतां राजन् वर्त्तिं [4]तत्र च दापयेत्॥
वाससा च समग्रेण सोपवासो जितेन्द्रियः।
एकमप्यथवा दद्याद् बुभुक्षुरनयोर्द्वयोः॥

(१) Y. इति वचनात्।
(२) Y. विष्णुधर्म्मोत्तरे।
(३) Y. तत्रैव। (४) Y. तत्रैव।

मानुष्ये सर्व्वमाप्नोति स्वर्गलोके चिरं वसेत्।

एतद्दानकालस्तत्रैव—

['अश्वयुज्यामतीतायां द्वादश्यां दश एव वा।

तथा,—] नरः स्नात्वा हितपरो नारी वा देवताग्रतः।

[2]विस्तीर्णे विपुले पात्रे युनक्त्यवर्त्तिं योजितम्॥

पीतवस्त्रेण कृष्णाय श्वेतवस्त्रेण शूलिने।

सूर्य्याय रक्तवस्त्रेण गौर्य्यै कौसुम्भवाससा॥

तद्विष्णोरिति मन्त्रेण महादीपं प्रदापयेत्।

अग्ने त्वां कामया गिरा। अग्निं तुभ्यन्तां गिरः। अग्ने येषु राजन्यो नमः स्वाहा इति

एवं मन्त्रेण विधिना ये प्रयच्छन्ति दीपकम्।

यान्ति ते ब्रह्मसदनं विमानेनार्कतेजसा॥

तिष्ठन्ति द्योतमानास्ते यावदाभूतसंप्लवम्।

[[3]वाराहे,—

दीपं ददाति यो देवमभक्त्या तु व्यवस्थितः।

सान्धकत्वं भवेत् तस्य सप्तजन्मनि सुन्दरि॥]

विष्णुधर्म्मे—

केशवायतने कृत्वा दीपवृक्षं मनोरमम्।

अतीव भ्राजते लक्ष्म्या दिवमासाद्य यत्नतः॥

---

(१) D. Omits the portion bracketed.

(२) Y. विशीर्णे॰

(३) Y. Omits the portion bracketed.

दीपमालां प्रयच्छन्ति ये नराः शार्ङ्गिणो गृहे।
भवन्ति ते चन्द्रसमाः स्वर्गमासाद्य मानवाः॥
दीपागारं नरः कृत्वा लोके भ्राम्यति शक्रवत्[१]।

---

## [[२]अथ दुर्गायाः।

भविष्ये,—

घृतदीपप्रदानेन चण्डिकां पूजयेन्नरः।
अश्वमेधफलं प्राप्य दुर्गानुचरो भवेत्॥
आत्मदेहवसादीपं चण्डिकापुरतो नृप।
प्रज्वाल्य विधिवद्‌ वीर मोदते चण्डिकालये॥

कार्त्तिके दुर्गायतने दीपमालादाने सूर्य्यलोकाप्तिः। अमावास्यायां नवम्यां वा दीपदाने

यावन्तं दीपसंघातं घृतेनापूर्य्य बोधितम्।
तावद्युगसहस्राणि दुर्गालोके महीयते॥

---

(१) Y. Reads after शक्रवत्—

गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया।
दीपितं सुरभिं शुद्धं दीपकच्चैः प्रदापयेत्॥

इति प्रपञ्चसारे तत्पूजाङ्गदीपपरम्।

विष्णुः— न घृतं तिलतैलं विना किञ्चन दीपार्थे।

विष्णुधर्म्मोत्तरे,—

नीलरक्तादशं दीपं प्रयत्नेन विवर्जयेत्।

(२) Y. Omits the portion bracketed.

अश्मसारमयं कृत्वा नानादीपसमन्वितम्।
दीपवृक्षं समुद्बोध्य दुर्गायाः पुरतो नृप।
कल्पायुतशतं साग्रं दुर्गालोके महीयते॥]

---

## [1]अथ नैवेद्यानि।

[[2]सूर्य्यस्य। भविष्ये,—

शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम्।
सूर्य्याय च चरुं दत्वा सप्तम्याञ्च विशेषतः॥
संयावकृशरापूपपायसं यावकं तथा।
दध्योदनं रसालांश्च मोदकान् गुड़पूपकान्॥
यावन्तस्तण्डुलास्तस्मिन् नैवेद्ये परिसंख्यया।
तावद्युगसहस्राणि सूर्य्यलोके महीयते॥

रसालशिखरिणी,—

गुड़खण्डघृतानान्तु भक्ष्याणां विनिवेदने।
घृतेन पाचितानाञ्च दत्वा शतगुणं लभेत्॥
रसालपानकाद्यानां भक्ष्याणां फलमीप्सते।
तदर्द्धमखिलस्यापि वासितस्य निवेदने॥
घृतपूपकृतैः सिक्थैः पुण्यं दशगुणोत्तरम्।
उपदंशगुणे ज्ञेयं पुण्यं शतगुणं खग॥

---

(१) Y. अथ नैवेद्यम्।

(२) Y. Omits the portion bracketed.

एवं षष्टिकोदने सहस्रगुणम्। सुगन्धिशाल्यन्नेनायुतगुणम्। रक्तशाल्यन्नेन नियुतम्। कलमान्नेन दशलक्षाधिकम्। क्षीरभक्तेन दशकोटिगुणोत्तरम्। दधिशर्करायुक्तान्नेन ततोऽप्यधिकम्। सुघन-शीतकर्पूरयुतरसालया कोटिशतगुणाधिकफलम्। सुगन्धपानानां रसालातुल्यफलम्। नानाविधघृतपक्वमांसैः कोटिकोटिगुणम्। घृतोदने मांसतुल्यफलम्। शर्कराखण्डयुक्तघृतोदने मांसादधि-कम्। सर्व्वरत्नसमन्वितापूपदानेऽमरलोकत्वम्।

मधुमांसासवैश्चापि प्रीयते साधु भास्करः।
मातुलुङ्गफलादीनि सुपक्वानि निवेदयेत्॥

एवञ्च पक्वस्य प्राप्तप्रभावात् अपक्वं न निवेदयेत्।

फलं कथितमिदञ्च यत्नात् पक्वमपि त्यजेत्।

इति प्रतिनिधित्वेन प्राप्तस्य निषेधार्थम्। अर्कपर्णपुटेन मधुपर्क-समर्पणेऽश्वमेधफलम्।

---

## अथ शिवस्य।

भविष्ये—शालितण्डुलप्रस्थन्तु कुर्य्यादन्नं सुसंस्कृतम्॥
शिवाय तच्चरु' दद्याच्चतुर्द्दश्यां विशेषतः॥
संयावकृशरापूपपायसं यावकं तथा।
घृतगुड़ादिसम्मिश्रमेवमादि प्रकल्पयेत्॥
यावन्तस्तण्डुलास्तस्मिन् नैवेद्ये परिसंख्यया।
तावद्युगसहस्राणि रुद्रलोके महीयते॥

गुड़खण्डयुतघृतपाचितभक्ष्यनिवेदने फलं शतगुणम्।

सर्व्वकापानकाद्यानां लक्षार्द्धं फलमिष्यते।

तदर्द्धं वासितजलस्य।

स्कान्दे—

दक्षिणायान्तु यो मूर्त्तौ पायसं घृतसंयुतम्।

निवेदयेद् वर्षमेकं स वै नन्दिसमो भवेत्॥

चरवो दशसाहस्रा यावकश्च चतुर्गुणः।

शिवाय चरवः सर्व्वे यावकार्द्धेन सम्मिताः॥

घृतपात्रसमं ज्ञेयं इह प्रेत्य च शाश्वतम्।

मातुलुङ्गफलादीनि सुपक्वानि निवेदयेत्॥

शिवाय तत्फलं तस्य यद्भक्ष्याणां निवेदने।

तथा—

रुद्रायान्नप्रदानेन सिक्थे सिक्थेऽमरैः सह।

षोड़शैवाब्दलक्षाणि वसेत् श्रद्धासमन्वितः॥

अथ ब्रह्मादिदेवतान्तराणाम्।

देवतानाञ्च यो दद्यादन्नाद्यं श्रद्धयान्वितम्।

सिक्थे सिक्थे वसेल्लक्षं समानाममरैः समम्॥

एतद्दशगुणं पुण्यमन्ने व्यञ्जनसंयुते।

यो दद्याद् ब्रह्मणेऽन्नानि तस्माद् द्विगुणितं फलम्॥

तस्माद् विष्णुञ्च दत्त्वान्नं द्विगुणं फलमश्नुते।

रुद्रायान्नप्रदानेन फलमेतच्चतुर्गुणम्॥

यत्तु भविष्यपुराणे ब्रह्मनैवेद्यमधिकृत्य

खण्डलड्डुकगोधूमविष्टकासाराशोकवर्त्तिका।
स्वस्तिका लोपिका दुग्धगोधूमविष्टककिलाटिका॥
फलानि च विपक्वानि खाद्यानि विविधानि च।

तत् पूजानैवेद्यार्थे।

---

अथ विष्णोः।

लेह्यं पेयं तथा भोज्यं खाद्यञ्चैव चतुर्व्विधम्।
नैवेद्यं विष्णवे दत्वा नरः स्वर्गमवाप्नुयात्॥ ]
[1]ओदनं व्यञ्जनोपेतं दत्वा स्वर्गमवाप्नुयात्।
[2][दधिभक्तप्रदानेन श्रियमाप्नोत्यनुत्तमाम्॥
सशर्करं दधिभक्तं यो नित्यं विनिवेदयेत्।
सर्व्वैश्वर्य्यमवाप्नोति नात्र कार्य्या विचारणा॥
क्षीरोदनप्रदानेन दीर्घं जीवितमाप्नुयात्। ]
परमान्नं तथा दत्वा तृप्तिमाप्नोति शाश्वतीम्॥
विष्णुलोकमवाप्नोति कुलमुद्धरते सदा।
[3]मोदकस्य प्रदानेन कामानाप्नोत्यभीप्सितान्॥

---

(१) Y. विष्णुधर्म्मोत्तरे,—ओदनं व्यञ्जनोपेतं०
(२) Y. Omits the portion bracketed.
(३) E. F. घृतोदनप्रदानेन ०

दीर्घंजीवितमाप्नोति घृतपूरनिवेदकः[1]।
यो ददाति च नैवेद्यं [2]माघमासे प्रपिष्टकम्॥
सम्वत्सरमवाप्नोति तिलधेनुफलं नरः।
राजसूयमवाप्नोति पानकैर्व्विनिवेदितैः॥
निवेद्य नारिकेलाम्बु अग्निष्टोमफलं लभेत्।
फाणितस्य प्रदानेन अग्न्याधेयफलं लभेत्॥
तथा गुड़प्रदानेन दशगोदो भवेन्नरः।
सूक्ष्मं खण्डं तथा दत्वा मैत्रीं सर्व्वत्र विन्दति॥
सितायाश्च प्रदानेन सर्व्वान् कामानवाप्नुयात्।
शर्क्कराञ्च तथा दुग्धं केवलं यो निवेदयेत्॥
प्रियो भवति सर्व्वेषां जनानामिति निश्चयः।
सर्व्वान् कामानवाप्नोति क्षौद्रं यः संप्रयच्छति॥
तदेव तुहिनोपेतं राजसूयमवाप्नुयात्।
धानानां क्षौद्रयुक्तानामग्निष्टोममवाप्नुयात्॥

दानेनेतिशेषः।

इक्षूणाञ्च प्रदानेन परं सौभाग्यमाप्नुयात्।
फलानि यच्छते यो वै सुरूपाणि नरेश्वर॥
कल्यान्तं जायते तस्य सफलस्तु मनोरथः।

---

(१) Y. Adds after this line:—खण्डमिश्रिततण्डुलपिष्टैर्घृतपक्वैरर्द्धघृतचौरेण कृतो घृतपूरः।

(२) Y. मासे मासे ०

[1]विष्णुधर्म्मे—अग्निष्टोममवाप्नोति यावकस्य निवेदकः ।

यावको यवविकारभक्ष्यः ।

अतिरात्रमवाप्नोति तथा [2]पूपनिवेदकः ।

वैदलानाञ्च भक्ष्याणां दानात् काममवाप्नुयात् ॥

वैदला मुद्गचणकादयः ।

नानाविधानां भक्ष्याणां दाता स्वर्गमवाप्नुयात् ॥

[3]भक्ष्याः कठिनलड्डुकादयः ।

भोजनीयप्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।

भोजनीयमन्नादि ।

तथा लेह्यप्रदानेन सौभाग्यमधिगच्छति ।

बलवर्णमवाप्नोति चोष्याणाञ्च निवेदने ॥

चोष्यमिक्षुखण्डादि ।

रागषाड़वदानेन पौण्डरीकमवाप्नुयात् ।

दाड़िमीमुष्टिसंयुक्तो मुद्गयूषस्तु षाड़वः ॥

रागषाड़वतां याति शर्करासहितस्तु सः ।

इति सूपकारशास्त्रे ।

पेयानाञ्च प्रदानेन वाजिमेधफलं लभेत् ।

लवङ्गेलानागकुसुमकर्पूरमरिचसंयुतैः ।

सिताचोद्रगुड़ोपेतैर्गन्धवर्णबलान्वितैः ॥

---

(१) Y. विष्णुधर्म्मोत्तरे अग्निष्टोममवाप्नोति ।

(२) Y. पूपनिवेदने ।

(३) D. भक्ष्याः कठिनाः ।

बीजपूरकनारङ्गसहकाररसमन्वितैः।
राजसूयमवाप्नोति पानकैर्व्विनिवेदितैः॥

शितमत्र दधि। बीजपूरादिफलरसपानकैः खण्डादियुक्तैरित्यर्थः।

कुल्माषीलासिकादानादग्न्याधेयफलं लभेत्।

कुल्माषः किञ्चिदुत्सन्नमाषः। सक्तुलाजाक्षगराणां दाताग्निष्टोममवाप्नुयात्। शाकदानाद् दानप्रख्यफलम्। [[1]नानाविधशाकदानाद् विशोकः। व्यञ्जनोपकरणदानात् सत्कुले जन्म। नीलोत्पलपद्मविदारीणां कन्दमूलदानाद् दानप्रख्यफलम्।] त्रपुषोर्वारुकदानात् पौण्डरीकफलम्।

कर्कन्धूबदरे दत्वा तथा पारेवतं फलम्।
[2]पारुषाकं तथाम्रातं पनसं नारिकेलकम्॥
भव्यं मोचं तथा चोचं खर्जूरमथ दाड़िमम्।
आम्रातकः गुवाक्षोटः फलसालपियालकम्॥
जम्बूबिल्वफले चैव जात्यं वीणातकं तथा।
नारङ्गबीजपूरौ तु राजफल्गुफलान्यपि॥
तथा चान्यानि मुख्यानि देवदेवाय भक्तितः।
एवमादीनि चान्यानि यः फलानि प्रयच्छति।
क्रियासाफल्यमाप्नोति स्वर्गलोकं तथैव च।

त्रपुषोर्वारुकौ कर्कटीभेदौ। कर्कन्धू स्थूलबदरम्। पारेवतं

(१) Y. Omits the portion bracketed.
(२) Y. प्राक्षपत्त्र तथा०

कामरूपे प्रसिद्धः। पारुषकं वन्यफलम्। भव्यं कर्म्मरङ्गफलम्। उत्राड़फलञ्च। मोचं कदली। वोचं गुड़लक्फलम्। [[१]श्रुवा वैकङ्कतफलम्।] आक्षोटः साहड़ाफलम्। [२]फलमालो बीजपूरभेदः। जात्यं जातिफलम्। वीणातकं खण्डगुड़ इति प्रसिद्धम्। [३]राजफलं चोरिका। फल्गुफलं गोष्ठोदुम्बरिकाफलम्।

प्राप्नोति बलमारोग्यं मृद्विकाविनिवेदकः।

मृद्विका द्राक्षा।

आम्रैरभ्यर्च्य देवेशमश्वमेधमवाप्नुयात्।

तथा,—

प्राचीनामलकं श्रेष्ठं मधुकोदुम्बरं तथा।
यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमम्॥

अत्र शिष्टाः,—

आम्रं विल्वं गुवाकञ्च खर्ज्जूरमथ दाड़िमम्।
अपक्वान्यपि चैतानि फलानि विनिवेदयेत्॥
नारिकेलफलं वीर त्वचमुत्कृत्य दीयते।
रम्भायाश्च फलं रम्यं त्वचमुन्मुच्य[४]दापयेत्॥
दध्यादिमिश्रितं चान्नं घृतेनोत्प्लुत्य[५]दापयेत्।
यद् यथैव भवेद्भक्ष्यं तत्तथैव निवेदयेत्॥

---

(१) D. Omits the portion bracketed.

(२) Y. फलमानवी बीजपूरफलभेदः।

(३) Y. राजकं चोरका।

(४) Y. दीयते। (५) Y. दीयते।

अन्यथा ब्रह्महत्याफलम्।

[1]नरसिंहे,—

हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम्।
निवेद्य नरसिंहाय यावकं पायसं तथा॥
समास्तण्डुलसंख्याता यावत्यस्तावती नृप।
विष्णुलोके महाभागो भुञ्जानः स तु वैष्णवः॥

[2]वामने,—

हविषा संस्कृता ये च यवगोधूमशालयः।
तिलमुद्गादयो माषा व्रीहयश्च प्रिया हरेः॥

हविषा घृतेन। देवदेयाधिकारे [3]भविष्ये,—

खण्डलड्डुकश्रीवेष्टकासाराशोकवर्त्तिका।
स्वस्तिका लोपिका दुग्धश्रीवेष्टककिलाटिका॥
[4]फलानि चैव पक्वानि तथा खण्डगुड़ानि च।
एवमादीनि चान्यानि दापयेद् भक्तितो नृप॥

खण्डलड्डुकं खण्डविकारो लड्डुकः। श्रीवेष्टकं माषामिचादि-लड्डुकम्। कासारो महिषीचीरम्। [5]इदं देवतान्तरे विष्णो-र्निषेधात्। अशोकवर्त्तिका पिष्टकभेदः। स्वस्तिका स्वस्तिका-

(१) Y. नरसिंहपुराणे।
(२) Y. वामनपुराणे।
(३) Y. भविष्यपुराणे।
(४) Y. एतानि चैव पक्वानि ॰
(५) D. एवं

कारपिष्टकम्। लोपिका अपमालू इति प्रसिद्धा। दुग्धश्रीवेष्टकं दुग्धलड्डुकम्। किलाटिका दुग्धपर्य्यटिका*।

---

* Y. Reads the following after दुग्धपर्य्यटिका :—

माघमासीयपूजाधिकारे स्कन्दपुराणे,—

आत्मनो यान्यभीष्टानि तानि देयानि माधवे।
द्राक्षाकर्पूरपूपानि शर्कराश्च विशेषतः॥
रम्भाफलानि नारङ्गं त्रिनेत्राणि बहून्यपि।
फलानि चारुदेयानि मातुलुङ्गानि वासव॥
गुड़खण्डविकाराश्च दातव्या वैष्णवैर्हरेः।
देयानि चैव शाकानि वर्ज्जयित्वा तु मूलकम्॥

अत्र मूलकस्यादेयत्वं माघमासीयपूजाविषयम्। मासान्तरे तु वराहपुराणवाक्याद्‌ देयमेव। अतएव

ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम्।

इत्यपि माघमासविषयम्। अतएव

योऽर्च्चयेन्माधवं मूढो भक्षयित्वा तु मूलकम्।
अपराधशतं तेन कृतं भवति माधवे॥

माधवे माधवदैवत्ये माघे। तेन उपक्रमोपसंहारपाठात् मूलकनिषेधो माघमासविषयः।

अथ विष्णुप्रदेयानि।

नरसिंहपुराणे,—

वस्त्राभ्यामच्युतं भक्त्या परिधाप्य विचित्रतः।
सोमलोके रमित्वा तु विष्णुलोके महीयते॥

तथा,—

ध्वजञ्च विष्णवे यस्तु गरुड़ेन समन्वितम्।
दद्यात् सोऽपि ध्वजाकीर्णविमानेन विराजता।
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः॥
सकुटैः कटकाद्यैश्च यो विष्णुं पूजयेन्नृप।
सर्व्वपापविनिर्म्मुक्तः सर्व्वभूषणभूषितः।
इन्द्रलोके वसेत् श्रीमान् यावदिन्द्राश्चतुर्द्दश॥

यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति ।
स सर्व्वपापरहितः सर्व्वभूषणभूषितः ।
गवां सहस्रदानस्य फलं प्राप्य हरिं व्रजेत् ॥

इत्यादित्यनुवृत्तौ विष्णुः,—न वासो नीलरक्तं न तथा मणिसुवर्णयोः प्रतिरूप-मलङ्करणम् ।

तथा,—

शङ्खे कृत्वा तु पानीयं सपुष्पफलाक्षतम् ।
अर्घ्यं ददाति देवस्य ससागरधराफलम् ॥
मधुपर्कं तथा दद्याद् दधि सर्पिस्तथा मधु ।
मधुपर्कस्य दानेन परं पदमिहाप्नुते ॥
उशीरं कूर्च्चकं दत्त्वा सर्व्वपापैः प्रमुच्यते ।
दत्त्वा गोवालकं कूर्च्चं सर्व्वान् कामान् व्यपोहति ॥
शयनासनदानेन स्थितिं विन्दति शाश्वतीम् ।
उत्तरच्छददानेन सर्व्वान् कामानवाप्नुयात् ॥
वितानकप्रदानेन सर्व्वपापैः प्रमुच्यते ।
शुक्लवस्त्रप्रदानेन श्रियं प्राप्नोत्यनुत्तमाम् ॥
नीलरक्तं विनारक्तं शेषरक्तं द्विजोत्तमाः ।
दत्त्वा भवति धर्म्मात्मा सर्व्वव्याधिविवर्ज्जितः ॥
अलोमानि च वस्त्राणि कौशेयानि बहूनि च ।
ग्रैवेयकप्रदानात्तु सर्व्वशास्त्रार्थविद्भवेत् ॥
कर्णाभरणदानेन भवेत् श्रुतिधरो नरः ।
अश्वमेधमवाप्नोति सौभाग्यञ्चैव विन्दति ॥
यः प्रयच्छति देवाय सोऽश्वमेधफलं लभेत् ।
त्रिवृत् शुक्लं सुपीतं वा पट्टसूत्रादिनिर्म्मितम् ॥
यज्ञोपवीतं गोविन्दे दत्त्वा वेदान्तगो भवेत् ।
यज्ञोपवीतदानेन ब्रह्मदानफलं लभेत् ॥

तथा स्वर्णदः सर्व्वकामान् रूप्यदोऽभयम् । मुकुटदो मूर्द्धन्ये राजा । केयूरदानात् शत्रुजयः । स्वर्णाङ्गुरीयदानात् सौभाग्यम् । अङ्गददानेन राजा । श्रोणीसूत्र-दानेन चक्रवर्त्ती । पादाभरणदानेन सर्व्वस्थानलाभः । पादाङ्गुरीयकदानात् गुह्यकाधिपः । पादुकादानेनानुत्तमा गतिः । उपानद्दानेन विमानाधिरोहणम् ।

ग्रैवेयकदानात् सर्व्वशास्त्रार्थविद् भवति। कर्णाभरणदानेन श्रुतिधरः अश्वमेधफलं सौभाग्यञ्च।

सर्व्वाभरणदानेन राजसूयफलं लभेत्।
यस्याग्रे तिष्ठते विष्णुर्हेमभूषणभूषितः।
रत्नैर्मुक्ताविशेषेण अहन्यहनि भूभुजः॥
कल्पकोटिसहस्राणि तत्पितॄणां हरेः पदे।
वासो भवति विप्रेन्द्र कथितं ब्रह्मणा मम॥

पुनर्विष्णुधर्म्मोत्तरे,—

दर्पणस्य प्रदानेन राजसूयफलं लभेत्।
राजा भवति लोकेऽस्मिन् छत्रं दत्वा द्विजोत्तम॥
तालवृन्तप्रदानेन निर्वृतिं विन्दते पराम्।
तथा चामरदानेन श्रीमान् भवति भूतले।
मुच्यते च तथा पापैर्विष्णुलोकं स गच्छति॥
प्रदाय चामरवरं श्रद्धया विष्णवे नरः।
परं पदमवाप्नोति यत् सुरैरपि दुर्लभम्॥
पताकाञ्च शुभां दत्वा तथा केशवसद्मनि।
कन्यस्य सकलं पापं वायुलोकं स गच्छति॥
वाद्यं दत्वा तथा विप्र मर्त्त्यलोके महीयते।
वाद्यानामपि देवस्य तन्त्रीवाद्यं सदा प्रियम्॥
किं वादित्रसहस्रैस्तु पुरतो वै ममाग्रतः।
नागारिचिह्नितां घण्टां चक्राङ्केन समन्विताम्।
वादयन् कुरुते नाशं जन्मसृत्युभयोद्भवम्॥
यस्तु वादयते घण्टां वैनतेयेन चिह्निताम्।
धूपे नीराजने स्नाने पूजाकाले विलेपने।
ममाग्रे लभते पुण्यं चान्द्रायणशतोद्भवम्॥
वैनतेयाङ्कितां घण्टां सुदर्शनयुतां यदि।
ममाग्रे स्थापयेद् यस्तु देहे तस्य वसाम्यहम्॥
मम नामाङ्किता घण्टा मत्पुरो यदि तिष्ठति।
अन्तिके वैष्णवे गेहे तत्र मां विद्धि वै द्विज॥

महीयार्द्धनवेलायां यस्त्वावाद्यं शृणोति यः।
नश्यन्ति तस्य पापानि शतजन्मार्ज्जितानि वै॥
छत्रं दत्वा तथाप्नोति चन्द्रलोकमसंशयम्।
स्वयं घृतेन सम्पूज्य तथैवानुचरो भवेत्॥
प्रधानैर्भक्तिचारैश्च पात्राण्यादिश्य जनार्द्दने। (?)
माल्याधारं तथा दत्वा धूपाधारं तथैव च।
गन्धाधारं तथा पात्रं कामानां पात्रतां व्रजेत्॥
गोदानानि पवित्राणि भूमिदानानि यानि च।
दद्याद् वस्त्रादिदानानि प्रीतये मधुघातिनः॥
विष्णवे भोगवृद्ध्यर्थं क्षेत्रं वा ग्राममेव वा।
यो ददाति स पुण्यात्मा सर्व्वपापैः प्रमुच्यते॥
विष्णुधर्म्मोत्तरे,—सपुष्पैः सफलैर्वृक्षैः पूर्णं कृत्वा जलान्तिकम्।
उद्यानैः पद्मिनीपर्णैरामकैश्च मनोरमैः॥
जलाशयैः तथा कृत्वा सर्व्वपापैः प्रमुच्यते।
श्वेतद्वीपमवाप्नोति भुवो नावर्त्तते ततः॥
देवाग्रे कारयेद् यस्तु रम्यामापणवीथिकाम्।
राजा भवति लोकेऽस्मिन् विजितारिर्म्महायशाः॥
नगरञ्च तथा दत्वा साम्राज्यमधिगच्छति॥
विष्णोरायतने दत्वा तत्कथापुस्तकं नरः।
ब्रह्मलोकमवाप्नोति बहून् वै वत्सरान् द्विज॥
स्वभूतं वाचकं कृत्वा देवागारे नरः सदा।
विद्यादानफलं प्राप्य ब्रह्मलोके महीयते॥
विष्णोः शङ्खप्रदानेन वारुणं लोकमश्नुते।
सौभाग्यं महदाप्नोति किङ्किणीं प्रददन् नरः॥
यानवाहनदानेन सर्व्वकामसुखी भवेत्।
शिविकां ये प्रयच्छन्ति ते गच्छन्त्यमरावतीम्॥
अश्वदाः सूर्य्यलोकस्था राजन्ते दिवि सूर्य्यवत्।
करीन्द्रदानाच्छक्रस्य पुरे स्थित्वा चिरं वसेत्॥
दासं दत्वा सूर्य्यलोके तिष्ठेद् भूयो न जायते।
दासीं दत्वा तथाप्नोति नात्र कार्य्या विचारणा॥

गणिकां ये प्रयच्छन्ति नृत्यगीतविशारदाम् ।
सर्व्वद्वन्द्वविनिर्म्मुक्तास्ते प्रयान्त्यमरावतीम् ॥
राजचिह्नानि दत्वा च राजा भवति भूतले ।

वामनपुराणे,—

प्रासादनगरादीनि गृहप्राकारकादिकम् ।
यद्यदिष्टतमं किञ्चिद् यच्चाप्यस्ति गृहे शुचि ।
तत्तद्धि देयं मोक्षार्थं देवदेवाय चक्रिणे ॥

विष्णुधर्म्मे मान्धातारं प्रति वशिष्ठवाक्यम्,—

समस्तकामानिमां लब्ध्वा सर्व्वलोकेश्वरेश्वरम् ।
पूजयाच्युतमीशेशं तमाराध्य न सीदति ॥

इति ।

पुष्पैर्धूपैस्तथा गन्धै र्दीपैर्वस्त्रानुलेपनैः ।
आराधयाच्युतं भक्त्या वेश्मसम्मार्जनादिना ॥
यद्यदिष्टतमं किञ्चिद् यद्यदत्यन्तदुर्ल्लभम् ।
तत्तद् दत्वा जगद्धात्रे वैकुण्ठाय न सीदति ॥
सुगन्धागुरुकर्पूरचन्दनचोदकुङ्कुमैः ।
वासोभि र्विविधै र्धूपैः पुष्पस्रक्चामरैर्ध्वजैः ॥
अन्नोपहारै र्विविधै र्घृतक्षीराभिषेचनैः ।
गीतवादित्रनृत्याद्यैस्तोषयस्वाच्युतं नृप ॥
पुण्यरात्रिषु गोविन्दं नृत्यगीतरसोज्ज्वलैः ।
भूप जागरणैर्भक्त्या तोषयाच्युतमव्ययम् ॥

स्कान्दे,—

सनीरकर्पूरोपेतं कुम्भं कृत्वाग्रतो न्यसेत् ।
कल्पान्तं न जलापेक्षां कुर्व्वन्ति पितरस्तथा ॥
यः कुर्य्यात् कृष्णभवनं कदलीस्तम्भभूषितम् ।
कुरुते चामरैर्युक्तं स्वागतं तस्य देवराट् ॥
कृष्णालयं प्रकुरुते पताकैरुपशोभितम् ।
स दर्गे स्वर्गलोके तु रमेद् यावच्च मेदिनी ॥
ध्वजमारोपयेद् यस्तु प्रासादोपरि भक्तितः ।
तस्य ब्रह्मपदे वासः क्रीड़ते ब्रह्मणा सह ॥

भूप चन्दनमालान्तु कुरुते कृष्णसद्मनि ।
देवकन्यायुतैर्लक्षैः सेव्यते सुरनायकः ॥

चन्दनमाला पत्रपुष्पकृतमाला ।

प्राङ्गणे वर्णकोपेतं स्वस्तिकैश्च समन्वितम् ।
देवदेवस्य कुरुते क्रीड़ते भुवनत्रये ॥
प्रासादे देवदेवस्य चित्रकर्म्म करोति यः ।
वसते रुद्रलोके तु यावत् तिष्ठन्ति भूधराः ॥
दद्याच्चन्द्रातपं यस्तु कृष्णोपरि नरेश्वर ।
वसते चन्द्रलोके तु यावत्तिष्ठति द्वारका ॥
दद्याच्चवं वितानन्तु विष्णवे नरनायक ।
सत्कृतो धनदेनैव वसते ब्रह्मणाञ्चरम् ॥

आदित्यपुराणे,—

लेपनाच्छादनञ्चैव यः करोति पुनर्नवम् ।
देवतायतने तस्य न भवेत् कीटजं भयम् ॥

देवस्वहाधिकारे यमः,—

विधाय विविधं चित्रं तल्लोकं विन्दति ध्रुवम् ।

विष्णुः,—

यस्य देवस्यायतनं करोति तस्यैव लोकमाप्नोति सुधार्पितं कृत्वा यशसा विराजते ।

---

[[1]अथ वराहपुराणोक्तानि नैवेद्यानि।

वाराहे,—

सर्व्वं व्रीहिमयं यद्यं शुभं सर्व्वरसान्वितम्।
मन्त्रेण मे प्रदीयेत न कश्चिदपि संस्पृशेत्॥
इङ्गुदीफलबिल्वानि वदरामलकानि च।
खर्ज्जूरान् पनसांश्चैव मानवाकपरूषकान्॥

मानवाके नारिकेलफलम्।

आम्रानुदुम्बरांश्चैव तथा प्लक्षफलानि च।
मरीचं शशिपाकञ्च भल्लातकरमर्द्दनम्॥
* * * * तुम्बरञ्च प्रियङ्गुकम्॥
द्राक्षा च दाड़िमञ्चैव पिण्डखर्ज्जूरमेव च।
सौवीरं कोकिलञ्चैव तथा शुभफलानि च॥
पिण्डारकफलञ्चैव पुन्नागफलमेव च।
शमी च करवीरञ्च वीजपूरफलं तथा॥
कुमुदस्य फलञ्चैव उत्पलस्य फलं तथा।
कर्कारुकफलञ्चैव तथा शिम्बफलानि च॥
अर्कंकर्कोटकञ्चैव तथा तालफलानि च।
जातीयकफलञ्चैव * * * *॥
कलिकस्य फलञ्चैव फलं कारुषकं तथा।
रोतकस्य फलञ्चैव काश्मर्य्याः फलमेव च॥

---

(1) Y. Omits the portion bracketed.

[1]मल्लचायाः फलञ्चैव कर्णिकारफलं तथा।
अग्रदायफलञ्चैव शोलायाः फलमेव च॥
चित्रशालाफलञ्चैव द्विविधा कर्कटी तथा।
कालिङ्गकफलञ्चैव बृहतीफलमेव च।
उभे चैव पटोलि द्वे तथा रसफलानि च॥
वचनस्य फलञ्चैव सख्याफलमेव च।
स्यन्दनस्य फलञ्चैव कटुसारफलं तथा॥
कर्मरङ्गफलञ्चान्यत् प्रतिग्रह्णामि माधवि।
मूलकानां फलञ्चैव कदम्बस्य फलं तथा॥
धन्यकस्य फलञ्चैव कन्दस्योत्पलकं तथा।
कन्दञ्च कौमुदञ्चैव द्विविधं स्थलकन्दयोः॥
पिण्डकन्देति विख्यातं माह्विषं कन्दमेव च।
करमर्दकन्दन्तु तथा नीलोत्पलस्य च॥
मृणालं पुष्करञ्चैव शालूकस्य फलं तथा।
एतान्यन्यानि बहूनि कन्दमूलफलानि च॥
एतानि चोपयोग्यानि यान्युक्तानि मया शुभे।
मूलकस्य च शाकञ्च [2]चं ह्रषाकं (चन्द्रोशाकं) तथैवच॥
शाकञ्चैव कलायस्य सर्षपस्य तथैवच।
वल्लकस्य च शाकञ्च शाकमेकं कलिङ्गकम्॥
आर्द्रकस्य च शाकञ्च पालाशं शाकमेव च।
आस्थिकोदकशाकञ्च शाकं कौमारकं तथा॥

(१) E. मल्लिचायाः। (२) E. चन्द्रशाकम्।

शुकमण्डलपत्रञ्च द्वाविवतु तवानकौ।
बदरस्य च शाकञ्च मधुकोदुम्बरं तथा॥
एते चान्ये च बहवः शतशोऽथ सहस्रशः।
कर्म्मण्यास्ते च सर्व्वे वै ये मया परिकीर्त्तिताः॥
व्रीहीणाञ्च प्रवक्ष्यामि उपयोगञ्च माधवि।
धर्म्मधर्म्मिकरक्तञ्च सुगन्धिरक्तशालिकम्॥
[1]दीर्घशूकं महाशालिवरं कुङ्कुमपत्रिकम्। (०कङ्गुणिकाख्यकम्)
ग्रामशालिसमुद्राणां सुश्रीकां कुलशालिकाम्॥
यवान्नं विविधं देयं कर्म्मण्यं मम माधवि।
कर्म्मण्याश्चैव मुद्गाश्च तिलाः कृष्णाः कुलत्थकाः॥
गोधूमका महामुद्गा कुलत्थमथवाप्यलम्।
प्रतिग्रह्याण्यहं ह्येतत् सर्व्वं भगवतः प्रियम्॥
पशूनां संप्रवक्ष्यामि वन्यानां मार्गवासिनाम्।
ये ममैवोपयोज्यानि गव्यं मधु घृतं तथा॥
माहिषञ्चाविकं छागमयाज्ञिकमुदाहृतम्।
मार्गं मांसतथा छागं [2]शाशं वा मम युज्यते॥
कर्म्मण्यं रौरवं मांसं मायूरं [3]कुक्कुटं तथा।
[4]लावकं वार्त्तिकञ्चैव प्रशस्तश्च कपिञ्जलः॥

---

(१) E. दीर्घमूलम्।
(२) E. पाशम्।
(३) E. कौकरम्।
(४) E. लवङ्गं बाह्लिकञ्चैव।

रेणुकः प्राशिकश्चैव हारीतश्चैव वीर्य्यवान्।

तथा कुरुवकश्चैव (कुररवश्चैव) पितॄणां प्रवरः प्रियः* ॥

अत्र मांसस्य देयत्वेनोक्तावपि कलियुगे वर्ज्जनं समाचारात्। पठन्ति वाराहीतन्त्रे—

ब्रह्मविष्णुशिवानाञ्च शक्तेश्च श्रीकरस्य च।

राज्ञः श्रियं कुलं हन्ति कलौ मांसेन चार्चनम् ॥

---

* ग्रन्थकृतानेनैतेषां विष्णुनैवेद्यज्ञापकवचनानां शीर्षदेशे "अथ वराहपुराणोक्तानि नैवेद्यानि" इति, तदनन्तरं "वाराहे" इति च कथनादेतानि वराहपुराणादेवोद्धृतानीति स्पष्टं विज्ञापितम्। मयापि ग्रन्थकर्त्तुः कथनानुसारेणैतेषां वचनानां मध्ये यान्यसंलग्नपाठानि यानि च कोषशास्त्रालोचनयाप्यनवगतशब्दार्थानि तेषां यथायथपाठनिर्णयाय सम्यगालोचितं एसियाटिकसोसाइटिमुद्रितं वराहपुराणं किन्तु तत्र न प्राप्तः सकल एव एतदुद्धृतः पाठ इति स सुतरां तथैव रक्षितो यथा दृष्टो मूलपुस्तके। प्राप्तश्च यावत्परिमितः सोऽप्येतद्धृतेन सह सर्व्वत्र न सम्यक् सङ्गच्छत इति सोऽत्र निम्ने सन्निविष्टः। मुद्रितवराहपुराणपाठ एतस्य "बदरस्य च शाकञ्च मधुकोडुम्बरं तथा" इति श्लोकादारभ्य तत्परश्लोकैः सह सम्मेल्य द्रष्टव्यः।

मुद्रितवराहपुराणपाठः—

परमन्नस्य शाकानि मधूकोडुम्बरन्तथा।

एते चान्ये च बहवः शतशोऽथ सहस्रशः।

कर्म्मण्याश्च त एतेषां ये मया परिकीर्त्तिताः ॥५॥

ब्रीहीणाञ्च प्रवक्ष्यामि उपयोग्यानि माधवि।

एकाग्रं मानसं कृत्वा शृणु सुन्दरि ॥६॥

धर्म्मचिल्लिकशाकञ्च सुगन्धं रक्तशालिकौ।

दीर्घशालिमहाशाली वरकुङ्कुममालिकौ ॥७॥

आमोदाशिवसुन्दर्य्यौ शिरीकाकुमशालिकाः।

विविधं यावकाद्यञ्च चैतान्येतानि कर्म्मणि ॥८॥

कर्म्मण्या मुद्गमाषा वै तिलकङ्गुकुलित्थकाः।

गवेधुकं महामौद्गं मकुष्ठमयवाहिजाम्।

श्यामाकमितिचोक्तानि कर्म्मण्यानि वसुन्धरे ॥९॥

## निषिद्धानि ।

विष्णुः,—

नाभक्ष्यं नैवेद्यार्थे। न भक्ष्येऽप्यजामहिषीक्षीरे। पञ्चनखमत्स्य वराहमांसानि च ।

वाराहे,—माहिषं वर्ज्जयेन्नित्यं क्षीरं दधि घृतं तथा ।

विष्णुधर्म्मोत्तरतृतीयकाण्डे,—

उदुम्बरं कपित्थञ्च तथा दन्तशठं तथा ।
एवमादीनि देवाय न देयानि कदाचन ॥

दन्तशठं जम्बीरफलम् ।

---

नैवेद्यदानानन्तरं नरसिंहे,—

ततस्तदन्नशेषेण मन्दिरस्य समन्ततः ।
पुष्पाक्षतविमिश्रेण बलिं यस्तु प्रयच्छति ॥

---

कर्म्मण्यानि च शाकानि विजानीहि वसुन्धरे ।
एतानि प्रतिगृह्णामि यच्च भागवतं प्रियम् ॥१०॥
मार्गमांसं वरं छागं शासं समनुयुज्यते ।
* * * * * *
माहिषं वर्जयेन्मह्यं क्षीरं दधि घृतं ततः ।
* * * * * *
पक्षिणाञ्च प्रवक्ष्यामि ये प्रयोज्या वसुन्धरे ।
ये चैव मम योग्येषु उपयुज्यन्ति नित्यशः ॥१४॥
लावकं वार्त्तिकञ्चैव प्रशस्तञ्च कपिञ्जलम् ।
* * * * * *

वराहपुराणे ऊनविंशत्यधिकशततमाध्याये ९—१५ श्लोका द्रष्टव्याः ।

मातृभिः सहिताश्चैव लोकपालविनायकाः।
बलिदानाद् वैष्णवेन तृप्ताः सन्तो दिवौकसः॥
शान्तिं तस्य प्रयच्छन्ति श्रियमारोग्यमेव च।

यत्तु बलिदानमभिधाय हयशीर्षे,—

एवम्विधो बलिर्नित्यो भगवद्धाम्नि सर्व्वदा।
कार्य्यः प्रतिष्ठादिवसमारभ्यानुदिनं बुधैः॥

तद् बलिदानं पृथक्फलार्थमेव न पूजाङ्गम्।

---

विष्णुधर्म्मे—

पूपजातीफले दत्वा जातीपत्रं तथैव च।
लवङ्गमथ कक्कोलमेलां कटुफलं तथा॥
ताम्बूलानां किशलयं स्वर्गलोकमवाप्नुयात्।
सौभाग्यमतुलं लोके तथा रूपमनुत्तमम्॥

स्कान्दे,—

ताम्बूलञ्च सकर्पूरं सपूगं नरनायक।
कृष्णाय यच्छति प्रीत्या तस्य तुष्येद्धरिः सदा॥

---

## अथ कुम्भदानम् ।

स्कान्दे,—

सनीरन्तु सकर्पूरं कुम्भं कृष्णाय यो न्यसेत् ।
कुत्रापि न जलापेचां कुर्व्वन्ति प्रपितामहाः ॥

तथा,—

कुम्भं सकरकं दिव्यं फलकर्पूरसंयुतम् ।
न्यसेदर्च्चनकाले तु कृष्णस्यातीव वल्लभम् ॥

---

## अथ दुर्गायाः ।

भविष्ये,—

गुड़खण्डाज्यसम्मिश्रमन्नं दत्वा नराधिप ।
वैष्णवस्य फलं प्राप्य सूर्य्यलोके महीयते ॥
गुड़खण्डयुतानाञ्च तथा शर्करया नृप ।
घृतेन परिपक्वानां प्रदाय ब्रह्मणः पदम् ॥
शाल्योदनं [1]रसालाञ्च पानञ्च विविधं तथा ।
यः प्रयच्छति दुर्गायै स गच्छति शिवालयम् ॥
दुर्गामुद्दिश्य पानीयं केतकीगन्धिवासितम् ।
यः प्रयच्छति राजेन्द्र स गणाधिपतिर्भवेत् ॥

---

(1) E. F. रसानाञ्च ।

शशी कर्पूरम्।

आम्रञ्च नारिकेलञ्च खर्जूरं बीजपूरकम्।
यः प्रयच्छति दुर्गायै स गच्छति परं पदम्॥

---

व्रह्मणे तु नैवेद्यदाने फलाकथनात् पूजायामेतानि नैवेद्यानि

भविष्ये,—

खण्डलड्डुकश्रीवेष्टकासाराशोकवर्त्तिका(:)।
स्वस्तिकालोपिकादुग्धश्रीवेष्टककिलाटिका(:)॥
फलानि चैव पक्वानि तथा खण्डगुड़ानि च।
अन्नादि विविधं दद्यात् खाद्यानि विविधानि च।

---

## अथ सूर्य्यस्य नानाविधद्रव्यदानानि।

भविष्ये,—

वासोभिः पूजयेद् भानुं यानि वाऽस्य प्रियाणि तु।
तथान्यैश्च शुभैर्द्रव्यैः पूजयेद् वनमालिनम्॥
वासांसि सुविचित्राणि सारवन्ति मृदूनि च।
धूपितानि रवौ दद्याद् विकेशानि नवानि च॥
यावत्तद्वस्त्रतन्तूनां परिमाणं प्रचक्षते।
तावद्वर्षसहस्राणि सूर्य्यलोके महीयते॥

त्रिवृत् शुक्लं सुपीतं वा पट्टसूत्रादिनिर्म्मितम् ।
दत्त्वोपवीतं सूर्य्याय भवेद् वेदाङ्गपारगः ॥

श्वेतमहाध्वजं किङ्किणीमालान्वितं मयूरच्छत्रभूषितं रथं दत्त्वा मन्वन्तरशतं दिवि मोदते। सूर्य्यगृहे मणिमालादाने महाध्वजाष्टकदाने च कल्पायुतं दिव्यं दिवि मोदते। मणिरत्नमयदण्डं काञ्चनमयदण्डं वा शुभ्रं छत्रं मुक्तामालालङ्कृतं दत्त्वा सूर्य्यलोके मोदते। शृङ्खलासमायुक्तकांस्यलोहमयमहास्वनघण्टादाने अरुणस्यानुचरः सूर्य्येण सह मोदते। भेरीमृदङ्गपटहतुम्बुरुमुरजवंशकांस्यादिदाने युगायुतशतं सूर्य्यलोके महीयते। [[1]महास्वनशङ्खदाने युगायुतशतं सूर्य्यलोके महीयते।] वह्निवर्णाभं एकवस्त्रं नानावस्त्रचितं वा मध्ये पद्मभूषितं [2][स्रग् घण्टाचामरभूषित] वितानं सूर्य्यस्योपरि दत्त्वा तद्वस्त्रतन्तुपरिमाणसंख्ययुगसहस्रं सूर्य्यलोके महीयते। [3][सूर्य्ययन्त्रोपकरणं दत्त्वा सूर्य्यलोके महीयते।]

तथा,—

भास्करायतनाभ्यासे सूर्य्यक्षेत्रं समन्ततः ।
देहिनां तत्र पञ्चत्वं सूर्य्यसायुज्यकारणम् ॥
मनुजैः स्थापिते सूर्य्ये क्रोशार्द्धं स्यात् समन्ततः ।
तदर्द्धार्द्धमयो वाऽपि सूर्य्यक्षेत्रं प्रकीर्त्तितम् ॥

---

(१) D. Omits the portion bracketed.
(२) D. Omits the portion bracketed.
(३) D. Omits the portion bracketed.

सूर्य्यस्यायतनाभ्यासे यत्तोयं पुरतः स्थितम्।
सूर्य्यगङ्गेति तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत्।
यः कुर्य्याद् दीर्घिकां वापीं तड़ागं भास्करालये।
स तारयेत् कुलशतं सूर्य्यलोके महीयते॥

शङ्खवाद्यगीतनृत्यजयशब्दकरणे भूमिदानकन्यादानफलम्। दासीदासदाने [1]अश्वमेधफलम्। प्रेक्षणीयकदाने राजसूयफलम्। वेश्याकदम्बकं दत्वा परं स्थानं स गच्छति यत्र सूर्य्यस्तिष्ठति। गोमहिषगजाश्वदाने अश्वमेधफलम्। सूर्य्याय गौरीगोदाने स्थावरजङ्गमजगद्दानफलम्। स्नानार्थंगोदाने कपिलागोशतदानफलम्। गोवृषं पुष्टं दत्वा वृषसन्ततिरोमसंख्ययुगसहस्रं सूर्य्यलोके महीयते। उभयमुखीं दत्वा सप्तद्वीपमहीदानफलम्। सवृषं गोशतं दत्वा एकविंशतिकुलजैः सार्द्धं सूर्य्यलोके क्रीड़ित्वा तत्र भोगान् भुक्त्वा प्रलये सूर्य्यमण्डलं प्रविशति। सवृषं गोसहस्रं दत्वा अश्वमेधफलम्। गोयुक्तमश्वयुक्तं वा काञ्चनं रौप्यं वा रत्नचित्रं रथं दत्वा सूर्य्यलोकं गत्वा पश्चात् शिवलोके महीयते। दारुरथदाने विमानेनार्कं प्रयाति। घण्टाभूषितगजदाने युगकोटिशतानि स्वर्गं भुक्त्वा पश्चादिन्द्रः स्यात्। सर्व्वशस्यशालिभूमिदाने भूमिरेणुसंख्ययुगसहस्रं सूर्य्यलोके महीयते।

एवं सर्व्वत्र विज्ञेयं फलं भूरेणुमानतः।
ग्रामखेटपुरक्षेत्रविषयादिनिवेदने॥

---

(१) E. नरमेधफलम्।

नानाफलान्वितनानापुष्पान्वितारामदाने वृक्षपत्रफलसंख्ययुगसहस्रं सूर्य्यलोके महीयते। एवं भानोरायतने प्रपाकरणे परमं स्थानं याति। शीतकाले सूर्य्यायतने [1]वह्निदाने अश्वमेधफलम्। सूर्य्य-स्नानार्थं पञ्चामृतदाने सर्व्वकामाप्तिः। दीपार्थं तैलं दत्वा नरकं न याति। दीपतैलार्थतिलदाने महापातकक्षयः। धनं धान्यं हिरण्यं दत्वा परमां गतिमेति। भानवे भारतपुस्तकं दत्वा विष्णुलोके महीयते। [[2]तथा भास्कराय दक्षिणां दत्वा कल्पायुत-सहस्रं सूर्य्यलोके महीयते।]

सुवर्णमणिमुक्तादि रजतञ्च तथोत्तमम्।
वस्त्राणि विविधानीह यच्चान्यदपि दुर्लभम्॥
पुष्पाणि करवीराणि प्रियं रक्तञ्च चन्दनम्।
गुग्गुलुश्चैव धूपानां नैवेद्यं मोदकाः प्रियाः॥
पूजाकरो भोजकश्च घृतदीपस्तथा प्रियः।
[3]दानं प्रियं खगश्रेष्ठ ये प्रयच्छन्ति मानवाः।
तेषां ददाति विश्वेशो भगवान् मुक्तिमीश्वरः॥

संवत्सरे षण्मासे वा भानोर्य्यागकरणे न पुनर्भवः।

तथा,—

अयं विनैव मन्त्रेण पुण्यराशिः प्रकीर्त्तितः।
स्यादयं मन्त्रयुक्तश्चेत् पुण्यं शतगुणोत्तमम्॥

---

(१) E. वस्त्रदाने।
(२) D. Omits the portion bracketed.
(३) E. दानम्।

तस्मान्मन्त्रेण सूर्य्याय स्नानं [1]चार्घफलादिकम् ।
गजाश्ववस्त्ररत्नादि हेमाद्यञ्च निवेदयेत् ॥
खगोल्कायेति विज्ञेयो मन्त्रः सर्व्वार्थसाधकः ।
सर्व्वमन्त्राधिकश्चायं प्रणवद्वयमध्यगः ॥

---

## अथ सौरधर्म्माः ।

भविष्ये,—

सूर्य्यधर्म्मो बुधैरुक्तः सर्व्वपापभयापहः ।
त्रिसन्ध्यमर्च्चयेद् भानुमग्निकार्य्यञ्च शक्तितः ॥
सूर्य्यार्च्चाग्निपरो नित्यं तद्भक्तातिथिपूजकः ।
पर्व्वमैथुनवर्ज्जी स्यात् श्रीमान् सूर्य्यगृहाश्रमी ॥
अर्ज्जात् तुरीयभागेन प्रकुर्य्यादर्च्चनं रवेः ।
धनार्ज्जनं तदर्द्धेन यतोऽनित्यं हि जीवनम् ॥
रव्यर्थे ब्रह्मचारी यः सूर्य्यपूजाग्नितत्परः ।
भवेज्जितेन्द्रियः शान्तो नैष्ठिकः स्नातकोऽपि वा ॥
सर्व्वद्वन्द्वविनिर्मुक्तः कन्दमूलफलाशनः ।
सूर्य्यवैखानसो ज्ञेयः सूर्य्यपूजाग्नितत्परः ॥
निवृत्तः सर्व्वसङ्गेभ्यः पूजादानरतः सदा ।
ज्ञेयः सूर्य्ययतीन्द्रोऽयं पूजानिष्ठो जितेन्द्रियः ॥

---

(१) E. मन्त्रफलादिकम् ।

लिङ्गस्थस्य यः कुर्य्यात् भस्मना च त्रिपुण्ड्रकम्।
अधृष्यः सर्व्वसत्वानां सूर्य्यलोकं स गच्छति॥
सूर्य्यभक्तैः सदा कार्य्या शिखैका भास्करप्रिया।
कृत्वाग्निकार्य्यं सूर्य्यस्य भस्मना तिलकक्रिया॥

कालिकापुराणे सूर्य्यवाक्यम्,—

मद्भक्तो नहि भुञ्जीत भाजने परिमण्डले।
उष्णीषं वर्ज्जयेच्छत्रं शाकं सौवर्चलं तथा॥
रक्तं माल्यं न सेवेत तथा वस्त्रं विलेपनम्।
गोमयं मूषिकोत्कृष्टं तथा कृष्णाश्च मृत्तिकाः॥
वर्ज्जयेदुपलेपार्थं धूपं देयं न पाणिना।
अदृष्ट्वा मां न भुञ्जीत विण्मूत्रं नैव दर्शयेत्॥
अहोरात्रोषितो भूत्वा सप्तम्यामर्च्चयेन्नरः।
केशांश्च वापयेद् भक्त्या रक्तं मुच्येन्न मेऽग्रतः॥
मन्त्राक्षा पर्य्यटन्तश्च मद्भक्तं समुपस्थितम्।
मम भोजकमन्यं वा सर्व्वं यत्नेन मानयेत्॥
मच्छास्त्रं लिखितं किञ्चिद् भित्तौ रम्ये शिलातले।
मम ज्ञानोक्तमन्यद् वा न मार्ज्जेत कदाचन॥
मदर्चाहृतनिर्म्माल्यं शरीरेण तु धारयेत्।
दशनानां विशुद्ध्यर्थमर्ककाष्ठं न भक्षयेत्॥
हिरण्यगुल्मकांस्यार्कदार्व्वाश्वत्थशमीश्मभिः।
प्रतिष्ठयं पादपीठं पादुके न च धारयेत्॥

उदयास्तमयञ्चैव मद्बिम्बं प्रणमेत् सदा।
ईदृग्विधानां भक्तानामहं तुष्याम्यसंशयम्॥

---

## अथ शिवप्रदेयानि।

भविष्ये,— सर्व्वेषामेव पात्राणां परं पात्रं महेश्वरः।
शिवे दत्तं हुतं जप्तं बलिपूजानिवेदनम्।
एकान्ततोऽनन्तफलं तद्भवेन्नात्र संशयः॥

तथा,— वासांसि सुविचित्राणि सारवन्ति मृदूनि च।
धूपितानि शिवे दद्याद् विकोशानि नवानि च॥
यावत् तद्वस्त्रतन्तूनां परिमाणं विधीयते।
तावद्युगसहस्राणि रुद्रलोके महीयते॥
त्रिवृत् शुक्लञ्च पीतं वा पट्टसूत्रादिनिर्म्मितम्।
दत्त्वोपवीतं रुद्राय भवेद् वेदान्तगः सुधीः॥
त्रुटिमात्रञ्च यो दद्याद्धेम लिङ्गे समौक्तिकम्।
इन्द्रस्यार्द्धासने तावद् यावदिन्द्राश्चतुर्द्दश॥

नन्दिपुराणे—
मुक्तां मुक्तार्द्धमात्रं वा तदर्द्धं प्रतिवासरम्।
कनकं यस्य लिङ्गे तु व्रजेत् पदमनुत्तमम्॥
एवमर्थानुसारेण फलं ज्ञेयं समासतः।
योऽर्कपत्रपुटे कृत्वा मधुपर्कं समन्त्रकम्॥

निवेदयति शर्व्वाय सोऽश्वमेधफलं लभेत्।

भविष्ये,—शिवस्य पुरतो दत्वा दर्पणन्तु सुनिर्म्मलम्।

कल्पायुतसहस्रन्तु शिवलोके महीयते॥

तथा,—

श्वेतं महाध्वजं कृत्वा परं यान्ति शिवान्तिकम्।

शिवगृहे ध्वजमालादाने अष्टदिक्षु ध्वजाष्टकदाने वा कल्पायुतशतं दिवि मोदते।

स्कान्दे,—

छत्रं दद्यात्तु यः सोऽपि दीप्यते तेजसा दिवि।

भविष्ये,—

शरच्चन्द्रांशुविमलं मुक्तादामोपशोभितम्।

मणिकाञ्चनान्यतमदण्डं छत्रं दत्वा विचित्रच्छत्रशोभितो विमानशतसम्भोगैः शिवपुरे चिरं स्थित्वा समुद्रपर्य्यन्तां महीं भुंक्ते।

शृङ्खलासमायुक्तमहास्वनकांस्यलोहान्यतममयघण्टायाः शिवालये बन्धने घण्टाकर्णगणतुल्यः शिवलोके महीयते।

भेरीमृदङ्गमुरजदुन्दुभीपटहादिकम्।

वंशकांसालवादित्रं यः शिवाय प्रयच्छति।

युगायुतशतं दिव्यं शिवलोके महीयते॥

महास्वनन्तु यो दद्यात् शङ्खयुग्मं शिवालये।

युगकोटिशतं सार्द्धं शिवलोके महीयते॥

---

अन्यत्र च,—

कुर्य्यान्मकरसंक्रान्तौ लिङ्गे तु घृतकम्बलम्।
श्रावयेद् देवमीशानं चीरसारं घृतं विभो(:)॥
पुण्यकाले करिष्यामि तवैव घृतकम्बलम्।
देवदेव महादेव नित्यशुद्ध निरामय।
अविघ्नं मेऽस्तु यज्ञस्य प्रसीद कृपया विभो॥
शालिपिष्टेन दीपांश्च महादीपांश्च कारयेत्।
तिलैर्होमं प्रकुर्व्वीत दधिमध्वाज्यसंयुतैः॥
अष्टोत्तरशतञ्चाज्यं मूलमन्त्रेण मन्त्रवित्।

---

## अथ महास्नानम्।

कार्त्तिक्यामथ वैशाख्यां शयनादिषु पर्व्वसु।
दत्वा दीपान् समुद्दीप्य देवस्याग्रे बलिं ततः॥
भक्तानां देवदेवस्य वाद्यादिषु चिपेत्सुधीः।
सर्व्वत्र देवमामन्त्र्य स्वपन्भूमौ हरं स्मरन्॥
उपलिप्य गृहान् गत्वा निराहारो निशि स्वपेत्।
अपरेऽहनि पूर्व्वाह्णे गत्वा तत्रैव मन्दिरम्॥
कारयेत महास्नानं हन्तासुं विधिमाश्रृणु।
पञ्चविंशत्पलं लिङ्गे अभ्यङ्गं कारयेदथ॥

शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च।
तावता मधुना चैव दध्ना चैव ततः पुनः॥
तावद्देवहि क्षीरेण पञ्चगव्येन वा स्वतः।
भूयः सार्द्धसहस्रेण पलानामैक्षवेण च॥
रसेन कारयेत् स्नानं भक्त्या चोष्णाम्बुना ततः।
शीताम्बुना तयोद्वर्त्त्य वस्त्रपूतेन मन्त्रवित्॥
स्नापयेद् भक्तितो भूयो गन्धमन्त्रान्वितेन तु।
विधिना स्नाप्य चानेन सह रोचनयालिपेत्॥
कुष्ठकुङ्कुमकर्पूरचन्दनागुरुयुक्तया।
लेपयित्वा ततो लिङ्गमापीठन्तदनन्तरम्॥
नीलोत्पलसहस्रेण मालां बद्धा प्रपूजयेत्।
अलाभे तु सहस्रार्द्धं तदर्द्धेनैव पूजयेत्।
उत्पलानामलाभे तु पद्मैश्च शीतरोर्य्यजेत्।
पद्मैर्वा चम्पकैर्वापि जात्या पाटलयाऽपिवा॥
पुन्नागैः कर्णिकारैर्वा श्वेतमन्दारजैरपि।
दमनैर्म्मरुवकैर्वापि शमीशुक्लार्कनागरैः॥
यथालाभञ्च पत्रैर्वा निर्ग्रथ्य सुमनोऽन्वितैः।
सम्पूज्य कारयेद् भक्त्या विमलं पुष्पमण्डपम्॥
गुग्गुलुञ्चाज्यसंयुक्तमगुरुं वा सितं दहेत्।
सम्पूज्य गौरीभर्त्तारं गीतवादित्रमङ्गलैः॥
शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः।
ततो नीराजनं दीपैः षड्विंशद्भिस्तु कारयेत्॥

सर्षपैर्दधियुक्तैश्च दूर्व्वागोरोचनाक्षतैः।
गन्धपुष्पादिकं दद्याद् भूयो विचिन्त्य शङ्करम्॥
वितानं सितपद्माभं मध्ये कमलभूषितम्।
विचित्रवर्णमेकं वा नववस्त्रोपकल्पितम्॥
किङ्किणीरवसंयुक्तं वैदूर्य्यैश्च सुशोभितम्।
लम्बकैः पूतदामैश्च घण्टाचामरभूषितम्॥
शिवस्योपरि यः कुर्य्यात् पुरतो वाऽपि कल्पयेत्।
रुद्रवत् सर्व्वलोकेषु युगकोटिं स मोदते॥

शिवोपरि मौक्तिकमण्डपकरणे कल्पान्तं यावत् शिवपुरे वासः। शिवायतने वस्त्रशोभाकरणे तत्तन्तुसंख्ययुगसहस्रं शिवलोके महीयते। शिवे यज्ञोपकरणं दत्वा शिवलोके महीयते। कृष्णतिलप्रस्थदाने युगायुतसहस्राणि शिवलोके महीयते। शिवाय पयस्विनीगोदाने सचराचरजगद्दानफलम्।

वृषभं शुक्लवर्णं वा नीलं वा विनिवेदयेत्।
यावत्प्रसूतिरोमाणि तत्प्रसूतिकुलेषु वै।
तावद्युगसहस्राणि शिवलोके महीयते॥
कृत्वाग्निकार्य्यं कपिलां दत्वा गोशतजं फलम्॥
क्रोशमात्रं परं चेत्रं शिवस्य परमात्मनः।
देहिनां तत्र पञ्चत्वं शिवसायुज्यकारणम्॥
मनुजैः स्थापिते लिङ्गे चेत्रमानमिदं स्मृतम्।
स्वयम्भुवि सहस्रं स्यादार्षे चैव तदर्द्धकम्॥

य: कुर्य्याद् दीर्घिकां वापीं कूपं वापि शिवालये।
त्रिसप्तकुलसंयुक्तः शिवलोके महीयते॥

स्कान्दे,—

दद्यात् कृष्णतिलांश्चैव तथा सिद्धार्थकांश्च ह।
यो मे देवि सदा भक्त्या स मे नन्दिसमो भवेत्॥

तथा,—

गोचर्म्ममात्रमपि वा यो मे दद्याद् वसुन्धराम्।
स मे पुरं समासाद्य गणेशैः सह मोदते॥

---

## अथ घृतकम्बलविधिः।

भविष्ये,—

आलिङ्गपीठपर्य्यन्तं यो दद्यात् घृतकम्बलम्।
घृतेन रूपकं रम्यं कृत्वा शम्भोर्म्महात्मनः॥
मन्वन्तरशतं [1]साद्धं रुद्रलोके महीयते।
सुरूपः सुभगः श्रीमान् परितुष्टोऽपि जायते॥
रूपं पिष्टमयं कृत्वा विचित्रं रत्नभूषितम्।
यज्ञोपवीतसंयुक्तं हेमपादं विशेषतः॥
दन्तेषु मौक्तिकं न्यस्य प्रवालमधरोष्ठयोः।
दद्याद् वज्रञ्च नेत्राभ्यां वैदूर्य्यं वाऽप्यसम्भवे॥

---

(१) E. सार्ध्दम्

हेमरूप्यञ्च हस्ताभ्यां ताम्रं पादतले तथा।
अण्डजैर्वनजैर्वस्त्रैर्विचित्रैः परिवेशयेत्॥
विविधैरथ तोयाद्यैर्लिङ्गपूजां प्रकल्पयेत्।
भोजयेत् शिवभक्तांश्च विप्रान् भक्त्या च दोक्षयेत्॥
प्रीयतां मे महादेवो भक्तांस्तान् क्षामयेद् द्विजान्।
तैरेव सार्द्धं विप्रेन्द्र तद्रूपञ्च शिवालये।
नीत्वा समर्पयेद् विद्वान् शिवलिङ्गसमीपतः।
सर्व्वयज्ञफलं प्राप्य सर्व्वदानफलानि च।
सुरूपो रूपदानेन शिवलोके महीयते॥
शातकुम्भं ततः पद्ममष्टपत्रं सुशोभनम्।
मध्ये निवेशयेन्मूर्द्ध्नि लिङ्गस्य [1]कुङ्कुमैः सह॥
सूक्ष्मवस्त्रयुगं श्वेतं पीतं वा पट्टसम्भवम्।
चामरं दर्पणञ्चैव दीपवृक्षं प्रदापयेत्॥
धूपं साधारणञ्चैव सघण्टं पूर्णमेव च।
वितानकं ध्वजं दद्यात् किङ्किणीरसनान्वितम्॥
अथाष्टाभिः क्षितिं पीड्य अङ्गैर्भक्त्या च दण्डवत्।
ततः किञ्चित् पठेत् स्तोत्रं शाङ्करं भवशङ्करम्॥
प्रदक्षिणं ततो गच्छेत् शनै र्निर्म्माल्यवर्जकः।
प्रणम्योच्चैः पुनः पश्चान्नैवेद्यं विनिवेदयेत्॥

---

(1) E. कुङ्कुमैः सह।

दीनान्धकृपणांश्चैव तर्पयेदन्नदानतः।
कारयेद् यः शिवे भक्त्या महास्नानं फलं शृणु॥
समुद्धृत्य शतं साग्रं कुलानां पापवर्जितः।
भगवन् ब्रह्मलोकान्तं भुक्त्वा [1]लोकानशेषतः॥
व्रजेत् क्रीड़ायने तस्मिन् विमाने सोऽमरैर्युतः।
भुक्त्वा यथेप्सितान् भोगान् शिवसायुज्यतां व्रजेत्॥
मायावितान[2]मुद्धृत्य अन्ते मोक्षमवाप्नुयात्।
केवलेनाप्यथाज्येन दध्ना गव्येन वै तथा॥
पयसा पञ्चगव्येन मधुनेक्षुरसेन च।
यः कारयेन्महास्नानं विधिनानेन संयुतः॥
सोऽपि तेनैव मार्गेण गमिष्यति परं पदम्।
विधिनानेन निःस्वोऽपि स्नानं तोयेन कारयेत्॥
नराणां विंशतिर्यावत् सोऽपि यास्यति तत्पदम्।
एवमेव हि धर्म्मस्य राशिर्मन्त्रविवर्जितः॥
मन्त्रयुक्तोऽर्चयेद् यस्तु तत्तुल्यो नास्ति धर्म्मवान्।

मन्त्रः शिवमन्त्रः। लिङ्गपुराणे,—

महास्नानञ्च यः कुर्य्याद् घृतेन दधिना ततः।
स याति मम सायुज्यं स्नानेष्वेतेषु [3]सुव्रत॥

---

(१) E. भोगानशेषतः।
(२) E. सत्स्नान॰
(३) E. सुव्रते।

स्नाने पञ्चशतं ज्ञेयमभ्यङ्गे पञ्चविंशतिः।
द्वे सहस्रे पलानान्तु महास्नानं प्रकीर्त्तितम्॥
स्नाप्य लिङ्गं मदीयञ्च गव्येनैव घृतेन च।
विशोध्य सर्व्वद्रव्यैश्च तोयेनाप्यभिषेचयेत्॥
महास्नाने नियुक्ते तु स्नानमष्टगुणं स्मृतम्।
जलेन केवलेनैव गन्धतोयेन [1]शक्तितः॥
अनुलेपस्तु सर्व्वत्र पञ्चविंशपलेन वै।
शमीपुष्पञ्च विधिना विल्वपत्रञ्च पङ्कजम्॥
अथान्यानि च पत्राणि विल्वपत्राणि [2]संत्यजेत्।
दशद्रोणैश्च नैवेद्यं सप्तद्रोणैरथापि वा॥
शतद्रोणसमं पुष्पमाढकेऽपि विधीयते।
वित्तहीनस्य विप्रस्य नात्र कार्य्या विचारणा॥
भेरीमृदङ्गमुरजविषाणपटहादिभिः।
वादित्रैर्विविधैश्चैतै[3]रन्योन्यैर्विविधैस्तथा॥

---

(१) E. भक्तितः।
(२) E. न त्यजेत्।
(३) E. रान्दोलै॰

## अथ घृताभिषेकः ।

भविष्ये,— घृताभिषेकं यः कुर्य्यादहोरात्रं शिवस्य तु ।

अच्छाधारेण भाण्डेन पुष्यमासे द्विजोत्तम ॥

गीतनृत्योपचारेण शङ्खवादित्रनिःस्वनैः ।

कुर्य्याज्जागरणं चात्र प्रदीपाद्युपशोभितम् ॥

समस्तपापनिर्म्मुक्तः समस्तकुलवर्द्धनः ।

मुक्तः शिवपुरे नित्यं मोदते शिववत् सुखी ॥

ग्रहणे विषुवे चैव पुण्येषु दिवसेषु च ।

घृताभिषेकं यः कुर्य्यान्महापुण्यं समश्नुते ॥

---

## अथ घृतधारा ।

कालिकापुराणे,—

अथार्घ्यञ्च सुगन्धेन विन्यसेद् हैमपङ्कजम् ।

प्रत्यहं वाहयेद् धारां यस्तु वै लिङ्गमूर्द्धनि ॥

उत्तरायणमासाद्य ज्ञात्वा संक्रमणं रवेः ।

तदन्ते विधिवत् पूज्य दद्याच्चैव उपस्करम् ॥

गृहं प्राप्य ततो भक्त्या ब्राह्मणान् यतिभिः सह ।

सम्भोज्य दक्षिणां दत्वा क्षमाप्य च विसृज्य च ।

दीनान्धदुःखितानाञ्च कल्पयेदनिवारितम् ॥

कीर्त्तिं लोकेऽतुलां प्राप्य भुक्त्वा भोगाननल्पकान् ।

प्राप्नुयात् परमं स्थानं रुद्रसायुज्यलक्षणम् ॥

## अथ शिवप्रजागरः ।

शैवधर्म्मास्तत्वसारसंहितायाम्,—

भस्मपुण्ड्री भवेन्नित्यं शिवपूजापरायणः ।
सिद्धक्षेत्रनिवासी यः शैवीं सिद्धिमवाप्नुयात् ॥

तथा,— लिङ्गार्च्चनं रुद्रजपो व्रतं शिवदिनत्रये ।
वाराणस्याञ्च मरणं मुक्तिरेषा चतुर्व्विधा ॥
एकादश्यष्टमी चैव चतुर्द्दशी शिवप्रिया ।
तासामाद्यामुपवसेत् दिवा नाद्यात् तथा द्वयोः ॥

अथ शिवप्रीत्यर्थमेकादशीव्रते शिवपूजाद्यङ्गम् ।

कालोत्तरे,—

दीक्षितानां क्रमेणैव शिवाचारो निगद्यते ।
किं वर्ज्यं किञ्च कर्त्तव्यं शिवमार्गे स्थितेऽप्यथ ॥
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोरपि ।
व्यतीपातेषु सर्व्वेषु दिनवृद्धौ दिनक्षये ।
संक्रान्तावयनाभ्यान्तु षड़शीतिमुखे तथा ॥
द्विगुणं पूजनं होमं जपं नक्तेन वर्त्तनम् ।
भीतेषु रक्षणं कार्य्यं वात्सल्यञ्च तपस्विसु ॥
कारुण्यं सर्व्वभूतेषु क्षमा सत्यमचापलम् ।
अनृतं गुरुदेवार्थं न दोषाय प्रकल्पयेत् ॥
रुद्राक्षकटकं कार्य्यं समञ्च विषमं दृढ़म् ।
एकत्रिपञ्चवदनं यथालाभन्तु धारयेत् ॥

द्विविपञ्चमुखं शस्तमव्रणं तीक्ष्णकण्टकम्।
दक्षबाहौ शिखायां वा धार्य्यं च चतुराननम्॥
अधारणान्महादोषः सिद्धिस्तस्य सुदूरतः।
रुद्राक्षं धारणीयन्तु दीक्षितैश्चाप्यदीक्षितैः॥
नित्यं हेममयी धार्य्या मुद्रिका दक्षिणे करे।
पद्मरागान्विता कार्य्या नीलेन रचिताऽथवा॥
धार्य्ये विचित्रहेमाढ्ये कुण्डले रचनान्विते।
शिवसंज्ञा द्विजस्यैव कवचाख्या नृपस्य च॥
वैश्यानां शैवसंज्ञा च शूद्राणाञ्च गणान्वितम्।
अनाथदुर्बलं भीतं दुर्गस्थं न परित्यजेत्॥
गवामुत्थापनं कार्य्यं मग्नानां कर्द्दमादिषु।
चोदको बोधकश्चैव मोक्षदस्तु तृतीयकः॥
शिववत् पूजयेत् सर्व्वान् यत्र ते मोक्षदा नृणाम्।
यः प्रेरयति जन्तूनां शिवे प्रोक्तः स चोदकः॥
दीक्षागुरु र्मोक्षदस्तु बोधकः शास्त्रदर्श्शकः।

तथा,—

स्नानं पूजा जपो ध्यानं होमश्चैव तु पञ्चमम्।
इति नित्यं सदा कुर्य्यात् परशास्त्रं विवर्ज्जयेत्॥
पूजनीयो महादेवो नापरं मनसा स्मरेत्।
न वामहस्ते पूजा तु कर्त्तव्या मनसा अपि॥
वामहस्तेन लिङ्गन्तु न संस्पृश्यं कदाचन।
वामाचारं न कर्त्तव्यं तत्र निन्दां च वर्जयेत्॥

न निन्दाकारणं देवो न शास्त्रं शिवभाषितम्।
शङ्करो नार्च्चितो यावत् तावन्नान्यत् समाचरेत्॥
शिववत् शिवभक्तास्तु द्रष्टव्याः शिवमिच्छता।
न शून्यमस्तकं लिङ्गं दृष्ट्वा यायात् कदाचन॥

---

## अथ विष्णुप्रदेयानि।

नरसिंहे,—

वस्त्राभ्यामच्युतं भक्त्या परिधाप्य विचित्रतः।
सोमलोके रमित्वा तु विष्णुलोके महीयते॥

तथा,—

ध्वजञ्च विष्णवे यस्तु गरुड़ेन समन्वितम्।
दद्यात् सोऽपि ध्वजाकीर्णविमानेन विराजता।
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः॥
मुकुटैः कटकाद्यैश्च यो विष्णुं पूजयेन्नृप।
सर्व्वपापविनिर्म्मुक्तः सर्व्वभूषणभूषितः।
(१)रुद्रलोके वसेत् श्रीमान् यावदिन्द्राश्चतुर्द्दश॥
यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति।
स सर्व्वपापरहितः सर्व्वभूषणभूषितः।
गवां सहस्रदानस्य फलं प्राप्य हरिं व्रजेत्॥

दद्यादित्यनुवृत्तौ विष्णुः,—न वासो नीलरक्तं न मणिसुवर्णयोः

---

(१) E. इन्द्रलोके।

प्रतिरूपमलङ्करणम्।

तथा,— शङ्खे कृत्वा तु पानीयं सपुष्पं सफलाक्षतम्।
अर्घ्यं ददाति देवस्य ससागरधराफलम्॥
मधुपर्कं तथा दद्याद् दधि सर्पिस्तथा मधु।
मधुपर्कस्य दानेन परं पदमिहाप्नुते॥
उशीरकूर्चकं दत्वा सर्व्वपापैः प्रमुच्यते।
दत्वा गोवालजं कूर्चं सर्व्वान् पापान् व्यपोहति॥
शयनासनदानेन स्थितिं विन्दति शाश्वतीम्।
उत्तरच्छददानेन सर्व्वान् कामानवाप्नुयात्॥
वितानकप्रदानेन सर्व्वैः पापैः प्रमुच्यते।
शुक्लवस्त्रप्रदानेन श्रियं प्राप्नोत्यनुत्तमाम्॥
नीलरक्तं विनारक्तं शेषरक्तं द्विजोत्तमाः।
दत्वा भवति धर्म्मात्मा सर्व्वव्याधिविवर्जितः॥
अलोमानि च सूक्ष्माणि कौशेयानि मृदूनि च।
यः प्रयच्छति देवाय सोऽश्वमेधफलं लभेत्॥
त्रिवृद्वृत्तं सुपीतञ्च पट्टसूत्रादिनिर्म्मितम्।
यज्ञोपवीतं गोविन्दे दत्वा गोदानगो भवेत्॥
यज्ञोपवीतदानेन ब्रह्मदानफलं लभेत्।
ग्रैवेयकप्रदानाच्च सर्व्वशास्त्रार्थविद् भवेत्॥
कर्णाभरणदानेन भवेत् श्रुतिधरो नरः।
अश्वमेधमवाप्नोति सौभाग्यञ्चैव विन्दति।
मूर्द्धाभरणदानेन राजसूयफलं लभेत्॥

दर्पणस्य प्रदानेन दर्पवान् उपजायते।
राजा भवति लोकेऽस्मिन् छत्रं दत्त्वा द्विजोत्तम॥
तालवृन्तप्रदानेन निर्वृतिं विन्दते पराम्।
तथा चामरदानेन श्रीमान् भवति भूतले॥
मुच्यते तु तथा पापै विंष्णुलोकञ्च गच्छति।
प्रदाय चामरवरं श्रद्धया विष्णवे नरः।
परं पदमवाप्नोति यत् सुरैरपि दुर्लभम्॥
पताकाञ्च शुभां दत्त्वा तथा केशवसद्मनि।
सन्त्यज्य सकलं पापं वायुलोकञ्च गच्छति॥
वाद्यं दत्त्वा तथा विष्णोर्मर्त्यलोके महीयते।
वाद्यानामपि देवस्य तन्त्रिवाद्यं सदा प्रियम्॥
किं वादित्रसहस्रैस्तु पुरतो वै ममाग्रतः।
नागारिचिह्निता घण्टा प्राप्यते यदि कर्हिचित्॥
नागारिचिह्नितां घण्टां रथाङ्गेन समन्विताम्।
वादयन् कुरुते नाशं जन्ममृत्युसमुद्भवम्॥
यस्तु वादयते घण्टां वैनतेयेन चिह्निताम्।
धूपे नीराजने स्नाने पूजाकाले विलेपने॥
ममाग्रे लभते पुण्यं चान्द्रायणशतोद्भवम्।
वैनतेयाङ्कितां घण्टां सुदर्शनयुतां यदि।
ममाग्रे स्थापयेद् यस्तु देहे तस्य वसाम्यहम्॥
मम नामाङ्किता घण्टा मत्पुरो यदि तिष्ठति।
अन्तिके वैष्णवे गेहे तत्र मां विद्धि दैत्यज॥

मदीयार्च्चनवेलायां घण्टानादं शृणोति यः।
नश्यन्ति तस्य पापानि शतजन्मार्ज्जितान्यपि॥
[1]वृन्तं दत्वा तथाप्नोति चन्द्रलोकमसंशयम्।
स्वयं वृन्तेन संयुज्य तस्यैवानुचरो भवेत्॥
श्रद्दधाने र्भक्तिपरैः पात्राण्युद्दिश्य जनार्द्दने।
अलेपान्यपि दीयन्ते अकूप्यानि विदुर्बुधाः॥ (?)
माल्याधारं तथा दत्वा धूपाधारं तथैवच।
गन्धाधारं तथा पीठं कामानां पात्रतां व्रजेत्॥
गोदानानि पवित्राणि भूमिदानानि चानघ।
वस्त्रान्नस्वर्णदानानि प्रीतये मधुघातिनः॥
विष्णवे भोगमुद्दिश्य क्षेत्रं वा ग्राममेव वा।
यो ददाति स पुण्यात्मा सर्व्वपापैः प्रमुच्यते॥

विष्णुधर्म्मोत्तरे,—

सपुष्पैः सफलै र्वृक्षैः पूर्णं कृत्वा जलान्तिकम्।
उद्यानैः पद्मिनीषण्डैराश्रमैश्च मनोरमैः॥
जलाशयं तथा कृत्वा सर्व्वपापैः प्रमुच्यते।
श्वेतद्वीपमवाप्नोति भुवो नावर्त्तते ततः॥
देवाग्रे कारयेद् यस्तु रम्यामापणवीथिकाम्।
राजा भवति लोकेऽस्मिन् विजितारिर्म्महायशाः॥
नगरञ्च तथा दत्वा सायुज्यमधिगच्छति।

---

(१) E. वृन्तं।

विष्णोरायतने दत्वा तत्कथापुस्तकं नरः।
ब्रह्मलोकमवाप्नोति बहून् वै वत्सरान् द्विज ॥

तत्कथापुस्तकं विष्णुपुराणादिरूपम्।

स्वभूतं वाचकं कृत्वा देवागारे नरः सदा।
विद्यादानफलं प्राप्य ब्रह्मलोके महीयते ॥
[1]विष्णोर्गन्धप्रदानेन वारुणं लोकमश्नुते।
सौभाग्यं महदाप्नोति किङ्किणीं प्रददन् नरः ॥
यानवाहनदानेन सर्व्वकामसुखी भवेत्।
शिविकां ये प्रयच्छन्ति ते गच्छन्त्यमरावतीम् ॥
अश्वदाः सूर्य्यलोकस्था राजन्ते दिवि सूर्य्यवत्।
करीन्द्रदानात् शक्रस्य पुरे स्थित्वा चिरं रमेत् ॥
दासं दत्वा सूर्य्यलोके तिष्ठेद् भूयो न जायते।
दासीं दत्वा तथाप्नोति नात्र कार्य्या विचारणा ॥
गणिकां ये प्रयच्छन्ति नृत्यगीतविशारदाम्।
सर्व्वद्वन्द्वविनिर्म्मुक्तास्ते प्रयान्त्यमरावतीम् ॥
राजलिङ्गानि दत्वा च राजा भवति भूतले।

वामनपुराणे,—

प्रासादनगरादीनि गृहं प्राकारकान्वितम्।
यद्यदिष्टतमं किञ्चिद् यच्चाप्यस्ति गृहे शुचि ॥
तत्तद्धि देयं प्रीत्यर्थं देवदेवाय चक्रिणे ॥

---

(१) E. विष्णोः शङ्खप्रदानेन ।

विष्णुधर्म्मे मान्धातारं प्रति वशिष्ठवाक्यम्,—

समस्तर्द्धिमिमां लब्ध्वा सर्व्वलोकेश्वरेश्वरम् ।
पूजयाच्युतमीशेशं तमाराध्य न सीदति ॥
पुष्पैः फलै र्धूपदीपैस्तथा वस्त्रानुलेपनैः ।
आराधयाच्युतं भक्त्या वेश्मसम्मार्ज्जनादिना ॥
यद्यदिष्टतमं किञ्चिद् यद् यदत्यन्तदुर्लभम् ।
तत्तद् दत्वा जगद्धात्रे वैकुण्ठाय न सीदति ॥
सुगन्धागुरुकर्पूरचन्दनक्षोदकुङ्कुमैः ।
वासोभि र्विविधै र्धूपैः पुष्पस्रक्चामरै र्ध्वजैः ॥
अन्नोपहारै र्विविधै र्घृतक्षीराभिषेचनैः ।
गीतवादित्रनृत्याद्यै स्तोषयित्वाच्युतं नृप ॥
पुष्करादिषु गोविन्दं नृत्यगीतरवोज्वलैः ।
भूप जागरणै र्भक्त्या तोषयाच्युतमव्ययम् ॥

स्कान्दे,—

सनीरं कर्पूरोपेतं कुम्भं कृत्वाऽग्रतोन्यसेत् ।
कल्पान्तं न जलाकाङ्क्षां कुर्व्वन्ति पितरस्तथा ॥
यः कुर्य्यात् कृष्णभवनं कदलीस्तम्भभूषितम् ।
कुरुते चामरैर्युक्तः स्वागतं तस्य देवराट् ॥
कृष्णालयं प्रकुरुते पताकैरुपशोभितम् ।
स दशै सूर्य्यलोके तु रमेद् यावच्च मेदिनी ॥
ध्वजमारोपयेद् यस्तु प्रासादोपरि भक्तितः ।
तस्य ब्रह्मपदे वासः क्रीड़ते ब्रह्मणा सह ॥

[1]भूप चन्दनमालाञ्च कुरुते कृष्णसद्मनि।
देवकन्यायुतैर्लक्षैः सेव्यते सुरनायकः॥

चन्दनमाला पत्रपुष्पकृतमाला।

प्राङ्गणं वर्णकोपेतं स्वस्तिकैश्च समन्वितम्।
देवदेवस्य कुरुते क्रीड़ते भुवनत्रये॥
प्रासादे देवदेवस्य चित्रकर्म्म करोति यः।
वसते रुद्रलोके तु यावत्तिष्ठन्ति भूधराः॥
दद्याचन्द्रातपं यस्तु कृष्णोपरि नरेश्वर।
वसते सोमलोके तु यावत्तिष्ठति द्वारका॥
दद्यान्नवं विमानन्तु विष्णवे नरनायक।
सत्कृतो धनदेनैव वसते ब्रह्मवासरम्॥

आदित्यपुराणे,—

लेपनाच्छादनञ्चैव यः करोति पुनर्नवम्।
देवस्यायतने तस्य न भवेत् कीटजं भयम्॥

देवगृहाधिकारे यमः,—

विधाय विविधं चित्रं तल्लोकं विन्दति ध्रुवम्।

विष्णुः,—यस्य देवस्यायतनं करोति तस्यैव लोकमाप्नोति सुधासितं कृत्वा यशसा विराजते।

---

(१) E. धूपं चन्दन·

## अथ महास्नानम्।

महास्नानेन गोविन्दं सम्यक् संस्नाप्य मानवः।
सर्व्वान् कामानवाप्नोति नात्र कार्य्या विचारणा॥
उत्तमं स्नपनं कार्य्यं सर्व्वदोषोपशान्तये।

तद्विधिः,—

अस्त्रेण रक्षयेद् दुग्धं कवचेनावगुण्ठयेत्।
अमृतीकरणं कृत्वा वासुदेवेन मन्त्रयेत्॥
अभिषेकञ्च मूलेन गडुकानां ततो भवेत्।
अर्घ्यादिधूपपर्य्यन्तं ततो विष्णुं समर्चयेत्॥

एवं दध्यादितिमन्त्रे विशेषः। दधि सङ्कर्षणेन। घृतं प्रद्युम्नेन। मधु अनिरुद्धेन। खण्डं नारायणेन। ॐ नमो भगवते वासुदेवाय। श्रां नमो भगवते सङ्कर्षणाय श्रां नमः। श्रां नमो भगवते प्रद्युम्नाय श्रां नमः। ॐ नमो भगवते अनिरुद्धाय ॐ नमः। ॐ ॐ नमो भगवते नारायणाय ॐ ॐ नमः। तथा,—

सर्पिःपलसहस्राणां गोविन्दस्य शिवस्य वा।
महास्नानं नरः कृत्वा सर्व्वपापैः प्रमुच्यते॥

ब्रह्मकालोत्तरे,—

पयोदधिघृतानाञ्च सहस्राष्टोत्तरद्वयैः।
महास्नानं पलानाञ्च [1]तिलानामपि तत्समम्॥

तथा,—महास्नाने प्रसक्ते तु स्नानमष्टविधं स्मृतम्॥

---

(१) E. जलानामपि ।

स्वच्छं हैमं सुगन्धञ्च सरत्नफलपुष्पकम् ॥
सर्व्वौषधिजलञ्चान्यत् स्नापयेत् क्रमशः शुचिः।

अन्यदिति जलान्तरमष्टविधत्वाय।

अत्र यद्यपि,—

पलानां द्वे सहस्रे तु महास्नाने प्रकीर्त्तिते।

इति पञ्चद्रव्येण मिलित्वा सहस्रद्वयमिति प्रतीयते तथापि "सहस्राष्टोत्तरद्वये"रिति बहुवचनात् "[1]तिलानामिति तत्सम"मिति [2]तिलाष्टकेऽपि सहस्रद्वयविधानाच्च प्रत्येकं सहस्रद्वयम्। केवल-दुग्धादिमहास्नाने सहस्रद्वयमेव। तत्राप्यष्टद्रव्यस्नानमङ्गत्वादेतदङ्ग-भूतनारिकेलोदकादिस्नानं शतपलेन। हेमाद्युदकानि तत्तद्द्रव्य-योगेन। मुरामांस्यादि सर्व्वौषधिगणः। गन्धोदके सर्व्वगन्ध इत्याहुः। चन्दनह्रीवेरागुरुकुष्ठकुङ्कुमोशीरजटामांसीमुरा इति।

---

## महास्नानप्रयोगः।

सार्व्वभौमत्वकामः परमैश्वर्य्यकामो ग्रहशान्तिकामो महारोगोपशमनकाम [3]उपद्रवनिवृत्तिकामो वा विष्णुमूर्त्तौ महास्नानमहं करिष्य इति स्वस्ति वाच्य संकल्प्य वैकल्पिका-च्छिद्रावधारणं ज्ञात्वाचार्य्यं वृणुयात्।

---

(१) E. तिलाना०

(२) E. तिलाष्ट०

(३) E. राजाग्निचौरदुर्भिक्षाद्यन्यतमोपद्रवनिवृत्तिकामो वा।

अथाचार्य्यो द्वारपालपूजां कृत्वा देवगृहे प्रविश्य पञ्चोपचारेण देवं सम्पूज्य प्राणानायम्य देव त्वां स्नानमण्डपं नयामीति विज्ञाप्य तूर्य्यघोषपूर्व्वकं देवं स्नानमण्डपं नीत्वा तत्र धूपामोदं वितानसम्पन्नं फलपल्लवपुष्पयुतकुम्भचतुष्कस्थापनञ्च कृत्वा गीत नृत्ये कृत्वा दीपत्रयमुच्छ्रित्य देवदक्षिणे अष्टाधिकशतपल-तैलपात्रे रक्तवस्त्रं प्रज्वाल्य वामे साष्टशतपलघृतपात्रे शुक्लवस्त्रञ्च प्रज्वाल्य परितोऽष्टाधिकशतदीपानभितः प्रज्वाल्य स्नानीय-द्रव्याणि सन्निधाप्य स्वासने उपविश्य भावनाचतुष्टयान्तं समस्त-न्यासं कृत्वा स्नपनीयमूर्त्तिं ध्यात्वा सामान्यार्घ्यं संस्कृत्य स्नानो-पयोगि सर्व्वं प्रोक्ष्य पञ्चोपचारैर्देवं सम्पूज्य

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्त्वा कुशोदकम् ॥

इति पञ्चगव्यं स्त्हीत्वा प्रणवेनैकीकृत्य मूलेनाभिमन्त्र्य तेनैव हृदा वा स्नपनम् । अन्तरा शुद्धोदकपलशतेन स्नपनम् । सर्व्वत्रान्त-रास्नानं पलशतेन । मूलेन कुशोदकमभिमन्त्र्य हृदा स्नपयित्वा अन्तरा स्नानं कृत्वा पञ्चोपचारैः सम्पूज्य मूलाभिमन्त्रितघृतपञ्च-विंशतिपलेन मूलेनाभ्यज्य अन्तरा संस्नाप्य मूलाभिमन्त्रितशालि-पलशतेन मूलेनोद्वर्त्त्यान्तरा स्नानं कृत्वाऽस्त्रेण राजिकाभिः सिद्धार्थैश्च निर्मथ्य मूलाभिमन्त्रितपञ्चविंशतिपलशुद्धामलकेनानुलिप्यान्तरा संस्नाप्य यवचूर्णेन विरूक्ष्यान्तरा संस्नाप्यार्घ्यादिधूपान्तैः संपूज्य शालिपिष्टमयसप्तवर्त्तिकदीपेन नीराज्योदकैः संस्नाप्य विशेषार्घ्यं

संस्कृत्य चष्टोत्तरसहस्रद्वयपलपरिमितक्षीरं संस्कुर्य्यात् । क्षीरमर्घ्याम्बुना प्रोक्ष्य गन्धपुष्पाभ्यामभ्यर्च्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य धेनुमुद्रयामृतीकृत्य ॐ नमो भगवते वासुदेवाय ॐ नम इत्यभिमन्त्र्य सुवर्णादिपात्रे कृत्वा देवं स्नानोत्सुकं विचिन्त्य मूलमन्त्रमुच्चार्य्य श्रीकृष्णं स्नपयामीति स्नपयेत् । कर्षाधिकषट्पलमितहेमादिनिर्म्मितजलपलचतुष्टयग्राहिगडुकेनाष्टोत्तरशतवारं मूलेन स्नपनम् । धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलदधिसंस्कारः । दधि प्रोक्षणादिभिः संस्कृत्य ॐ नमो भगवते सङ्कर्षणाय ॐ नम इत्यभिमन्त्र्य पूर्व्ववद्दध्ना स्नानं मूलेन । गडुकस्नपनं पूर्व्ववत् । धूपान्तपूजा । [2][ चष्टोत्तरसहस्रद्वयपलमिताज्यं प्रोक्षणीभिः संस्कृत्य नमो भगवते प्रद्युम्नाय नम इत्यभिमन्त्र्य मूलेन स्नपनम् ।] चष्टोत्तरसहस्रद्वयपलमितखण्डमिक्षुरसं वा प्रोक्षणादिभिः संस्कृत्य ॐ नमो भगवते नारायणाय ॐ नम इत्यभिमन्त्र्य मूलेन स्नपनम् । गडुकस्नानं धूपान्तपूजा पूर्व्ववत् । इति प्रधानस्नानम् ।

ततोऽष्टोत्तरशतपलमितनारिकेलोदकं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपनम् । अन्तरा शुद्धोदकस्नपनम् । पञ्चविंशतिपलमितयवगोधूमचूर्णाभ्यां विरूक्ष्य शुद्धोदकेन संस्नाप्य पञ्चविंशतिपलमितामलकेनानुलिप्योष्णोदकशीतोदकाभ्यां संस्नाप्य पञ्चविंशतिपलमितविल्वपत्रेण संघृष्य शुद्धोदकेन स्नपयित्वा पञ्च-

---

(१) E. शतद्वय ०

(२) D. Omits the portion bracketed.

विंशतिपलमितचन्दनेनानुलिप्य शुद्धोदकेन संस्नाप्य धूपान्तैः सम्पूज्याष्टोत्तरशतपलमितेक्षुरसं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपयित्वा शुद्धोदकेन स्नपयेत्।

---

## अथाष्टविधजलस्नानम्।

धूपान्तैः सम्पूज्याष्टाधिकसहस्रद्वयपलमितस्वच्छजलं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव स्नपयित्वा शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टाधिकसहस्रद्वयपलमितहिरण्योदकं संस्कृत्य मूलेनाभिमन्त्र्य तेन संस्नाप्य शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितसुगन्धोदकं संस्कृत्य मूलेनाभिमन्त्र्य तेन संस्नाप्य शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितरत्नोदकं संस्कृत्य मूलेनाभिमन्त्र्य तेनैव संस्नाप्य शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितजातिफलोदकं संस्कृत्याभिमन्त्र्य संस्नाप्य शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलपरिमितपद्मजातिमल्लिकापुष्पोदकं संस्कृत्य तेनाभिमन्त्र्य स्नपयित्वा शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितसर्व्वौषधिजलं संस्कृत्य मूलेनाभिमन्त्र्य तेन संस्नाप्य शुद्धोदकेन स्नपयेत्।

धूपान्तैः सम्पूज्याष्टोत्तरसहस्रद्वयपलमितशुद्धोदकं संस्कृत्याभिमन्त्र्य तेन संस्नाप्य तोयेन स्नपयेत्।

इत्यष्टविधस्नानम्।

अथ सुवर्णाद्यन्यतमकलशे वस्त्रपूतमष्टोत्तरशतपलपरिमितं जलं जलदेवतैर्मन्त्रैः पूरयित्वा कुशापामार्गकर्पूरजातीचम्पकपाटलासितकरवीरमल्लिकाकमलोत्पलचन्दनागुरुकुङ्कुमादिकं प्रक्षिप्यानुष्टुप् नारसिंहमन्त्रराजं विन्यस्य मूलेनाभिमन्त्र्य तेन स्नपयेत्। पुरुषसूक्तेन तीर्थोदकेन स्नपयेत्। [1][प्रणवेन शुद्धोदकेन स्नपयेत्।] सुसूक्ष्मवस्त्रेणाङ्गप्रोञ्छनम्। कर्पूरादियुक्तचन्दनानुलेपनम्। वस्त्रद्वयपरिधानम्। स्वर्णपद्मदानम्। सूक्ष्मसुगन्धिपुष्पमालादानञ्च कृत्वा पुष्पाञ्जलिं दत्त्वा विलोमार्घ्यजपस्तुतिप्रणामफलसमर्पणोद्वासनानि कृत्वाऽच्छिद्रावधारणं कृत्वा पूजागारे देवं स्थापयेत्।

ततो महास्नानाङ्गत्वेन महापूजा।

पञ्चविंशतिपलमितेन गन्धेनानुलेपनं धूपो दीपश्च इति महापरिमाणः। नीलोत्पलबिल्वपत्रपद्मचम्पकादिनानाविधपुष्पाणि नेत्रपटादिदिव्यवस्त्रम्। भक्ष्यभोज्यपेयादिनानाविधनैवेद्यम्। दशद्रोणमितमन्नं सप्तद्रोणमितं वा। असम्भवे आढकमितम्। दर्पणच्छत्रचामरादिनानाविधराजोपचाराः। इत्येवं पूजासमाप्तावाचार्य्यदक्षिणा।

इति बृहत्कालोत्तरोक्तविष्णुमहास्नानविधिः।]

(1) D. Omits the portion bracketed.

## अथ वैष्णवदीक्षा [1]वराहपुराणोक्ता ।

[2][तथाच वराहे ]

दीक्षितात्मा [3]गुरो भूत्वा वाराहं शृणुयाद् यदि ।
तेन [4]वेदाः पुराणानि सर्व्वे मन्त्राः ससंग्रहाः ॥
जप्ताः स्युः पुष्करे तीर्थे प्रयागे सिन्धुसागरे ।
देवह्रुते कुरुक्षेत्रे वाराणस्यां विशेषतः ॥
ग्रहणे विषुवे चैव यत् फलं जपतां भवेत् ।
तत्फलं द्विगुणं तस्य दीक्षितो यः [5]शृणोति च ॥
देवा अपि तपः कृत्वा ध्यायन्ति च वदन्ति च ।
कदा नो भारते वर्षे जन्म स्याद् भूतधारिणि ॥
दीक्षिताश्च भविष्यामो वराहं शृणुमः कदा ।
वाराहं षोड़शात्मानं त्यक्त्वा देहं [6]कदा पुनः ॥
यास्यामः परमं स्थानं यद्गत्वा न पुनर्भवेत् ।

वाराहं षोड़शात्मानं षोड़शाक्षरवराहमन्त्रः ॥

तथा,—एवं योऽर्च्चति तत्वेन [7]यश्च पश्यति मण्डलम् ।

---

(१) Y. वराहपुराणे ।
(२) Y. Omits the portion bracketed.
(३) Y. गुरोर्भूत्वा ।
(४) Y. वेदपुराणानि॰
(५) D. ब्रह्णोति नः ।
(६) Y. पुनः कदा ।
(७) Y. ये च पश्यन्ति मण्डलम् ।

यथेमं शृणुयाद् देवि सर्व्वे मुक्ता इति श्रुतिः ॥

योऽर्चतीति दीक्षार्चनानुवादः। दीक्षितस्य वराहश्रवणाच्च मुक्तिः फलम्। वराहश्रवणस्य च दृष्टे सत्यदृष्टकल्पनानुपपत्तेः। वराहोक्तवैष्णवधर्म्मानुष्ठानद्वारेण वराहश्रवणं मुक्त्यर्थम्। तेन दीक्षितस्य वराहोक्तवैष्णवधर्म्मानुष्ठानाधिकारः। अतएव द्वात्रिंशदपराधे "अस्माकं यः प्रपद्यते" "शुद्धो भागवतः शुचिः।"

"प्रयाहीतेन वस्त्रेण मम कर्म्माणि कारयेत्।"

[1]पूजायाञ्च तत्र "मम भक्तेन नित्यशः" इत्यादि कीर्त्तनम्। दीक्षारहितानां वराहोक्तवैष्णवधर्म्मानुष्ठानेन यथोक्तं फलम्। किन्तु [2]स्मृत्यन्तरोक्तधर्म्मसमानमेव फलम्। यद्यपि दीक्षा मुक्तिफला तथापि वैष्णवाधिकारसम्पादनमपि संयोगपृथक्त्वात्। तद्यथा उपनयनादिसंस्कारस्याष्टाचत्वारिंशत्संस्कारमध्ये पठितस्य "ब्रह्मभूयाय कल्पते" इति ब्रह्मभावरूपमोक्षफलकत्वेऽपि वैदिककर्म्माधिकारसम्पादकत्वम्।

## दीक्षाक्रमः।

शुद्धकाले कार्त्तिकशुक्लद्वादश्यां मासान्तरीयद्वादश्यां संक्रान्तिग्रहणयोर्वा दीक्षा कार्य्या। संवत्सरं गुरुमुपासीनाः शौचाचारविष्णुभक्तियुक्ततया गुरुणा परीक्षिता ब्रह्मक्षत्रविशोऽधिकारिणः। संवत्सरान्ते कार्त्तिकशुक्ल[[3]दशम्यां मासान्तरीयशुक्ल]दशम्यां वा

(१) Y. शुचिर्भागवतो भूत्वा पूजायाञ्च तत्र •

(२) Y. स्मृत्युक्तधर्म्मै •

(३) Y. Omits the portion bracketed.

संक्रान्तिग्रहणपुण्यकालात् पूर्व्वं तृतीयदिने वा प्रातः शिष्यः शिष्यबहवो वा प्रातर्नित्यकृत्यानन्तरं गणपत्यादिपूजास्वस्तिवाचनपूर्व्वकं मम मोक्षप्राप्तये ऐहिकपुत्रधनादिसमृद्धिपूर्व्वकमोक्षप्राप्तये वा गुरुद्वारा दीक्षाभिषेककर्म्म कुर्व्वीयेति संकल्प्य गुरुं प्रार्थयेयुः,—

भगवंस्त्वत्प्रसादेन संसारार्णवतारण।
इच्छामस्त्वैहिकीं भक्तिं विशेषेण तपोधन॥

इति सम्प्रार्थ्य वस्त्रकाञ्चनादिभिः सम्पूज्य दीक्षाकर्म्मणि गुरुर्भवेति वृणीयुः। तद्दिने द्वयोरेकभक्तम्। सायं सन्ध्यानन्तरं मूलमन्त्रेणाभिमन्त्र्य गुरुणा दत्तेन दन्तकाष्ठेन शिष्यस्य दन्तधावनम्। रात्रौ हरिं स्मृत्वा देवगृहे शयनम्। स्वप्नपरीक्षा। प्रातः स्वप्नस्य गुरवे निवेदनम्। अशुभस्वप्ने मूलमन्त्रस्य शतं सहस्रं वा गुरोर्जपः। एकादश्यां गुरुशिष्ययोरुपवासः। संक्रान्तिग्रहणपक्षे [1]पूर्व्वदिने उपवासः। द्वादश्यां संक्रान्तौ पुण्यकाले ग्रहोपरागसमये वा स्नात्वा गुरोर्देवालये प्रवेशः उपलिप्तभूमौ बद्धविताने पुष्पमालादिभिरलङ्कृते षोड़शारचक्रनवनाभिनवमण्डलाष्टदल[2]पद्मानामन्यतमस्य लिखनम्। तत्र प्रागाद्यष्टदिक्षु मध्ये च नवकलशस्थापनम्। कलशाः पञ्चरत्नपञ्चपल्लववस्त्रयुगगन्धमाल्यदध्यक्षतसप्तमृत्तिकातीर्थोदकयुक्तास्तण्डुलफलयुक्तसरावापिहितमुखाः। शुक्लवस्त्रबद्धनेत्राणां शिष्याणां गुरोरनुज्ञया प्रवेशः। पूर्व्वाद्यष्ट-

(१) Y. तत्पूर्व्वदिने०

(२) Y. पद्मनवनाभान्यतमस्य लिखनम्।

कलशेषु स्वस्ववैदिकमन्त्रेण वा शक्रादिलोकपालपूजा। मध्ये मूलमन्त्रेण विष्णोरभीष्टमूर्त्तिपूजा। मध्यकुम्भपूर्व्वादिषु बलप्रद्युम्नानिरुद्धवासुदेवानां क्रमेण पूजनम्। ईशाने शङ्खस्य आग्नेये चक्रस्य याम्ये गदाया वायव्यां पद्मस्य नैर्ऋत्यां मुषलस्य दक्षिणे गरुड़स्य वामे लक्ष्म्या देवस्याग्रतो [1]धनुःश्रीवत्सकौस्तुभानां पूजनम्। विष्णुपूजावरणपूजाकाले पूजनं वाऽमीषाम्। ततो गुरुप्रेरितानां शिष्याणां पूजामण्डलदर्शनम्। पुष्पाञ्जलिदानपूर्व्वकं प्रणामः। मण्डलोत्तरे शिष्यस्य शिष्याणां वा क्रमेणोपवेशनम्।

---

## अथाभिषेकः।

प्रथमं वैष्णवकुम्भेन तत इन्द्रादिकुम्भैः। एकस्य नवभिः स्नपनं कृत्वा [2]तैरेवान्यस्य। वर्णक्रमेण [3]अभिषिकमन्त्रानुक्तौ मूलमन्त्रः। अत्र गुणफलानि,—वैष्णवकुम्भस्नाने मोक्षः। ऐन्द्रघटे श्रीः। आग्नेये जयः। याम्ये अपमृत्युजयः। नैर्ऋत्ये दुष्टध्वंसः। वारुणे शान्तिः। वायव्ये पापक्षयः। कौवेरे द्रव्यम्। ऐशाने ज्ञानम्। सर्व्वकुम्भस्नानस्य संयोगपृथक्त्वेन विष्णुसायुज्यं इह राज्यं वा गुणफलम्। परिहितशुक्लवस्त्रयुगवद्धनेत्रं मण्डल-

---

(१) Y. धेन्वाः श्रीवत्सस्य कौस्तुभस्य च पूजनम्।

(२) Y. तैरेवान्येषाम्।

(३) Y. अभिषेकमन्त्रान्तरानुक्तौ मूलमन्त्रः।

दक्षिणेन प्रवेश्य तद्देहस्थभूतानि रमित्यग्निबीजोत्थेनाग्निना दग्धानि यमिति वायुबीजोत्थवायूद्भूतानि वमिति सोमबीजोत्थ-जलाप्यायितानि विचिन्त्य प्रणतं प्रह्वीभूतं समयान् श्रावयेत्। ब्राह्मणवेदविष्णुब्रह्मरुद्रादित्याग्निलोकपालग्रहगुरुवैष्णवपूर्व्वदीक्षि-तानां मानना कार्य्या कदापि निन्दा न कार्य्येति। मण्डले भगवन्तं ॐनमो भगवते विष्णवे सर्व्वरूपिणे हमिति षोड़शाक्षर-मन्त्रेण पूजयेत्। अस्य पृथिवी ऋषिरनुष्टुप् छन्दो वराहो विष्णुर्देवता। स्थण्डिलेऽग्निमुपसमाधायाज्यभागान्तं कृत्वा शिष्य-देहे मं नमः पराय [1]जीवात्मने नम इत्यादिरूपद्वात्रिंशत्तत्त्वन्यासं कृत्वा मं नमः पराय जीवतत्त्वात्मने [2]स्वाहा इत्यादि द्वात्रिंशन्मन्त्रै-र्जुहुयात्। ततः स्वाहान्तषोड़शाक्षरमन्त्रेण सहस्रं शतं वा हुत्वा तेनैव मन्त्रेण शिष्यस्य गर्भाधानादिविवाहान्तकर्म्मनिमित्तं प्रत्येकं तिस्रस्तिस्र आहुतीर्हुत्वा होमशेषं पूर्णाहुत्यन्तं समाप्य पापनिराकरणबुद्धा शिष्यस्य नेत्रबन्धमपनीय ज्ञानरूपहस्तशला-कया नेत्रमुन्मील्य पुष्पाञ्जलिं ग्राहयित्वा

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥

इति दत्तपुष्पाञ्जलिं भद्रपीठे उपवेश्य तदन्तिके स्वयमुपविशेत्। शिष्यस्याभ्युदीतमन्त्रत्वे तत्रैव मन्त्रदानं समाचरेत्। तच्चैवम्,—

---

(१) Y. जीवतत्त्वात्मने नमः इत्यादि रूपेण द्वात्रिंशत्॰

(२) Y. स्वाहेति द्वात्रिंशन्मन्त्रैर्जुहुयात्।

गुरुः सुषुम्नान्तर्गतां [1]चित्शक्तिं स्वनासाद्वारानिर्गतां शिष्यनासाद्वारा शिष्यसुषुम्नागतां विचिन्त्य स्वहृदयाच्च मन्त्रवर्णमालारूपेण चिन्मयस्फुलिङ्गमालां शिष्यमुखे प्रविष्टां विचिन्त्य कर्णे [2]त्रिर्मन्त्रं श्रावयेत्। पश्चादर्घ्योदकमादाय इदममुकार्षममुकच्छन्दममुकदेवतं मन्त्रममुकशिष्याय तुभ्यं ददे अयमावयोः समानफलदोऽस्त्विति हस्ते जलं दद्यात्। शिष्यगुरुदेवतामन्त्राणामैक्यं ध्यात्वा अष्टकृत्वः शतकृत्वो वा जपेत्। [3]ब्रह्मदक्षिणा गुरुणा होमान्ते दीयते [4]गुरवे हस्त्यश्वरथहेमकटकग्रामादिकमुत्तमदक्षिणा। मध्यमदक्षिणा तदर्द्धं गोमिथुनं हिरण्यं कन्याः सदक्षिणा वा दत्वा यावज्जीवं विष्णुं पूजयिष्यामीति संकल्प्य गुरूक्तदिशा सम्पूज्य पूजितदेवतानामग्नेश्च गुरुणोद्वासने कृते ब्राह्मणान् भोजयित्वा यागोपकरणं गुरवे दत्वा पुनः पुनः गुरुं प्रणम्याच्छिद्रमवधार्य्य यावज्जीवं सभार्य्यापत्यबान्धवो विष्णुकशरणस्तिष्ठेत्। इदञ्च पुत्रकामेन श्रीकामेन व्याधिनाशकामेनापि कर्त्तव्यम्।

इति वराहपुराणीयवैष्णवदीक्षा।

---

(१) Y. काश्चित् शक्तिम्।

(२) Y. त्रिर्मितं श्रावयेत्।

(३) Y. जयदक्षिणा।

(४) Y. Reads भगवन्नामपूर्व्वकस्वनामाद्यक्षरयुक्तनामकरणं श्रीकृष्णदासोऽस्मीति। गुरवे ०

शिष्टाः पठन्ति,—

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः ।
एते वै पञ्च संस्कारा यस्याऽसौ वैष्णवो भवेत् ॥

तापस्तप्तमुद्राधारणम् । पुण्ड्रं तिलकम् । नाम दीक्षाकालीनम् । यागोदीक्षा ।

तप्तमुद्राविधिश्चैवं [1]नवप्रश्नपञ्चरात्रे,—

सौवर्णं राजतं ताम्रं कांस्यमायसमेव च ।
चक्रं कृत्वा तु मेधावी [2]धारयेत्तु विचक्षणः ॥

चक्रमायुधम् । ब्रह्माण्डे,—

आयुधैर्वैष्णवैः शैवैस्तापितैः स्वतनुं यदि ।
चिह्नयेद् वैष्णवो यस्तु स याति परमां गतिम् ॥

वाराहे,—

शङ्खचक्राङ्कितं कुर्य्यादात्मानं बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु च सम्पदि ॥
म्लेच्छदेशेऽशुभे वापि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥

तत्र शङ्खचक्रगदापद्मखड्गशार्ङ्गशरान् स्वर्णाद्यन्यतमधातुना निर्म्माय स्वनाममन्त्रेण प्रतिष्ठां कृत्वा पूजयित्वाऽग्निमुपसमाधाया-भ्यर्च्याज्यभागान्तं हुत्वा "इदं विष्णुः, विष्णोरराटं, [3]अतो देवा अवन्तु

(१) Y. ततः प्रश्नपञ्चरात्रे ।
(२) Y. धारयेच्च विचक्षणः ।
(३) D. अतोदेवा अवन्तु नः ।

नः, नारायणाय विद्महे," इत्येतैरुक्त्वा उदीच्याङ्गं समाप्याग्नौ शङ्ख-चक्रादीनि निक्षिपेत्। स्वस्ति वाच्य तप्तं चक्रमादाय "सुदर्शन महाज्वाल"इत्यादिपूर्व्वोक्तमन्त्रेण दक्षिणबाहौ चिह्नयेत्। "पाञ्च-जन्य निजध्वान"इत्यादिमन्त्रेण [1]वामबाहुं शङ्खेन चिह्नयेत्। "संसारभयभीतानां" इत्यादिमन्त्रेण यत्र क्कापि पद्मेन अङ्कयेत् "ब्रह्माण्ड भुवनारम्भ"इत्यादि गदामन्त्रेण ललाटे गदां चिह्नयेत्।

शार्ङ्गधारणसंयुक्त [2]ज्वालार्कसदृशप्रभ।
संसारभयमध्यस्थं रक्ष मां त्वां नमाम्यहम्॥

इति शिरसि शार्ङ्गचिह्नम्। नन्दकाय नम इति हृदये खड्गचिह्नम्। धारणान्तरमेवं ब्रूयात्

पुत्रमित्रकलत्रादि यः कश्चिन्मत्परिग्रहः।
सह देहेन सर्व्वोऽसौ विष्णुप्रीत्यै मयाऽर्पितः॥
पश्चात्तु धर्म्ममाख्याय तिष्ठेदाजीवनं बुधः।
नान्यदेवं नमस्कुर्य्याद् वैष्णवो न च पूजयेत्॥
नान्यप्रसादं गृह्णीयात् नान्यनाम प्रकीर्त्तयेत्।

फलञ्च—

कुलकोटिं समुद्धृत्य विष्णुलोके महीयते।

तत्त्वसारसंहितायाम्—

अधुना तव वक्ष्यामि वैष्णवं कल्पमुत्तमम्।
देहे पुण्ड्रं सदा कुर्य्याच्चतुर्द्दश विधानतः॥

(१) Y. वामबाहौ।
(२) D. भूलोकसदृशप्रभ।

शिरोललाटयोस्तद्वद् बाह्वोश्च हृदये तथा।
दक्षवक्षस्थले ग्रीवामूले तद्दक्षवामयोः॥
कुक्षिपक्षद्वये नाभौ ग्रीवाजठरवामतः।
चन्दनेनाथवा कार्य्यं तीर्थजालमृदापिवा॥
तुलसीजटया 'वापि कार्य्यं सर्व्वंसुरेश्वर।
लिखेद् देहे तु राजेन्द्र मूलमन्त्राभिमन्त्रितम्॥

अङ्गुष्ठेन पुष्टेत्र भुक्त्यैत्वनामिकया मध्यमया वस्त्रार्थी न कदाचित् तर्जनीकनिष्ठाभ्याम्।

तद्भक्तसङ्गसेवी स्यात्सदा कृष्णपरायणः।
अर्चयेद्धरिमुद्दिश्य चतुर्भुजमहर्निशम्॥
विष्णूपयुक्तवस्तूनि दापयित्वोपजीवयेत्।
वैष्णवी या तिथिः शक्र सोपोष्या सर्व्वदैव हि॥
प्राप्नोति महतीं भक्तिं विष्णुमेवाधिगच्छति।

विष्णुधर्म्मे प्रह्लादवाक्यम् —

किंलक्षणा भागवता भवन्ति पुरुषा गुरो।
यच्च भागवतैः कार्य्यं तन्मे कथय भार्गव॥

शुक्र उवाच,—

कर्म्मणा मनसा वाचा प्राणिनां यो न हिंसकः।
भावभक्तश्च गोविन्दे दैत्य भागवतो हि सः॥

भावभक्तास्तद्विषये प्रेमवान्।

यो ब्राह्मणांश्च देवांश्च नित्यमेव न निन्दति।
न च द्रोग्धा परस्वानां देत्य भागवतो हि सः॥
सर्व्वान् देवान् हरिं वेत्ति सर्व्वलोकांश्च केशवम्।
तेभ्यश्च नान्यमात्मानं देत्य भागवतो हि सः॥

तथा,—यः कारयति देवार्चां हृदयालम्बनां हरेः।
पुष्पाणि च सुगन्धीनि मनोज्ञानि च यः पुमान्।
प्रयच्छति हृषीकेशे स भागवत उत्तमः॥

महाभारते,—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥
उदाराः सर्व्व एवैते ज्ञानीत्वात्मैव मे मतम्।

तथा,—मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्द्धं न संशयः॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव।

तथा,—यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभपरित्यागी [1]भक्तिमान् यः स मे प्रियः॥

(१) D. भक्तिमान् स प्रियो नरः।

[1]स्कान्दे चन्द्रशर्म्मवाक्यम्,—

कविना मोहितेनापि न कृतं तव पूजनम् ।
मया पापेन देवेश शिवभक्तिसमादरात् ॥
तव भक्तिः कृता नैव न कृतं तव वासरम् ।
विफलं सुकृतं जातं यन्मया समुपार्जितम् ॥
मत्पूर्व्वजेषु कथितं सर्व्वमेतत् सुरेश्वर ।
तत्पुण्यं मा वृथा यातु प्रसादात् तव माधव ॥
दृष्टे तु तव वक्त्रे तु दुर्लभं भुवनत्रये ।
नैवास्ति देवकोऽप्यत्र पुराणेषु श्रुतं मया ॥
सापराधाश्च ये केचित् शिशुपालादयः स्मृताः ।
त्वत्करेणाहताः कोपात् मुक्तिं प्राप्ता महीभुजः ॥
अद्यप्रभृति कर्त्तव्यम् यन्मया कृष्ण तत् शृणु ।
एकादश्यां न भुञ्जीत कर्त्तव्यं जागरं सदा ॥
महाभक्त्या प्रकर्त्तव्यं प्रत्यहं पूजनं तव ।
पलार्द्धेनापि विद्धन्तु न कार्य्यं वासरं तव ॥
[2]त्वत्प्रियार्थं मया कार्य्या द्वादशी व्रतसंयुता ।
कार्य्या भक्तिर्भगवति प्राणैरपि धृतैः सदा ॥
नित्यं नामसहस्रञ्च पठनीयं तव प्रियम् ।
पूजा च तुलसीपत्रैर्मया कार्य्या सदैव हि ॥

---

(१) Y. स्कन्दपुराणे कृष्णाग्रे चन्द्रशर्म्मवाक्यम् ।
(२) Y. त्वत्प्रीत्यर्थं मया ॰

तुलसीकाष्ठसम्भूता माला धार्य्या मया[1] हरे।
नृत्यं गीतं च कर्त्तव्यं संप्राप्ते तव जागरे॥
तुलसीकाष्ठसम्भूतचन्दनेन विलेपनम्।
करिष्यामि तवाग्रे तु [2]गुणानामपि कीर्त्तनम्॥
द्वारकायां प्रकर्त्तव्यं प्रत्यहं गमनं मया।
त्वत्कथाश्रवणं कार्य्यं नित्यं पुस्तकवाचनम्॥
नित्यं पादोदकं मूर्द्धा मया धार्य्यं स्वभक्तितः।
नैवेद्यभक्षणञ्चापि करिष्यामि यतव्रतः॥
निर्म्माल्यं शिरसा धार्य्यं त्वदीयं सादरं मया।
त्वया यदवसृष्टन्तु भक्षणीयं सदा मया॥
तथा तथा प्रकर्त्तव्यं तव तुष्टिर्यथा भवेत्।
सत्यमेतन्मया कृष्ण तवाग्रे परिकीर्त्तितम्॥

पलार्द्धेन तिलार्द्धेन दशमीविद्धं एकादशीव्रतं न कार्य्यम्। नित्यं पुस्तकवाचनं नित्यं वैष्णवग्रन्थपर्य्यालोचनम्। त्वया यदवसृष्टमिति यद्भक्षणीयं तत् त्वदुपभुक्तमिति बुद्धा भक्षणीयम्। तथा तथा प्रकर्त्तव्यमित्यन्यदपि भगवत्प्रीतिहेतु कर्म्मान्तरमित्यर्थः।

नारदीयपञ्चरात्रे,—

समयांश्च प्रवक्ष्यामि संक्षेपं पाञ्चरात्रिणाम्।
न भक्षयेन्मत्स्यमांसं कुर्य्यात् शूकरयोस्तथा॥
कांस्यपात्रे न भुञ्जीत न पद्मवटपत्रयोः।
देवागारे न निष्ठीवेत् क्षुतञ्चात्र विवर्ज्जयेत्॥

(१) E. सदा। (२) D. गुणानाञ्चापि कीर्त्तितम्।

सोपानत्कचरणस्तु न विशेत् तत्र कर्हिचित् ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
जागरं तत्र कुर्व्वीत विशेषात् पूजयेद्धरिम् ।

तथा,—

न शङ्खेन पिबेत् तोयं न निन्देद् ब्राह्मणं सदा ।

---

## अथ दुर्गासम्प्रदेयानि ।

भविष्ये,—

मयूरपत्रव्यजनं नानावर्णविचित्रितम् ।
भगवत्यै नरो दत्वा लभेद् बहु सुवर्णकम् ॥
तालवृन्तं महाबाहो [1]चित्रकर्म्मोपशोभितम् ।
भगवत्यै नरो दत्वा वैष्णवस्य फलं लभेत् ॥

वैष्णवस्य यज्ञस्य । रूप्यदण्डचामरदाने वायुलोकाप्तिः । ताम्रदण्डचामरदाने मातॄणां स्थानम् । सर्व्वसौवर्णदण्डचामरं दत्वा ब्रह्मलोके महीयते । मणिदण्डसुवर्णरौप्यविचित्रचामरं दत्वा दुर्गालोके महीयते । श्वेतपताकाढ्यं ध्वजं दत्वा [2]दुर्गालोके महीयते । दुर्गायतने ध्वजमालाकरणे महाध्वजाष्टककरणे वा कल्पशतं दुर्गालोके महीयते । धवलप्रवालमणिभूषितमणिदण्डमयच्छत्रदाने शिरसि धार्य्यमाणेन छत्रेण विमानस्थो दुर्गालोके

---

(१) Y. चित्रकर्म्मप्रशोभितम् ।
(२) Y. दुर्गालोकः ।

महीयते। दुर्गालये बहुघण्टादाने देवीलोकाप्तिः। भेरीमृदङ्ग-पटहवेणुवीणादिदाने देवीसालोक्यम्। दुर्गायै मृत्पात्रदानं ब्राह्मणसम्प्रदानकताम्रपात्रदानात् शतगुणफलम्। देव्यै ताम्र-पात्रदानं ब्राह्मणसम्प्रदानकस्वर्णपात्रदानात् शतगुणफलम्। दुर्गायै रजतदानं ब्राह्मणसम्प्रदानकनिष्ककोटिसुवर्णदानादधिकफलम्। पयस्विनीगोदानेऽश्वमेधफलम्। स्नानार्थगोदाने गोशतदानफलम्। श्वेतं वृषं दत्वा वृषरोमसंख्यककल्पसहस्रं रुद्रलोके मही-यते। [१][ दासीदासदाने राजसूयाश्वमेधफलम्। हस्तिदानाद् गजेन्द्रलोके क्रीड़नम्। छत्रध्वजकिङ्किणीघण्टाचामरभूषितं रथं दत्वा परमां गतिं याति। जलोपेतशस्यशालिमहीं दत्वा भूमिहस्तसंख्यककल्पसहस्रं दुर्गालोके महीयते। सुस-मृद्धकुटुम्बयुतग्रामं दत्वा शक्रलोके महीयते।] विपण्यायतनयुक्तनानाजनसमाकुलं पुरं दत्वा महर्लोके महीयते। सुसमृद्ध-नगरं परिखादेवायतनप्राकारवीथ्यापणनानाजनाकीर्णं दत्वा अश्वमेधफलं प्राप्य इन्द्रलोके महीयते। नानाफलपुष्पान्विताराम-दाने फलपत्रकुसुमसंख्यकवर्षसहस्रं दुर्गानुचरत्वम्। दुर्गायतने वापीकूपतड़ागदीर्घिकां कृत्वा कुलानां शतं तारयित्वा

चण्डिकापुरमासाद्य मोदते चण्डिकानुगः।

मृदुसूक्ष्मविचित्रवस्त्रदाने वस्त्रतन्तुसंख्यकवर्षसहस्रं मोदते चण्डि-कालये। सुवर्णतिलकदाने दुर्गासालोक्यम्। सौवर्णाक्षिद्वय-

---

(१) Y. Omits the portion bracketed.

दाने गोसहस्रदानफलं प्राप्य सूर्य्यलोके महीयते। नानाविधभक्ष्य-भोज्यमद्यमांससमन्वितमष्टम्यां नवम्यां वा सन्ध्याकाले महिषा-जनिपातनैर्बलिकरणे चण्डिकासालोक्यम्।

---

## अथ देवीधर्म्माः।

कालोत्तरे देवीभक्त्याचारप्रसङ्गे,—

कन्यास्त्रीदेवविप्राणां गुरूणाञ्च विशेषतः।
शास्त्राग्निसाधकादीनां निन्दां यत्नेन वर्ज्जयेत्॥
सुगन्धि पुष्पं शिरसि मुखं ताम्बूलसंयुतम्।
हस्ताभ्यां कङ्कणे धार्य्ये कुण्डले चाङ्गुलीयकौ॥
ग्रीवां ग्रैवेयकाद्याञ्च रक्तवस्त्राणि धारयेत्।
रमणञ्च दिवा वर्ज्यं तथा पर्व्वसु सर्व्वदा॥
प्रभातसमये भक्त्या भवानीं पूजयेत् सदा।
यावन्न पूजिता गौरी तावत् किञ्चिन्न भक्षयेत्॥
ताम्बूलवस्त्रगन्धादीन् पूजयित्वा तु धारयेत्।
कण्डनीं पेषणीं चुल्लीं मार्ज्जनीं देहलीं तथा॥
कन्यास्त्रीबालघण्टाश्च वस्त्रमग्निं द्विजं गुरुम्।
खदिरं कर्करीं रत्नं विष्णुपादेन संस्पृशेत्। (?)
वामहस्तेन पूजा तु वर्ज्जनीया शिखिध्वज॥

तैलमांसादिकं वत्स वर्ज्यं पर्व्वणि पर्व्वणि ।
अष्टम्याञ्च चतुर्द्दश्यां पौर्णमास्यां विशेषतः ॥
संक्रान्तौ ग्रहणे चैव षडशीतिमुखेषु च ।
विशेषपूजा कर्त्तव्या आचार्य्यं पूजयेत् सदा ॥
तृतीयाजागरः कार्य्यश्चतुर्थ्यां पूजनं तथा ।
देव्यै दत्तन्तु नैवेद्यं कुमारीषु प्रदापयेत् ॥
अदीक्षितानां पुरतः पूजनं परिवर्जयेत् ।
[[1]सितपुष्पाणि सिद्धार्था नीलदूर्व्वाङ्कुरास्तथा ॥
नित्यं शिरसि दातव्या देव्या मन्त्रेण मन्त्रिताः ।
आदर्शं धारयेन्नित्यं न चितिं न शवं स्पृशेत् ॥
न स्पृशेद्द भक्तिहीनान्तु कपिलां वाऽथ काञ्चन ।
कुष्ठिनं कुनखञ्चांश्च केकरं कुटिलाश्रयम् ॥
मद्यमांसामिषादीनि प्रयत्नात् परिवर्जयेत् । ]
खण्डखाद्यानि देयानि तथा भक्ष्याणि यत्नतः ॥
अपर्य्युषितपुष्पाणि दातव्यानि प्रयत्नतः ।
कर्पूरयुक्तमुदकं वस्त्रपूतं प्रदापयेत् ॥
[2]निर्द्दयत्वममर्य्यादामसत्यं साहसं तथा ।
दौत्यमाक्लीव (?) हास्यञ्च शयनं शून्यवेश्मसु ॥

---

(१) Y. Omits the portion bracketed.

(२) Y. निर्भयत्वममर्य्यादा ०

वापीकूपमहाहृच्चदेवतायतनेषु च।
शयनं रोदनञ्चैव भोजनञ्च विशेषतः॥
न रात्रौ पूजनं शस्तं भोजनञ्च विशेषतः।
प्राणिहिंसा न कर्त्तव्या परच्छिद्रं न दर्शयेत्॥
दीर्घसत्रन्तथा मुर्खसङ्गमं परिवर्जयेत्।
तपस्विषु सदा दानं शिवभक्तेषु नान्यथा॥
न पठेत् पशुशास्त्रन्तु भूतवादञ्च वर्जयेत्।
दया च सर्व्वदा कार्य्या भूतानामभयं तथा॥
इदं शौचविधानन्तु कथितन्ते समासतः।
नादीक्षितेषु दातव्यं नाभक्तेषु कथञ्चन॥

अत्र येषां द्रव्याणां समर्पणे अर्चयतिशब्देन विधानमर्चयति प्रायपाठे तत्र ददात्यर्थश्रवणेऽपि "विशये प्रायदर्शनात्" इति न्यायेन पूजात्वमेव निश्चितमिति। पुष्पानुलेपनावस्त्रेण प्रोक्ष्य नेत्रेण वीक्ष्य कवचेनावगुण्ठ्य अस्त्रेण तालत्रयेण संरक्ष्य स्पृष्ट्वा मूलमष्टधा जप्त्वा धेनुमुद्रया अमृतीकृत्य अनुलेपनेन गात्रलेपनम्। पुष्पस्य शिरसि दानम्। धूपस्य घ्राणे सन्निधापनम्। दीपस्य नेत्रे प्रदर्शनम्। नैवेद्ये जलप्रक्षेपः। प्राणादिमुद्रादर्शनम्। अलङ्कारस्य देहे यथास्थानं विन्यासः। वस्त्रस्य परिधापनं यज्ञोपवीतस्य देहे समर्पणमित्यादि यथायोग्यं कार्य्यम्। येषां तद्ददाति प्रायपाठस्तेषां तेनैव न्यायेन दानरूपत्वनिश्चयात् सम्प्रदानम्। देवं गन्धपुष्पाभ्यां सम्पूज्य देयद्रव्यञ्च सम्पूज्य दानवाक्येन दानम्।

[1]इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे प्रथमभागे नानाविधदेवकार्य्याणि । श्रीः ।

---

[2]अत्र प्रणवोपासकेन प्रातः प्रणवजपः कार्य्यः ।

प्रातः स्नातः शुचिर्भूत्वा कृतसन्ध्याजप स्ततः ।
यथोक्तन्यस्तमन्त्रः सत्रष्टोत्तरसहस्रकम् ॥
सप्राणायामकं कुर्य्यात् तदर्थैकाग्रमानसः ।
एवमेव तथा सायं नित्य एष विधिः स्मृतः ॥

नित्यजपेन सर्व्वपापक्षयः सर्व्वकामाप्तिश्च । प्राणायामश्च—

रेचकं दक्षिणेनोक्तं पूरणं वामतश्चरेत् ।
जपारम्भे विधिर्ज्ञेयो विपरीतस्तु संस्थितौ ॥

प्रणवमन्त्रस्य प्रजापति ऋषिः दैवी गायत्रीच्छन्दः परमात्मा

---

(१) Y. इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे नानाविधदुर्गाराधनकर्म्माणि । अथ नानादैवतभक्ष्याणि ।

शिवोऽभिषेकसन्तुष्टो भक्ष्यतुष्टो विनायकः ।
अलङ्कारप्रियो विष्णुः प्रीत्या देवः प्रसीदति ॥
ब्रह्माध्ययनसन्तुष्टः कर्म्मणा च शतक्रतुः ।
वैनतेयः सर्पवरै र्भास्करोऽर्घ्येण तुष्यति ॥
होमेन तु ग्रहः प्रीतो दानतुष्टा नवग्रहाः ।
मांसखण्डाद्यचदैतेयाः सुरामांसबलिप्रियाः ॥
धर्म्म आचारसन्तुष्टः पायसेन सुधाकरः ।
मन्मथः कुसुमैस्तुष्टो लक्ष्मीः पद्मार्चनप्रिया ॥
ध्यानेन सर्व्वदा सर्व्वे कालयोगेन सुन्निदाः ।

इति नित्याचारप्रदीपे प्रातःकालीनदेवताकार्य्याणि समाप्तानि ।

(२) Y. अतः प्रणवजपः कार्य्यः ।

देवता प्रणवजपे विनियोगः। ॐ भूः हृदयाय नमः। भुवः शिरसे स्वाहा। स्वः शिखायै वषट्। महः कवचाय हुम्। जनः नेत्राभ्यां वौषट्। तपः अस्त्राय फट्। इत्यङ्गन्यासः। प्रणवेन सर्व्वशरीरे व्यापकन्यासः। एवं करद्वये अङ्गुष्ठादिकनिष्ठान्तेषु करद्वये युगपन्न्यासः। अकारं प्रथमपर्व्वणि। उकारं द्वितीयपर्व्वणि। मकारं तृतीयपर्व्वणि। सर्व्वाङ्गुलिव्यापकं प्रणवं न्यसेत्। अकारं नाभौ। उकारं हृदि। मकारं मूर्द्ध्नि। सर्व्वाङ्गे प्रणवः। शरीरं प्रणवं ध्यात्वा तन्मध्ये परमात्मानं विचिन्त्य ब्रह्मकवचेन स्वदेहं परिवन्धयेत्। भूः अग्न्यात्मने हृदयाय नमः। भुवः वाय्वात्मने शिरसे स्वाहा। स्वः सूर्य्यात्मने शिखायै वषट्। ॐ भूर्भुवः स्वः ब्रह्मात्मने कवचाय हुम्। सोमात्मने नेत्राभ्यां वौषट्। सत्यात्मने अस्त्राय फट्। व्याहृतित्रयेण दिग्वन्धनम्। एतद् ब्रह्मकवचम्। एतद्वन्धं दृष्ट्वा हिंस्राः पलायन्ते। अन्तकालेऽनेनैव वद्धो मुक्तो भवति। सोऽहमित्यस्य महावाक्यस्य स्थूलमहाभूतविराट्रूपं हकारार्थं सूक्ष्ममहाभूतावच्छिन्नहिरण्यगर्भाख्ये मकारार्थे लीनं तच्च मकारार्थेऽव्याकृताख्ये मूलकारणे तच्च दानार्थे (?) शरीरत्रयानुस्यूते ब्रह्मणि तच्च शुद्धं चिन्मात्रं ब्रह्माऽहमस्मीति चिन्तयेत्। असमर्थस्तु

विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदराङ्घ्रि-
श्रोणीभूयं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम्। *
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवासो-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि॥

इति ध्यायेत्।

## अथाष्टाक्षरविधानम्।

प्रातः स्नातः समुत्थाय कृतसन्ध्याजपः शुचिः।

जपेदष्टसहस्रं वै नित्य एष विधिः स्मृतः॥

यो मासं द्वापरे भक्त्या पूजयन् लभते फलम्।

नमो नारायणायोक्त्वा तत्कलौ लभते फलम्॥

अष्टाक्षरो महामन्त्रः सर्व्वपापहरः [1]शुभः।

सर्व्वेषां विष्णुमन्त्राणां राजत्वेन प्रतिष्ठितः॥

भूर्लोकेऽप्यहमस्याहं सत्यपूर्व्वं ब्रवीमि वः।

हे पुत्र शिष्याः शृणुत न मन्त्रोऽष्टाक्षरात्परः॥

नारसिंहे,—

किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः।

नमो नारायणायेति मन्त्रः सर्व्वार्थसाधकः॥

इमं मन्त्रं जपेद् यस्तु शुचिर्भूत्वा दिने दिने।

सर्व्वपापविनिर्म्मुक्तो विष्णुसायुज्यमाप्नुयात्॥

सर्व्वतीर्थफलं ह्येतत् सर्व्वदानफलं नृप।

हरेरर्च्चनमव्यग्रं सर्व्वयज्ञफलं नृप॥

तथा,—गन्धपुष्पादि सकलमनेनैव निवेदयेत्।

कल्पतरौ,—श्रीशुक उवाच,—

किं जपन् मुच्यते तात सततं विष्णुतत्परः।

संसारदुःखात् सर्व्वेषां हिताय वद मे पितः॥

---

(1) Y. परः।

व्यास उवाच,—

अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मन्त्रमुत्तमम्।
यं जपन् मुच्यते मर्त्त्यो जन्मसंसारबन्धनात्॥
हृत्पुण्डरीकमध्यस्थं शङ्खचक्रगदाधरम्।
एकाग्रमनसा ध्यात्वा विष्णुं कुर्य्याज्जपादिकम्॥
एकान्ते विजने स्थाने विष्णवग्रे वा जलान्तिके।
वेदे पुराणे प्रसिद्ध एष मन्त्रः [1]पुरातनः॥
एवमष्टाक्षरं मन्त्रं जपेन्नारायणं स्मरन्।
सन्ध्यावसाने सततं सर्व्वपापैः प्रमुच्यते॥
सर्व्ववेदरहस्येभ्यः सार एष उदाहृतः।
विष्णुना वैष्णवानान्तु [2]हितानुग्रयणात् पुरा॥
कीर्त्तितः सर्व्वपापघ्नः सर्व्वकामप्रदायकः।
स्नात्वा शुचिः शुचौ देशे जपेत् पापविशुद्धये॥
गन्धपुष्पादिभिर्विष्णुमनेनाराध्य यो जपेत्।
महापातकयुक्तोऽपि मुच्यते नात्र संशयः॥
जपेत् सहस्रं नियतं शुचिर्भूत्वा समाहितः।
मासि मासि च द्वादश्यामयुतञ्च जपेत् शुचिः॥
प्रथमेन तु लक्षेण आत्मशुद्धिर्भविष्यति।
द्वितीयेन तु लक्षेण [1]मन्त्रशुद्धिमवाप्नुयात्॥ [3]

---

(१) Y. सनातनः।
(२) Y. हितानुयायिना पुरा।
(३) Y. निर्व्वाणमधिगच्छति।

[1][तृतीयेन तु लक्षेण स्वर्लोकं प्राप्नुयात् परम्।
चतुर्थेन तु लक्षेण हरेः सायुज्यमाप्नुयात्॥
पञ्चमेन तु लक्षेण निर्म्मलं ज्ञानमाप्नुयात्।
षष्ठेनैव तु लक्षेण भवेद् विष्णुस्थिता मतिः॥
सप्तमेन तु लक्षेण स्वरूपं प्रतिपद्यते।
अष्टमेन तु लक्षेण निर्व्वाणमधिगच्छति॥]

तथा,—जपेन्नारायणं मन्त्रमेतन्मृत्युभयापहम्।
आयुष्यं धनपुत्रांश्च पशून् विद्यां महद्यशः॥
धर्म्मार्थकाममोक्षांश्च लभते जपकृन्नरः।
दुःस्वप्नासुरपैशाचा उरगा ब्रह्मराक्षसाः।
जपिनं नोपसर्पन्ति चौरा व्याधय एव च॥

पद्मपुराणे,—
अष्टाक्षरस्य मन्त्रस्य ये जपन्ति द्विजोत्तमाः।
तान् दृष्ट्वा ब्रह्महा शुद्ध्येत् स्वयंतो वैष्णवः स्वयम्॥

तथा अष्टाक्षरकल्पे,—
पादचारी सहस्रायुरमितायुर्नभश्चरः।
लक्षायुरपि जीवेच्च जपे सातिशये सति॥
कोटिमष्टाक्षरं जप्तुर्न किञ्चिद् दुष्करं भवेत्।
स्तम्भयेदपि खे सूर्य्यमुदधिञ्चापि शोषयेत्॥
अणिमादिगुणान् प्राप्य स्वाराज्ये सुखमश्नुते।

इत्यादिवाक्यबलान्नारायणमन्त्रोपासनपरः प्रातः सहस्रं जपेत्।

---

(१) Y. Omits the portion bracketed

यस्तु तेनैव संसारविच्छेदमिच्छति स आवश्यककर्म्मकालाति-
रिक्तकाले सततं जपेत्।

तथाच,—

तस्मात् सर्व्वेषु कालेषु नमोनारायणेति यः।
जपेत् स याति विप्रेन्द्र निर्व्वाणमधिगच्छति॥ (?)

यत्तु,—

स्वपन्नारायणं मन्त्रं गच्छन्नारायणं तथा।
भुञ्जन् नारायणं विप्र तिष्ठन् जाग्रन् श्वसन्नपि॥
उन्मिषन् निमिषन् वापि नमो नारायणेति यः।
जपेन्नारायणं मन्त्रं प्रणम्य पुरुषोत्तमम्॥

इति। यच्च,—

आसीनो वा शयानो वा तिष्ठन् वा यत्र तत्र वा।
नमोनारायणायेति मन्त्रैकशरणा वयम्॥

इति तत्र गमनादिकाले,—

मन्त्रैकशरणो विद्वान् मनसैव सदा जपेत्।

इति मनसा जपः। एतादृशजपनिष्ठावतो नित्याकरणेऽप्य-
दोषः समाधिसमानत्वात्।

सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।

इति भगवद्वचनादित्याहुः। अस्य वैदिकत्वान्न दीक्षादिचिन्ता
नवा दीक्षानियमः पुरश्चरणनियमो वा। तथाच नारायणो-
पनिषद्,—ॐमित्येतदग्रे व्याहरेन्नम इति पश्चान्नारायणायेत्यु-
परिष्टात् ॐमित्येकाक्षरं नम इति द्वे अक्षरे नारायणायेति

पञ्चाक्षराणि एतद् वै नारायणस्याष्टाक्षरं पदं यो हवै नारायणस्याष्टाक्षरं पदमध्येत्यनुपप्लवः सर्व्वमायुरध्येति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं स ततोऽमृतत्वमश्नुते। इति। तथात्मबोधोपनिषद्,—ॐनमोनारायणायेति मन्त्रोपासनं वैकुण्ठं गमयिष्यति। इति। प्रपञ्चसारे,—

ऋषिरस्य मनोः साध्यनारायण इतीरितः।
छन्दस्तु दैवी गायत्री परमात्माच देवता॥
अथ क्रुद्धमहावीरद्युसहस्रपदादिकैः।
उल्कैर्जातियुतैः कुर्य्यात् पञ्चाङ्गानि मनोः क्रमात्॥
अष्टाक्षरेण व्यस्तेन कुर्य्यादष्टाङ्गकं सुधीः।
सहृत्शिरःशिखावर्म्मनेत्रास्योदरपृष्टके॥
अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्-
केयूरं कौस्तुभाभाशबलरुचिरहारं सपीताम्बरञ्च।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम्॥

मन्त्रार्थश्च।

सर्व्वज्ञः सर्व्वशक्तिश्च सर्व्वात्मा सर्व्वगो ध्रुवः।
जगज्जन्मस्थितिध्वंसहेतुरेष महेश्वरः॥
एवमेव समुद्दिश्य मन्त्रो नारायणः सदा।

इति सुरेश्वराचार्य्यरीत्या ज्ञातव्यः। अस्यार्थः,—

ब्रह्मलोकानुग्रहार्थं गृहीतदेहो नारायणस्तस्मै नारायणाय नमस्कार इति।

प्रपञ्चसारे च,—

तारः शत्रुत्यतया निर्दिष्टः सोऽहमर्थकः पूर्व्वम् ।
नार्णः प्रतिषेधार्थो मोकारस्यायमर्थको भवति ॥
सलिलानलपवनधराः क्रमेण नारायणाक्षराः प्रोक्ताः ।
चरमैस्तु विभक्तिव्यक्त्यर्थं दर्शितस्तदर्थोऽर्थैः ॥

अयं सलिलतेजोवायुधरात्मकः प्रपञ्चो नास्ति सोऽहं ब्रह्मैवाह-मित्यर्थः। अत्राङ्गभूतकिरीटमन्त्रः किरीटकेयूरहारमकर-कुण्डलशङ्खचक्रगदाम्बुजहस्तपीताम्बरधरश्रीवत्साङ्कितवक्षस्थलश्री-भूमिसहितस्वात्मज्योतिर्द्वयदीप्तिकराय सहस्रादित्यतेजसे नमः। इति व्यापकन्यासः।

वैष्णवपीठे पूजा।

अङ्गान्यभ्यर्च्य मन्त्रार्णान् केशरेषु समर्चयेत् ।

पूर्व्वादिचतुर्द्दले वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः। कोण-[1]दलेषु शान्तिश्रीसरस्वतीरतयः। दलाग्रेषु शङ्खचक्रगदापद्मकौस्तुभमुषल-खड्गवनमालाः। अग्रे गरुड़म्। शङ्खपद्मनिधी दक्षिणोत्तरयोः। पश्चिमे ध्वजः। आग्नेये विघ्नराजं। नैर्ऋते तार्क्ष्यं ईशाने सेनानीं इन्द्रादयस्तद्वज्रविश्वादयः।

[2]विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशैः सरसिजैर्जुहुयान्मधुराप्लुतैः ।
धर्म्मार्थकामान् लब्ध्वान्ते विष्णुसायुज्यमाप्नुयात् ॥

---

(१) Y. द्वयेषु।

(२) Y. विकारवर्णं जपेन्मनु०

प्रयोगश्च ।

सर्व्वार्थसाधनं जप्त्वा विशुद्धात्युपपातकी ।
पश्चाद्दं पञ्चगव्याशी निषसो दर्भसंस्तरे ॥
अहोरात्रमुपोष्याशु सहस्रेणाभिमन्त्र्य च ।
युक्तानि पञ्चगव्यानि पीत्वा पापैः प्रमुच्यते ॥
शनैश्चरदिनेऽश्वत्थं नित्यमालभ्य पाणिना ।
[1]जपेदष्टोत्तरं शुद्धो म्रियते नापमृत्युभिः ॥
अश्नीयादन्वहं विद्वान् अन्नं सप्ताभिमन्त्रितम् ।
आरोग्यं महदाप्नोति बलं तेजश्च विन्दति ॥
उदकुम्भं नवं पूर्णमुपस्पृश्यायुतं जपेत् ।
तेनाभिषिक्तस्तोयेन व्याधिभिः परिमुच्यते ॥
तिलानां दशसाहस्रैर्होमश्चायुर्विवर्द्धकः ।
दधिमध्वाज्यसंमिश्रां चतुरङ्गुलसम्मिताम् ।
गुलुचीमयुतं हुत्वा मृत्युमेवातिवर्त्तते ॥
सर्व्वान् कामानवाप्नोति घृतहोमेन भूयसा ।
अष्टाक्षरं समुच्चार्य्य वामहस्ताभिमन्त्रिताः ॥
पुनः पुनरपः सिञ्चेत् सर्पदष्टस्तु जीवति ॥
नाभिमात्रोदकस्यान्ते नदीं प्राप्य समुद्रगाम् ।
जप्त्वा सूर्य्यमूर्द्ध्वबाहुरयुतं धनमाप्नुयात् ॥
अभिमन्त्र्य शतसाहस्रं सर्व्वबीजानि वापयेत् ।
महती शस्यवृद्धिः स्यादाम्रादिष्वप्ययं विधिः ॥

---

(१) Y. जपेदष्टशतं शुद्धो ·

पुत्रं मासत्रयाद् विन्देत् हुत्वा गोमूत्रयावकम्।

भुक्त्वे ति क्वचित् पाठः।

अनुक्तायान्तु संख्यायां विधाने जपहोमयोः।
सर्व्वत्राष्टसहस्रं स्यादेष साधारणो विधिः॥

[[1]इति नित्याचारप्रदीपे अष्टाक्षरविधानं समाप्तम्।]

---

## अथ मुमुक्षुणा प्रातः [2]प्रपञ्चयागविधिः कार्य्यः।

कृते च यस्मिन्निह साधकोत्तमाः
प्रयान्ति निर्व्वाणपदं तदक्षयम्।

इति प्रपञ्चसारवचनात्। सम्विदानन्यमिदिद इति तन्त्रान्तरात्। [3]तत्राङ्गत्वेन प्रथमं महागणपतिमन्त्रस्य न्यासः। महागणपतिमन्त्रस्य गणक ऋषिः नीवृद्गायत्रीच्छन्दः महागणपतिर्देवता गां वीजं स्वाहा शक्तिः ॐ गां हृदयाय नमः ॐश्रीं गां शिरसे स्वाहा ॐ ह्रीं गुं शिखायै वषट् ॐ क्लीं गैं कवचाय हुं ॐ लं गौं नेत्राभ्यां वौषट् ॐ श्रं गः अस्त्राय फट्। कल्पद्रुमवने ऐक्षवजलधिलहरीवातशिशिरे सर्व्वर्त्तुसेविते तरुमूले षट्कोणे लिपिपद्मे आसोनस्त्वेकरदो [ [4]दशभुजो ] गजवदनः।

---

(१) D. Omits the portion bracketed.

(२) Y. पञ्चयोगविधिः कार्य्यः।

(३) Y. तदङ्गत्वेन ०।

(४) Y. Omits the portion bracketed.

वीजापूरगदेक्षुकार्म्मुकरुजाचक्राब्जपाशोत्पल-

व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।

ध्येयो वल्लभया सपद्मकरया श्लिष्टो ज्वलत्भूषया

विश्वोत्पत्तिविनाशनस्थितिकरो विघ्नो विशिष्टार्थदः॥

अग्रे रमारमेशौ बिल्वे। दक्षे वटमूले गिरिजागिरिशौ। पृष्ठे पिप्पलमूले रतिकामौ। सव्ये भूवराहौ प्रियङ्गुमूले। षट्कोणाग्रेषु। अग्रे आमोदः सिद्धिश्च। तमभितः प्रमोदः समृद्धा। सुमुखः कान्त्या। दुर्म्मुखो [1]मदनावत्या। तमभितो विघ्नो मदद्रवया। विघ्नकर्त्ता द्राविण्या। सव्ये शङ्खनिधिर्वसुधारया। दक्षे पद्मनिधि र्वसुमत्या। अष्टदेवताः। ततोऽष्टमातरः। इन्द्रादयो वज्रादयश्च। एवं सपरिवारं गणपतिं ध्यात्वा ॐ श्रीं ह्रीं क्लीं लं गणपतये वरवरद सर्व्वजनं मे वशमानय स्वाहेति गणपतिमन्त्रस्य देहे न्यासः। गमिति वीजमन्त्रस्य चतुश्चत्वारिंशद्वारं जपः। गणानां त्वेति मन्त्रस्य सकृज्जपः। महागणपतिमन्त्रस्य चतुर्व्वारं जपः। मातृकामन्त्रस्य ऋष्यादिस्मरणम्। षड़ङ्गन्यासः। मातृकाक्षराणां स्वस्वस्थानेषु त्रिवारं न्यासः। सविन्दुकषोड़शस्वरान्ते आदित्याय नम इति मुखे। कवर्गान्ते अङ्गारकाय नम इति दक्षिणकरे। चवर्गान्ते शुक्राय नम इति वामकरे। टवर्गान्ते बुधाय नम इति दक्षिणपादे। तवर्गान्ते वृहस्पतये नम इति वामपादे। पवर्गान्ते शनैश्चराय नम इति कुक्षौ। यकारादिदशाक्षरान्ते सोमाय नम इति हृदये।

---

(१) Y. मदुवत्या।

## अथ प्रपञ्चयागन्यासः।

प्रपञ्चयागमन्त्रस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दः सच्चिदानन्दाद्वय-परिपूर्णं प्रत्यक्ब्रह्मज्योतिर्देवता प्रणवो वीजं हृल्लेखा शक्तिः। स्वाहा हृदयाय नमः। सोऽहं शिरसे। हंसः शिखायै। ह्रीं कवचाय हुम्। ॐ नेत्राभ्यां हरहर अस्त्राय फट्। इति करे षड़ङ्गन्यासं कृत्वा देहे मूलमन्त्रेण व्यापकन्यासं कृत्वा हृदयादिषु षड़ङ्गन्यासः। ॐ ह्रीं हं सः सोऽहं स्वाहेति मन्त्रार्थध्यानम्। सर्व्वात्मकं मायारोपितदेहेन्द्रियादिभेदप्रपञ्चाधिष्ठानरूपं प्रत्यक्-ब्रह्मैकभूतं परिपूर्णं ब्रह्मानन्दज्योतीरूपम्। तस्मिन् सोम-रूपे ब्रह्महुताशने ज्योतिषि समस्तप्रपञ्चसहितास्तत्तुल्याः संख्यानोपेता मातृकावर्णा हूयन्तु इति भावनीयम्। ॐ ह्रीं हं सः सोऽहं स्वाहा इति क्रमेण। शिरःसहितो अकारो हुत इति बुद्धिः। ॐ आं ह्रीं आं हं सः सोऽहं स्वाहा। वदनवृत्तसहित आकारो ब्रह्मणि हुत इति बुद्धिः। एवं सर्व्वत्र।

एवं न्यासान्ते सर्व्वप्रपञ्चदेहादिशून्यः पूर्णचिन्मात्रस्तिष्ठेत्। एवं न्यासं कुर्व्वतो ब्रह्मज्ञानमस्मिन्नेव जन्मन्युत्पद्यते। मन्त्रोपासकस्य च मन्त्राः सर्व्वदोषरहिता भवन्ति। एतावन्मोक्षफलाय मन्त्रसिद्धये तु वक्ष्यमाणवाह्यहोमः काम्यफलाय।

हव्यैश जुहुयादग्नौ मन्त्रवित् तन्त्रचोदितैः।
अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः।
सिद्धार्थपायसाज्यानि द्रव्याख्यष्टौ विदुर्बुधाः॥

ऋग्भिर्जुहुयाल्लक्षं तदर्द्धं वा समाहितः।
सर्व्वान् कामानवाप्नोति परां सिद्धिञ्च विन्दति॥
एभिरर्कसहस्राणि हुत्वा मन्त्री विनाशयेत्।
रिपून् क्षुद्रग्रहान् भूतान् शापान् सर्व्वान् सपन्नगान्॥
मन्त्राणामन्यथावृत्तिप्रतिपत्तिसमुद्भवान्।
विकारान् नाशयेदाशु होमोऽयं समुदीरितः॥

एभिस्त्रिमधुरोपेतैः हुत्वा लक्षं राज्यं लभते। तिललक्षहोमः पापक्षयाय। पद्मलक्षहोमः श्रियै। घृतलक्षहोमः कीर्त्त्यै।

अनया सप्त संजप्तं पिबेत् प्रतिदिने दिने।
सलिलं स भवेद् वाग्मी लभते कवितां पराम्॥
सोमसूर्य्याग्निदैवत्या वर्णा लोहत्रयन्तथा।
रौप्यमिन्दुः स्मृतो हैमं सूर्य्यस्ताम्रो हुताशनः॥
लोहभागाः समुद्दिष्टा स्वराद्यक्षरसंख्यया।

तैर्मुद्रां कृत्वा तां स्पृष्ट्वा सहस्रं संजप्य सहस्रं हुत्वा तत्र संपातं पातयित्वा पङ्कजोपरि क्षीरवृक्षकाथपूर्णमष्टगन्धनवरत्न-युतं संस्थाप्य तत्र मुद्रिकां प्रक्षिप्य कुम्भे मातृकां सम्पूज्य स्पृष्ट्वा सहस्रं जप्त्वा तेनाभिषिच्य यस्मै तां मुद्रिकां दद्यात् तस्य तां धारयतः सर्व्वापन्निवृत्तिरोगग्रहभूतविषचौरव्यालादि-दोषनिवृत्ति युद्धे जयः। अष्टावष्टौ स्वराः कादयः पञ्चवर्गा यादयो वर्गद्वयमिति नववर्गाणां नवग्रहा देवताः। नवग्रहाणां नवरत्नानि माणिक्यमौक्तिकविद्रुमगारुड़पुष्परागवज्रनीलगोमेद-वैदूर्य्याणि एतैर्मुद्रां कृत्वा पूर्व्ववत् संस्कृत्य धारणे ग्रह-

पीड़ाशान्तिसौभाग्यलक्ष्मीसकलापवित्तत्तिरक्षोभूतपिशाचादिभया-
भावधनधान्यसम्वृद्धिश्च फलम्। एवं केवलमातृकोपासकस्यापि।

---

## अथ प्राणाग्निहोत्रविधिः।

तस्य फलं प्रपञ्चसारे,—

सताररुत्याद्यजपान्तमेवं हुत्वा महात्माथ शतार्द्धसंख्यम्।
विन्यस्य तावच्च तथैव सूत्रमावाकृतिर्नित्यतनुश्च भूयात्॥

इति प्रपञ्चसारवचनान्मोक्षफलकः।

इत्येवं हुतविधिमन्वहं दिनादौ
ये सम्यग् विदधति मन्त्रिणः शतार्द्धम्।
ते रत्नैरपि कनकांशुकैः सधान्यैः
सम्पन्नाः सकलजगत्प्रिया भवन्ति॥

इति वचनाच्च काम्योऽपि। तत्र दिनादावितिवचनात् प्रातः कर्त्तव्यता।

तद्विधिः,—

बद्धा पद्मासनमृजुकायो मन्त्री विशेत् पुरोवदनः।

गुदाद्यङ्गुलोर्द्धस्थाने मेढ्राद्यङ्गुलादधश्च मूलाधारः। तत्र पूर्व्वनैर्ऋतवायुकोणं त्रिकोणं तन्मध्ये हृल्लेखा हकारः। दीर्घ ईकार[1]हकाराभ्यां वेष्टितं त्रिकोणं त्रिकोणमध्ये आवसथ्यकुण्डं त्रिकोणपूर्व्वे सभ्यकुण्डं त्रिकोणपश्चिमे आहवनीयकुण्डं त्रिकोणोत्तरे अन्वाहार्य्यपचनकुण्डं त्रिकोणदक्षिणे गार्हपत्यकुण्डं सर्व्वत्र ज्वलन् वह्निः। इति होमाधिकरणाग्निध्यानम्। सर्व्व-

(१) Y. रेफाभ्यां।

गतचैतन्यप्रकाशप्रतिबिम्बहेतुभूतानवच्छिन्नचैतन्यात्मकात् सकल-वर्णकारणशब्दरूपब्रह्मात्मकमूलप्रकृत्यात्मनो द्वादशान्तस्थितात् कल्पार्कात् स्राविताममृतमयीमक्षरमालिकां चैतन्यज्योतिषा संभिन्नां जाज्वल्यमानां कल्पान्ताग्निशिखरस्फुरत्कुहरकेषु कुण्डेषु होमयेत् । होमकाले नवरत्नान्यतमवर्णत्वेन ध्यानं तद्यथा लकारं मरकतवर्णममृतमयञ्च ध्यात्वा द्वादशान्तपदान्निर्गम्य सुषुम्णामार्गे मूलाधारगतावसथ्यकुण्डपर्य्यन्तं नीत्वा ॐ ह्रीं लं हं सः सोऽहं स्वाहा। एवं शकारं गोमेदाभममृतमयं द्वादशान्तान्मूला-धारावसथ्यकुण्डं नीत्वा ॐ ह्रीं शं हं सः सोऽहं स्वाहेति होमः। एवं मकारं नीलाभं नकारं विद्रुमाभं णकारं वज्राभं ङकारं पुष्परागाभं ञकारं वैदूर्य्याभं विसर्गं मुक्ताभं एकारं मुक्ताभं ऋकारं माणिक्याभं ध्यात्वा पूर्व्ववदावसथ्ये ऽमीषां होमः। एवमावसथ्ये वर्गान्ते दशवर्णहोमः।

अथ सभ्ये लकारं मरकतवर्णममृतमयं द्वादशान्तान्निर्गत्य सुषुम्णामार्गेण [1]मूलाधारगताहवनीयकुण्डगतं ध्यात्वा ॐ ह्रीं लं हं सः सोऽहं स्वाहेति होमयेत्। सभ्यकुण्डे। एवं नववर्णान् सभ्ये। तत्र वकारं गोमेदाभं धकारं विद्रुमाभं ढकारं वज्राभं झकारं पुष्परागाभं घकारं वैदूर्य्याभं अनुस्वारं मुक्ताभं उकारं माणिक्याभं ध्यात्वा पूर्व्ववन्मन्त्रेण सभ्ये होमः।

---

(१) Y. मूलाधारत्रिकोणपूर्व्वगतसभ्यकुण्डपर्य्यन्तं नीत्वा ओं ह्रीं लं हं सः सोऽहं स्वाहेति सभ्ये जुहुयात्। एवं नववर्णान् वक्ष्यमाणसभ्ये। तत्र वकारं ०

अथ त्रिकोणपश्चिमस्थाहवनीये । इकारं मरकतवर्णममृत-मयं द्वादशान्ताद्विनिर्गत्य सुषुम्नापथा मूलाधारगताहवनीयकुण्डगतं ध्यात्वा ॐ ह्रीं इं हं सः सोऽहं स्वाहेति होमयेत् । एवमपरवर्ण-नवकस्याहवनीये । तत्र लकारं गोमेदाभं वकारं नीलाभं टकारं विद्रुमाभं ङकारं वज्राभं जकारं पुष्परागाभं गकारं वैदूर्य्याभं औकारं मुक्ताभं लृकारं माणिक्याभं इकारं माणिक्याभं ध्यात्वा-हवनीये पूर्व्ववन्मन्त्रेण होमः । उत्तरगतान्वाहार्य्यपचनकुण्डे । सकारं मरकतवर्णं ध्यात्वा द्वादशान्ताद्विनिर्गत्य सुषुम्नापथा मूलाधार-त्रिकोणोत्तरगतान्वाहार्य्यपचनपर्य्यन्तं नीत्वा ॐ ह्रीं सं हं सः सोऽहं स्वाहेति जुहुयात् । एवमपरनववर्णानन्वाहार्य्ये । तत्र रेफं गो-मेदाभं फकारं नीलाभं थकारं विद्रुमाभं ठकारं वज्राभं झकारं पुष्परागाभं खकारं वैदुर्य्याभं औकारं मुक्ताभं ऋकारं माणिक्याभं ईकारं माणिक्याभं ध्यात्वा पूर्व्ववन्मन्त्रेण होमः ।

अथ त्रिकोण(१)दक्षिणस्थाहवनीयकुण्डे । षकारं मरकताभ-ममृतमयं ध्यात्वा द्वादशान्ताद्विनिर्गत्य सुषुम्नापथा मूलाधारगार्हपत्य-समीपं नीत्वा ॐ ह्रीं षं हंसः सोऽहं स्वाहेति गार्हपत्ये जुहुयात् । एवमपरवर्णनवकं गार्हपत्ये । तत्र यकारं गोमेदाभं पकारं नीलाभं तकारं विद्रुमाभं टकारं वज्राभं चकारं पुष्परागाभं ककारं वैदूर्य्याभं ऐकारं मुक्ताभं ऋकारं माणिक्याभं आकारं माणिक्याभं ध्यात्वाहवनीये पूर्व्ववन्मन्त्रेण । ततोऽकारं ब्रह्मरूपं सर्व्वाधारं ध्यायेत् ।

(१) D. पश्चिमस्था ०

अथ ॐ ह्रीं हं सः व्योमशब्दजातं सोऽहं स्वाहेति मध्यगताव-सथ्यकुण्डे होमः। ॐ ह्रीं अनिलं स्पर्शजातं हंसः सोऽहं स्वाहेति पूर्व्वगतसभ्यकुण्डे। ॐ ह्रीं तेजोरूपजातं हंसः सोऽहं स्वाहेति पश्चिमगताहवनीये। ॐ ह्रीं आपोरसजातं हंसः स्वाहेति उत्तरगतान्वाहार्य्यपचने। ॐ ह्रीं पृथिवीगन्धजातं हंसः सोऽहं स्वाहेति दक्षिणगार्हपत्ये। एवं हुत्वा सर्व्वतेजोपसंहारपूर्व्वकं प्रतिलोमं विधाय आनन्दात्मकोऽद्वयः परमात्मरूपपूर्णचिन्मात्रो-प्रतिष्ठेदिति। तत्र प्रपञ्चसारमते टवर्गस्य शुक्रो देवता पुष्प-रागमणिः तवर्गस्य जीवो देवता विद्रुममणिः। शारदामते क्रमेण टवर्गस्य वृहस्पतिः तवर्गस्य जीव इति शेषः। इति प्राणाग्निहोत्रविधिः। भोजनकालीनप्राणाग्निहोत्रबलिर्वक्ष्यते।

---

## अथ मुमुक्षूणां मन्त्रराजानुष्टुभनृसिंहाकारब्रह्मविद्यो-पासनं कर्त्तव्यमिति तदभिधीयते।

पूर्व्वतापनीये,—"य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स वेदपूतो भवति स सर्व्वपूतो भवति। य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं जयति स पाप्मानं तरति स सर्व्वहत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्व्वहत्यां तरति। य एतं मन्त्रराजं नारसिंहमानुष्टुभं

नित्यमधीते सोऽग्निं स्तम्भयति स उदकं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्व्वान् देवान् स्तम्भयति स सर्व्वान् ग्रहान् स्तम्भयति स विषं स्तम्भयति। य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स देवानाकर्षति स यक्षानाकर्षति स नागानाकर्षति स ग्रहानाकर्षति स मनुष्यानाकर्षति स सर्व्वानाकर्षति। य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्व्वलोकं जयति। य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स षोड़शिना यजते सोऽतिरात्रेण यजते सोऽप्तोर्यामेण यजते स वाजपेयेन यजते सोऽश्वमेधेन यजते स सर्व्वैः क्रतुभिर्यजते। य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्व्वाणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते। अनुपनीतशतमेकमेकेनोपनीतेन तत् समम्। उपनीतशतमेकमेकेन गृहस्थेन तत्समम्। गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम्। वानप्रस्थशतमेकमेकेन यतिना तत्समम्। यतीनां पूर्णशतमेकमेकेन रुद्रजापकेन तत्समम्। रुद्रजापकशतमेकमेकेनाथर्व्वशिरःशिखाध्यापकेन तत्समम्। अथर्व्वशिरःशिखाध्यापकशतमेकमेकेन तापनीयोपनिषदध्यापकेन तत्समम्। तापनीयोपनिषदध्यापकशतमेकमेकेन

मन्त्रराजजापकेन तत्समम्। तद् वा एतत् परं मन्त्रराजाध्यापकस्य। यत्र न सूर्य्यस्तपति यत्र न वायुर्वहति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र मृत्यु र्न प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं योगिध्येयं परं पदं यत्र गत्वा न निवर्त्तन्ते योगिनस्तदेतदृचाभ्युक्तम्,—तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्। तद् विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति। य एवं वेदेति महोपनिषत् य एतां महोपनिषदं वेद स कृतपुरश्चरणोऽपि महाविष्णुर्भवति।" तथा "यो मृत्योः पाप्मभ्यः संसाराच्च बिभीयात स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात् स मृत्युं जयति स पाप्मानं तरति स संसारं तरति।" तथा "य इह स्नातुमपेक्षते स सर्व्वैश्वर्य्यं ददाति देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे येनासावमृतीभूत्वा सोऽमृतत्वञ्च गच्छति।" तथा तत्र तेषु पदपदाङ्गविधिषु "साम जानीयाद् यो जानीते सोऽमृतत्वञ्च गच्छति।" घोषणा भूयसी। अङ्गिरसकल्पे,—

शक्तिनिष्ठो भवेत् शैवः शैवो विष्णुं प्रपूजयेत्।
वैष्णवो नारसिंहः स्यात् सा काष्ठा सा परा गतिः॥

इति सर्व्वोपासनाक्रमफलस्य मोक्षहेतुत्वमुच्यते। हरिवंशे नरसिंहप्रादुर्भावानन्तरं ऋषय ऊचुः,—

यत्त्वयाभिहितं देव नरसिंहात्मकं वपुः।
एतदेवार्चयिष्यन्ति परापरविदो जनाः॥

विष्णुधर्म्मोत्तरे विष्णुमूर्त्तिपूजाविशेषाधिकारे ज्ञानकामस्तु नृसिंहमित्युक्तम्। विष्णुधर्म्मे च,—

भगवन्नरसिंहस्य विष्णोः स्तोतुं जिघांसतः।
दृष्टं देहे मया सर्व्वं त्रैलोक्यं सचराचरम्॥
ब्रह्मा प्रजापतिश्चेन्द्रो रुद्रैः पशुपतिः सह।

इत्याद्यभिधाय—

एतच्चान्यच्च यत्किञ्चिद्देवर्षिपितृमानवम्।
सतिर्य्यगूर्द्ध्वपातालं तस्य दृष्टं तनौ मया॥
सोऽहं तमजरं देवं दुष्टदैत्यनिवारणम्।
आराधयितुमिच्छामि तं ममाख्यातुमर्हसीति॥

वैरञ्चे,—

प्रादुर्भावसहस्रेषु देवदेवस्य शार्ङ्गिणः।
कस्मिन्नभ्यधिका शक्तिरनुभूता त्वया विभो॥

इति नारदप्रश्ने ब्रह्मोवाच,—

योऽसौ हिरण्यकशिपुं जघ्निवान् नृहरिर्नखैः।
नरस्य कृत्वार्द्धतनुं सिंहस्यार्द्धतनुं तथा॥
प्रादुर्भावसहस्रेषु तत्र शक्तिर्विशिष्यते।

भार्गवसंहितायां तथा,—

स एव देवः सर्व्वेषां प्रधानमिति मे मतिः।

भृगुवाक्यं सनत्कुमारं प्रति—

चतुर्व्वर्गस्य कर्त्तारः श्रुता धर्म्मा न तत् श्रुतम्।
मृत्योर्निवर्त्तनं धर्म्मं मे त्वं वक्तुमिहार्हसि॥

अयं हि पञ्चमो वर्गः सर्व्वधर्म्मोत्तमोत्तमः।
अस्मिंस्तु सिद्धे चत्वारो वर्गा अपि करस्थिताः॥
ततः स प्राह मन्त्राणामुत्तमं स्वर्गमोक्षदम्।
मृत्योर्निवर्त्तनोपायं वदामि तव चानघ॥

तथा,—

गच्छंस्तिष्ठन् वसन् वापि जाग्रद् वा शयने स्थितः।
मन्त्रैकशरणो मन्त्री मनसात्ममनुं स्मरेत्॥
उच्छिष्टे मैथुनं कृत्वा मेहित्वा प्राग् विशुद्धितः।
न स्मरेन्मनसाप्येनं स्मरन् नरकमृच्छति॥
आतुरश्च मुमुर्षुश्च विना शौचं स्मरेदपि।

इत्यादिश्रुतिस्मृतिपुराणेतिहासपर्य्यालोचनया नृसिंहाकारब्रह्मोपासनमन्त्रराजकं मोक्षफलप्रदं प्रतीयते। तदुक्तं तापनीयवार्त्तिके,—

नृसिंहब्रह्मविद्यैषा व्याख्याता मुक्तिसिद्धये।
उपासनप्रकारश्च श्रुत्यैव प्रतिपादितः॥

तत्तदागमकल्पग्रन्थेषु बहुषु क्वचित् क्वचिदित्येवं सर्व्वपर्य्यालोचनया शैवपद्धतिः। शङ्कराचार्य्यादिसम्प्रदायाविरोधेन संक्षेपेण किञ्चिदुच्यते। अस्य मन्त्रस्य वैदिकत्वादागमोक्तदीक्षा पुरश्चरणाद्यपेक्षा नास्ति।

तदाहुः,—

सन्त्विषां भजतामेवं मन्त्रपाठेन धीमताम्।
पुरश्चरणकृत्येन विनापि फलदो मनुः॥

आगमे दीक्षापुरश्चरणादिकं यद्यपि मन्त्रराजमधिकृत्यापि क्वचित् क्वचित् श्रूयते तथापि

यदन्यत् तत्र क्षुदितं तत्सर्व्वमिह नेष्यते।

मन्त्रो गृहीतमात्रोऽयं तारयेत् सकलापदः॥

इति पुरश्चरणापेक्षा कल्पकारमतेऽपि दृश्यते। केवलं तद्विधाना-सामर्थ्यात् दीक्षापूर्व्वकगृहीतेन तु पुरश्चरणेन चोपासने शीघ्रं मोक्षफलाप्तिः। तत्तत्काम्यफलानामतिशयश्च। एवमयुतादिपुरश्च-रणापेक्षा द्वात्रिंशल्लक्षादिपुरश्चरणे बोध्यम्। यत्तु श्रुतौ,—य एतां महोपनिषदं वेद स कृतपुरश्चरणो महाविष्णुर्भवतीति उपनिषज्-ज्ञानस्य पुरश्चरणकार्य्यकारित्वोक्तेः पुरश्चरणापेक्षास्तीति। तत्र उपनिषद्‌ज्ञानस्य तदुक्तोपासनाद्वारा पुरश्चरणकार्य्यकारित्वमित्यु-पनिषदुक्तोपासनैव पुरश्चरणमित्यर्थः।

भार्गवसंहितायाम्,—

वैदिकोऽयं महामन्त्रो ग्रहणादेव सिद्ध्यति।

तथापि मनसस्तुष्ट्यै पुरश्चरणमुच्यते॥

यत्तु प्रपञ्चसारे,—

[1]द्वात्रिंशत्सहस्रैरधिकृतिरयुतैर्भवेत् पुरश्चरणम्।

ताभिर्लक्षैः सिद्धिः समीरिताऽस्य मनोः॥

---

(1) प्रपञ्चसार reads,

द्वात्रिंशतिकसहस्रैरधिकृतिरयुतैर्भवेत् पुरश्चरणम्।

तावद्भिस्तावद्भिर्लक्षैः सिद्धिः समीरितावास्य मनोः॥

प० २४; श्लो० १२।

तत्र द्वात्रिंशत्सहस्रैः पुरः सेवा द्वात्रिंशदयुतैः पुरश्चरणं ताभिर्लक्षैः सिद्धिः मोक्षसिद्धिः। शारदातिलके,—वर्णलक्षं जपेन्मन्त्रमिति वर्णलक्षं चतुर्लक्षम्। वर्णलक्षं द्वात्रिंशल्लक्षमिति यद्यपि मोक्ष-फलार्थमित्याहुः। मन्त्रदेवप्रकाशिकायान्तु परमेश्वरसाक्षात्कार-क्षमं द्वात्रिंशत्पुरश्चरणमित्याहुः।

अन्यत्र च

नियुतञ्च जपेन्मन्त्रमस्यैषा तु पुरस्क्रिया।

नियुतं दशलक्षम्। वैरञ्चे

अष्टलक्षं जपित्वापि······सिद्ध्यति।

इदञ्च द्वात्रिंशल्लक्षाशक्तस्य मोक्षफलार्थम्। द्वादशमन्त्राधिकारे आदिब्रह्मे,—

निजेष्टदेवञ्च सपर्य्ययन् जपेत्

शतं शतानां दश मन्त्रसिद्धये।

शतानां शतं दश लक्षमित्यर्थः।

जपन् लक्षेण सिद्धिः स्यात् द्विलक्षेणान्तरीक्षणम्।

त्रिलक्षेण नभोवृत्तिश्चतुर्भिर्मोक्षमाप्नुयात्॥

तत्रापि लक्षेण पुरश्चरणम्। द्विलक्षादिप्रयोगः फलार्थः। वामन-भवदासीये,—

विविक्तं स्थानमासाद्य विविक्तं सुमनोहरम्।

तीर्थं वा पुण्यदेशं वा विविक्तं नापि किञ्चन॥ (?)

अयुतञ्च भार्गवसंहितायाम्

कुर्य्यान्मन्त्रस्य संसिद्धेः दशसाहस्रकं जपम्।

स्वयं प्रोक्ते च दीक्षामभिधाय

अभिषिक्तोऽथ गुरुणा अयुतं प्रजपेन्मनुम् ।
अधिकारी भवेदेवं पुरश्चरणमारभेत् ॥
गुरोराज्ञां समादाय ग्रहणे चन्द्रसूर्य्ययोः ।
आदितोऽप्यवसानान्तं ध्यायन् देवं जपेन्मनुम् ॥

एवञ्च ग्रहणपुरश्चरणमेव स्वयं प्रोक्ते मुख्यम् । अयुतजपः पुरःसेवा । भार्गवसंहितायान्त्वनुकल्पत्वेन ग्रहणपुरश्चरणमुक्तम् ।

चन्द्रसूर्य्यविरागेतु पूर्व्वं त्र्यहमुपोषितः ।
एकाहं वा जपेन्मन्त्रं स्पर्शान्मुक्त्यन्तमादरात् ॥
परेऽहनि च होमादि यथापूर्व्वं समाचरेत् ।
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ॥
अथवा सिन्धुतीरेऽपि शुष्कवासा जपं चरेत् ।
अथवा भूतलिप्यन्तैरादावन्ते क्रमोत्क्रमात् ॥
पुटितं प्रजपेन्मन्त्रमष्टोर्द्ध्वशतसंख्यया ।
विना होमादिभिर्मन्त्रः सिद्धत्येव न संशयः ॥

भूतलिपिपुटितजपे होमाद्यपेक्षा नास्ति । अन्यत्र तु होमजपतर्पणमार्ज्जनविप्रभोजनैः पञ्चविधं पुरश्चरणम् ।

पूजाहोमौ जपश्चेति भवेदंशत्रये तव ।

इति पञ्चात्मकपुरश्चरणाप्रशक्तस्यानुकल्पपरमेव ।

जपस्य,—

कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा स्मृता ।
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥

इति वचनात् श्रुतसंख्याचातुर्गुण्यं सर्व्वत्र कल्पयित्वा कर्त्तव्यम्। तद्दशांशेन होमः। तद्दशांशेन तर्पणम्। तद्दशांशेन मार्ज्जनम्। तद्दशांशेन विप्रभोजनमित्यादि।

स्वयंप्रोक्ते—

सहस्राख्येन मन्त्रेण यो हरिं स्तौति मानवः।
अनुष्टुप् तस्य सिद्धिः स्यात् सर्व्वे मन्त्रा वशानुगाः॥

सहस्राख्यमन्त्रस्तत्रैवोक्तः।

तथा,—

तस्मादस्य पुरश्चर्य्यां चरित्वा जीवनावधि।
पूजां जपञ्च सङ्कल्पं विद्वानहरहश्चरेत्॥

अत्र भार्गवसंहितायाम्,—

एवं सिद्धमनुर्मन्त्री नित्यकर्म्मणि निष्ठितः।
काम्यानां फलभागी स्यान्मोक्षमप्याशु गच्छति॥

इति वचनान्नित्यकर्म्मनिष्ठा कार्य्या। नित्यकर्म्माणि तत्रैवोक्तानि,—

कुर्य्याज्जपमशक्तस्तु त्रिकालं वैककालिकम्।
कृत्वा जपं देवपूजां दीक्षोक्तविधिनाचरेत्॥

अत्रापि त्रिकालमशक्त एककालं वेत्यनुषङ्गः।

गच्छन् तिष्ठन् वसन् वापि जाग्रद् वा शयने स्थितः।
मन्त्रैकशरणो मन्त्री मनसामुं मनुं स्मरेत्॥
भुञ्जानो मैथुनं कृत्वा मेहित्वा प्राग् विशुद्धितः।
न स्मरेत् मनसाप्येनं स्मरन् नरकमृच्छति॥

आतुरश्च मुमुक्षुश्च विना शौचं स्मरेद् यदि।
मन्त्रमेनं जपेन्मन्त्री स्वस्थो नामिषभुग् भवेत्॥
परकांस्यागमनो भूत्वा परलालागमनोऽपि वा।
न पर्व्वणि स्त्रियं गच्छेत् न कांश्चित्परयोषितः॥
न नग्नामवलोकेत नान्यमन्त्ररतिर्भवेत्।
रजन्यामन्तिमे यामे देवं स चिन्तयेत् सदा॥
क्षणं लब्ध्वान्यकालेऽपि स्मरन् वै मोक्षमृच्छति।
स्वर्गं वा धर्म्ममर्थं वा सर्व्वथा निष्फलं न तत्॥
देवतागुरुमन्त्रैक्यं सदा चेतसि धारयेत्।
नारायणमनुं जप्त्वा मन्त्रमेवं जपेद् बुधः॥
अस्य द्वात्रिंशद्वर्णादि अष्टाक्षरसमुद्भवाः।
नारसिंहं सहस्राणं जप्त्वा मन्त्रमिमं जपन्॥
ऐहिकं फलमासाद्य विष्णुलोकञ्च गच्छति।
एवं नियमयुक्तस्य साधितोऽयं मनूत्तमः॥
कामधुक् कल्पवृक्षश्च न ते वन्ध्यावधूरिव।

वैरञ्चे,—

अस्मिन् मन्त्रे रतिः स्यादिति पुरुषवरो नार्च्चयेदन्यदेवान्
बध्नीयादञ्जलिं वाप्यवनतशिरसा माल्यजातं सुगन्धि।
नैवेद्यं नापि दद्याज्जपति न च परं साधयेदन्यमन्त्रं
हन्याद् विप्रञ्च पूज्यं गुरुमतिभवति प्रायशो नैव दोषः॥

यः पूज्यं गुरुं हन्यात् विप्रं प्रति अत्यन्तं हन्यात् ताड़येदित्यर्थः।

नाश्नीयात् तैलसिक्तः स्वपतु च विरहे नाभिसि ख्रोसमेतः
स्वप्नं पश्यत्यनुभवति विधौ दूषयेन्नैव नारीम्।
छायां नैवाश्रयीत क्षणमपि मतिमान् दीपखट्वाङ्गनानां
मार्जारस्तम्भमार्जन्यजखरग्रामकोष्ट्रवैभीतिकानां॥
शाखोटारोष्टकानामपि खलु करजाभयानां तरूणां
प्राच्योदीच्यादिजातीनपि विकलगुणान् न स्पृशेत् सूतिकांश्च।
माञ्जिष्ठं चारनालं लसुनमपि तथा गृञ्जनं कांस्यसुक्तिं
तुम्बं तैलावसिक्तं यवसमपि नरो वर्जयेद् यातयामम्॥
पीतं स्वादुनिपुणमपि परिवसितं केवलञ्चैव लोणं
विण्मूत्रच्छर्द्दिरेतांस्यपि रसनया न स्पृशेत् मन्त्रजापी।

नाश्नीयाद् दधि ललितं निशासु विल्वं
नोच्छिष्टं घृतरहितं तथाच मन्त्री।
नाभुञ्जयात् प्रतिपदि नैव षष्ठ्यां
नवम्यां पञ्चम्यां प्रयतमना यथेह भक्तः॥

योगी नावश्ययोनावपि खलु मतिमानन्ययोनौ च रेतो-
निष्पत्तिं नैव कुर्य्यात् पयसि पथि वने देवतानां समीपे।
आरामे चैत्यवृक्षे सदसि बहुजने रङ्गभूमौ गुरूणां
……………हुतवहसदने नैव गच्छेच्च गोष्ठम्॥

शून्यागारे पथि च विपिने केवलञ्चैव भूमौ
सन्ध्याकाले स्फटिकशयने न स्तुते वा कटे वा।
निद्रां गच्छेन्न खलु निभृते प्राङ्गणे वाप्युदग्वा
प्रत्यग् वा विन्यसेत्तु न शिरः केवलं मन्त्रजापी॥

धान्यगोगुरुहुताशनराणां न क्षिपेदुपरि नाप्यनु वंशे ।
नान्धकारभवने च न नग्नो नार्द्रपाणिचरणोऽप्यमुनिर्वा ॥
वेदस्मृत्योर्विरोधं क्वचिदपि विषये नैव कुर्य्याच्च मन्त्री ।
लोकाद्दृष्टिञ्च वश्ये करणमपि तथा तीव्रदुःखात्मकञ्च ॥*

तथा,—

सकलीकृतविग्रहोऽमुना नरसिंहोऽहमिति स्मरेद् बुधः ।
परमायुधभूषणायुतामपि मुद्रां परिकल्पयेत् तनौ ॥
शङ्खारशार्ङ्गसगदाविशिखाशुगाब्ज-
श्रीवत्सकौस्तुभकिरीटवनस्रगाद्याः ।
मुद्रा हरेः प्रियतराः स्वतनौ तु सद्यः
सान्निध्यतर्पणमभूदनया नराणाम् ॥

अत्र शङ्खादिमुद्राणां हस्तेन दर्शनम्। स्वदेहे तिलकेन लिखनमित्यन्ये। सकलीकरणञ्च प्रयोगे वक्ष्यते तच्चावश्यकं तदभावे दोषमाह ।

अन्यथाग्रहणे भवन्ति पुंसां स्मृतिविभ्रान्तिरुपाधिवित्तनाशाः।
सुखमित्रकलत्रपुत्रहानि र्भविता न विचारणीयमस्ति ॥

अन्यथाग्रहणञ्च वक्ष्यमाणसकलीकरणसकलज्ञानविरहः ।

---

## अथोपासनक्रमः ।

रजन्यन्तिमे यामे उत्थायाचम्य प्राणायामभूतशुद्धी कृत्वात्मानं श्रीनृसिंहं ध्यात्वा स्वहृदये अष्टदलपद्मे भक्त्या कियत्कालं ध्यान-

* मूलपुस्तकधृत "वैरञ्च" इतिनामकग्रन्थस्य संवादाप्राप्तेस्तदुद्धृतान्येतानि पद्यानि यथायथमेव रचितानि । सं

शतकोक्तवक्ष्यमाणमार्गेण श्रीनृसिंहध्यानम्। शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुं ध्यात्वा

नमोऽस्तु गुरवे तुभ्यं शुद्धज्ञानस्वरूपिणे।
यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञितम्॥

इति नमस्कारः।

---

## तत्र स्नानादिकम्।

स्मार्त्तान् ब्राह्ममुहूर्त्तोक्तानाचारान् कृत्वा स्नानतर्पणोपयोगिवस्तून्यादाय तीर्थगमनम्। तत्र सर्व्वं स्थापयित्वा प्रार्थना,—

देवता मुनयः प्रेता भूतानि च यथाक्रमम्।
अत्रासतां यथाशक्ति तर्पयिष्यामि वो जलम्॥

मृदमस्त्रेणाष्टधाभिमन्त्र्य खननं प्राङ्मुखस्योदङ्मुखस्य वा। ताञ्च स्नानार्थं शौचार्थञ्च द्विधा कृत्वा स्नानार्थमृदं शुद्धदेशे संरक्ष्य शौचार्थमृदा विण्मूत्रशौचं कृत्वा दन्तधावनं विधाय स्मार्त्तविधिना तर्पणान्तं स्नानं कृत्वा तान्त्रिकस्नानारम्भः। स्नानार्थमृदं त्रिधा विभज्य एकेन भागेन कक्षद्वयपार्श्वद्वयकटिगुह्यसर्व्वाङ्गक्षालनम्। वस्त्रक्षालनम्। पुनराचमनम्। द्वितीयमृद्भागं वामहस्ते कृत्वा मूलेनाष्टधाभिमन्त्र्य पुनस्तां त्रिधा विभज्य प्रथमभागेनास्त्रेण विशुद्धिः (शिरोऽङ्गस्य)। द्वितीयभागेन हृदयाद्यङ्गस्थाने लेपनम्। यस्य यावदङ्गम्। तृतीयभागेन मूलमन्त्रेणापादतलमस्तकं लेपनम्। जले प्रविश्य कराग्रस्थदर्भाग्रान् जले संयोज्य तीर्थान्यावाह्य गङ्गादिनाम्नैव कृत्रिमादिगङ्गादितीर्थावाहनम्। गङ्गायै नमः। गङ्गे त्व-

मेहीति पुनरपि तीरगमनम्। जलं सम्पूज्यमूर्त्तिमयत्वेन ध्यानम्। स्वात्मन इष्टदेवमयत्वेन (च) ध्यानम्। आचमनम्। श्रोत्रनासे पिधाय वक्तस्यार्द्रजले निमज्ज्य मूलमन्त्रं स्मृत्वा मज्जनम्। उन्मज्ज्याचम्य तीरं गत्वा पूर्व्वस्थापितमृदस्तृतीयं भागं त्रिविधा विभज्य वस्त्रचालनार्थं द्वितीयभागं स्थापयित्वा प्रथमभागेन हृदयाद्यङ्गस्थाने लेपनम्। तृतीयेन सर्व्वाङ्गलेपनं कृत्वा जले प्रविश्य मूलमन्त्रेणान्तर्जलजपं कृत्वा उन्मज्ज्य स्वात्मन इष्टदेवं ध्यात्वा शिरस्यभिषेकः। स च कलशमुद्रया मुष्ट्योर्लग्नयोरङ्गुष्ठतर्ज्जन्यौ वहिः कृत्य तर्ज्जन्यग्रेऽङ्गुष्ठाग्रे संयोगरूपया। आपोहिष्ठेति ऋक्त्रयेणाभिषेकत्रयं द्रुपदादिमन्त्रेणेकः शन्न आपइत्यनेनापरः अघमर्षणेनेकः पुनर्भूमित्यादिभिर्नवभिर्मन्त्रैर्नवाभिषेकाः। निमज्ज्योत्थाय पुनरेवमभिषेकः। इति वारत्रयम्। तूष्णीं पञ्चवारं निमज्ज्योत्थायाचम्य तीरं गत्वा वस्त्रपरिधानम्। यथाविधिसन्ध्योपासनान्ते मूलमन्त्रपञ्चविंशतिवारजपेन मन्त्रसन्ध्या। मूलमन्त्रजपेन ब्रह्मयज्ञः।

---

## अथ तान्त्रिकतर्पणम्।

तिलतण्डुलयवान्यतममिश्रतोयेन देवांस्तर्पयामि इति तर्पणम्। ब्रह्म तर्पयामि ब्रह्मर्षींस्तर्पयामि तिलतण्डुलतोयेनाञ्जलिद्वयम्। मनुष्यर्षिगणांश्च तर्पयामीति तिलतण्डुलतोयेनाञ्जलिः। तिलोदकेन पितॄंस्तर्पयामि पितामहांस्तर्पयामि इत्यादिक्रमेण वर्गत्रयतर्पणम्। सर्व्वभूतगणांस्तर्पयामीति

तिलोदकेन। इतरभूतानि तर्पयामीति केवलोदकेन। यव-तण्डुलान्यतमोदकेन आधारशक्तिप्रभृतिपीठदेवतानां तर्पणम्। मूलेन स्वेष्टदेवतर्पणम्। आवरणदेवताविश्वक्सेनतर्पणम्। आर्द्रवस्त्रं निष्पीड्य दासवर्गं तर्पयामीति तर्पणम्। अवशिष्टमृदा वस्त्रक्षालनम्। तीर्थविसर्ज्जनम्। द्विराचम्य देवपितृमनुष्यभूतानि स्वस्थानं गच्छतेति विसृज्य मूलमन्त्रेण तीरक्षालनम्। अर्घ्यहस्तस्य देवगृहगमनम्।

---

## अथ पूजारम्भः।

आचम्य प्रविश्य मूलमन्त्रेण प्रदक्षिणं कृत्वा पूजारम्भः। (एतादृशस्नानाशक्तस्य ब्रह्मस्नानं मानसस्नानम्। तत्राशक्तस्य सर्व्वेन्द्रियाणां विषयेभ्यः प्रत्याहृत्यात्मन्यवस्थानं द्वितीयं मानसस्नानम्। मूलमन्त्रजपो जाप्यस्नानम्। अन्ये श्रुताध्ययनसम्पन्नं स्नात्वा स्पर्शनं संस्कृतस्नानम्। प्रार्थिता विप्रा यद् वा घोषणं कुर्व्वन्ति तव स्नानं परिपूर्णमस्त्विति तदाघोषणस्नानम्। तव स्नानं जातमिति यदा गुरोराज्ञा तदाज्ञास्नानम्। इत्यशक्तविषयाणि।)

---

अत्र ( ) बन्धनीमध्यस्था एते अंशा नैतत्स्नानस्य विषयाः प्रकरणेन महासङ्गतत्वात् परन्तु एतत्पुर्व्वप्रज्ञायामभिविहितस्नानप्रकरणान्तर्गता एवेति प्रतीयन्ते। स्थापिताश्चेह मूलपुस्तकानामनुसारेण। सं

सूर्य्यार्घ्यं दत्त्वा प्रथमं द्वारपालपूजा। शङ्खमन्त्रेण प्रोक्ष्य प्रणवेन जलं पूरयित्वा तेनैव गन्धपुष्पे दत्त्वा शङ्खं स्पृष्ट्वा प्रणवदशवारजपेनार्घ्यं संस्कृत्य तज्जलेनास्त्रेण द्वारं प्रोक्ष्य गन्धपुष्पाभ्यां द्वारपालपूजा। दक्षिणशाखायां मायाशक्तिं वामशाखायां चित्शक्तिं सम्पूज्य दक्षिणशाखायां चण्डजयमातङ्गगणानाम्। उत्तरे प्रचण्डविजयविधातृयमुनालक्ष्मीः। तद्दक्षिणवामयोः शङ्खपद्मनिधी। देहल्यां क्षेत्रपालस्य। समुदायेन वा द्वारपालगणेभ्यो नम इति देहल्यामस्त्रं सम्पूज्य ततोदिव्यदृष्ट्यवलोकनाद्दिव्यविघ्ननिवारणम्। अस्त्राद्भिरन्तरीक्षविघ्ननिवारणम्। पार्ष्णिघातत्रयेण भौमविघ्ननिवारणम्। देहलीवामशाखां किञ्चित् स्पृशताङ्गसङ्कोचेन दक्षिणाङ्घ्रिणा प्रवेशनम्। नैर्ऋत्यां दिशि मध्ये वा वास्त्वधिपतये नमः। ब्रह्मणे नमः। प्राङ्मुखतयोदङ्मुखतया वा पद्मासनाद्येकतमासनेन मृद्वासने उपवेशनम्। दक्षिणे भागे पूजाद्रव्यस्थापनं सुवासितजलकुम्भस्य वामे पश्चात् करप्रक्षालनान्यपात्रम्। परितो घृतप्रज्वलितदीपस्थापनम्। दर्पणचामरतालवृन्तादिराजोपचारसन्निधापनम्। अभीष्टदेवस्य परब्रह्मत्वेन ध्यानम्। स्वयं तन्मयत्वेन। वामे गुरुभ्यो नमः दक्षिणे गणेशाय नम इति नमस्कारः। मध्ये ईश्वराय नमः शेषाय नमः श्रीनृसिंहाय नमः इति नमस्कृत्य "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।

ॐशान्तिः शान्तिः शान्तिः।" प्रथमाभौमिति (?) शक्तिं यागागार-रक्षार्थं जालत्वेन प्रकल्प्य अस्त्रेण तालत्रयमूर्द्धोर्द्धं कृत्वा तेनैव दिग्-बन्धनम्। ऐन्द्रीं दिशं बध्नामीति नमश्चक्राय स्वाहेति यथालिङ्गं दिग्बन्धनं नाराचमुद्रया। ॐ नमो महासुदर्शनाय महाचक्राय महाज्वालाय दीप्तरूपाय सर्व्वतो रक्ष रक्ष हुं फट् स्वाहेति। अस्य परितोऽग्निप्राकारचिन्तनम्। आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः श्रीकूर्म्मो देवता आसनोपवेशने विनियोगः इत्यासनं धृत्वा

पृथिवि त्वं धृता लोका देवि त्वं विष्णुना धृता।
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम्॥

इति प्रार्थना। आसनशक्तये कमलासनाय नम इति स्वासन-मभिमन्त्र्य भूतशुद्धिः।

करकच्छपिकां बद्धा द्वादशान्तपदे ध्रुवे।
सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत्॥
सोऽहं मन्त्रेण भूतानां सूक्ष्मात् पावञ्च (?) चिन्तयेत्।
कण्ठभ्रूमध्यपर्य्यन्ते षड्विन्दुयुतमण्डलम्॥
कृष्णं वायोस्तत्र वीजं विचिन्त्य च तदुद्भूतैः।
मरुद्भिः शोषयेद् देहं कल्पशेषसमं बुधः॥
नाभ्यादिकण्ठपर्य्यन्ते स्थानेऽग्नेर्वह्निमण्डलम्।
रक्तं त्रिकोणरंवीजयुक्तं स्वस्वस्तिकं ततः॥
तस्य तेनाग्निना देहं कल्मषेण समं दहेत्।
जान्वादिनाभिपर्य्यन्ते स्थानेऽपामर्द्धचन्द्रवत्॥

शुक्लं पद्मान्वितं गङ्गामण्डलं तत्र वं स्मरेत्।
तदुद्यतामृताम्भोभिः प्लावयेत् सलिलं ततः॥
तत्र एकार्णवध्यानं भुव आब्रह्मरन्ध्रकम्।
आकाशमण्डलं धूम्रं हं वीजाव्यञ्च मध्यजम्॥
विचिन्त्य विपुलाकाशं तदुत्थं चिन्तयेद् बुधः।
पादादिजानुपर्य्यन्तं भूस्थाने वज्रलाञ्छितम्॥
चतुरस्रं भुवोविम्बं पीतं लं वीजमेव तु।
प्रलयाम्भोनिधौ ध्यात्वा ब्रह्माण्डञ्च तदुत्थितम्॥
सौवर्णप्रभवेणैनं द्विधाकृत्वा तु कल्पयेत्।
विचिन्त्य भूतसूक्ष्माणि समानीय परात्मनः॥
कल्पयेदात्मनो देहं कल्मषेण विनोद्य तम्।
हंसमन्त्रेण चात्मानमानयेत् परमात्मनः॥

अथवा गृहस्थो न दहेदिति गृहस्थस्य देहदाहात्मकभूतशुद्धावनधिकारात् एवंविधा भूतशुद्धिः,—धर्म्मकन्दं ज्ञाननालमैश्वर्य्याष्टदलं वैराग्यकर्णिकं हृदयाम्भोजमुकुलितं ध्यात्वा तारेण विकसितं कृत्वा तत्कर्णिकास्थं चैतन्यात्मकं जीवं प्लुतप्रणवोच्चारणेन सुषुम्नानाड़ीमार्गेण निर्गमय्य द्वादशान्तस्थसहस्रदलपद्मस्थपरमात्मना सहैकीकृत्य स्वशरीरकल्मषजातं पुरुषाकारेण कुक्षौ विचिन्त्य—

ब्रह्महत्याशिरस्कन्तु स्वर्णस्तेयभुजद्वयम्।
सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम्॥

तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम्॥
खड्गचर्म्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत्।

तं पापपुरुषं नाभिप्रदेशस्थषट्कोणषड्विन्दुलाञ्छितकृष्णवर्णं-वायुमण्डलान्तर्गतयमितिवायुवीजोत्थितवायुना शोषयित्वा पुनस्तं पापपुरुषं हृदयस्थितत्रिकोणस्वस्तिकाङ्कितान्निमण्डलान्तःस्थित-रमित्यग्निवीजोत्थिताग्निना दाहयित्वा भस्म दक्षिणनासाद्वारा निःसार्य्य भ्रूमध्यस्थितार्द्धचन्द्राकारपद्माङ्कितशुक्लवर्णामृतं मण्ड-लान्तःस्थितवमित्यमृतवीजोत्थितामृतधारया निष्कल्मषं स्वशरी-रमाप्लाव्य शुद्धं कृत्वा द्वादशान्तस्थितमात्मानं तेन सह सुषुम्ना-नदीमार्गेण पूर्व्वोक्तहृदयकमले प्रणवेन स्थापयेत्। भूतशुद्ध्यनन्तरं स्वस्य प्राणप्रतिष्ठा। प्राणप्रतिष्ठामन्त्रस्य ब्रह्मा ऋषिः विराट् छन्दः प्राणो देवता ॐ वीजं स्वाहा शक्तिः आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हों हं सः सोऽहं अमुष्य प्राणा इह प्राणा अमुष्य जीव इह स्थितः अमुष्य सर्व्वेन्द्रियाणि मनोबुद्धिरहङ्का-रश्चित्तं पृथिव्यप्तेजोवाय्वाकाशशब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षु-र्जिह्वाघ्राणवाक्पाणिपादपायूपस्थजीवप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। हों हं सः सोऽहं स्वाहा। अमुष्यपदस्थाने मन्त्रिपदं दत्वा स्वस्य प्राणप्रतिष्ठा।

---

## अथ करशुद्धिः।

गन्धेन करावन्योन्यं घर्षयित्वाऽस्त्रेण तालत्रयदिग्बन्धनम्। मन्त्रराजनृसिंहमन्त्रस्य ब्रह्मऋषिरनुष्टुप् छन्दः श्रीनृसिंहो देवता हं बीजं ईं शक्तिः पूजायां विनियोग इति मूलमन्त्रवारत्रयजपेन दक्षिणनासायां प्राणान् रेचयित्वा पुनर्मूलमन्त्रवारत्रयजपेन वाम-नासायां पूरणं कृत्वा मूलमन्त्रवारत्रयजपेन निश्चलवामनासापुट-द्वयरोधेन कुम्भकं कुर्य्यात्। अपानाकुञ्चनञ्च कुम्भककाले। एवं पुनर्वारद्वयम्।

---

## ततो मातृकान्यासः।

मातृकामन्त्रस्य ब्रह्मऋषि र्गायत्रीच्छन्दः सरस्वती देवता न्यासे विनियोगः।

ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्सन्ध्यग्रकेषु च॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके।
ककुद्यंसे च हृत्पूर्व्वपाणिपादयुगे तथा॥
जठराननयो र्न्यसेन्मातृकार्णान् यथाक्रमात्।

अं नम इति ललाटे आं नम इति मुखवृत्ते इं नम इति नेत्रे ईं नम इति वामनेत्रे उं नम इति कर्णे ऊं नम इति वाम-कर्णे ऋं नम इति नासिकायां ॠं नम इति वामनासिकायां ऌं नम इति गण्डे ॡं नम इति वामगण्डे एं नम इत्योष्ठे ऐं नम

इत्यधरोष्ठे श्रों नम इति दन्तपंक्तौ श्रौं नम इत्यधरदन्तपंक्तौ श्रं नम इति शिरसि श्रः नम इत्यास्ये कं नम इति बाहुमूले खं नम इति खर्परसन्धौ गं नम इति मणिबन्धसन्धौ घं नम इत्यङ्गुलिमूलेषु ङं नम इत्यङ्गुल्यग्रेषु। एवं चं नमः छं नमः जं नमः झं नमः ञं नमः। टं नमः उरुमूले ठं नमः जानुसन्धौ डं नमः गुल्फसन्धौ ढं नमः पादाङ्गुलिमूले णं नमः पादाङ्गुल्यग्रकेषु। तं नमः वामोरुमूले थं नमः वामजानुसन्धौ दं नमः वामगुल्फसन्धौ धं नमः वामपादाङ्गुलिमूले। नं नमः वामपादाङ्गुल्यग्रेषु। पं नमः दक्षिणपार्श्वे फं नमः वामपार्श्वे बं नमः पृष्ठे भं नमः नाभौ मं नमः उदरे। यं त्वगात्मने नम इति हृदि रं असृगात्मने नम इति दक्षिणांशे लं मांसात्मने नम इति ककुदि वं मेदआत्मने नम इति वामांशे शं अस्थ्यात्मने नम इति हृदादिदक्षिणबाहौ षं वसात्मने नम इति हृदादिवामबाहौ सं शुक्रात्मने नम इति हृदादिदक्षिणपादे हं प्राणात्मने नम इति हृदादिवामपादे लं शक्त्यात्मने नम इति जठरे क्षं चक्रात्मने नम इति मुखे। इति सर्व्वाङ्गे व्यापकन्यासः। ध्यानम्

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्द्दाकलितशशिकलामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि॥

सोऽहमस्मीति ध्यानम्। तत्र एष्वेव स्थानेषु केशवादिन्यासः स च कामवीजपूर्व्वकः। श्रीकामस्य श्रीवीजपूर्व्वकः।

अमुनैव रमापुरःसरं भजते यो मनुजो विधिं बुधः ।
समुपेत्य रमां प्रथीयसीं पुनरन्ते हरितां व्रजत्यसौ ॥

समुपेत्य रमामन्ते परं पदं यातीति वचनात् । प्रजापतिः । गायत्री । श्रर्द्धलक्ष्मीश्वरः ।

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरलाकल्पमाश्लेषलोभा-
देकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्योः ॥

ललाटादिस्थानेषु अं श्रीं केशवाय कीर्त्त्यै नमः । ॐमित्यादि सर्व्वत्र । आं श्रीं नारायणाय कान्त्यै नमः । इं श्रीं माधवाय तुष्ट्यै नमः । ईं श्रीं गोविन्दाय पुष्ट्यै नमः । उं श्रीं विष्णवे धृत्यै नमः । ऊं श्रीं मधुसूदनाय शान्त्यै नमः । ऋं श्रीं त्रिविक्रमाय क्रियायै नमः । ॠं श्रीं वामनाय दयायै नमः । ऌं श्रीं श्रीधराय मेधायै नमः । ॡं श्रीं हृषीकेशाय हर्षायै नमः । एं श्रीं पद्मनाभाय श्रद्धायै नमः । ऐं श्रीं दामोदराय लज्जायै नमः । ओं श्रीं वासुदेवाय लक्ष्म्यै नमः । औं श्रीं सङ्कर्षणाय सरस्वत्यै नमः । अं श्रीं प्रद्युम्नाय प्रीत्यै नमः । अः श्रीं अनिरुद्धाय रत्यै नमः । कं श्रीं चक्रिणे जयाय नमः । खं श्रीं गदिने दुर्गायै नमः । गं श्रीं शार्ङ्गिणे प्रभायै नमः । घं श्रीं खड्गिने सत्यायै नमः । ङं श्रीं शङ्खिने चण्डायै नमः । चं श्रीं हलिने वाण्यै नमः । छं श्रीं मुषलिने विनाशिन्यै नमः । जं श्रीं शूलिने विजयायै नमः । झं श्रीं पाशिने विरजायै नमः ।

ञं श्रीं अङ्गुशिने विश्वायै नमः। टं श्रीं मुकुन्दाय वरदायै नमः। ठं श्रीं सुनन्दाय सुनन्दायै नमः। डं श्रीं नन्दिने स्मृत्यै नमः। ढं श्रीं नराय ऋद्ध्यै नमः। णं श्रीं नरकजिते समृद्ध्यै नमः। तं श्रीं हरये शुद्ध्यै नमः। थं श्रीं कृष्णाय वृद्ध्यै नमः। दं श्रीं सत्याय भक्त्यै नमः। धं श्रीं सात्वताय मत्यै नमः। नं श्रीं शौरये क्षमायै नमः। पं श्रीं शूराय रमायै नमः। फं श्रीं जनार्दनाय उमायै नमः। बं श्रीं भूधराय क्लेदिन्यै नमः। भं श्रीं विश्वमूर्त्तये क्लिन्नायै नमः। मं श्रीं वैकुण्ठाय वसुदायै नमः। यं त्वगात्मने पुरुषोत्तमाय वसुधायै नमः। रं श्रीं रक्तात्मने बलिने परायै नमः। लं श्रीं मांसात्मने बलानुजाय परायणायै नमः। वं श्रीं मेदआत्मने वामनाय सूक्ष्मायै नमः। शं श्रीं अस्थ्यात्मने वृषघ्नाय सन्ध्यायै नमः। षं श्रीं मज्जात्मने वृषाय प्रज्ञायै नमः। सं श्रीं शुक्रात्मने हंसाय प्रभायै नमः। हं श्रीं प्राणात्मने वराहाय निशायै नमः। ळं श्रीं शक्त्यात्मने विमलाय अमोघायै नमः। क्षं श्रीं क्रोधात्मने नरसिंहाय विद्युतायै नमः।

---

## अथ तत्वन्यासः।

इत्यच्युतोक्ततत्वात्मने नम इत्यादिरूपेण इति सम्प्रदायः। मं नमः पराय जीवतत्वात्मने नमः। भं नमः पराय प्राणतत्वात्मने नमः। इति इयं सकलवपुषि। बं नमः पराय मतितत्वात्मने

नम इति हृदये । फं नमः पराय अहङ्कारतत्वात्मने नम इति हृदि । पं नमः पराय मनस्तत्वात्मने नम इति हृदि । नं नमः पराय शब्दतत्वात्मने नमः शिरसि । धं नमः पराय स्पर्शतत्वात्मने नमः मुखे । दं नमः पराय प्राणतत्वात्मने नमः प्राणे । थं नमः पराय रसतत्वात्मने नमः गुह्ये । तं नमः पराय गन्धतत्वात्मने नमः पादयोः । णं नमः पराय श्रोत्रतत्वात्मने नमः कर्णयोः । ढं नमः पराय त्वक्तत्वात्मने नमः चर्मणि । डं नमः पराय चक्षुस्तत्वात्मने नमः चक्षुषोः । ठं नमः पराय रसनातत्वात्मने नमः जिह्वायाम् । टं नमः पराय प्राणतत्वात्मने नमः प्राणे । ञं नमः पराय वायुतत्वात्मने नमः मुखे । झं नमः पराय पाणितत्वात्मने नमः करयोः । जं नमः पराय पादतत्वात्मने नमः पादयोः । छं नमः पराय पायुतत्वात्मने नमः पायौ । चं नमः परायोपस्थतत्वात्मने नमः उपस्थे । ङं नमः पराय आकाशतत्वात्मने नमः मूर्ध्नि । घं नमः पराय वायुतत्वात्मने नमः मुखे । गं नमः पराय तेजस्तत्वात्मने नमः हृदि । खं नमः पराय वाततत्वात्मने नमः गुह्ये । कं नमः पराय पृथिवीतत्वात्मने नमः पादयोः । शं नमः पराय हृत्पुण्डरीकतत्वात्मने नमः हृदि । हं नमः पराय द्वादशकलात्मने सूर्य्यमण्डलाय नमः हृदि । सं नमः पराय षोड़शकलात्मने सोममण्डलाय नमः हृदि । रं नमः पराय दशकलात्मने वह्निमण्डलाय नमः हृदि । मण्डलत्रये तत्वपदाभाव इत्याहुः । यं नमः पराय परमेष्ठितत्वात्मने वासुदेवाय नमः शिरसि । षं नमः पराय पुंतत्वात्मने सङ्कर्षणाय नमः मुखे । लं नमः पराय विश्व-

तत्त्वात्मने प्रद्युम्नाय नमः हृदि। वं नमः पराय निवृत्तितत्त्वात्मने अनिरुद्धाय नमो गुह्ये। लं नमः पराय सर्व्वतत्त्वात्मने नारायणाय नमः पादयोः। क्ष्रौं नमः पराय कोपतत्त्वात्मने नृसिंहाय नमः। इति तत्त्वन्यासः।

---

## अथ प्राणायामः।

### तत्त्वाधारभावना।

आधारनाभिपर्य्यन्ते न्यासचतुष्टयम्। आधारशक्तये नमः। महामण्डुकाय नमः। कालाग्निरुद्राय नमः। कूर्म्माय नमः। दक्षांशे अधर्म्माय नमः। वामांशे ज्ञानाय नमः। वामोरुमण्डले वैराग्याय। दक्षोरुमूले ऐश्वर्य्याय। अधर्म्माय नमः मुखे। वामपार्श्वे अज्ञानाय। नाभौ अवैराग्याय। दक्षिणपार्श्वे अनैश्वर्य्याय। हृदि अनन्ताय। आनन्दकन्दाय। सम्बिन्नालाय पद्माय। प्रकृतिपत्रेभ्यः। विकारकेशरेभ्यः। पञ्चाशद्वर्णबीजादिकर्णिकायै। अं आदित्यमण्डलाय। उं सोममण्डलाय। मं वह्निमण्डलाय। सं सत्वाय। रं रजसे। तं तमसे। आं आत्मने नमः। अं अन्तरात्मने नमः। पं परात्मने। ह्रीं ज्ञानात्मने मुखे विमलायै। वामांशे उत्कर्षिण्यै। वामपार्श्वे ज्ञानाय। वामोरुमूले क्रियायै। नाभौ योगायै। दक्षोरुमूले प्रह्वायै। दक्षिणपार्श्वे सत्यायै। दक्षांशे ईशानायै। हृदि अनुग्रहायै। ततः पीठमन्त्रन्यासः,—

ॐनमो भगवते विष्णवे वासुदेवाय सर्व्वात्मसंयोगपीठात्मने नमः । इत्याधारभावना ।

---

## हृदयभावना ।

हृत्पद्मे अव्यक्तं परमाकाशं चिन्तयित्वा तन्मध्ये स्फुरत्तामरस-प्रख्यं प्रणवं विचिन्त्य तदुत्थितं विद्युत्पुञ्जसमप्रभं मूलमन्त्रात्मकं तेजश्चिन्तयेत् । इति हृदयभावना ।

हृत्पद्मगतप्रणवात्मकतेजसो निर्गतं दीपात् दीपान्तरमिव मूलमन्त्रात्मकं तेजो विचिन्त्य निश्वासमार्गेण करतलद्वयगतं चिन्तयेत् ।

---

## ततः करन्यासः ।

उग्रं वीरमङ्गुष्ठाभ्यां नमः । महाविष्णुं तर्ज्जनीभ्यां स्वाहा । ज्वलन्तं सर्व्वतोमुखं मध्यमाभ्यां वषट् । नृसिंहं भीषणमनामिकाभ्यां हुम् । भद्रं मृत्युमृत्युं कनिष्ठाभ्यां वौषट् । नमाम्यहं करतलपृष्ठाभ्यामस्त्राय फट् । पञ्चाङ्गपक्षे पादचतुष्टयेनानामिका-पर्य्यन्तम् । समस्तेन कनिष्ठाभ्यां फट् । इति हस्तभावना ।

---

## अथ देहभावना।

मूलतेजोयुक्तहस्ताभ्यां मूलमन्त्रतेजोव्याप्तं देहं व्यापकन्यास-मुद्रया कल्पयेत्। ततोन्यासः,—उग्रं वीरं हृदयाय नमः। महा-विष्णुं शिरसे स्वाहा। ज्वलन्तं सर्व्वतोमुखं शिखायै वषट्। नृसिंहं भीषणं कवचाय हुम्। भद्रं मृत्युमृत्युं नेत्राभ्यां वौषट्। नमाम्यहं अस्त्राय फट्। पञ्चाङ्गपक्षे चतुर्भिः पादैश्चत्वारि समैतैस्तैरस्त्रम्।

---

## अथाक्षरन्यासः।

सशिरोललाटदृग्युगमुखकरपदसन्धिकेषु साग्रेषु।

उदरहृद्गोर्गलपार्श्वेषु पृष्ठे ककुदि क्रमान्न्यसेद् वर्णान्॥

"प्रत्यक्षरमुभयत ॐकारो भवतीत्यक्षराणां न्यासमुपदिशन्ति ब्रह्म-वादिन" इति श्रुतेः। ॐ उं ॐ इति शिरसि। ॐ ग्रं ॐ ललाटे। एवं क्रमेण। एवं न्यासः। ततो मन्त्रस्याद्यद्वादशाक्षरेषु द्वादशाक्षरमन्त्रस्यैकैकाक्षरयोगः। ततः अष्टाक्षरे अष्टाक्षरस्यैका-क्षरयोगः। पुनश्चेद् द्वादशाक्षरेषु द्वादशाक्षरस्यैकैकाक्षरयोगः। एवं न्यासः। ॐ ॐ उं ॐ शिरसि। ॐ नं ग्रं ॐ ललाटे। ॐ मों वीं ॐ चक्षुषि। एवं क्रमेण न्यासः।

मूर्द्धन्यक्ष्णोश्च वदने दोर्मूले हृदये तथा।

नाभिगुह्योरुजान्वन्तपादेषु पदशो न्यसेत्॥

अथ जानु जङ्घा। तथा जानुनि पदं जङ्घायां पदमिति न्यासः।

अथ नरसिंहरचाकरसान्निध्यकरसर्व्वरचाकरादिदशविधन्यासः। अथ प्रथममचरन्यासः। अङ्गुष्ठमूलमध्याग्रपर्व्वसु शेषाङ्गुली च हस्तयोरङ्गुष्ठादिक्रमेण त्रिंशदचराणि। करतलद्वये अचरद्वयम्। अथापरो मूर्द्ध्नि शिरसि ललाटे भ्रुवोः नेत्रयोः नेत्राधः कपोलयोः दन्तपंक्त्योः चिबुके उत्तरोष्ठे कण्ठे नासिकायां दक्षिणभुजे वामभुजे हृदये सर्व्वतनौ नाभ्यां दक्षिणकरतले वामकरतले कटिस्थाने मेढ्रे उर्व्वोः जान्वोः जङ्घयोः पादाङ्गुलिषु सर्व्वसन्धिषु रोमकूपेषु रक्तास्थिमज्जासु। इत्यचरन्यासः।

---

## अथ द्व्यचरन्यासः।

उग्रं पादयोः। वीरं गुल्फयोः। महा जान्वोः। विष्णुं कट्योः। ज्वलं नाभ्याम्। तं स हृदि। र्व्वतो बाह्वोः। मुखं कण्ठे। नृसिं चिबुके। हं भी दन्ते। षणं ओष्ठे। भद्रं गण्डयोः। मृत्यु कर्णयोः। मृत्युं नासिकयोः। नमा नेत्रे। म्यहं मूर्द्ध्नि।

---

## अथ पदन्यासः।

मुखे मूर्द्धि तथा नासाचक्षुःश्रोत्रे च विन्यसेत्।
आस्ये च हृदये नाभौ कटिजानुपदेष्वपि॥

मुखे मुखवृत्ते। आस्ये श्रोष्ठद्वयमध्ये।

---

## अथ चतुरक्षरन्यासः।

पादाग्रे नयने श्रवणे नाभौ हृदि मूर्द्धि बाह्वोः पादयोः।

---

## अथ पादन्यासः।

मूर्द्धि हृदि नाभौ सर्व्वाङ्गे।

---

## अथार्द्धन्यासः।

मूर्द्धि हृदयपर्य्यन्तं अर्द्धं हृदयात्पादपर्य्यन्तमर्द्धम्। ततः समस्तेन सर्व्वाङ्गन्यासः।

---

## अथ उग्रन्यासः।

उग्रमुग्रं नमाम्यहमिति मुखे। वीरमुग्रं नमाम्यहमिति शिरसि। महाविष्णुमुग्रं नमाम्यहमिति घ्राणयोः। ज्वलन्तमुग्रं नमाम्यहमिति चक्षुषोः। सर्व्वतोमुखमुग्रं नमाम्यहमिति

श्रोत्रयोः। नृसिंहमुग्रं नमाम्यहमित्यास्ये। भीषणमुग्रं नमाम्यहमिति हृदि। भद्रमुग्रं नमाम्यहमिति नाभौ। मृत्युमृत्युमुग्रं नमाम्यहं नमाम्युग्रं नमाम्यहमहमुग्रं नमाम्यहमिति कट्यादिपादपर्य्यन्तम्। तेष्वेव स्थानेषु उग्रं नरसिंहं नमाम्यहं वीरं नरसिंहं नमाम्यहं महाविष्णुं नरसिंहं नमाम्यहं ज्वलन्तं नरसिंहं नमाम्यहं सर्व्वतोमुखं नरसिंहं नमाम्यहं नृसिंहं नरसिंहं नमाम्यहं भीषणं नरसिंहं नमाम्यहं भद्रं नरसिंहं नमाम्यहं मृत्युमृत्युं नरसिंहं नमाम्यहं नमामि नरसिंहं नमाम्यहमहं नरसिंहं नमाम्यहम्। इत्येकादशविधन्यासः।

---

## अथ मन्त्रार्णोक्तो हरिन्यासः।

मन्त्राद्यवर्णं सविन्दुकं मूलाधारे तदुपरि नाभिपर्य्यन्तं वर्णचतुष्टयम्। तदुपरि भ्रूमध्यपर्य्यन्तं वर्णषट्कम्। ततो वर्णत्रयं नेत्रत्रितये ततो वर्णद्वयकं वा हृदयाङ्गुलीषु। वर्णद्वयं पादद्वये। ततोऽन्यवर्णं मूर्द्धादिपादपर्य्यन्तम्। अयं हरिन्यासो हरिसारूप्यप्रापकः। अस्य माहात्म्यं हरिरेव जानाति नापरः।

---

## अक्षरसकलीकरणम्।

अथ वेदोक्त-नित्यात्मसकलीकरणमन्त्रात्मकदेवतानामैकीभावना। तत्र सर्व्वभूतात्मानं नरसिंहरूपिणमात्मानं मन्त्राक्षरवर्णेन

हंकारेण ध्यात्वा म्यइतिवर्णं प्रकृतिरूपं महत्तत्वादुत्पन्नं स्वात्मनि चिन्तयेत्। नमा वर्णौ देहादिष्वात्मवृत्तिरूपावहंकारचित्तयोरुत्पन्नौ विचिन्त्य त्ववर्णं निश्चयात्मकरूपमहङ्कारादुत्पन्नं विचिन्त्य त्वु वर्णं सङ्कल्पविकल्पात्मकमनोबुद्धेरुत्पन्नं स्वस्मिन् विचिन्तयेत्। त्ववर्णात्मक आकाशः सर्व्वावकाशादुत्पन्न इति चिन्त्यः। त्वुं वर्णात्मको वायुराकाशादुत्पन्न इति चिन्त्यः। स वायुः स्वशरीरे प्राणादिद्वारावस्थित इति। तृ वर्णात्मकं तेजो वायोरुत्पन्नं तस्य स्वशरीरे चिन्तनम्। यं वर्णात्मिका आपस्तेजस उत्पन्नाः स्वशरीरे विचिन्त्य ष-वर्णात्मिका भूमिरद्भ्य उत्पन्ना तस्याः स्वशरीरे चिन्तनम्। श्री-वर्णात्मकं श्रोत्र आकाशादुत्पन्नं तस्य स्वशरीरे चिन्तनम्। सिं वर्णात्मकं चक्षुस्तेजस उत्पन्नं स्वशरीरे चिन्त्यम्। खं वर्णात्मकं घ्राणं पृथिव्या उत्पन्नं स्वशरीरे चिन्त्यम्। सुवर्णात्मकः शब्दो भूताद्यहङ्कारादुत्पन्नः स्वशरीरे चिन्त्यः। तो वर्णात्मकः स्पर्शः शब्दादुत्पन्नः स्वदेहे चिन्त्यः। वं-वर्णात्मकं रूपं स्पर्शादुत्पन्नं तत् स्वदेहे चिन्त्यम्। स वर्णात्मको रसो रूपादुत्पन्नः स्वदेहे चिन्त्यः। तं वर्णात्मको गन्धो रसादुत्पन्नः स्वदेहे चिन्त्यः। लं वर्णात्मिका वाचस्तेजसोऽहङ्कारादुत्पन्नाः स्वदेहे चिन्त्याः। ज्व-वर्णात्मकौ पाणी वाच उत्पन्नौ स्वदेहे चिन्त्यौ। लां वर्णात्मकौ पादौ पाणिरुत्पन्नौ स्वदेहे चिन्त्यौ। वि-वर्णात्मको पायुः पादादुत्पन्नः स्वदेहे चिन्त्यः। द्वा वर्णात्मक उपस्थः पायोरुत्पन्नः स्वदेहे चिन्त्यः। म-वर्णात्मकं वचनं वाच उत्पन्नं स्वदेहे चिन्त्यम्। रं वर्णात्मकमादानं पाणिरुत्पन्नं स्वदेहे चिन्त्यम्। वी-वर्णात्मकं गमनं पादादुत्पन्नं स्वदेहे

चिन्त्यम्। यं वर्णात्मको विसर्गः पायोरुत्पन्नः स्वदेहे चिन्त्यः। उ-वर्णात्मक आनन्द उपस्थादुत्पन्नः स्वदेहे चिन्त्यः। इत्थं चिन्तयित्वा द्वात्रिंशद्रूपं जगत् स्वदेहे द्वात्रिंशदक्षरमये कल्पयित्वा विराट्‌रूपेण श्रीनृसिंहोऽहमिति चिन्तयेत्। पुनश्च मन्त्रस्यानुलोमपाठेन उ-वर्णात्मकानन्दस्य यं वर्णात्मके विसर्गे लय एवं क्रमेणाविद्याशक्तिलयपर्य्यन्तं चिन्तयित्वा चिदामात्रया नृसिंहोऽहमिति चिरं तिष्ठेत्। पुनर्मन्त्रप्रतिलोमपाठेन यथोक्तरूपेणोत्पत्तिं कल्पयित्वा सर्व्वात्मको नृसिंहोऽहमिति चिन्तयेत्। इत्यक्षरसकलीकरणम्।*

---

## अथ पदसकलीकरणम्।

प्रथमपदं भूः। द्वितीयं जलम्। तृतीयं तेजः। चतुर्थं वायुः। पञ्चममाकाशः। षष्ठं मनः। सप्तमं बुद्धिः। अष्टममहङ्कारः। नवमं चित्तम्। दशमं मूलप्रकृतिः। एकादशमात्मा। अहमात्मनि। नमामि रूपा प्रकृतिः। प्रकृतेर्मृत्यु-मृत्युरूपं चित्तम्। चित्ताद् भद्ररूपोऽहङ्कारः। अहङ्कारात् भीषणपदरूपा बुद्धिः। बुद्धेर्नृसिंहपदरूपं मनः। मनसः सर्व्वतोमुखं रूपमाकाशः। आकाशाज्ज्वलन्तं

---

* अत्र उग्रं वीरमित्यादि द्वात्रिंशदक्षरमयमन्त्रस्य न सर्व्वाक्षराणि सकलीकृतानि नृसिंहमित्यस्य हं पदस्य भद्रमिति पदद्वयस्य च सकलीकरणं सर्व्वेष्वेवादर्शपुस्तकेषु प्रमादात् प्रच्युतम्।

पद्रूपो वायुः। वायोर्महाविष्णुं तेजः। तेजसो वीरं पदरूपमापः। एवं भद्रः उग्रं पदरूपा भूमिः। एवं सर्व्वं स्वदेहे विचिन्त्य विराट्रूपेण श्रीनृसिंहोऽहमिति चिरं विचिन्त्य पुनः पृथ्व्या अप्सु लयः अपां तेजसि तेजसो वायौ वायोराकाशे आकाशस्य मनसि मनसो बुद्धौ बुद्धेरहङ्कारे अहङ्कारस्य चित्ते चित्तस्य विद्यायां तस्यावात्मनि लयं चिन्तयित्वा स्वयं बुद्धिचिन्मात्रयोः स्थित्वा श्रीनृसिंहोऽहमिति भावयित्वा पुनः प्रतिलोमपदपातेनोत्पत्तिं पूर्व्ववद् विचिन्त्य सर्व्वात्मकस्तिष्ठेदिति।

---

## अथ पादसकलीकरणम्।

प्रथमपादः पृथ्वी। द्वितीयो जलम्। तृतीयस्तेजः। चतुर्थो वायुः। समस्तमन्त्र आकाशः। हं बीजं परमात्मा पञ्चभूतान्यात्मा। तच्च चित्। नान्यत् किञ्चित्। बीजात्परमात्मन आकाशः। तस्माच्चतुर्थपादरूपो वायुः। तस्मात् तृतीयपादात्मकं तेजः। तस्मात् प्रथमः पादः पृथिवी। एवं स्वदेहे मन्त्रात्मकं सकलं कल्पयित्वा विराट्रूपेण श्रीनृसिंहोऽहमिति चिन्तयेत्। पुनश्चानुलोमक्रमेण पृथिव्या अप्सु अपां तेजसि तेजसो वायौ वायोराकाशे आकाशस्य परमात्मनि लयं कल्पयित्वा शुद्धचिन्मात्ररूपो श्रीनृसिंहोऽहमिति चिरं विचिन्त्य पुनरपि सृष्टिक्रमेण सर्व्वरूपो मन्त्रमयः श्रीनृसिंहोऽहमिति चिरं चिन्तयेत्।

नरसिंहोऽहमित्येवं यावद्बुद्धिः प्रजायते।
यावद्धि बुद्धिविस्तारस्तावद् देहस्य न स्मृतिः॥
अभीक्ष्णाभ्यसनाद् विद्वान् तन्मयत्वमवाप्स्यति।
शुष्कद्रुमोदरगतो यथा वह्निर्महान् क्रमात्॥
भस्मीकरोति सकलं तद्वत् तन्मयतां व्रजेत्।
स्मृते सकलकल्याणभाजनं यत्र जायते॥
पुरुषस्तमजं नित्यं न स्मरेत्को नु बुद्धिमान्।

---

## अथ साकारध्यानम्।

### तत्र शान्तरूपस्य।

जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद्बाहुसंस्पृष्टकेश-
चक्रं शङ्खञ्च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः॥
ज्वालामालापरीतं रविशशिदहनतीक्ष्णं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमपि वहन् पातु वो नारसिंहः॥

इति शान्तध्यानम्।

---

### उग्रध्यानम्।

उद्यद्भास्वत्सहस्रप्रभमग्निनिभं वीक्षणं विभ्रतन्तं
वह्नीनङ्काय विद्युत्ततिविततसटाभीषणं भूषणैश्च।
दिव्यैराद्दीप्तदेहं निशितनखलसद्बाहुदण्डैरनेकैः
सम्भिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि॥

परमायुधभूषणादिमुद्रा-दर्शनम्। शङ्खचक्रशार्ङ्गशरत्रिशूलगदा-पद्मश्रीवत्सकौस्तुभकिरीटवनमालावैनतेयमुद्रा दर्शयेत् सान्निध्य-करणार्थम्।

---

## अत्रावसरे मानसपूजा।

नृसिंहाराधने मानसपूजा मुख्या। "धियैव पूर्व्व" मिति प्रपञ्चसारात्। हृदि बिम्बमुद्रां कृत्वा स्वबीजोच्चारणं मानस-काले। तत्र विना नैवेद्यं पञ्चोपचारा इति केचित्। अन्ये तु नैवेद्यदानमपीच्छन्ति। मूलमन्त्रमुच्चार्य्य सायुधाय सर्व्वात्मने भगवते नरसिंहाय गन्धं कल्पयामीति वक्ष्यमाणगन्धं मनसा निवेद्य पुष्पधूपदीपान् निवेद्य नैवेद्यं नानाविधं मनसा सङ्कल्प्य निवेदयेत्। भोजनकाले तु वैश्वदेवः। मूलाधारे त्रिकोणाग्नि-कुण्डध्यानम्। तत्र मूलमन्त्रमत्याग्निध्यानम्। धर्म्माधर्म्मेन्ध-नध्यानम्। मनसा स्रुवेण। मूलमन्त्रमुच्चार्य्य एवमस्तं जुहोमि स्वाहा। पैशुन्यं हविः कामो हविः क्रोधो हविः लोभो हविः मोहो हविः मदो हविः मात्सर्य्यं हविः। ततो मूलमन्त्रस्य मनसा जपः। देवाय समर्पणम्। ततोऽर्घ्यसंस्कारः। अग्रे भूमि-लेपनम्। तत्र चतुरस्रलिखनम्। तन्मध्ये षट्कोणं तन्मध्ये त्रिकोणं तत्र आग्नेयादिकोणेष्वङ्गचतुष्टयपूजा। दिक्षु नेत्रस्य मध्ये अस्त्रस्य। तत्र शङ्खाधारस्थापनम्। दशकलात्मने वह्नि-

मण्डलाय नम इति तत्र पूजा। शङ्खास्त्रेण चालनम्। शङ्खाधारे स्थापनम्। तत्र द्वादशकलात्मने सूर्य्यमण्डलाय नम इति शङ्खपूजनम्। प्रतिलोममातृकापाठेन शङ्खे जलपूरणम्। उं षोड़शकलात्मने सोममण्डलाय नम इति शङ्खजले पूजा।

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु॥

इति सूर्य्यमण्डलात् तीर्थावाहनम्। हृदा गन्धं शिरसा पुष्पं शिखामन्त्रेण तेजोऽभिध्यानम्। नेत्रेण वीचणं कवचेनावगुण्ठनमस्त्रेण दिग्बन्धनं धेनुमुद्रया अमृतीकरणं शङ्खमुद्रादर्शनं योनिमुद्रयोद्दीपनमङ्गमन्त्रैः पूजा शिखया। तत्र गालिनीमुद्रादर्शनम् गन्धपुष्पाचतयवकुशाग्रतिलश्वेतसर्षपदूर्व्वापयःफलानां शङ्खजले प्रचेपः। मूलमन्त्रेण गन्धपुष्पाभ्यामिष्टदेवतापूजनम्। मूलमन्त्रस्याष्टधाजपः। प्रोचणीपात्रमस्त्रेण प्रचाल्य तत्र जलं पूरयित्वा अर्घ्याम्बु तत्र संयोज्य वीचणादिदिग्बन्धनमूलमन्त्रमष्टधा जपैः संस्कुर्य्यात्। प्रोचणीजलेन त्रिधा देहप्रोचणम्। आत्मतत्त्वात्मने नमः विद्यातत्त्वात्मने नमः शिवतत्त्वात्मने नमः। तज्जलेन पूजोपयोगिसमस्तद्रव्यप्रोचणम्।

---

## अथ देहपूजा।

मूलेन ललाटे तिलकम्। मूर्द्ध्नि तेनैव पुष्पम्। आधारशक्त्यादिपीठपूजापर्य्यन्तं स्वदेहे पूजनम्। मूलमन्त्रात्मकं तेजो

मूलाधारे हृदि भ्रूमध्ये ध्यात्वा तदेवरूपं विचिन्त्य तत्र पूजा। मूलमन्त्रमुच्चार्य्य सायुधाय सर्व्वात्मने भगवते नरसिंहाय गन्धं कल्पयामि। अनामिकया गन्धेन तिलककरणम्। पूर्व्ववन्मूलमन्त्रमुच्चार्य्य पुष्पं ददामीत्युच्चार्य्य शिरोहृदाधारपादसर्व्वाङ्गेषु पञ्चपुष्पाञ्जलिदानम्। ततो धूपदीपौ निवेद्य मूलाधारे मूलाधारया स्वदेहरूपं नृसिंहं तूष्णीं चिन्तयेत्। ततो वैश्वदेवः पूर्व्ववत्। यथाशक्ति मूलमन्त्रजपसमर्पणे कृत्वा

अनुज्ञां देहि भगवन् वहिर्यागे मम प्रभो।

इत्यनुज्ञां प्रार्थ्य मन्त्रशुद्धिः।

गुदमेढ्रान्तराले वामपार्ष्णिदानेनापीड्य पूरकेण वायुं पूरयित्वा हुङ्कारेण कुण्डलिनाधारपद्मं विकसितं कृत्वा नासापुटद्वयरोधेन कुम्भकं कृत्वाधारपद्मत्रिकोणे वह्निं ध्यात्वा तदुत्थितां तद्विभां तत्शक्तिं सुषुम्नारन्ध्रगतां हंसमन्त्रेण वीजात्मना सहैकीभूतां विचिन्त्याधारगतस्वयम्भूलिङ्गं हृद्गतवाणलिङ्गं भ्रूमध्यगतमितरलिङ्गं भित्त्वा निर्गच्छन्तीं चित्शक्तिं ब्रह्मरन्ध्रोपरिगतसहस्रारपद्ममूर्द्ध्नि यत्रादूर्द्ध्वगपरब्रह्मरूपे विष्णोः पदे प्रविशन्तीं विचिन्त्य मूलमन्त्रं प्रणवपुटितं त्रिधा जपेत्। पुनस्तां चित्शक्तिं आधारपद्मत्रिकोणस्थाने प्रविष्टां विचिन्त्य पुनरपि सहस्रारपद्मोपरिगतां विचिन्त्य प्राणोद्घातेन गणपतिं विचिन्तयेत्। उद्घातश्च प्राणस्यापानादूर्द्ध्वगमनमिति योनिमुद्रावन्धेन मन्त्रशुद्धिः।

विना यन्त्रेण चेत्पूजा देवता न प्रसीदति।

इति वचनात् यन्त्रपूजा मुख्या।

पूजनीयदेवतानिर्म्माल्यमपकृष्य हस्तौ प्रक्षाल्यार्घ्याम्बुना प्रोक्ष्य मूलमन्त्रेण हृदयं स्पृष्ट्वा अष्टधा जपेत्। इति देवताशुद्धिः।

अथ देवतापीठाधश्चन्दनादिनाष्टपत्रपद्मलिखनम्। तदुपरि पद्ममुद्रादर्शनम्। तत्र पीठस्थापनम्।

---

## अथ वहिःपीठे पूजा।

स्ववामे गुरुभ्यो नमः। गुरुपादुकेभ्यो नमः। परमगुरुभ्यो-नमः। परमगुरुपादुकेभ्यो नमः। परात्परगुरुभ्यो नमः। परात्पर-गुरुपादुकेभ्यो नमः। स्वदक्षिणे आचार्य्याय नमः। दुर्गायै नमः। गणेशाय नमः। सरस्वत्यै नमः। मध्ये वास्तुनाथाय नमः। पीठाधः आधारशक्तिमहामण्डूककालाग्निरुद्रकूर्म्मपृथ्वीरत्नद्वीपमणिमण्डप--कल्पवृक्षरत्नवेदीरत्नसिंहासनाद्युपर्य्युपरि सम्पूज्य पीठाग्नेयादिषु धर्म्मज्ञानवैराग्यैश्वर्य्यान् प्रागादिष्वधर्म्माज्ञानावैराग्यानैश्वर्य्यान् पीठमध्ये प्रकृतिपत्रेभ्यो नमः। विकारकेशरेभ्यो नमः। पञ्चाशद्वर्णकाब्यै नमः। अां आदित्यमण्डलाय नमः। उं सोममण्डलाय नमः। मं वह्निमण्डलाय नमः। सं सत्वाय नमः। रं रजसे नमः। तं तमसे। आं आत्मने। अं अन्तरात्मने। पं परमात्मने। ह्रीं ज्ञानात्मने। अष्टदिक्षु विमलादिनवशक्तयः। मध्ये पीठमन्त्रपूजा। ततः पाद्यादिपात्राणां पञ्चानामस्त्रेण क्षालितानामर्घ्यस्योत्तरत आसादनमुदक्संस्थम्। तत्र मधुपर्कार्थं

कांस्यपात्रं तृतीयम्। मधुपर्कवर्ज्यमन्यपात्रेषु मूलेन जलपूरणम्। प्रथमं पाद्यपात्रे श्यामाकदूर्व्वापद्मविष्णुक्रान्तानां मूलेन प्रक्षेपः। यस्यासम्भवस्तस्य मनसा चिन्तनम्। द्वितीयाचमनपात्रे जातीफल-लवङ्गकक्कोलकानां पिष्टानां प्रत्येकं मूलपाठेन प्रक्षेपः। तृतीय-मधुपर्कपात्रे दधिमधुघृतानां मूलमन्त्रपाठेन प्रक्षेपः। कांस्येनापिधानम्। चतुर्थपुनराचमनपात्रे गन्धपुष्पप्रक्षेपः। स्नानपात्रे गन्धपुष्पप्रक्षेपः। शेषद्रव्याणां वस्त्रयज्ञोपवीतालङ्कारगन्धपुष्पादीनां सन्निहितानां स्वस्वकाले संस्कारः। पाद्यस्यास्त्रेण प्रोक्षण्युदकेन प्रोक्षणं मूलेन वीक्षणं कवचेनावगुण्ठनम्। अस्त्रेण दिग्बन्धनम्। हस्तेनापिधाय मूलमन्त्रस्याष्टधा जपः। धेनुमुद्रयामृतीकरणम्। एवमाचमनमधुपर्कादीनां संस्कारः। पीठपूजापूर्व्वं पाद्यादिपात्रसंस्कारः। पीठपूजानन्तरं ब्रह्मरन्ध्रान्तर्गतामृतधारया देहं चालयित्वा हरिन्यासः।

---

## अथावाहनादिकम्।

नवाङ्गुलमानेन स्वेच्छामानेन वा श्रीनृसिंहं ध्यात्वा

स्वात्मस्थमजरं शुद्धं त्वामहं परमेश्वर।

अरण्यामिव हव्यांशं मूर्त्तावावाहयाम्यहम्॥

इति नमः। मूलमन्त्रमुच्चार्य्य श्रीनृसिंह इहागच्छ इत्युच्चारयन् स्वहृदयस्थं परं ज्योतिः सुषुम्नावर्त्मना भ्रूमध्यगतं विचिन्त्य दक्षिण-

नासारन्ध्रेण निर्गतं भानुमण्डलादागतं करस्थपुष्पेषु विचिन्त्य तत्पुष्पाणि प्रतिमायां चिपन् तत्तेजः प्रतिमावामनासारन्ध्रेण प्रवेश्य तद्धृदयस्थतेजस्येकीभूतं चिन्तयेत्। शालग्रामस्थण्डिलादौ ध्येयमूर्त्तेरेवावाहनम्। आवाहन्यादिमुद्रादर्शनम्। कवचमन्त्रेणाव-गुण्ठनम्। तत्रानेन धेनुमुद्रादर्शनम्। देवताङ्गे षडङ्गन्यासेन सकलीकरणम्। अस्त्रेण परमीकरणम्। शङ्खचक्रगदापद्ममु-षलशार्ङ्गखड्गपाशाङ्कुशवैनतेयश्रीवत्सकौस्तुभवेणुभयवरवनमालानाञ्च दर्शनम्। अथवा शङ्खचक्रगदापद्ममुषलखड्गश्रीवत्सकौस्तुभानामष्ट-मुद्राणां दर्शनम्। पद्ममुद्रां दर्शयन्

अस्मिन् वरासने देव सुखमास्स्वाच्चरात्मके ।
प्रतिष्ठितो भव तिष्ठस्व प्रसीद परमेश्वर ॥

मूलमन्त्रमुच्चार्य्य इदमासनं साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय आसनं कल्पयामि इत्यासनसमर्पणम्। जलधारा-दानम्।

यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये ।
तस्य ते परमेशान स्वागतं स्वागतञ्च मे ॥
कृतार्थोऽस्म्यनुगृहीतोऽस्मि सफलं जीवितञ्च मे ।
यदागतोऽसि देवेश सुस्वागतमिदं पुनः ॥

मूलमन्त्रमुच्चार्य्य करोमि स्वागतं देवेति वदेत्। स्वागतमुद्रा-दर्शनम्।

---

## ततः पाद्यम्।

यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भवः।

तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये॥

नमः। मूलमन्त्रमुच्चार्य्य उग्रं वीरं हृदयाय नमः। सायुधाय सर्व्वात्मने श्रीनृसिंहाय पाद्यं कल्पयामि नमः। इति पादाम्बुजे दद्यात्। ततः पाद्यमुद्रां दर्शयेत्।

---

## अर्घ्यः।

तापत्रयहरं दिव्यं परमानन्दलक्षणम्।

तापत्रयविनिर्म्मुक्तं तवार्घ्यं कल्पयाम्यहम्॥

नमः। महाविष्णुं शिरसे स्वाहेति साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय अर्घ्यं कल्पयामीति शिरसि दद्यात्। अर्घ्यमुद्रां दर्शयेत्।

स्वस्तिमुद्रा द्विहस्ता चेन्मुद्रात्वर्घ्यस्य कीर्त्तिता।

---

## आचमनम्।

देवानामपि देवाय देवानां देवतात्मने।

आचमन्ते करोमीश शुद्धानां शुद्धिहेतवे॥

नमः। ततो मूलमन्त्रान्ते वमित्यमृतबीजमुच्चार्य्य साङ्गाय सायु-

धाय सर्व्वात्मने श्रीनृसिंहाय आचमनं कल्पयामि स्वधेतिमुख-सन्निधौ दद्यात् ।

देशिनीमूलगाङ्गुष्ठा दक्षिणाधः कनीयसी ।
पर्य्याप्तमध्यमाश्लिष्टो (?) मुद्राचामेति कीर्त्तिता ॥[१]

ततो मुखप्रोञ्छनवस्त्रं प्रदर्श्य करष्टुष्टिं दद्यात् ।

---

## मधुपर्कः ।

सर्व्वकालुष्यहीनाय परिपूर्णसुखात्मकम् ।
मधुपर्कमिमं देव कल्पयामि प्रसीद मे ॥

नमः । मूलमन्त्रमुच्चार्य्य साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय मधुपर्कं कल्पयामि स्वधेति अनामिकाङ्गुष्ठाभ्यां मधुपर्कैकदेशं मुखे दद्यात् ।

संयुक्तानामिकाङ्गुष्ठा तिस्रोऽन्याः सम्प्रसारिताः ।
इति मधुपर्कमुद्रा ।

---

(१) अत्र पाठान्तरं हरिभक्तिविलासे ।
देशिनीमूलगाङ्गुष्ठा दक्षिणाधः कनीयसी ।
आचाममुद्रा विख्याता देवताचमने विधौ ॥
एतद्विलासे आसनाद्यर्पणप्रकरणस्य टीका ।

## पुनराचमनम्।

उच्छिष्टोऽप्यशुचिर्वाऽपि यस्य स्मरणमात्रतः।
शुद्धिमाप्नोति तस्मै ते पुनराचमनं त्विदम्॥

मूलमन्त्रान्ते वमित्युच्चार्य्य साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय आचमनं कल्पयामीति दद्यात्। आचमनमुद्रां प्रदर्श्य प्रोञ्छनकरदृष्टिं दद्यात्।

---

## स्नानम्।

तत्तत्स्नानमण्डपं वितानादिमण्डितं प्रकल्प्य स्नानोपकरणं तत्र सन्निधाप्य पादुके समर्प्य देवं स्नानमण्डपमेहीति प्रार्थ्य छत्रचामरव्यजनदर्पणक्षुद्रविमानादियानारूढ़ं देवं स्नानमण्डपगतं यानादवरुह्य पादुकाभ्यां स्नानमण्डपोपविष्टं विचिन्त्य दिव्याङ्गमर्द्दनदिव्योद्वर्त्तनोष्णोदकस्नानादि कारयित्वा

परमानन्दबोधाब्धिनिमग्ननिजमूर्त्तये।
साङ्गोपाङ्गमिदं देव कल्पयामीश ते नमः॥

मूलमन्त्रान्ते साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय स्नानं कल्पयामीति पञ्चामृतस्नानं गन्धोदकस्नानं पुष्पफलार्घ्यवर्णोदकस्नानं कारयेत्। सर्व्वत्र स्नानीयं पलशतम्। प्रतिमापूजायां न प्रत्यहं स्नानं पर्व्वणीति केचित्। तस्मिन् पक्षे स्नानीयमन्त्रेण

देवताङ्गं प्रोच्चयित्वा निनयेत् मनसा स्नानं सङ्कल्पयेत् । कनिष्ठां त्यक्त्वा मुष्टिः स्नानमुद्रा । वस्त्रान्तरेणाङ्गप्रोञ्छनमाचमनञ्च पूर्ववद् दत्वा वस्त्रं पूर्ववत् संस्कृत्य

---

## वस्त्रम् ।

मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे ।
निरावरणविज्ञान वस्त्रं ते कल्पयाम्यहम् ॥

नमः । मूलमन्त्रान्ते श्रीनृसिंहाय पीतवस्त्रं ददामीति कटिदेशे दद्यात् । मध्यमाङ्गुष्ठौ लग्नावन्याः प्रसारिता इति वस्त्रमुद्रा ।

---

## उत्तरीयम् ।

यमाश्रित्य महामाया जगद् भासयते सदा ।
तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ॥

नमः । मूलमन्त्रान्ते साङ्गाय सायुधाय श्रीनृसिंहाय उत्तरीयं कल्पयामीत्युत्तरीयमरुणवर्णं दद्यात् । पूर्ववदाचमनीयम् ।

---

## यज्ञोपवीतम्

यज्ञोपवीतं संस्कृत्य

यस्य शक्तित्रयेणेदं सम्प्रोतमखिलं जगत् ।
यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥

नमः। मूलमन्त्रान्ते साङ्गाय सायुधाय श्रीनृसिंहाय यज्ञोपवीतं कल्पयामीति दद्यात्।

कनिष्ठाङ्गुष्ठकौ सक्तौ तिस्रोऽन्याः सम्प्रसारिताः।

इति यज्ञोपवीतमुद्रा।

---

## भूषणम्।

ततो देवं मण्डपागतं विचिन्त्य अलङ्कारं संस्कृत्य

स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते।

भूषणानि विचित्राणि कल्पयाम्यपराजित॥

नमः। मूलमन्त्रमुच्चार्य्य साङ्गाय सायुधाय श्रीनृसिंहाय विविधमलङ्कारं कल्पयामीति यथास्थाने दद्यात्। उत्तानहस्तस्यानामिकाङ्गुष्ठौ सक्तौ तिस्रोऽन्याः प्रसारिता इत्यलङ्कारमुद्रां दर्शयेत्।

---

## जलधारा।

देवतादेहनिर्गतं परिचारगणं छत्रचामरव्यजनदर्पणशिविकादिकान् तैर्धृतं ध्यात्वा देवं यागमण्डपमेहीति प्रार्थ्य परिचारगणक्रियमाणतूर्य्यब्रह्मघोषजयशब्दादिपुरःसरं यागमण्डपस्थपूजापीठे निवेश्य परिचारकगणं स्वस्वस्थानस्थं विचिन्त्य

समस्तदेवदेवेश सर्व्वतृप्तिकरं परम्।

परमानन्दसम्पूर्णं गृहाण जलमुत्तमम्॥

नमः। मूलमन्त्रान्ते श्रीनृसिंहाय जलधारां कल्पयामीति कर्पूर-वासितजलं दद्यात्।

---

## गन्धः।

ततः—

चन्दनागुरु[1]कर्पूरपङ्कं गन्धमिहोच्यते।
उशीरं कुङ्कुमञ्चैव मांसी मलयजं तथा।
[2]तथाम्बुजञ्च ह्रीवेरं कुष्ठञ्चागुरुमेव च॥

मृगमदजातिफलसम्भवे चवश्यमन्येषामनावश्यकत्वम्। एवं गन्धं संस्कृत्य

परमानन्दसौरभ्यपरिपूर्णदिगन्तरम्।
गृहाण परमं गन्धं कृपया परमेश्वर॥

नमः। मूलमन्त्रान्ते साङ्गाय सायुधाय श्रीनृसिंहाय गन्धं कल्प-यामि नम इति हृदि लिम्पेत्। मुक्तानामिका मुष्टि र्गन्धमुद्रा।

---

## पुष्पम्।

तुलसीद्वयजातिद्वयकरवीरद्वयोत्पलद्वयकल्हारमल्लिकाकुन्द मन्दारनन्द्यावर्त्तपलाशपाटलापार्य्यावर्त्तकचम्पकनागकेशराशोकवि-

---

(१) E. F. कस्तूरी।
(२) E. F. ह्रीवेरं सकुरञ्चैव।

त्वक्कर्णिकारशेवतीजातीनामन्येषामपि सुगन्धसुरूपाणां स्वाग-
मोक्तानां यथासम्भवं संस्कृत्य

तुरीयवनसम्भूतं नानागुणमनोहरम् ।

परस्परसौरभं पुष्पं ह्यस्ततामिदमुत्तमम् ॥

मूलमन्त्रान्ते साङ्गाय सायुधाय श्रीनृसिंहाय पुष्पं कल्पयामि
वौषट् इति पुष्पमाल्यं शिरसि कण्ठे दद्यात् ।

उत्थिताधोमुखौ मध्या विश्लाङ्गुष्ठा यदोतरा: ।

तदा पुष्पमुद्रा ।

---

## आवरणपूजा ।

निवेद्य पुष्पपर्य्यन्तमथावरणपूजा ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।

भक्त्या समर्चये त्वाऽहमाद्यमावरणार्चनम् ॥

इति प्रार्थ्य प्रथमावरणमङ्गे ।

हारस्फटिकपीताभा: कृष्णनीलाग्निरोचिष: ।

वरदाभयहस्ताश्च प्रधानतनव: स्त्रिय: ॥

इति ध्यात्वा उग्रं वीरं हृदयाय नम इति प्रतिमाधारपद्म-
केशरेष्वाग्नेयादिकोणेऽङ्गचतुष्टयम् । देवाग्रे नेत्रपूजा । चतुर्दिक्षु
अस्त्रपूजा । अस्त्राय फट् इत्यादिरेव मन्त्र: । न पृथक्
नम: पदम् । पूजा च पञ्चोपचारेण गन्धपुष्पाभ्यां केवलपुष्पेण
वा । एवं

भक्त्या समर्चये त्वाऽहं द्वितीयावरणार्चनम् ।

इति प्रागादिचतुर्द्दले पक्षीन्द्राय नमः । अनन्ताय नमः । शर्व्वेशाय नमः । कमलोद्भवाय नमः । आग्नेयादिकोणदलेषु श्रियै नमः । ह्रियै नमः । धृत्यै नमः । पुष्ट्यै नमः । इति द्वितीयावृतिः । तद्‌बाह्ये प्रागादिषु स्तम्भनकारिनृसिंहाय नमः । मोहनकारिनृसिंहाय नमः । मारणकारिनृसिंहाय नमः । विद्वेषणकारिनृसिंहाय नमः । आकर्षणकारिनृसिंहाय नमः । पुष्टिप्रदनृसिंहाय नमः । विद्याप्रदनृसिंहाय नमः । इति तृतीयावृतिः ।

चक्रं शङ्खं महापद्मं मुषलं देवदक्षिणम् ।
शूलखेटगदाशार्ङ्गं पूजयेदेव वामतः ॥

इति चतुर्थावृतिः ।

लक्ष्मीं दक्षिणतस्तुष्टिं वामे तत्रैव कौस्तुभम् ।
श्रीवत्सं दक्षिणे मध्ये वनमालाञ्च पूजयेत् ॥
पीताम्बरं ब्रह्मसूत्रं नाभिमध्ये किरीटकम् ।
भूषणानि च सर्व्वाणि पुरोभागे च पूजयेत् ॥

इति पञ्चमावृतिः ।

श्रद्धां मायां तथा कामां भीमां मायां भयानकाम् ।
* * * दीप्तिं तथाष्टमीम् ॥

इति प्रागादिषु । इति षष्ठावृतिः । इन्द्रादिभिः प्रागादिस्थैः सप्तमावृतिः । ईशानपूर्व्वमध्ये अनन्तः । निर्ऋतिपश्चिममध्ये ब्रह्मा । रक्षोवरुणमध्ये अनन्तः । पूर्व्वेशानमध्ये ब्रह्मा इति वा । एते च

कपिशकपिलकृष्णश्यामलश्वेतधूम्रा—
मलसितशुचिरक्ता वर्णतो वासवाद्याः।

तद्वह्निर्लोकपालास्त्राणि स्वस्वदेवस्थाने। वज्रशक्तिदण्डखड्ग-पाशाङ्कुशगदाशूलचक्रपद्मानि। अस्त्ररूपमभ्यर्च्य

अर्च्या वह्निर्निजस्वलचितमौलियुक्ताः
स्वस्वायुधाभयसमुद्यतपाणिपद्माः।

एवं पुरुषाः।

---

## अथ धूपदानम्।

सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः।
साराङ्गारविनिःक्षिप्तैर्मन्त्रानीतैः प्रधूपयेत्॥

इति प्रसिद्धधूपपात्रे साङ्गारे यथासम्भवे गुग्गुल्वादीनि ह्रीवेर-कुन्दबिल्वमुस्तादीनि विक्षिप्य घण्टामन्त्रेण संप्रोक्ष्य गन्धपुष्पैः प्रपूजयेत्। वीक्षणावगुण्ठनदिग्बन्धनधेनुमुद्रामृतीकरणानन्तरं मूलमन्त्रमष्टधा जपैः संस्कृत्य धूपञ्च संस्कृत्य घण्टां वामहस्तेन वादयन् दक्षहस्तेन धूपं गृहीत्वा

वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धकृत्तमः।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

नमः। मूलमन्त्रमुच्चार्य्य साङ्गाय सायुधाय श्रीनृसिंहाय धूपं कल्पयामि स्वाहा इत्यनुज्ञाणं दद्यात्। आचमनं मुखवासं कर-घृष्टिञ्च देया।

अङ्गुष्ठतर्ज्जनी लग्नौ तिस्रः सङ्कुचिताः पराः।

इति धूपमुद्रा।

---

## अथ दीपदानम्।

सकर्पूरदग्धो दीपः फलं दद्यात् शताधिकम्।

गोघृतेन तैलेन वाऽतया वर्त्त्या प्रज्वाल्य चतुरङ्गुलशिखं श्रेष्ठं त्र्यङ्गुलं मध्यं द्व्यङ्गुलं हीनं प्रज्वाल्य वामकरे घण्टां वादयन्

सुप्रकाशो महादीपः सर्व्वतस्तिमिरापहः।

सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्॥

नम इति मूलमन्त्रान्ते साङ्गाय सायुधाय श्रीनृसिंहाय दीपं कल्पयामि स्वाहेति नेत्रसन्निधौ पारावतभ्रमाकारं दर्शयेत्। आचमनमुखवासकरघृष्टीश्च देयाः। पुष्पमुद्रैवोत्ताना दीपमुद्रा।

---

## ततो नैवेद्यहोमबलिजपगण्डूषताम्बूल-नीराजनानि।

चतुरस्रस्थण्डिलं देवतादृष्टिगोचरे कृत्वा तत्र सुवर्णरजतताम्र-कांस्यशिष्टभोजनयोग्यकदल्यादिपत्रपाषाणादिपात्रेषु वा विशे-षेण ताम्रेषु सुप्रक्षालितेषु प्रणवेन प्रोक्षितेषु शाल्यन्नव्यञ्ज-नदुग्धदधिशर्करापिष्टकप्रपानकपरमान्नकदलीनारिकेलनानाविध--पिष्टकभक्ष्यभोज्यलेह्यपेयरूपं साज्यं प्रस्थचतुष्टयादन्यूनं असम्भवे

पुरुषाहारमात्रमुत्तमं तदर्द्धं मध्यमं तदर्द्धं कनीयः अभावे ग्रासमात्रं नैवेद्यं व्यञ्जनान्वितं प्रकल्प्य संस्कुर्य्यात्। वराहपुराणे च अन्नविशेषाः,—सुगन्धिरक्तशालिदीर्घशूकमहाशालिकुङ्कुमपत्रिक-(कङ्गुणिकाख्यक) शालिप्रभृतिधान्यानां। विविधयवान्नानि। शुद्धमाषाः। तिलाः। कृष्णकुलत्थकाः। गवेधुकाः। मुद्गाः। तथा गोधूमाः। गव्यपयोदधिघृतानि। फलानि प्रसिद्धानि। इङ्गुदीविल्वबदरामलखर्ज्जूरपनसाम्रोदुम्बरप्लक्षपिण्डारकपुन्नागशमीकवारवीजपूरकुसुदोत्पलककर्कारुनोपकतालकश्मीरङ्गकदम्बादिमूलफलानि वन्यानि च करमर्द्दनीलोत्पलपद्मशालूकानाम्। तथा शाकानि मूलकवत्सकाश्विकपलाशबदरमधुकोदुम्बरादीनाम्। पशुपक्षिविशेषाणां देयत्वेऽपि कलौ निषेधः।

तथा—

ब्रह्मविष्णुशिवानाञ्च कलौ मांसेन चार्च्चनम्।
दातुः श्रियं कुलं हन्ति तस्मात् तत् परिवर्ज्जयेत्॥

इति पठन्ति। अत्र फलमूलकन्दशाकादीनां येषां तथैव देयत्वमन्येषां व्यञ्जनादिपाकेन।

आम्रं बिल्वं गुवाकञ्च नारिकेलञ्च दाड़िमम्।
अपक्कान्यपि चैतानि फलानि विनिवेदयेत्॥

कदलीफलं यत्नपक्कमपि नान्यत् फलम्। कदल्यास्त्वचमुत्कृत्य नारिकेलफलं सुखमुत्कृत्य। एवं सर्व्वं भक्ष्ययोग्यं कृत्वा अर्घ्याम्बुपुष्पाभ्यामस्त्रेण प्रोक्ष्य चक्रमुद्रादर्शनेन संरक्ष्य यमिति वायुवीजेन जलेन संशोध्य रमित्यग्निवीजमुच्चार्य्य दक्षिणबाहुनाग्निरूपेण

सन्दह्य वमित्यमृतबीजेन वामबाहुना संप्लाव्य फक्केण तालत्रयं दत्त्वा दिग्बन्धनं कृत्वा कवचेनावगुण्ठ्य मूलेन धेनुमुद्रयामृतीकृत्य मूलेनाष्टधाभिमन्त्र्य पुनर्धेनुमुद्रया पूर्णं ध्यात्वा गन्धपुष्पाभ्यामभ्यर्च्य पुष्पाञ्जलिना नृसिंहमभ्यर्च्य देवमुखात् तेजो निःसार्य्य नैवेद्ये व्याप्तं विचिन्त्य षर्घ्याम्बुपुष्पं हस्ते गृहीत्वा

सत्यात्तचिद्हविःसौख्यं विविधानेकभक्षणम्।

निवेदयामि भवते सानुगाय गृहाण मे॥[1]

नमः। मूलमन्त्रमुच्चार्य्य साङ्गाय सायुधाय सर्व्वात्मने श्रीनृसिंहाय नैवेद्यं कल्पयामि स्वाहेति देवतीर्थेन नैवेद्योपरि षर्घ्याम्बुपुष्पप्रक्षेपः।

पद्माङ्गुल्यग्रसंलग्ना प्रोत्थितोर्द्ध्वमुखी यदि।

द्विधा निबद्धा मुद्रेयं नैवेद्यस्य प्रकीर्त्तिता॥

इति मुद्रां दर्शयन्

निवेदयामि भवते जुषाणेदं हविर्हरे।

इति नैवेद्यं समर्प्य देवोपरि पुष्पं प्रक्षिपेत्। ततः षमृतोपस्तरणमसि स्वाहेत्यपोशानं दत्त्वा विकचोत्पलसन्निभां ग्रासमुद्रां वामेन दर्शयन् दक्षिणेन प्राणादिमुद्रां दर्शयेत् स्वस्वमन्त्रैः। प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। उदानाय स्वाहा। समानाय स्वाहा। कनिष्ठानामिकाङ्गुष्ठाग्रयोगेन प्रथमा। तर्ज्जनीमध्यमाङ्गुष्ठाग्रयोगेन द्वितीया। अनामिकामध्यमाङ्गुष्ठाग्र-

---

(१) E. तव।

योगेन तृतीया। अनामिकामध्यमातर्ज्जन्यङ्गुष्ठाग्रयोगेन चतुर्थी। कनिष्ठानामिकामध्यमादेशिन्यङ्गुष्ठाग्रयोगेन पञ्चमी। करद्वयानामिकायां स्वस्वाङ्गुष्ठयोगेन निवेदनमुद्रां दर्शयन् ठौं नमः परायावाक्मने अनिरुद्धाय नैवेद्यं कल्पयामि। ब्रह्माद्यैः सुपविष्टैः समेतो व्यजनै र्वीज्यमानो नर्म्मक्रीड़ाप्रहसनपरो देवः [१]कनकपात्रेषु भक्ष्यान् भुङ्क्ते इति चिन्ता। भोजनावसरे वैश्वदेवः।

दक्षिणे स्थण्डिलं कृत्वाग्निमुपसमाधाय वीक्षणावगुण्ठनतालत्रयदिग्‌बन्धनमूलाष्टधाजपधेनुमुद्रादिभिः संस्कृत्य घृततिलपायसानामन्यतमेन हविः संस्कृत्याग्नाविष्टदेवं पञ्चोपचारैः सम्पूज्य प्रणवेन व्याहृतिभिर्व्यस्तसमस्ताभिराहुतिपञ्चकं हुत्वा मूलेन पञ्चविंशतिसंख्यया हुत्वा पुनर्व्याहृतिभि र्हुत्वा पुनः पञ्चोपचारेणाग्निं सम्पूज्य देवं प्रतिमायामुद्वास्याग्निं विसर्जयेत्। होमशेषहविषा गन्धपुष्पाक्षतैर्देवतापार्षदेभ्यो बलिः। तत्र मन्त्रः,—

ये रुद्रा रुद्रकर्म्माणो रौद्रस्थाननिवासिनः।
योगिन्यो रुद्ररूपाश्च गणानामधिपाश्च ये॥
विघ्नभूतास्तथा चान्ये दिग्‌विदिक्षु समाश्रिताः।
सर्व्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम्॥

इत्यष्टदिक्षु दत्वा भूतबलिः। तत्र मन्त्रः—

(१) E. कनकपात्रे षड्रसान्।

भूतानि यानीह वसन्ति भूतले
बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
सन्तोषमासाद्य व्रजन्तु सर्व्वे
क्षमन्तु तान्यत्र नमो नमोऽस्तु ॥

इति वैश्वदेवहोमो वक्तव्यः ।

होमाशक्तौ द्विगुणो जपः । शक्तश्च होमसंख्यको जपस्तावत् पुष्पदानं मूलेन तावत् प्रमाणं वा । ततः अमृतापिधानमसि स्वाहेत्यपोशानं दत्वा गण्डूषादि कल्पयित्वा सुवासिताम्बुभिर्देवायाचमनं पुनराचमनमन्त्रेण सुखवासकरदृष्टिं विचिन्त्य ताम्बूलदानम् । ताम्बूलं सकर्पूरं सपूगं चूर्णेन खदिरेण युक्तं संस्कृत्य मूलमन्त्रान्ते ताम्बूलं कल्पयामीति दद्यात् । ताम्बूलदानं नैवेद्योपचाराङ्गम् । ततः पुनर्गन्धपुष्पं धूपदीपनैवेद्यैः प्रपूज्य पुष्पाञ्जलित्रयं दूर्व्वाक्षतं दत्वा नीराजनम् । दीपपात्रमूर्द्धमण्डलाकारं कृत्वा तत्र घृततैलादिवर्त्तिसप्तकं दत्वा ज्वालयित्वा देवमुखे भ्रामयेत् । इति नीराजनं घण्टावादनसहितम् । ततो मूलमन्त्रजपः ।*

---

* अत्रातःपरं सर्व्वेष्वेवादर्शपुस्तकेषु अयं श्लोको दृश्यते यथा,—

एतावद्दूरपर्य्यन्तं लिखित्वा वाजपेयिभिः ।
स्थितं पत्रान्तरे यस्मात् ततोऽहमलिखं मुदा ॥

श्लोकोऽयं मन्ये तेनैव लेखकेन प्रथमं रचितो येन श्रीयादवरसिंहवाजपेयिन एव सहस्तकृतादादर्शाद्द्वितीयादर्शः कृतः । तत आदर्शादादर्शान्तरेषु भ्रमान्मूलपुस्तकपाठरूपेणैव चलित इति सर्व्वेष्वेवादर्शपुस्तकेषु दृश्यते । वस्तुतस्त्वयं लेखककृत इति मूले न सन्निवेशितः । इति सं ।

## स्तुतिः।

यच्छिन्द्यात् परमापदं प्रणमतां पुंसां सदा क्षेमकृत्
ध्यानं यस्य विमुक्तये च तरणिः संसारवारांनिधेः।
यः क्रुद्धो नखरैर्बिभेद कठिनं दैत्येन्द्रवक्षःस्थलं।
तस्मै मानवसिंहशुभ्रवपुषे नित्यं नमो विष्णवे॥

---

## तापनीयश्रुत्यनुसारेण नृसिंहोपासना।

तान्त्रिकविधिना प्रातरुत्थाय तान्त्रिकविधिना स्नानतर्पणादिकं कृत्वा गृहमेत्य स्वाचान्तो द्वारपालपूजाविविधविघ्ननिवारणपूर्व्वं यथोक्तरीत्या देवागारे प्रविश्य प्राङ्मुख उदङ्मुखो वा सदासन उपविश्य महासुदर्शनमन्त्रेण नाराचमुद्रया विघ्नान् निवार्य्य तालत्रयदिग्बन्धप्राकारचिन्ताग्नितिजालकल्पनाभी रक्षां विधाय ईश्वरं शेषं गुरुं श्रीनृसिंहं नमस्कृत्य "ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु। ॐ शान्तिः शान्तिः शान्तिः॥" आसनबन्धादिकं कृत्वा भूतशुद्धिः। करशुद्धिं विधाय श्रीनृसिंहानुष्टुभो मन्त्रराजमन्त्रस्य विधिर्ब्रह्मा प्रजापतिः ऋषिः। अनुष्टुप्छन्दः। श्रीमहामङ्गलेश्वरो लक्ष्मीनृसिंहो महा-

विष्णुर्देवता। उदात्तः स्वरः। शुक्लो वर्णः। न्ह इति दृष्टं कीलकं ज्ञातम्। स सिद्धेरप्रतिबन्धकं स इत्यदुष्टं कीलकं ज्ञातं स सिद्धिप्रदम्। इंबीजम्। ई शक्तिः। उदात्तः स्वरः। शुक्लो वर्णः। परमात्मा चैवम्। मोक्षार्थे विनियोगः। इति स्मृत्वा प्रणवशक्तिबीजादिना बीजशक्तिप्रणवान्तेन मूलमन्त्रेण प्रत्येकं त्रिवारजप्तेन प्राणायामत्रयम्। मातृकान्यासः। केशवादिन्यासः। तत्त्वन्यासः। आधारभावना। हृदयभावना। हस्तभावना। काले करन्यासः। पञ्चाङ्गेनाङ्गुलिन्यासः। देहभावना। चतुर्भिः पादैश्चतुष्टयम्। समस्तेनास्त्रमित्यङ्गन्यासः। सान्निध्यकरादिदशन्यासाः। एवं तान्त्रिकपद्धत्यनुसारेण ध्यानम्।

महाचक्रस्य यन्त्राभिमण्डले त्रिगुणात्मनि।
सुखसंवित्क्षीरजलं चिन्तयेत् क्षीरसागरम्॥
श्वेतद्वीपञ्च तन्मध्ये शब्दादिविषयात्मकम्।
जातिब्रह्मबलोपेतं महत्त्वसिकतान्वितम्॥
मणिरत्नमये तत्र प्रासादे सुमनोहरे।
श्वेतसिंहासनं ध्यायेत् श्वेतपद्मोपरिच्छदम्॥
शेषं तत्र विजानीयात् समस्त्या पुच्छमण्डलैः।
फणासहस्रमुपरि कृत्वोकृत्य व्यवस्थितम्॥
श्वेतहारकिरीटाभ्यां दधानं सुषलं हलम्।
रक्ताक्षं श्वेतपुष्पस्रक्नीलवस्त्रैककुण्डलम्॥
तदङ्के चिन्तयेद् देवं नृसिंहं पीतवाससम्।
सूर्येन्दुकोटिमहसमरुणोत्तरवाससम्॥

श्वेताद्रिकान्तिवपुषं सत्यज्ञानसुखात्मकम्।
आसीनं योगपट्टेन चतुर्दंष्ट्रं चतुर्भुजम्॥
प्रादक्षिण्येन दधतमूर्द्धदक्षिणबाहुके।
चक्रं पिनाकमभयं वरं करचतुष्टये॥
तप्तहाटककेशान्तं चन्द्रार्द्धकृतशेखरम्।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्॥
चन्द्रसूर्य्याग्निसङ्काशं वृत्तोत्फुल्लत्रिलोचनम्।
स्फुरत्कमलकिञ्जल्कसमलोमान्तकर्णिकम्॥
किञ्चिदुन्नतमध्येषु फुल्लनासामनोहरम्।
ललज्जिह्वप्रपञ्चास्यप्रकाशितरदावलिम्॥
प्रसृतलम्बितश्मश्रास्यं किञ्चिदुत्कुञ्चितभ्रुवम्।
तद्वद्भ्रूलोमपक्ष्माणं तिर्य्यगालम्बिकेशरम्॥
ककुदंसशिरःकण्ठप्रकुञ्चितकरोच्चयम्।
नीलग्रीवं प्रकृत्या सग्रीवव्याञ्छितवक्षसम्॥
विस्तीर्णवक्षलसत्पुरुषात्मककौस्तुभम्।
विष्टब्धपार्श्वपृष्ठाख्यिमग्ननाभ्यङ्कितोदरम्॥
तिर्य्यक्सुस्थिरजंघोरुजान्वाञ्चितकरद्वयम्।
तीक्ष्णोग्रनखवज्राग्रस्फुरोचिर्विद्रावितासुरम्॥
तिर्य्यक्पादतलस्पर्शकृतार्य्यीकृतशेषकम्।
किरीटहारकेयूरकाञ्चीकटकभूषितम्॥
प्रसुप्तजङ्घाभरणं पादान्तव्याप्तनूपुरम्।
रत्नाङ्गुलीयकज्योतिरुद्भासितदिगन्तरम्॥

समकर्णन्तु विन्यस्तचारुकर्णविभूषणम्।
पञ्चभूतात्मिकां पञ्चरूपां मालाञ्च विभ्रतम्॥
वामोरुगतया लक्ष्म्या श्लिष्टं दक्षिणबाहुना।
दधत्या वामहस्तेन दाड़िमं सुमनोहरम्॥
मुक्ताप्रभाभरणया पीतनिर्म्मलवस्त्रया।
हिरण्यवर्णया न्यस्तदृशा स्वामिमुखाम्बुजे॥
नानारूपधरैः शस्त्रैः पृष्ठपार्श्वगतैः पृथक्।
स्वस्वायुधोद्यतकरैर्मूर्त्तिमद्भिरुपासितम्॥
सचामरैर्वीज्यमानं लक्ष्म्याद्याभिश्च शक्तिभिः।
संसक्ताभ्यनुरक्ताभिरन्याभिः परिवारितम्॥
यक्षपन्नगगन्धर्व्वविद्याधरवधूगणैः
नृत्यवादित्रसङ्गीतस्तुतिभिः कम्पितेक्षणम्॥
सुरासुरगणैश्चैव प्रसादावाप्तदर्शनैः।
कृताञ्जलिभिराज्ञार्थं किङ्करैर्दूरतः स्थितैः॥
अन्तरीक्षगतैः सिद्धै र्योगिभिः सनकादिभिः।
संस्तूयमानमेकाग्रै ऋग्यजुःसाममन्त्रकैः॥
ऐशानीं दिशमारभ्य महाचक्रदलस्थितैः।
पद्मासनैरभिमुखै र्वीक्षमाणैः सुदर्शनैः॥
नारायणै र्वासुदेवैः केशवाद्यैर्य्यथाक्रमम्।
ब्रह्माद्यै र्नरसिंहैश्च स्वस्ववर्णायुधान्वितैः॥
पुरस्ताद् वसुभिस्तस्य रुद्रैर्दक्षिणतः स्थितैः।
चक्रस्य पश्चादादित्यै र्विश्वेदेवैरथाभ्युदक्॥

सुखोपविष्टैः पादान्ते ब्रह्मविष्णुमहेश्वरैः।
स्वस्वायुधकरैरूर्द्धं कृताञ्जलिपुटैरधः॥
तथैवोपस्थितं चन्द्रसूर्य्याभ्यां पार्श्वयोर्द्दयोः।
महाविभूतिसंस्थानं सर्व्वदेवात्मकं विभुम्॥

---

## द्विस्वरसाम्ना करन्यासः।

ऊर्द्धप्रयत्नोच्चारण उदात्तः। तिर्य्यक्प्रयत्नोच्चारणे स्वरितः। स च पूर्व्वोदात्तापेक्षया अनुदात्तः। अनुदात्तापेक्षयोदात्तः। द्वितीयश्च स्वरितः पूर्व्वोदात्तस्वरितयोरपेक्षयाऽनुदात्तः। अनुदात्तापेक्षयोदात्तः। अङ्गुष्ठाग्रतर्ज्जनीमध्यपर्व्वयोगेनोदात्तगानम्। तर्ज्जनीमध्यमानामिकाकनिष्ठानां मध्यपर्व्वणां क्रमेणाङ्गुष्ठाग्रस्पर्शेन स्वरितगानम्। अङ्गुष्ठाग्रेण कनिष्ठामूलस्पर्शेनानुदात्तस्य गानम्। ह्रस्वस्याप्यन्त्यस्वरस्य गाने प्लुतत्वम्। गाने चान्त्याक्षरस्य त्रिचतुःपञ्चमात्रा। गायमानाक्षराणां दीर्घाक्षरे वामहस्ताङ्गुलिवक्रीकरणात्मकं ग्रहणम्। तथा प्रथमपादस्य प्रणवोऽङ्गः। द्वितीयस्य घृणिमन्त्रः तृतीयस्य यजुर्लक्ष्मीः। चतुर्थस्य नृसिंहगाया[1]। समस्तस्य महाचक्रम्। एवं गानपरिभाषा।

तत्रादौ द्विस्वरगाने नाङ्गुलिन्यासः। प्रणवस्य मात्रा अकारोकारमकारोङ्काकारायतस्वस्तद्द्विराहृत्या अष्टौ भवन्ति। अउ उदात्तः। मॐ। अनुदात्तः। अउ उदात्तः। मॐ। अनु-

---

(१) E. नृसिंहगायत्री।

दात्तः। इति प्रागाय शक्त्यक्षरं वीजाक्षरं चतुरावृत्तं कृत्वा ह्रं ह्रं उदात्तः। ह्रं ह्रं अनुदात्तः। पुनः ह्रं ह्रं उदात्तः ह्रं ह्रं अनुदात्तः। ततः प्रथमपादगानम्। उग्रं उदात्तः वीरं अनुदात्तः महा अनुदात्तः विष्णुं अनुदात्तः इति गात्वा पुनः प्रणवगानम्। ततः ॐ ह्रं ह्रं उग्रं वीरं महाविष्णुं ॐ आनन्दात्मने श्वेतवर्णाय अङ्गुष्ठाभ्यां नमः। इति हस्तयोरङ्गुष्ठे न्यासः। ततः। ज्वलं उदा। तं स। अनु। र्व्वतो। उदा। सुखं। अनु। इति प्रागाय। ॐ ह्रीं घृणिः सूर्य्यः आदित्यः श्रीं ज्वलन्तं सर्व्वतोसुखं प्रियात्मने कृष्णवर्णाय तर्जनीभ्यां स्वाहा। इति न्यासः। ततः नृसिं उदा। हं भी अनु। षणं उदात्तः। भद्रं अनु। "ॐ भूर्लक्ष्मी र्भुवर्लक्ष्मीः सुवः कालकर्णी। तन्नो महालक्ष्मीः प्रचोदयात्।" इति सामरहितमुक्त्वा पुनः तृतीयपादं यजुर्लक्ष्मीपूर्व्वकमुक्त्वा घोरात्मने पिङ्गलवर्णाय मध्यमाभ्यां वषट्। इति न्यासः। ततः मृत्यु उदा। मृत्युं अनु। नमा उदा। म्यहं अनुदा। इति गात्वा ॐ नृ उदा। सिंहा अनु। यवि उदा। द्महे अनु। वज्र उदा। नखा अनु। यधी उदा। महि अनुदा। तन्न उदा। सिंहः प्रचो उदा। दयात् अनुदा। इति गात्वा ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि तन्नः सिंहः प्रचोदयात् इत्युक्त्वा मृत्युमृत्युं नमाम्यहं मायात्मने हेमवर्णाय अनामिकाभ्यां हुं इति न्यासः। ततः प्रणवशक्तिवीजसाममन्त्रपादचतुष्टयसाममिश्रणं सामानि गात्वा प्रणवशक्तिवीजपुटितं मन्त्रमुच्चार्य्य महाचक्रं स्मृत्वा ज्ञानात्मने विद्युद्वर्णाय कनिष्ठाभ्यां वौषट्। इति न्यासः।

## अथानुष्टुप-साम।

प्रथमं प्रणवसाम ततः शक्तिबीजसाम ततः प्रथमपादसाम ततः पुनरङ्गप्रणवसाम गात्वा द्वितीयसामगानम्। ततो द्युणि-मन्त्रस्य सामरहितस्य पाठः। ततस्तृतीयपादसाम। ततो यजुर्लक्ष्मीमन्त्रस्य सामरहितस्य पाठः। ततश्चतुर्थपादसाम। नृसिंहगायत्रीसाम। इति गात्वा मिश्रणसामगानम्। उच्चैरेवम्। ततः प्रणवप्रथममात्रा ततो बीजाक्षरम्। कनिष्ठामूले। ततः प्रणवद्वितीयमात्रा ततः शक्त्यक्षरम्। प्रणवतृतीयमात्रा ततो बीजा-क्षरम्। प्रणवचतुर्थमात्रा ततः शक्त्यक्षरम्। इत्यष्टाक्षराणि। अ हं उदा। उ ह्रं। अनु। म हं उदा। ॐ ह्रं अनु। इति गात्वा। अनेनानुष्टुभेन साम्ना समं व्यापको न्यासः सम्पद्यतामिति न्यासः।

---

## अथ षट्स्वरसामभिरङ्गन्यासः।

तत्र प्रथमाक्षरद्वयमुदात्तं तर्जन्यग्रस्पर्शेन। तृतीयमनुदात्तं कनिष्ठामूलस्पर्शेन। चतुर्थः स्वरितः तर्जन्यादिचतुष्कमध्यपर्व्व-स्पर्शेन। तर्जन्याद्यङ्गुलमध्यपर्व्वस्पर्शकाले उत्तरोत्तमस्यानुदात्तत्वम्। एकैकाङ्गुलिपर्व्वस्पर्शकाले त्रिचतुःपञ्चमात्रा स्वरितमप्येवं षष्ठमनु-दात्तं तर्ज्जनीमध्यपर्व्वस्पर्शेन गेयम्। प्रणवसाम। अउ उदा। म अनु। ॐ स्वरितः। अ स्वरितः। उ उदा। मॐ अनु। शक्तिबीजसाम। ह्रं हं उदा। ह्रं अनु। हं स्वरितः। ह्रं

स्वरितः। हं अनु। प्रथम पादसाम,—उग्रं उदा। वी अनु। रं स्वरि। महा उदा। विष्णुं अनु। गात्वा। तत्र तृतीयपञ्चाक्षरयोर्वामहस्ताङ्गुलिवक्रीकरणात्मकं ग्रहणं प्रथमपादगाने। पुनः प्रणवसाम।

इति श्रीमहामहोपाध्यायाग्निचिद्-वाजपेयि-नरसिंह-विरचिते नित्याचारप्रदीपे नरसिंहोपासना।

इति प्रथमभागकृत्यं समाप्तम्।

श्रीनृसिंह उद्धारकरिवे।

श्रीनृसिंहाय नमः।



# नित्याचारप्रदीपस्य प्रथमभागस्य विषयसूचिः।

इति ।

५२२ पत्रात् ५२३ पत्राणि सूर्य्यस्य दर्शनादिफलनामक-विषयस्य पूजास्वरूपविनिर्णयनामकविषयस्य सूर्य्यस्य गन्ध-पुष्प-धूप-दीप-नैवेद्य-नानाविधद्रव्यदाननामकविषयाणां सौरधर्म्मेति नामकविषयस्य च पाठान्तरार्थं द्रष्टव्यानि ।

५३५ पत्रात् ५५२ पत्राणि शिवस्य घृतकम्बलविधि-घृतकम्बलाभिषेक—घृतधारा-महास्नान-दर्शनादिफल-गन्ध-पुष्प-धूप-दीप-नैवेद्येत्यादिनामकविषयाणां शिवप्रदेयशिव-धर्म्मेतिनामक-विषयद्वयस्य च पाठान्तरार्थं द्रष्टव्यानि ।

५५४, ५५५ पत्रे ब्रह्मणो गन्ध-व्यजन-पुष्प-नैवेद्येतिनामक-विषयाणां ब्रह्मधर्म्मेति नामकविषयस्य च पाठान्तरार्थं द्रष्टव्ये ।

५६६ पत्रात् ५७० पत्राणि विष्णोर्म्महास्नान-महा-स्नानप्रयोगाष्टविधजलस्नानेतिनामकविषयत्रयस्य पाठान्तरार्थं द्रष्टव्यानि ।

तान्येतेषां पाठान्तराणि प्रायशः प्रमादबहुलानि ।

---

